श्रीः

# श्रीमद्बृहत्पाराशरहोराशास्त्रम्

(पूर्वखण्डसारांशमूलम्)

उत्तरखंडश्च

जटाशंकरसूनुना ज्योतिर्विदा श्रीधरेण

विरचितया सुबोधिन्या, सभाषया

## समलंकृतः

सोऽयंग्रन्थः

पूर्वखण्डे अमृतसरपुरनिवासि नानकचन्द्रतनय गिरिधरलाल शर्मणा,
उत्तरखण्डे च खानदेशीयरावेरग्रामनिवासिपरशुरामभट्टतनूजन्मना
गोविन्द शर्मणा शास्त्रिणा संशोधितः

मुम्बय्याम् जगदीश्वराख्ये शिलायन्त्रालये

टीकाद्वयकर्त्रा मुद्राप्य प्रकाशितः

शकः १८०९. संवद् १९४४.



मूल्यं षण्मुद्रिकाः ६

## विद्वदभ्यर्थना.

पूर्वं ब्रह्मा ततोऽयं निखिलमुनिगणप्रार्थनाद्यश्चकार॥
तद्वेदं सुप्रसन्नं मृदुपदनिकरैर्गृह्यमध्यात्मरूपम् ।
शश्वद्विश्वप्रकाशं ग्रहचरितविदां निर्मलं ज्ञानचक्षुरिति

तथात्र सर्वेऽपि महर्षिप्रोक्ताज्योतिःशास्त्रग्रंथाः सर्वथैव सर्वदैव सर्वेषामेव मान्या भवितुमर्हन्तीति साम्प्रतमेव । तत्रापि प्रवर्तमानेऽस्मिंश्चतुर्थे कलियुगे श्रीमन्महामुनिश्रीपराशरमुनेरेवानुभवसिद्धत्वेन प्राधान्यमभिहितं दृश्यते यथा चोक्तम्-

कृते तु मानवं शास्त्रं त्रेतायां बादरायणिः ॥
द्वापरे शंखलिखितौ कलौ पाराशरः स्मृतः ॥इति

अपरं च

कृते पैतामहं शास्त्रं त्रेतायां बादरायणम् ॥
गार्गीयं द्वापरे प्रोक्तं कलौ तार्तीयिकं स्मृतमिति च

भोः पण्डिताः। अतोऽस्माभिरयमारंभः समारब्धः खलु । अस्य बृहत्पाराशरहोराशास्त्रस्य परोपकारैकतात्पर्यवत्या मत्या प्रकाशनेन तत्कार्यसिषाधयिषया च पुस्तकसंपादनेऽद्य यावद्द्वादशवर्षं प्रकृष्टप्रयत्नं समारभ्य क्वचित्क्वचित् किंचित् किंचिद्यथा लब्धग्रन्थान्महता प्रयासेन देशविदेशातिलङ्घनविलङ्घनपरिश्रमेण संपाद्य संचित्य समूहीकृतोऽयं ग्रंथः तत्राप्यस्य ग्रन्थस्य परिमितिश्च शताध्यायसंख्यायुता वर्तत इति तावदस्यैव ग्रन्थस्यान्तिमश्लोकार्थतो निष्पद्यते । तत्र च यथोक्तम्-

एवं होराशताध्यायी सर्वपापप्रणाशनी ।
युगेषु च चतुर्ष्वेव प्रत्यक्षफलदायिनी इति ॥

तत्र चास्मिन्ग्रन्थे खंडद्वयम् । पूर्वखंडमुत्तरखंडं च । तन्मध्ये पूर्वखंडसमुदिताध्यायसंख्या चाशीतिसंख्यापरिमिता वर्ततइति तावदस्यैवोत्तरखण्डस्थ प्रथमश्लोकार्थतएवावगम्यते । यथोक्तं तत्र-

भगवन् सर्वमाख्यातं जातकं विस्तरेण मे ।
ससहस्त्रायुतग्रंथैरशीत्यध्यायसंयुतैः ॥ इति ॥

किंचास्य ग्रन्थस्य समुदितपद्यसंख्या च द्वादशसहस्त्रपरिमिता विद्यते । तत्र पूर्वखंडे तूपरितनश्लोकार्धत एवैकादशसहस्त्रपरिमिता । उत्तरखंडे चैकसहस्त्रपरिमितेति यथायथं सर्वमवधेयं सुधीभिः । तत्र विशेषश्च –

मया बहुलतरप्रयत्नसमारंभणेऽपि समग्रशताध्यायपरिमितो ग्रन्थो नोपलम्भितः अपिच समग्रमुत्तरार्धमाद्योपान्तं यथानुगतमुपलम्भितम् । पूर्वार्धं च खंडशः खंडशः संप्राप्तं न कुत्रापि समग्रं समुपलब्धमिति यथाप्राप्तंयथाप्राप्तं संचिन्त्यसंचिन्त्य सम्यक्तया विषयान्समालोड्य क्वचित्क्वचिदपूर्णं दृष्ट्वाधुनातनविशेषमवलंब्य ग्रंथकारसदुक्तिसमावेशनेन तत्स्थविषयसमीकरणेन सव्यवस्थाप्यैकाशीत्यध्यायपरिणद्धं कृतम् । तत्रापूर्णं दृष्ट्वा न टीकाविषयीकृतम् । उत्तरार्धं च समग्रमुपलभ्य मद्वर्तमानसमये तदुपयोगं चावलोच्य टीकाद्वयेन समलंकृतं कृतम् । अस्तु श्रीः ।

अथचैतद्ग्रन्थोपलम्भने यैर्यैः पण्डितैर्मम साहाय्यं कृतं तेषां तेषामुपकृतिस्मृतिसम्पादकनामाभिधानानि तावत्प्रदर्शयामि ।

**प्रथमंच पुस्तकम्–** अस्मद्गुरूणां सम्प्रति वैकुंठपीठाधिकुंठितलुंठनसादराणां कोद्यग्रामनिवासिनां श्रीमदौदीच्यसहस्त्रजातीयानां **अम्बालाल** शर्मणां समीपतः किञ्चित्पूर्वखण्डं सम्प्राप्तम् ।

**अपरं च –** दाक्षिणात्य तंजावर ग्रामनिवासि **विष्णुपंत** शर्म शास्त्रिणः सकाशाद्द्वादशशतश्लोकात्मकं पूर्वखण्डं संप्राप्तम् ।

**अपरं च–** मुंबय्यां ज्योतिर्वित्पंडित **हरजीवन** शर्मशास्त्रिणः सकाशात् किंचित्पूर्वखण्डं समुपलब्धम् ।

**तुर्यं च–** श्रीमन्महामोक्षनगरीश्रीकाशीपुरीतः प्रवरपण्डित **गौरीशङ्कर** शर्मणः शास्त्रिणः सकाशात्समग्रोत्तरखंडं समुपलब्धम् ।

**पंचमं च-** अमृतसरनिवासिपंडित **रामदत्त** शर्मणः शास्त्रिणः समीपतः समग्रमुत्तरखंडं लब्धम्।

**षष्ठं च-** अस्मन्मित्रवर्य **महादेव** दीक्षितसकाशात्समग्रमुत्तरखंडं लब्धम्।

एतेभ्य शास्त्रिभ्य एतद्ग्रन्थस्यास्माकं प्राप्तिरभूत्।

अथ चैतद्ग्रन्थोत्तरखंडस्थटीकाकरणे येषांयेषां साहाय्यमासीत्तेषांतेषां चेमानि नामधेयानि—

प्रथमतः - अमृतसरनगरनिवासिपंडित **गिरिधारीलाल** शर्मणः साहाय्यमासीत्।

ततश्च- जयपुरनगरनिवासि पंडित **शिवदत्त** शर्मणः साहाय्यमासीत्।

ततश्च- जयपुरनिवासि **मगनीराम** शर्मणः साहाय्यमासीत्।

तदनंतरं च- धौरेयोपाव्ह **श्रीकृष्णशर्मणः** साहाय्यमासीत्।

ततश्च- औरंगाबादनिवासिज्योतिर्विद्वरपण्डित **श्रीहरिकृष्ण** शर्मणः शास्त्रिणः साहाय्यमासीत्।

तदुत्तरं च- खानदेशीय रावेरग्रामनिवासिपरशुरामभट्टात्मज **गोविंद** शर्मण शास्त्रिणः संशोधने विषयमर्मीकरणे च साहाय्यमासीत्।

एवमुक्ताभिधेयानां च सर्वेषां शास्त्रिणां बहूनुपकारान्संस्मरामि।

विदुषामथतश्च प्रार्थयामि। यदि समग्रपूर्वखण्डसंपादनेन मां कृतार्थयिष्यंस्तर्हि तेषां बहूनुपकारानहमस्मरिष्यम्। इति सर्वं शिवम्।

पौषशुक्लपक्षः शके१८०९ }
विक्रमशकाब्दाः १९४४ }

**श्रीमज्जटाशंकरसूनुर्ज्योतिर्वित्**
**श्रीधरशर्मा.**

---

# अथ श्रीमद्बृहत्पाराशरहोरापूर्वखण्ड सारांशस्थ - विषयानुक्रमणिका.

# पूर्वखंडस्थविषयानुक्रमणिका·

इति बृ० होरापूर्वखण्डस्थविषयाणामनुक्रमणिका सम्पूर्णा.

इति

श्रीमद्बृहत्पाराशरहोरोत्तरभागस्थ

विषयानुक्रमणिका

संपूर्णा.

# अथ बृहत्पाराशरहोरा पूर्वखंडसारांशप्रारंभः

श्रीगणेशायनमः श्रीसरस्वत्यैनमः॥ अथमंगलाचरणं
प्रणम्यगिरिजापतिंहरिविरंचिदेवैस्स्तुतं विलोक्यचमहत्त्न-
रांसुकृतिबृद्धपाराशरीम् ततश्चकथयाम्यहं विविधभेदसा-
रांशकं ग्रहादिफलसंग्रहं विबुध श्रीधराख्योद्विजः १

## मैत्रेय उवाच.

नमस्तस्मैभगवतेबोधरूपायसर्वदा परमानन्दकंदायगुरवे
ज्ञानध्वंसिने २ इतिस्तुत्यासुसंहृष्टोमुनिस्तत्त्वविदांवरः
अथोदिदेशसच्छास्त्रंसारंयज्ज्योतिषांशुभम् ३

## पराशर उवाच.

शुक्लांबरधरंविष्णुंशुक्लांबरधरांगिराम् प्रणम्यपांचजन्यं
चर्चाणयाभ्याधृतंद्वयम् ४ सूर्यंनत्वागृहपतिंजगदुत्पत्ति-
कारणम् वक्ष्यामिवेदनयनंयथाब्रह्ममुखाच्छ्रुतम् ५
शांतायगुरुभक्तायऋजवेर्चितस्वामिने आस्तिकायप्र-
दातव्यंततःश्रेयोह्यवाप्स्यति ६ नदेयंपरशिष्यायनास्ति
कायशठायच दत्तेप्रतिदिनंदुःखंजायतेनात्रसंशयः ७
एकोव्यक्तात्मकोविष्णुरनादिःप्रभुरीश्वरः शुद्धसत्वो
जगत्स्वामीनिर्गुणस्त्रिगुणान्वितः ८ संसारकारकःश्री-
मान्निमित्तात्माप्रतापवान् एकांशेनजगत्सर्वंसृजत्यव-
तिलीलया ९ त्रिपादंतस्यदेवस्यह्यमृतंतत्त्वदर्शिनः वि-
दंतितत्प्रमाणंचसप्रधानंतथैकपात् १० व्यक्ताव्यक्तात्म-
कोविष्णुर्वासुदेवस्तुगीयते यदव्यक्तात्मकोविष्णुःशक्ति-
द्वयसमन्वितः ११ व्यक्तात्मकोत्रिशक्तीभिःसंयुतोनंतश-
क्तिमान् सत्वप्रधानाश्रीशक्तिर्भूशक्तिश्चरजोगुणा १२
शक्तिस्तृतीयायाप्रोक्तानीलाख्याध्वांतरूपिणी वासुदेव

श्चतुर्थीभूच्छ्रीशक्त्यामेरितोयदा १३ संकर्षणश्चप्रद्युम्नो
निरुद्धइतिमूर्तिधृक् तमःशक्त्यान्वितोविष्णुर्देवःसंकर्ष-
णाभिधः १४ प्रद्युम्नोरजसाशक्त्यानिरुद्धःसत्वयायुतः
महान्संकर्षणाज्जातःप्रद्युम्नाद्यदहंकृतिः १५ अनिरुद्धा-
त्स्वयंजातोब्रह्माहंकारमूर्तिधृक् सर्वेषुसर्वशक्तिश्चस्व-
शक्त्याधिकयायुतः १६ अहंकारस्त्रिधाभूत्वासर्वमेतद्द
विस्तरात् सात्विकोराजसश्चैवतामसश्चेदहंकृतिः १७
देवावैकारिकाज्जातास्तैजसादिन्द्रियाणिच तामसाच्चैवभू-
तानिखादीनिस्वस्वशक्तिभिः १८ श्रीशक्त्यासहितोवि-
ष्णुःसदापातिजगत्त्रयम् भूशक्त्यासृजतेविष्णुर्नीलश-
क्त्यायुतोत्तिहि १९ सर्वेषुचैवजीवेषुपरमात्माविराजते
सर्वंहितदिदंब्रह्मन् स्थितंहिपरमात्मनि २० सर्वेषुचैवजी-
वेषुस्थितंह्यंशद्वयंक्वचित् जीवांशमधिकंतद्वत्परमात्मांश-
कःकिल २१ सूर्यादयोग्रहाःसर्वेब्रह्माकामहिपादयः ए
तेचान्येचबहवःपरमात्मांशकाधिकाः २२ शक्तयश्चतथै
तेषामधिकांशाःश्रियादयः अन्येषुस्वस्वशक्तिषुज्ञेयाजी-
वांशकाधिकाः २३

मैत्रेय उवाच.

रामकृष्णादयोयेचह्यवताटारमापतेः तेपिजीवांशसंयु-
क्ताः किंवाब्रूहिमुनीश्वर २४

पराशरउवाच.

रामःकृष्णश्चभोविप्रनृसिंहःसूकरस्तथा एतेपूर्णावतारा-
श्चह्यन्येजीवांशकान्विताः २५ अवताराण्यनेकानिह्यज-

स्यपरमात्मनः जीवानांकर्मफलदोग्रहरूपीजनार्दनः २६
दैत्यानांबलनाशायदेवानांबलवृद्धये कर्मसंस्थापनार्था-
यग्रहाजाताः शुभाःक्रमात् २७ रामोवतारःसूर्यस्यचंद्र-
स्ययदुनायकः नृसिंहोभूमिपुत्रस्यबुधःसोमसुतस्यच
२८ वामनोविबुधेज्यस्यभार्गवोभार्गवस्यच कूर्मोभास्करपु-
त्रस्यसैंहिकेयस्यशूकरः २९ केतोर्मीनावतारश्चयेचा-
न्येतेपिखेटजाः परमात्मांशमधिकंयेषुतेखेचराभिधाः
३० जीवांशमधिकंयेषुजीवास्तेवैप्रकीर्तिताः सूर्यादिभ्यो
ग्रहेभ्यश्चपरमात्मांशनिःसृताः ३१ रामकृष्णादयःसर्वेस्य-
वताराभवंतिवै तत्रैवतेविलीयंतेपुनःकार्योत्तरेसदा ३२
जीवांशनिःसृतास्तेषांतेभ्योजातानरादयः तेपितत्रैवलीयं-
तेतेव्यक्तेसमयांतिहि ३३ इदंतेकथितंविप्रसर्वंयस्मिन्भ-
वेदिति भूतान्यपिभविष्यन्तितत्तत्सर्वज्ञतामियात् ३४ वि-
नातज्ज्योतिषंनान्योज्ञातुंशक्यातिकर्हिचित् तस्मादव-
श्यमध्येयंब्राह्मणैश्चविशेषतः ३५ योनरःशास्त्रमज्ञा-
त्वाज्योतिषंखलुनिंदति रौरवंनरकंभुक्त्वांधत्वंचान्य-
जन्मनि ३६ इतिश्रीबृहत्पाराशरहोरापूर्वखंडसा-
रांशे शास्त्रावतारणंनामप्रथमोध्यायः १

## अथजन्मलग्नकुंडलिभावविलोकनार्थं स्वरूपमाह.

तिर्यक्पंचततोर्ध्वगाश्चलिखितारेखाश्चराशयात्मकं चक्रं
स्यात्पुरुहूतदिग्ग्रहमुखालग्नादिराशिग्रहाः संलेख्यो-
दयचन्द्रकारकपदोरूढात्महोराघटी वर्गाणांचदशाफलम्

एवशात्तत्फलंवक्ष्यति १

## पराशरउवाच.

कालात्माचदिवानाथोमनःकुमुदबांधवः सत्वंकुजोविजानीयाद्बुधोवाणीप्रदायकः २ देवेज्योज्ञानसुखदोभृगुर्वीर्यप्रदायकः विचार्यतामिदंसर्वंछायासूनुश्चदुःखदः ३ राजानौभानुहिमगोनेताज्ञेयोधरात्मजः बुधोराजकुमारश्च सचिवौगुरुभार्गवौ ४ प्रेष्यकोरविपुत्रश्चसेनास्वर्भानुपुच्छकौ एवंक्रमेणवैविप्रसूर्यादीनिविचिंतयेत् ५ रक्तश्यामोदिवाधीशोगौरगात्रोनिशाकरः अत्युच्चांगोरक्तभौमोदूर्वाश्यामोबुधस्तथा ६ गौरगात्रोगुरुर्ज्ञेयःशुक्रःश्यामस्तथैवच कृष्णदेहोरवेःपुत्रोज्ञायतेद्विजसत्तम ७ वन्हींबुशिखिकाविष्णुबिडौजशचिकाद्विज सूर्यादीनांखगानांचनाथाज्ञेयाःक्रमेणच ८ क्लीबौद्वौसौम्यशौरीचयुवतींदुभृगोद्विज नराःशेषाश्चविज्ञेयाभानुर्भौमोगुरुस्तथा ९ अग्निभूमिनभस्तोयवायवःक्रमतोद्विज भौमादीनांग्रहाणांचतत्वाश्चामीप्रकीर्तिताः १० गुरुशुक्रौविप्रवर्गौकुजार्कौक्षत्रियौद्विज शशिसौम्यौवैश्यवर्णौशनिःशूद्रोद्विजोत्तम ११ चंद्रसूर्य्यगुरु सौम्याभृग्वारशनयोद्विज सत्वरजस्तमइतिस्वभावाज्ञायतेक्रमात् १२ मधुपिंगलदृक्सूर्यश्चतुरस्रःशुचिर्द्विज पित्तप्रकृतिकोधीमान्पुमानल्पकचोद्विज १३ वहुवातकफःप्राज्ञश्चंद्रोवृत्ततनुर्द्विज शुभदृक्मधुवाक्यश्चचंचलोमदनातुरः १४ क्रूररक्तारुणाभौमश्चपलादारमूर्तिकः पित्तप्रकृतिकःक्रोधीकृशमध्यतनु-

द्विज १५ वपुःश्रेष्ठोक्तिस्पष्टवाक्चत्यन्तिहास्यरुचिर्बुधः पित्त-
वान्कफवान्विमिश्रमारुतप्रकृतिस्तथा १६ बृहद्गात्रोगुरु-
श्चैवपिंगलोमूर्द्धजेक्षणः कफप्रकृतिकोधीमान्सर्वशा-
स्त्रविशारदः १७ सुखीकांतवपुःश्रेष्ठःसुलोचनभृगोःसु-
तः काव्यकर्ताकफाधिक्यानिलात्मावक्रमूर्द्धजः १८
कृशदीर्घतनुःशौरिःपिंगदृष्ट्यानिलात्मकः स्थूलदंतो
लसःपंगुः खररोमकचोद्विज १९ धूम्राकारोनीलतनुर्वन-
स्थोपिभयंकरः वातप्रकृतिकोधीमान्स्वर्भानुःप्रतिमः
शिखी २० अस्थिरक्तस्तथामज्जात्वक्चमेवीर्यस्नाय-
वः तासामीशाःक्रमेणोक्ताज्ञेयासूर्यादयोद्विज २१ दे-
वालयजलंवन्हिक्रीडादीनांतथैवच कोशशय्यास्थलक्करा-
णामीशाःसूर्यादयःक्रमात् २२ अयनक्षणवारर्तु-
मासपक्षसमाद्विज सूर्यादीनांक्रमाज्ज्ञेयानिर्विशंक द्वि-
जोत्तम २३ कटुलवणतिक्तमिश्रमधुरेक्षकषायकाः
क्रमेणसर्वेविज्ञेयाःसूर्यादीनांद्विजोत्तम २४ बुधेज्यौबलि-
नौपूर्वेरविभौमौचदक्षिणे वारुणःसूर्यपुत्रश्चासितचंद्रौत्त-
थोत्तरे २५ निशायांबलिनश्चंद्रकुजशौराभवंतिहि स-
र्वदाज्ञोबलीज्ञेयोदिनशेषाद्विजोत्तम २६ कृष्णेचबलिनः
क्रूराःसौम्यावीर्ययुताःसिते सौम्यायनेसौम्यखेटोबली
याम्यायनेऽपरः २७ स्वदिवससमहोरामासपेकालवीर्य-
कम् शकुबुगुशुचराद्याद्वृद्धितोवीर्यवन्तराः २८ स्थू
लान्जनयतिसूर्योदुर्भगान्सूर्यपुत्रकः क्षीरोपेतांस्तथा
चन्द्रःकटुकाद्यान्धरासुतः २९ गुरुज्ञौसफलान्विमपु-
ष्पवृक्षान्भृगोःसुतः निरसान्सूर्यपुत्रश्च एवंज्ञेयाःख-

पयशा तत्तत्फलं वक्ष्यति १

## पराशरउवाच.

कालात्माचदिवानाथोमनःकुमुदबांधवः सत्वंकुजोविजानीयाद्बुधोवाणीप्रदायकः २ देवेज्योज्ञानसुखदोभृगुर्वीर्यप्रदायकः विचार्यतामिदंसर्वंछायासूनुश्चदुःखदः ३ राजानौभानुहिमगौनेताज्ञेयोधरात्मजः बुधोराजकुमारश्च सचिवौगुरुभार्गवौ ४ प्रेष्यकोरविपुत्रश्च सेनास्वर्भानुपुच्छकौ एवंक्रमेणवैविप्रसूर्यादीनिविचिंतयेत् ५ रक्तश्यामोदिवाधीशोगौरगात्रोनिशाकरः अत्युच्चांगोरक्तभौमोदूर्वाश्यामोबुधस्तथा ६ गौरगात्रोगुरुर्ज्ञेयःशुक्रःश्यामस्तथैवच कृष्णदेहोरवेःपुत्रोज्ञायतेद्विजसत्तम ७ वन्ह्यंबुशिखिकाविष्णुबिडौजशचिकाद्विज सूर्यादीनांखगानांचनाथाज्ञेयाःक्रमेणच ८ क्लीबौद्वौसौम्यशौरीचयुवतींदुभृगौद्विज नराःशेषाश्चविज्ञेयाभानुर्भौमोगुरुस्तथा ९ अग्निभूमिनभस्तोयवायवःक्रमतोद्विज भौमादीनांग्रहाणांचतत्वाश्चामीप्रकीर्तिताः १० गुरुशुक्रौविप्रवर्गौकुजार्कौक्षत्रियौद्विज शशिसौम्यौचैवश्यवर्णौशनिःशूद्रोद्विजोत्तम ११ चंद्रसूर्य्यगुरुसौम्याभृग्वारशनयोद्विज सत्वरजस्तमशनिस्वभावाज्ञायतेक्रमात् १२ मधुपिंगलदृक्सूर्यश्चतुरस्रःशुचिर्द्विज पित्तप्रकृतिकोधीमान्पुमानल्पकचोद्विज १३ बहुवातकफःप्राज्ञश्चंद्रोवृत्ततनुर्द्विज शुभदृक्मधुवाक्यश्चचंचलोमदनातुरः १४ क्रूररक्तारुणाभौमश्चपलोदारमूर्तिकः पित्तप्रकृतिकःक्रोधीकृशमध्यतनु-

द्विज १५ वपुःश्रेष्ठोक्तिरवाक्चद्यनिहास्यरुचिर्बुधः पित्त
वान्कफवान्विप्रमारुतप्रकृतिस्तथा १६ वृहद्गात्रोगुरु-
श्चैवपिंगलोमूर्द्धजेक्षणः कफप्रकृतिकोधीमान्सर्वशा-
स्त्रविशारदः १७ सुखीकांतवपुःश्रेष्ठःसुलोचनभृगोःसु-
तः काव्यकर्ताकफाधिक्यानिलात्मावक्रमूर्द्धजः १८
कृशदीर्घतनुःशौरिःपिंगदृष्ट्यनिलात्मकः स्थूलदंतो
लसत्पंगुः खररोमकचोद्विज १९ धूम्राकारोनीलतनुर्वन-
स्थोपिभयंकरः वातप्रकृतिकोधीमान्स्वर्भानुः प्रतिमः
शिखी २० अस्थिरक्तस्तथामज्जात्वक्चर्मवीर्यस्नाय-
वः तासामीशाःक्रमेणोक्ताज्ञेयासूर्यादयोद्विज २१ दे-
वालयजलंवन्हिक्रीडादीनांतथैवच कोशशय्याद्युत्करा-
णामीशाःसूर्यादयःक्रमात् २२ अयनक्षणवारर्तु-
मासपक्षसमाद्विज सूर्यादीनांक्रमाज्ज्ञेयानिर्विशंक द्वि-
जोत्तम २३ कटुलवणतिक्तमिश्रमधुरेक्षकषायकाः
क्रमेणसर्वेविज्ञेयाःसूर्यादीनांद्विजोत्तम २४ बुधेज्यौबलि-
नौपूर्वेरविभौमौचदक्षिणे वारुणःसूर्यपुत्रश्चसितचंद्रौत-
थोत्तरे २५ निशायांबलिनश्चंद्रकुजशौराभवंतिहि स-
र्वदाज्ञोबलीज्ञेयोदिनशेषाद्विजोत्तम २६ कृष्णेचबलिनः
क्रूराःसौम्यावीर्ययुताःसिते सौम्यायनेसौम्यखेटोव ली-
याम्यायनेपरः २७ स्वदिवससमहोरामासपेकालवीर्य-
कम् शकुबुगुशुचराद्याद्वृतोवीर्यवत्तराः २८ स्थू
लान्जनयतिसूर्योदुर्भगान्सूर्यपुत्रकः क्षीरोपेतांस्तथा
चन्द्रः कटुकाद्यान्धरासुतः २९ गुरुज्ञौसफलान्विप्रपु-
ष्परक्षान्भृगोःसुतः निरसान्सूर्यपुत्रश्चएवंज्ञेयाःख-

गाद्विज ३० राहुश्चांडालजातिश्चकेतुर्जात्यंतरस्तथा शिखिस्वर्भानुमंदानांवल्मीकंस्थानमुच्यते ३१ चित्रकंथा फणींद्रस्यकेतोश्छिद्रयुतोद्विज सीसंराहोर्नीलमणिःकेतो र्ज्ञेयोद्विजोत्तम ३२ गुरोःपीतांवरंविप्र भृगोः क्षौमंतथैवच रक्तक्षौमंभास्करस्यइंदोःक्षौमंसितंद्विज ३३ बुधस्यतुकृष्ण क्षौमंरक्तचित्रंकुजस्यच वस्त्रंचित्रंशनेर्विप्रपट्टवस्त्रंतथैवच ३४ भृगोश्र्तुर्वसंतश्चकुजभानोश्चग्रीष्मकः चंद्रस्यवर्षाविज्ञेयाशरच्चैवतथाविदः ३५ हेमंतोपिगुरोर्ज्ञेयाशने स्तुशिशिरोद्विज अष्टौमासाश्चस्वर्भानोःकेतोर्मासत्रयंद्विज ३६ राहवारपंगुचंद्राश्चविज्ञेयाधातुखेचराः मूलग्रहौसूर्यशुक्रौ अपराजीवसंज्ञकाः ३७ गृहेषुमंदोवृद्धोस्ति आशुरद्विमदायकः नैसर्गिकेबहुसमान्ददातिद्विजसत्तम ३८

## अथ पंचांगस्थितग्रहेषु चालनमाह.

स्वेष्टादग्रे भवेत्पंक्तिःपंक्तौस्वेष्टंविशोधयेत् स्वेष्टात्पृष्ठे भवेत्पंक्तिं स्वेष्टंपंक्तिंविशोधयेत् ऋणंधनंतथाज्ञेयंचालनेविधिरेवहि ३९

## अथ ग्रहाणां तात्कालिकीकरणमाह.

गतगम्यदिनाहतद्युभक्तेः खरसांशाविद्युग्युतोग्रहः स्यात् तत्कालभवस्तथाघटीघ्नाःखरसैर्लब्धकलोनसंयुतः स्यात् ४०

## टीका.

गतगम्येति यस्मिन दिवसे ग्रहसाधनंकृतं तस्माद्दिनात् गतगम्याये-

दिवसास्तैराहताद्गुणितायायाद्भुक्तिर्ग्रहभुक्तिस्तत्सकाशात्खरसे ६० षष्ट्या
प्तालब्धा येऽशास्तैर्विद्युक् रहितोयुक्तोग्रहः कार्यः गताश्चेद्दिवसास्तदा
रहितः कार्यो ऽगताश्चेद्दिवसास्तदा युक्तकार्य इत्यर्थः सग्रहस्तत्कालभवस्त-
द्दिनजोग्रहः स्यात् तथा गतगम्यघटीघ्नाः गतेः सकाशात् खरसैर्लब्धः क-
लाभिरूनः युक्तः कार्यः सतात्कालिकः स्यादित्यर्थः ४०

## अथ भयातभभोगसाधनं.

इष्टमधिकंनक्षत्रन्न्यूनंतदाइष्टात्इत्यनेनज्ञेयम् इष्टाद्विही-
नंचदिनर्क्षनाडीभयातसंज्ञा भवतीहतस्य दिनर्क्षनाडीरख-
रसेषुशुद्धानिजर्क्षयुक्तः सहितेभभोगः ४१ इष्टंन्यूनंनक्ष-
त्रमधिकं तदागतर्क्षनाड्येतिज्ञेयं गतर्क्षनाडीरवरसेषुश्च-
द्धासूर्योदयादिष्टघटिषुयुक्ताः भयातसंज्ञाभवतीहतस्य
निजर्क्षनाडीसहितेभभोगः ४२

### अथ चंद्रस्पष्टमाह.

गतर्क्षषष्टिगुणितं भभोगेनच भाजितम् दस्रादिपष्टिगुणिते
र्लब्धंतत्रसुयोजयेत् ४३ तच्चापिद्विगुणंकृत्वात्र्यंकेनविभ-
जेत्पुनः मृगांकलब्धमंशादीन्सुसाधयद्विजोत्तम ४४
खखवशून्याष्टवेदेनगतिर्भभोगभाजिता एवंचंद्रस्यविज्ञेया
रीतिःस्पष्टतराबुधैः ४५

### अथोच्चनीचग्रहाः

अजोवृषमृगःकन्याकुलीरझपतौलिकाः सूर्यादीनांक्र-
मादेतास्तुंगसंज्ञाःप्रकीर्तिताः नीचास्तत्समाज्ज्ञायाग्रहाणां-
चाविनिश्चिताः ४६ सूर्यस्यभागेदशमेतृतीयेचंद्रस्यजीवस्य
तुपंचमेंऽशे सौरस्यविंशेत्वधिसप्तकेनार्किंयांश्कृगाःपंचदशेबुध-

स्य ४७ भौमस्यविंशोऽष्टयुते परोऽक्षेविंशल्लुवेसूर्यसुतस्य नीचाः ४८

## अथ मूलत्रिकोणमाह.

विंशतिरंशाः सिंहे त्रिकोणमपरेस्वभवनमर्कस्य उच्चं भागात्रितयं वृषमिंदोःस्यात्रिकोणमपरेंशाः ४९ द्वादश भागामेषे त्रिकोणमपरेस्वभेतुभौमस्य उच्चफलंकन्यायां बुधस्यतिथ्यंशकैः सदाचिंत्यं ५० परतस्त्रिकोण जांते पंचभिरंशैःस्वराशिजंपरतः दशभिर्भागैर्जीव त्रिकोणफलंस्वभंपरंचापे ५१ शुक्रस्यतुतिथयोंशा स्त्रिकोणमपरेतुलेस्वराशिश्च कुंभेत्रिकोणनिजभे रविजस्यरविर्यथासिंहे ५२

## अथ मित्रामित्रविधिमाह.

रवेःसमोज्ञःसितसूर्यपुत्रावरीपरेयेसुहृदोवरायः चंद्रस्यनारीरविचंद्रपुत्रोमित्रेसमाः शेषनभश्चराः स्युः ५३ समोसितार्कीशशिजश्चशत्रुर्मित्राणिशेषाः पृथिवीसुतस्य शत्रुःशशिः सूर्यसितोचमित्रेसमाः परेस्युः शशिनंदनस्य ५४ गुरोर्ज्ञशुक्रौरिपुसंज्ञकौतुशनिः समोन्येसुहृदोभवंति शुक्रस्यमित्रेबुधसूर्यपुत्रौसमौकुजार्यावितरावरीतौ ५५ शनेःसमोवाक्पतिरिंदुसूनुशुक्रौचमित्रौरिपवःपरेपि भवंग्रहाणांचतुरानननशत्रुत्वमित्रत्वसमत्वमुक्तं ५६ दशायबंधुसहजस्वांत्यस्थास्तेपरस्परं सुहृद्भवेदधिसुहृत्समोमित्रपरःसमः ५७ तद्यात्रिकोणषष्ठाष्टसप्तकास्थितखेचराः अन्योन्यरिपुतांयातितत्कालेतानिवेमुने ५८

**तात्कालमैत्रीचक्रं**

| सू. | चं. | मं. | बु. | बृ. | शु. | श. |
|---|---|---|---|---|---|---|
| चं. मं. शु. | सू. मं. बु. शु. | बृ. श. चं. र. बु. | च. शु. मं. | श. मं. | च. र. बु. | मं. बृ. |
| बु. बृ. श. | बृ. शु. | गु. | सू. बृ. श. | शु. चं. र. बु. | श. मं. बृ. | शु. चं. र बु. |
| मित्र | २।३।४।१०।११।१२। | | | | | |
| शत्रु | १।५।६।७।८।९।। | | | | | |

**निसर्गमैत्रीचक्रम्**

| सू. | चं. | मं. | बु. | बृ. | शु. | श. | ग्रह |
|---|---|---|---|---|---|---|---|
| च. मं. गु. | सू. बु. | र. चं. गु. | र. शु. | र. चं. मं. | बु. श. | बु. शु. | मित्र |
| बु. | मं. गु. शु. श. | शु. श. | मं. गु. श. | श. | मं. गु. | गुरु | सम |
| शु. श. | ० | बु. | चं. | बु. शु. | र. चं. | र. चं. मं. | शत्रु |

**अथ पंचधामैत्रीचक्रम् ॥**

| सू. | चं. | मं. | बु. | गु. | शु. | श. | ग्रह |
|---|---|---|---|---|---|---|---|
| चं. मं. | सू. बु. | बृ. सू. चं. | शु. | मं. | बु. | ० | मित्र |
| ० | मं. शु. | श. | मं. | श. | ० | बृ. | मित्र |
| गु. बृ. | ० | बु. | चं. र. | चं. र. | चं. र. | म. गु. बु. | सम |
| बु. | बृ. श. | गु. | बृ. श. | ० | मं. बृ. | ० | शत्रु |
| श. | ० | ० | ० | ० | शु. बु. | च र | [illegible] |

अस्योदाहरणम् उक्तस्थानादभीष्टग्रहं मित्रशत्रुज्ञेयं यथा सूर्यस्य चंद्रभौमभृगवो मित्राणि सौम्यगुरुशनिशत्रवः एवं सर्वत्रज्ञेयं तात्कालिकनैसर्गिकमैत्रीचक्रयोरुभयोः संमीलितयोर्योगो भवति तदा पंचधामैत्री भवति मित्रेमित्रेऽतिमित्रं समेमित्रे मित्रं शत्रुमित्रेसमं समशत्रूशत्रुः शत्रुशत्रुरति शत्रुः यथा सूर्यस्य चंद्रभौमावतिमित्रंगुरुभृगुसमौसौम्यःशत्रु शनिरतिशत्रुः एवंसर्वत्रज्ञेयम् ॥

| अथशुभबलचक्रं | | | | | | | अथाशुभबलचक्रं | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| उच्च | मूल | स्व | मित्र | सम | नीच | शत्रु | उच्च | मूल | स्व | मित्र | सम | नीच | शत्रु |
| १ | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | १ | १ |
| ० | ४५ | ३० | १५ | ७ | ० | ० | ० | ७ | १५ | ३० | ४५ | ० | ० |
| ० | ० | ० | ० | ३० | ० | ० | ० | ३० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |

## अथ ग्रहाणांबलमाह.

स्वोच्चेशुभंफलंपूर्णंत्रिकोणेपादवर्जितम् स्वर्क्षेदलंमित्रगेहेपादमात्रंप्रकीर्तितम् ५९ पादार्धंसमभेप्रोक्तंव्यर्थंनीचास्तशत्रुगे तद्वद्दुष्टफलंब्रूयाद्व्यत्ययेनविचक्षणः ६०

## अथ धूमाद्यप्रकाशकग्रहस्पष्टकरणं.

२० २०
नखलिप्ताधिकेधूमेकुतिलिप्ताविहीनकाः केतोकार्या गुरोर्वाक्याद्दक्षपादावसानकाः ६१ चत्वारोराशयोभानोर्युक्ताभागास्त्रयोदश धूमोनाममहादोषः सर्वकर्मविनाशकः ६२ धूमोमंडलतःशुद्धोव्यतीपातोत्रदोषदः सषड्भेत्रव्यतीपातेपरिवेषस्तुदोषकृत् ६३ परिवेषश्च्युतश्चक्रादिंद्रचापश्चदोषदः अत्यष्टसंशयुतेचापेकेतुखेटःपरोविषम् ६४ एकराशियुतेकेतोसूर्यःस्यात्पूर्ववत्समः अप्रकाशग्रहाश्चैतेदोषाःपापग्रह

तः ४।१३।२० अयंधूमः ६।१७।४८।१ पूर्वोक्तधूमः मंडल-तो१२ द्वादशराशितः शुद्धोयंव्यतीपातः ५।१२।११।५९। अयं षड्राशियुक्तः परिवेषः ११।१२।११।५९ अयं चक्रा १२च्युतः इंद्रचापः १७।४८।१ अयं अत्यष्ट्यंशः सप्तदशांशाधिव्यंशास्ते १६।४० भंगिरान्वितोयंध्वजः १।४।२८।१ एक राशियुतो ध्वजः पूर्वतुल्यो रविःस्यादित्यर्थः २।४।२८।१। १।२।३।४।५

| अप्रकाशिक क्षेपकास्तुः | | | | | |
|---|---|---|---|---|---|
| | धूम | व्यतीपात | परिवेष | इंद्रधनु | ध्वजः |
| रा | ४ | १२ | ६ | १२ | ० |
| ऽशा | १३ | ० | ० | ० | १६ |
| क | २० | ० | ० | ० | ४० |

| अप्रकाशिकग्रहाः स्पष्टाःस्तुः | | | | | | |
|---|---|---|---|---|---|---|
| धूम | व्यतीपात | परिवेष | इंद्रधनुः | ध्वज | गुलिक | प्राणपद |
| ६ | ५ | ११ | ० | १ | ५ | ३ |
| १७ | १२ | १२ | १७ | ४ | ६ | ४ |
| ४८ | ११ | ११ | ४८ | २८ | ० | ० |
| १ | ५९ | ५९ | १ | १ | ० | ० |

## अथ किंचिद्धूमादिकफलविचारमाह.

भान्विंदुलग्नगेष्वेषुवंशायुर्ज्ञाननाशनम् एषांवक्ष्यके दोषाणांस्थितिःपद्मासनोदिता ६६

### टीका

भान्वितिजन्मकालीनसूर्यचंद्रलग्नानां पृथक्परिवेषादिभिस्त्रि-

| अथशुभबलचक्रं. | | | | | | | अथाशुभबलचक्रं | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| उच्च | मूल | स्व | मित्र | सम | नीच | शत्रु | उच्च | मूल | स्व | मित्र | सम | नीच | शत्रु |
| १<br>०<br>०<br>० | ०<br>४५<br>०<br>० | ०<br>३०<br>०<br>० | ०<br>१५<br>०<br>० | ०<br>७<br>३०<br>० | ०<br>०<br>०<br>० | ०<br>०<br>०<br>० | ०<br>०<br>०<br>० | ०<br>७<br>३०<br>० | ०<br>१५<br>०<br>० | ०<br>३०<br>०<br>० | ०<br>४५<br>०<br>० | १<br>०<br>०<br>० | १<br>०<br>०<br>० |

## अथ ग्रहाणांबलमाह.

स्वोच्चेशुभफलंपूर्णंत्रिकोणेपादवर्जितम् स्वर्क्षेदलंमित्र गेहेपादमात्रंप्रकीर्तितम् ५९ पादार्धंसमभेप्रोक्तंव्यर्थं नीचास्तशत्रुगे तद्वदुष्फलंब्रूयाव्दत्ययेनविचक्षणः ६०

## अथ धूमाद्यप्रकाशकग्रहस्पष्टकरणं.

[२०]नखलिप्ताधिके[२०]धूनेकृतिलिप्ताविहीनकाः केतोकार्या गुरोर्वाक्याहक्षपादावसानकाः ६१ चत्वारोराशयो भानोर्युक्तं भागास्त्रयोदश धूमोनाममहादोषः सर्वक र्मविनाशकः ६२ धूमोमंडलनः शुद्धोव्यतीपातोत्र दोषदः सषड्भेत्रव्यतीपातेपरिवेषस्तुदोषकृत् ६३ परिवेषश्च्युतश्चक्रादिंद्रचापश्चदोषदः अत्यस्यंशायु तेचापकेतुखेटः परोधिपम् ६४ एकराशियुतेकेतौसू र्येःस्यात्पूर्ववत्समः अप्रकाशग्रहाश्चैतेदोषाःपापग्रहा स्मृताः ६५

तः ४।१३।२० अयंधूमः ६।१७।४८।१ पूर्वोक्तधूमः मंडलतो१२ द्वादशराशितः शुद्धोयंव्यतीपातः ५।१२।११।५९। अयं षड्राशियुक्तः परिवेषः ११। १२।११।५९ अयं चक्रा १२च्युतः इंद्रचापः १७। ४८।१, अयं अत्यष्ट्यंशः सप्तदशांशाधिस्त्र्यंशास्ते १६।४०। भोगैरान्वितोयंध्वजः १।४।२८।१ एक राशि युतो ध्वजः पूर्वतुल्यो रविस्यादित्यर्थः २।४।२८।१। १।२।३।४।५

| अप्रकाशिक क्षेपकास्युः | | | | |
|---|---|---|---|---|
| धूमः | व्यतीपातः | परिवेषः | इंद्रधनुः | ध्वजः |
| रा ४<br>ऽशा १३<br>क २० | १२<br>०<br>० | ६<br>०<br>० | १२<br>०<br>० | ०<br>१६<br>४० |

| अप्रकाशिकग्रहाः स्पष्टाःस्युः | | | | | | |
|---|---|---|---|---|---|---|
| धूमः | व्यतीपातः | परिवेषः | इंद्रधनुः | ध्वजः | गुलिकः | प्राणपदः |
| ६<br>१७<br>४८<br>१ | ५<br>१२<br>११<br>५९ | ११<br>१२<br>११<br>५९ | ०<br>१७<br>४८<br>१ | १<br>४<br>२८<br>१ | ५<br>६<br>०<br>० | ३<br>४<br>०<br>० |

## अथ किंचिद्धूमादिकफलविचारमाह.

भान्विंदुलग्नगेष्वेषुवंशायुर्ज्ञाननाशनम् एषांवर्क्के दोषाणांस्थितिःपद्मासनोदिता ६६

### टीका

भान्विति जन्मकालीनसूर्यचंद्रलग्नानां पृथक्परिवेषादिभिर्लि-

भिस्त्रिभिर्योगवशात्फलत्रयनाशनं द्वयोर्द्वयमेकस्मिन्नेक फलनाशः ए-
वंयथायोग आधिक्ययोगस्तथानिष्टफलाधिक्यमिति भावः ६६

# अथ जन्मकालइष्टलग्ननिश्चयार्थं

## गुलिकसाधनमाह.

रविवारादिशन्यंतंगुलिकादिनिरूप्यते दिवसानष्टधा
कृत्वावारेशादगणयेत्क्रमात् ६७ अष्टमांशोनिरीशः
स्याच्छन्यंशोगुलिकः स्मृतः रात्रिरप्यष्टधाभक्तोवा-
रेशात्पंचमादितः ६८ गणयेदष्टमः खंडोनिष्पतिःप-
रिकीर्तितः शन्यंशोगुलिकःप्रोक्तोगुर्वंशोयमघंटकः
६९ भौमांशोमृत्युरादिष्टोरव्यंशेकालसंज्ञकः सौम्यां
शेर्द्धप्रहरकःस्पष्टकर्मप्रदेशकः ७०

## टीका.

रव्यादि सप्तवारेषु दिनमानमष्टधाविभज्य तत्तद्वारेशं प्रथम
खंडाधिपं कृत्वाऽग्रिमखंडेषु तत्तद्वारेशादग्रिमग्रहान्क्रमेणशनेन
जानीयादष्टमः खंडस्तुनिरीशः एवंच सप्तसुवारेषु शन्यंशोगुलिक
नामा तथाच रविवारे सप्तमः सोमेषष्ठः भौमे पंचमः बुधे चतु-
र्थः गुरौ तृतीयः शुक्रे द्वितीयः शनौ प्रथमः खंडोगुलिको भव-
ति सप्तस्वपि वारेषु रात्रिमानमष्टधा विभज्य तद्वारेशात्पंचमा-
द्याः खंडाधिपा ज्ञेयाः रात्रावप्यष्टमःखंडोनिरीशः एवंच रविरा-
त्रौ तृतीयः खंडः सोमेद्वितीयः भौमे प्रथमः बुधे सप्तमः गुरौष-
ष्ठः शुक्रे पंचमः शनौ चतुर्थः खंडोगुलिको भवति एवं सर्व दि-

नेरात्रौच गुरुखंडोयमघंटनामा बुधखंडोऽर्द्धप्रहरकाख्यः रव्यंशः कालसंज्ञः भौमांशोमृत्युनामेतिज्ञेयम् स्पष्टकर्मइति ७० ॥६॥

## अस्योदाहरणं

दिनमान ३३।१४ मष्टधाविभज्य ४।९।१५ लब्धं सौम्यदिनेजन्म तर्हि सौम्यवारगुणकेन ४ गुण्यं १६।३७ गुलिकेष्ट मस्योपरिलग्नानयनरीत्या नीतं गुलिकलग्नं ५।६ स्पष्ट एवंसर्वत्र ज्ञेयम् ७।८।९।१०

| गुलिकगुणकध्रुवांकास्तु: | | | | | | | |
|---|---|---|---|---|---|---|---|
| र० | चं० | मं० | बु० | गु० | शु० | श० | ग्रहाः |
| ७ | ६ | ५ | ४ | ३ | २ | १ | दिवा |
| ३ | २ | १ | ७ | ६ | ५ | ४ | रात्रिः |

## अथ प्राणपदसाधनमाह

घटीचतुर्गुणाकार्यातिथ्या१५प्तैश्चपलैर्युता दिनकरेणापहृतं१२शेषंप्राणपदं स्मृतम् ७१ शेषात्पलान्ताद्द्विगुणीविधायराश्यंशसूर्यर्क्षनियोजिताय तत्रापितद्राशिचरान्क्रमेण लग्नांशप्राणांशपदैक्यतास्यात् ७२ पुनः कोणात्क्रमात्तरादीनांतथाप्राणपदादपि स्वेष्टकालंपलीकृत्य तिथ्याप्तंभादिकंचयत् ७३ चरागद्विभगेभागेभानौयुकनवमेस्फुटे स्फुटंप्राणपदंतस्मात्पूर्ववच्छोधयेत्तनुः ७४ विनाप्राणपदाच्छुद्धोगुलिकाद्वा निशाकरात् तदशुद्धंविजानीयात्स्थावराणांतदैवहि

७५ द्वयोर्हीनबलेप्येवंगुलिकात्परिचिंतयेत् तस्मात्त
त्समस्थानात्तदंशाच्चकलत्रतः ७६ तत्रैवतत्त्रिको-
णेवाजन्मलग्नंविनिर्दिशेत् मनुष्याणांपशूनांचाद्वितीयेद-
शमेरिपो ७७ तृतीयेमदनेलाभेविहंगानांविनिर्दिशेत्
कीटसर्पजलस्थानां शेषस्थानेषुसंस्थितः ७८ इ० बृ० हो० पू०
सा० द्वितीयोऽध्यायः

## अस्योदाहरणम्

इष्ट ६।१७ चतुर्गुणं २५।८ पंचदशभक्तंशेषं १०।२ शेषपलं द्विगुणीकृतं १५।४ यदा दिनेशेनाधिष्ठितं चरराशी तदा तत्रैव गणनीयं यदा स्थिरद्विस्वभावराशेः सूर्यस्थितेसति तदा कोणभंसः तेषां मध्ये योवैचरराशिस्तस्मात् क्रमगणनया पंचदशपलात्मकं प्राणपदं भवतीत्यर्थः अत्रतु सूर्ये द्विस्वभावराशौ स्थितेसति सूर्यः २।४। २८।१ मिथुनात्संचमं ७ कोणभंतस्माद्गणनीयम् ३।४ प्राणपदमागतं सूर्यांश ४ प्राणांशः द्वयोरैक्यंलग्नांशाप्राणांशैक्यतातदा लग्नागमंभवति नतु सर्वत्रज्ञेयम् ७८ इतिश्रीबृहत्पाराशरहोरा पूर्वखण्डसारांशे ग्रहप्रादुर्भूताध्यायोद्वितीयः २

## पराशर उवाच.

मेषोवृषश्चमिथुनःकर्कसिंहकुमारिकाः कुलालिध-
नुर्धनक्रकुंभमीनास्ततःपराः १ अहोरात्राद्यंतलोपा
द्धोरेतिप्रोच्यतेबुधैः तस्याहिज्ञानमात्रेणजातकर्मफ-
लंवदेत् २ पदव्यक्तात्मकोविष्णुः कालरूपोजना-
र्दनः तस्यांगानिनिबोधत्वंक्रमान्मेषादिराशयः ३
शीर्षाननौतथाबाहूहृत्क्रोडकटिवस्तयः गुह्योरुयुग-

लेजानुयुग्मेचैजंघकेतथा ४ चरणौद्वौतथालग्नात्
ज्ञेयाःशीर्षोदयः क्रमात् चरस्थिरद्विस्वभावाःक्रूराक्रूरौ
नरस्त्रियौ ५ पित्तानिलत्रिधात्वैक्यंश्लेष्मिकाश्चक्रि
यादयः रक्तवर्णोबृहद्गात्रश्चतुष्पाद्रात्रिविक्रमी ६
पूर्ववासीनृपज्ञातिः शैलचारीरजोगुणी पृष्ठोदयीपा-
वकीचमेषराशिःकुजाधिपः ७ श्वेतः शुक्राधिपो
दीर्घश्चतुष्पाच्छर्वरीबली याम्येद्ग्राम्योवणिग्भू-
मिरजोपृष्ठोदयोवृषः ८ शीर्षोदयीनृमिथुनेसगदंच
सवीणकम् प्रत्यक्स्वामीद्विपाद्रात्रिबलिग्राम्योव्रजो
निली ९ समगात्रोहरिद्वर्णो मिथुनाख्योबुधाधिपः
पाटलोवनचारीचब्राह्मणोनिशिवीर्यवान् १० बहुपद
तरस्थौल्यतनुः सत्त्वगुणीजली पृष्ठोदयीकर्कराशि
मृगांकोधिपतिः स्मृतः ११ सिंहः सूर्याधिपः सत्त्वचतु
ष्पात्क्षत्रियोबली शीर्षोदयीबृहद्गात्रः पांडुः पूर्वेद्यु
वीर्यवान् १२ पार्वतिश्चाथकन्याख्याराशिर्दिनबला-
न्विता शीर्षोदयाचमध्यांगाद्विपाद्याम्यचराचसा १३
ससस्यदहनावैश्या चित्रवर्णाप्रभंजिनी कुमारीतमसा
युक्ताबालभावाबुधाधिपः १४ शीर्षोदयीद्युवीर्याढ्य
स्तौचकृष्णोरजोगुणी पंचमोऽक्चरोघातीशूद्रोमध्य
तनुर्द्विपात् १५ शुक्राधिपोथस्वल्पांगोबहुपाद्ब्राह्म-
णोबली सौम्यस्थोदिनवीर्याढ्यः पिशंगोजलभूवहः
१६ रोमस्याढ्योतितीक्ष्णांगोवृश्चिकश्चकुजाधिपः
पृष्ठदयीत्वथधनुर्गुरुस्वामीचसात्त्विकः १७ पिंगलो-
निशिवीर्याढ्यः पावकः क्षत्रियोद्विपात् आदावंतेच

तुष्पादःसुमगात्रोधनुर्द्धरः १८ पूर्वस्थोवसुधाचारीते-
जस्यान्पृष्ठतोङ्गमी मंदाधिपस्तमीभौमीयाम्येट्‌च निशिवीर्य-
वान् १९ पृष्ठोदयीबृहद्गात्रःकर्बुरोवनभूचरः आदौ
चतुष्पादंतेतुद्विपदोजलगोमतः २० कुंभःकुंभीनरो
बभ्रुवर्णमध्यंतनुर्द्विपात् द्युवीर्योजलमध्यस्थोवात
शीर्षोदयीतमः २१ शूद्रःपश्चिमदेशस्यस्वामीदैवाक-
रिःस्मृतः मीनोपुच्छास्यसंलग्नोमीनराशिर्दिवाबली
२२ जलीसत्वगुणाढ्यश्चस्वस्थोजलचरोद्विजः अ-
पदोमध्यदेहीचसौम्यस्थोह्युभयोदयी २३ सुराचा-
र्याधिपश्चास्यराशीनांगदितंमया त्रिंशद्भगणात्मकः
स्थूलसूक्ष्माकरफलायच २४ अथातःसंप्रवक्ष्यामिशृ-
णुष्वमुनिपुंगव जन्मलग्नंचसंशोध्यनिषेकंपरिशोधये-
त् २५ तदहंसंप्रवक्ष्यामिमैत्रेयत्वंविधारय जन्म
लग्नात्परिज्ञानंनिषेकंसर्वजंतुयत् २६ यस्मिन्भावेभा-
नविस्थस्तस्यमांदेर्यदंतरं लग्नभाग्यांतरंयोज्यंयच्चरा-
श्यादिजायते २७ मासादिस्तन्मितंज्ञेयंजन्मतःप्राक्
निषेकजं यद्यद्दृश्यदलेगेशास्तदेंदोर्भुक्तभागयुक् २८
तत्कालेसाधयेल्लग्नंशोधयेत्पूर्ववत्तनुः तस्मात्फ-
लाफलंवाच्यंगर्भस्थस्यविशेषतः २९ शुभावशुभवद्
त्पित्रोर्जीवनंमरणंतथा एवंनिषेकलग्नेनसम्यक्ज्ञेयं
स्वकल्पनात् ३०

## अथ लग्नचतुर्थादिद्वादशभावसाधनमाह.

अयनांशाः॥ वेदाब्ध्यब्ध्यूनःखरसहृतःशाकोऽयनांशाः

## टीका.

शालिवाहनाख्यः इष्टाकः चतुश्चत्वारिंशदधिकशत ४४४ हीनः ततः स्वरस ६० हृतः षष्टिभक्तः फलमयनांशाःस्युः

## अथ पलभाज्ञानंचरखंड साधनमाह

मेषोरविरयनांशयुतो भवतियद्दिने शंकुछायादिनार्द्धेतु पलभेत्युच्यतेबुधैः ३१ स्थानत्रयेचसास्थाप्याशुण्यादिग्वसुपालकैः अन्तेगुणो न्हृते सद्भिश्चरखंडःप्रकीर्तितः ३२ ६ ६ ६.

## टीका

अयनस्य भागाअयनांशाः पूर्ववक्ष्यमाणास्तैःसहवर्तमानोयुक्तः यः सूर्यस्तस्मिन्सूर्ये मेषादिगे राशिभागकलादिना शून्यमितेसति तस्मिन्दिने दिनार्द्धे मध्यान्हे समभुविमध्ये समतलमस्तकपरिधिः समसिद्धोदन्तिदंतजः द्वादशाङ्गुलशंकुर्निवेश्यः तस्य शंकोर्मध्यान्हेभा छाया या भवति सा पलभा भवेदित्यर्थः सापलभा त्रिस्थात्रिषु स्थानेषुतिष्ठतीति त्रिस्थादशभिः१० वसुभिरष्टभिः८ दिक्पालैः १० हतागुणितातत्तोन्तिमांकः गुणेस्त्रिभि.३ रुद्दृताभक्तासती त्रीणि चरखंडकानि भवंति

## अथ लंकोदयमाह

वसुसागरनेत्राणि पलानिलंकोदयेमेषराशौ शांकोंक नेत्रैवृषभे मिथुनेग्निगुड्नेत्र संख्यातम् ३३ विपर्ययमग्निमत्रितये षड्लग्नेष्वेवमेवनिर्दिष्टम् हीनंखंडत्रितयं

युक्तःस्वदेशलग्नोयम् ३४

## अथ लग्नसाधनमाह.

यस्मिन्काले लग्नं साध्यं चयदातदाभवेद्विज्ञे: तात्कालिकसूर्योवैयुक्तःकार्योथसायनांशेन ३५ तद्राशेर्यैरस्वदेशय उदयस्तेनाथभोग्यांशाः निघ्नश्वभागास्त्रिंशच्युतास्तथाभुक्तभागाश्चगुण्याः ३६ भूताद्यस्त्रुइतास्तेनखंकाग्निभाजितायदि भोग्यकालोथद्युमणेर्विज्ञेयश्चद्विजोत्तम ३७ इतिसायनयातांशैर्भुक्तकालोविधीयते इष्टघट्याःपलैःशोध्योभोग्यकालइतिस्थितिः ३८ हातव्याराव्युदयकालाचावंतःशोधयेदथ यच्छेषंरवगुणघ्नं तद्दृतमशुद्धोदयेनाथ ३९ यल्लब्धं चलवाद्यंचायनांशहीनैर्लग्नंस्यात् जानीहिद्विजसत्तम नतोन्नतप्रकारमेवैतत् ४०

## अस्यार्थः

यस्मिन्काले लग्नंसाध्यते तत्कालीनः सूर्यः सायनअयनांशयुक्तः कार्यः सूर्यस्यराशिवशाद्यः स्वदेशीयः उदयस्तेनभोग्यांशाः रवेः त्रिंशत्च्युताः भुक्तभागाःगुण्याः तेरवन्युन्दूनात्रिंशद्भक्ताःसंतः कलाद्योरवेर्भोग्यकालः स्यात् एवंअमुनेवप्रकारेण सायनयातांशैः भुक्तभागैःयातकोभुक्तकालःस्यात् सयथाउदयगुणाभुक्तभागा त्रिंशद्भक्ताः इतिलग्नभुक्तकालार्थमिदमुक्तं भोग्यकालः इष्टघटीनांपलेभ्यःशोध्यः ततः किंविधेयमित्यत आह तदनु तदनंतरं शुद्धोदयान् तदग्रानशुदयान तस्मात्कालात् हातव्या हीं-

## अस्यार्थः

एवमनयारीत्या लंकोदयैः कृत्वा रवेर्भुक्तं भोग्यं शोध्यं नतसली-कृतात् पूर्वपश्चिमनताच्छोध्यम् अन्यदवशिष्टंयत्कर्म तत्प्राग्वत्पूर्वरीत्या लग्नवत्साध्यम् तद्दशमं भवेत् लग्नखेषट्युक्तेसति जायातुर्यौभवतः

## अथ भावसंधिमाह.

लग्नंसुखात्सुखंकामात्कामंखात्खंचलग्नतः अंशमेकहृद्गुणितंयुज्याल्लग्नादिषुक्रमात् ४५ पूर्वापरयुते खंडे संधिःस्याद्भावयोर्द्वयोः एवंद्वादशभावाः स्युर्भव न्तिहिससंधयः ४६

## अस्यार्थः

लग्नतः खंखात् कामंकामात् सुखंसुखात्लग्नं चकारात्सर्वत्रैव ऊनंकार्यम् यथा सुखाल्लग्नमूनं तस्यशेषाङ्कस्य त्र्यंशं त्रिभागोग्राह्य-स्तदेकेन गुणितं यदंकं तल्लग्नेयोज्यं तदा द्वितीय भावो भविष्यति पुनः त्र्यंशं द्विगुणितं कृत्वा लग्ने योज्यं तदा तृतीयभावो भविष्यति एवं सर्वत्र बोध्यमेवं द्वादशभावाः स्युः पूर्वापरयुतेः लग्नाद्द्वितीययोर्योग-स्तस्यार्द्धे द्वयोर्भावयोः संधिः स्यात् हि इति निश्चयेन संधयोभवंतीत्यर्थः

## अथ भोग्यकालादल्पेष्टकालेसतिलग्नसाधनं

भोग्यतो ल्पेष्टकालात्खरामाहतात्स्वोदयाप्तांशयुग्भास्करः स्यात्तनुः

## अस्यार्थः

भोग्यतो भोग्यकालतः अल्पेष्टकालात्खरामाहृ तात्त्रिंशद्गुणा-

न् स्वोदयेन स्वराश्युदयेन हृतात् तस्माद्येऽत्राप्तांशा लब्धभागास्तद्युक्तो भास्करस्तनुलग्नंस्यात्

# अथ लग्नपत्रभावपत्रम्.

सूर्यराश्यंशमानेन फलं ग्राह्यंचकोष्टकम् इष्टघट्या समायुक्तं लग्नंतात्कालिकंभवेत् ४७

## लग्नपत्रस्योदाहरणम्

यथा सूर्यः २१४ लग्नपत्रकोष्टाङ्क १२।५४ इष्टघटी ६।१७ उभयोर्योगः १९।११ पुनः लग्नपत्रमवलोकनेन३।८ लग्नमागतम्

## भावपत्रस्योदाहरणम्.

सूर्यः २।४ भावपत्रकोष्टांकः १४।१७ पूर्वनत ११।२० अयंनिशाद्युनोन्नताङ्कं १९।४० उभयोर्योगः ३३।५७ पुनः भावपत्रमवलोकनेन ६।१३ जातं चतुर्थभवनमेवं सर्वत्रबोध्यम् ७, ७

॥ अथ भावपत्रमिदम् ॥

| अंश | मे०० | वृ०१ | मि०२ | क०३ | सिं०४ | क०५ | तु०६ | वृ०७ | ध०८ | म०९ | कुं०१० | मी०११ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ० | ३ २४ | ८ १७ | १३ १४ | १९ ५७ | २४ २ | २८ ४६ | ३३ १४ | ३८ १७ | ४२ १४ | ४८ ५७ | ५४ २ | ५८ ४६ |
| १ | ३ ३३ | ८ २७ | १३ ४५ | १९ ८ | २४ १२ | २८ ५५ | ३३ ३३ | ३८ २७ | ४३ ४५ | ४९ ८ | ५४ १२ | ५८ ५५ |
| २ | ३ ४२ | ८ ३७ | १३ ५३ | १९ १८ | २४ २२ | २९ ४ | ३३ ४३ | ३८ ३७ | ४३ ५५ | ४९ १८ | ५४ २२ | ५९ ४ |
| ३ | ३ ५३ | ८ ४७ | १४ ६ | १९ २९ | २४ ३२ | २९ १४ | ३३ ५२ | ३८ ४७ | ४४ ६ | ४९ २९ | ५४ ३२ | ५९ १४ |
| ४ | ४ १ | ८ ५७ | १४ १७ | १९ ४० | २४ ४३ | २९ २३ | ३४ १ | ३८ ५७ | ४४ १७ | ४९ ४० | ५४ ४२ | ५९ २३ |
| ५ | ४ १० | ९ ७ | १४ २८ | १९ ५१ | २४ ५२ | २९ ३२ | ३४ १० | ३९ ७ | ४४ २८ | ४९ ५० | ५४ ५२ | ५९ ३३ |
| ६ | ४ १९ | ९ १७ | १४ ३८ | २० १ | २५ २ | २९ ४१ | ३४ १९ | ३९ १७ | ४४ ३८ | ५० १ | ५५ २ | ५९ ४१ |
| ७ | ४ २९ | ९ २७ | १४ ४९ | २० १२ | २५ १२ | २९ ५१ | ३४ २९ | ३९ २७ | ४४ ४९ | ५० १२ | ५५ १२ | ५९ ५१ |
| ८ | ४ ३८ | ९ ३७ | १५ ० | २० २३ | २५ २२ | ३० ० | ३४ ३८ | ३९ ३७ | ४५ ० | ५० २३ | ५५ २२ | ० ० |
| ९ | ४ ४८ | ९ ४४ | १५ ११ | २० ३३ | २५ ३१ | ३० ९ | ३४ ४८ | ३९ ४८ | ४५ ११ | ५० ३३ | ५५ ३१ | ० ९ |
| १० | ४ ५८ | ९ ५८ | १५ २२ | २० ४३ | २५ ४१ | ३० १९ | ३४ ५८ | ३९ ५८ | ४५ २२ | ५० ४३ | ५५ ४१ | ० १९ |
| ११ | ५ ८ | १० ९ | १५ ३२ | २० ५३ | २५ ५० | ३० २८ | ३५ ८ | ४० ९ | ४५ ३२ | ५० ५३ | ५५ ५० | ० २८ |
| १२ | ५ १८ | १० २० | १५ ४३ | २१ ३ | २५ ५९ | ३० ३७ | ३५ १८ | ४० २० | ४५ ४३ | ५१ ३ | ५५ ५९ | ० ३७ |
| १३ | ५ २८ | १० ३१ | १५ ५४ | २१ १३ | २६ ८ | ३० ४६ | ३५ २८ | ४० ३१ | ४५ ५४ | ५१ १३ | ५६ ८ | ० ४६ |
| १४ | ५ ३८ | १० ४२ | १६ ५ | २१ २३ | २६ १८ | ३० ५६ | ३५ ३८ | ४० ४२ | ४६ ५ | ५१ २३ | ५६ १८ | ० ५६ |
| १५ | ५ ४८ | १० ५२ | १६ १५ | २१ ३३ | २६ २७ | ३१ ५ | ३५ ४८ | ४० ५२ | ४६ १५ | ५१ ३३ | ५६ २७ | १ ५ |
| १६ | ५ ५८ | ११ ३ | १६ २६ | २१ ४३ | २६ ३६ | ३१ १४ | ३५ ५८ | ४१ ३ | ४६ २६ | ५१ ४३ | ५६ ३६ | १ १४ |
| १७ | ६ ८ | ११ १४ | १६ ३७ | २१ ५३ | २६ ४५ | ३१ २३ | ३६ ८ | ४१ १४ | ४६ ३६ | ५१ ५३ | ५६ ४५ | १ २३ |
| १८ | ६ १८ | ११ २५ | १६ ४८ | २२ ३ | २६ ५५ | ३१ ३३ | ३६ १८ | ४१ २५ | ४६ ४८ | ५२ ३ | ५६ ५५ | १ ३३ |
| १९ | ६ २८ | ११ ३५ | १६ ५८ | २२ १३ | २७ ४ | ३१ ४२ | ३६ २८ | ४१ ३५ | ४६ ५८ | ५२ १३ | ५७ ३ | १ ४३ |
| २० | ६ ३८ | ११ ४६ | १७ ९ | २२ २३ | २७ १२ | ३१ ५१ | ३६ ३८ | ४१ ४६ | ४७ ९ | ५२ २३ | ५७ १३ | १ ५१ |
| २१ | ६ ४८ | ११ ५७ | १७ २० | २२ ३३ | २७ २२ | ३२ ० | ३६ ४८ | ४१ ५७ | ४७ २० | ५२ ३३ | ५७ २२ | २ ० |
| २२ | ६ ५८ | १२ ८ | १७ ३१ | २२ ४३ | २७ ३२ | ३२ १० | ३६ ५८ | ४२ ८ | ४७ ३१ | ५२ ४३ | ५७ ३२ | २ १० |
| २३ | ७ ८ | १२ १९ | १७ ४२ | २२ ५३ | २७ ४१ | ३२ २० | ३७ ८ | ४२ १९ | ४७ ४२ | ५२ ५३ | ५७ ४१ | २ २० |
| २४ | ७ १७ | १२ २९ | १७ ५२ | २३ २ | २७ ५० | ३२ २८ | ३७ १७ | ४२ २९ | ४७ ५२ | ५३ २ | ५७ ५० | २ २८ |
| २५ | ७ २७ | १२ ४० | १८ ३ | २३ १२ | २८ ० | ३२ ३८ | ३७ २७ | ४२ ४० | ४८ ३ | ५३ १२ | ५८ ० | २ ३८ |
| २६ | ७ ३७ | १२ ५१ | १८ १४ | २३ २२ | २८ ८ | ३२ ४७ | ३७ ३७ | ४२ ५१ | ४८ १४ | ५३ २२ | ५८ ८ | २ ४७ |
| २७ | ७ ४७ | १३ २ | १८ २५ | २३ ३२ | २८ १८ | ३२ ५६ | ३७ ४८ | ४३ २ | ४८ २५ | ५३ ३२ | ५८ १८ | २ ५६ |
| २८ | ७ ५७ | १३ १२ | १८ ३५ | २३ ४२ | २८ २७ | ३३ ५ | ३७ ५७ | ४३ १२ | ४८ ३५ | ५३ ४२ | ५८ २८ | ३ ५ |
| २९ | ८ ७ | १३ २३ | १८ ४६ | २३ ५२ | २८ ३७ | ३३ १५ | ३८ ७ | ४३ २३ | ४८ ४७ | ५३ ५२ | ५८ ३७ | ३ १५ |

## अथ मेषादीनांसंज्ञामाह.

क्रियताबुरिजितुमकुली रलेयपाथोनजूककौर्प्यारव्या तौक्षिकआकोकेरो हृद्रोगश्चांत्यभंचेत्थम् ४८

## अथ मेषादिराशीनां स्वामिनः

मेषवृश्चिकयोर्भौमिस्तुलावृषभयोर्भृगुः कन्यामिथुनयोर्ज्ञः स्याद्धनुर्मीनाधिपोगुरुः ४९ शनिर्मकरकुंभे च कुलीरस्यतु चन्द्रमाः सिंहस्याधिपतिः सूर्यो राशीनामधिपामताः ५०

## पुनः राशीशाः

चंद्रज्ञशुक्रधूनार्कपरिवेषारकार्मुकाः गुरुपातःशनिःकेतुर्ग्रहाः स्युर्द्वादशक्रमात् ५१

## अथाग्रे षोडशवर्गमाह.

वर्गान्षोडशसंख्यातान्ब्रह्मालोकपितामहः तानहं संप्रवक्ष्यामिमैत्रेयश्रूयतामिति ५२ क्षेत्रंहोराचद्रेष्काणस्तुर्यांशः सप्तमांशकः नवांशोदशमांशश्चसूर्यांशः षोडशांशकः ५३ विंशांशोवेदवान्हंसो भांशस्त्रिंशांशकस्ततः खवेदांशोक्षवेदांशः षष्ट्यंशश्चततःपरं ५४ तत्क्षेत्रंतस्यरवेटस्यराशेर्योयस्यनायकः सूर्येंदो विषमेराशौसमेतद्विपरीतकम् ५५ पितरश्चन्द्र होरेशादेवाःसूर्यस्यकीर्तिताः राशेरर्द्धंभवेद्धोराता

श्चतुर्विंशतिः स्मृताः मेषादितासांहोराणांपरिवृत्तिद्वयंभवेत् ५६

## अस्योदाहरणम्

यदायदा विषमराशिः तदातदा सूर्यमारभ्य गणनीयम् यदायदा समराशिस्तदातदा चन्द्रात्प्रथमं गणनीयम् लग्नं ३।८ अस्य होरा चन्द्राद्गणनीयं पंचदशांशपरिमितम् ४ चन्द्रहोरा सूर्य २।४ विषम राशिःअतएव सिंह होरायामेवं सर्वत्र ज्ञेयम् ५६

होराचक्रमिदम् ॥

| स्वा॰ | राशि | मे॰० | वृ॰१ | मि॰ | क॰ | सिं॰ | क॰ | तु॰ | वृ॰ | ध॰ | म॰ | कुं॰ | मी॰ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| दे॰ | १५ | र॰५ | चं॰४ | सू॰५ | चं॰४ | सू॰५ | चं॰४ | सू॰५ | चं॰४ | र॰५ | च ४ | सू॰५ | चं॰४ |
| पितर | ३० | चं॰४ | सू॰५ | च॰४ | सू॰५ | चं॰४ | सू॰५ | च॰४ | सू॰५ | च॰४ | सू॰५ | चं॰४ | सू॰५ |

## अथ द्रेष्काणमाह

राशित्रिभागाद्रेष्काणास्तेचषट्त्रिंशदीरिताः परिवृत्तित्रयंतेषांमेषादेः क्रमशोभवेत् ५७ स्वपंचनवपानांचविषमेषुसमेषुच नारदागस्तिदुर्वासाद्रेष्काणेशाश्चरादयः ५८

## अस्योदाहरणम्

त्रिंशदंशात्मकोराशिस्तस्य त्रिभागंकार्यम् प्रथमभागे यस्मिन्राशिर्वर्तते सएव द्रेष्काणः यदा द्वितीयभागे तदा स्वराशेः पंचमराशि द्रेष्काणः तृतीयभागेसति तदा स्वराशेर्नवमराशिद्रेष्काणोज्ञेयः यथा

लग्न ३।८ प्रथमभागे अतएव स्वद्रेष्काणे एवंसर्वत्रज्ञेयम्

॥ द्रेष्काणचक्रम् ॥

| स्वामी | राशि | मे | वृ | मि | क | सि | क | तू | वृ | ध | म | कुं | मी |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| नारद | अंश १० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| अगस्ति | २० | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १ | २ | ३ | ४ |
| दुर्वासा | ३० | ९ | १० | ११ | १२ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |

# अथ चतुर्थांशमाह.

स्वर्क्षादिकेन्द्रपतयस्तुर्यांशेशाः क्रियादयः सनकश्चसनंदश्चकुमारश्चसनातनः ५९

## अस्योदाहरणम्

स्वर्क्षादिकेन्द्रपतयइति स्वर्क्षे यद्ग्रहसंबंधी सराशिस्तदादि केंद्राणि तत्पतय चतुर्थांशस्वामिन. तद्यथा राशेस्त्रिंशदंशास्तस्यचतुर्थांश. सार्द्धा सप्त ७।३० तत्र प्रथमविभागमध्ये ७।३० स्वर्क्षस्वराशिस्वामिनएवाधिपत्य द्वितीयविभागमध्ये १५।० केंद्रपतयः स्वराशेः सकाशाच्चतुर्थो योराशिस्तत्स्वामिनएवाधिपत्यं तृतीयविभागमध्ये २२।३० स्वराशे. सकाशात्सप्तमोयो राशिस्तत्स्वामिनएवाधिपत्यं चतुर्थविभाग ३० मध्ये स्वराशेः सकाशाद्दशमोयोराशिस्तत्स्वामिनएवाधिपत्यं यथा लग्नं ३।८ द्वितीयभागमध्ये ७०आगतमेवं सर्वत्र ज्ञेयम् ५९

॥ चतुर्थांशचक्रम् ॥

| स्वामी | अं० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| सनकः | ७ ३० | १ मं० | २ शु० | ३ बु० | ४ चं० | ५ सू० | ६ बु० | ७ शु० | ८ मं० | ९ गु० | १० श० | ११ श० | १२ गु० |
| सनन्दनः | १५ ० | ४ चं० | ५ सू० | ६ बु० | ७ शु० | ८ मं० | ९ गु० | १० श० | ११ श० | १२ गु० | १ मं० | २ शु० | ३ बु० |
| कुमारः | २२ ३० | ७ शु० | ८ मं० | ९ गु० | १० श० | ११ श० | १२ गु० | १ मं० | २ शु० | ३ बु० | ४ चं० | ५ सू० | ६ बु० |
| सनातनः | ३० ० | १० श० | ११ श० | १२ गु० | १ मं० | २ शु० | ३ बु० | ४ चं० | ५ सू० | ६ बु० | ७ शु० | ८ मं० | ९ गु० |

# अथ सप्तमांशमाह.

सप्तांशपास्त्वोजगृहे गणनीया निजेशतः ॥ युग्मराशौ तु विज्ञेयाः सप्तमर्क्षादिनायकात् ॥ ६० ॥ क्षारक्षीरौ च दध्याज्यौ तथेक्षुरससंभवः ॥ मद्यशुद्धजलावोजे समे शुद्धजलादिकाः ॥ ६१ ॥

## अस्योदाहरणम्

ओजराशौ ग्रहे सति निजराशितो गणनीयम् ॥ यदा समराशिस्तदा सप्तमराशितो गणनीयम् ॥ यथा लग्नं ३।८ चेत्समराशिः अतएव मकरात्तृतीयं सप्तांशमध्ये मीन १२ एवं सर्वत्र ज्ञेयम् ॥ ६१ ॥

लग्न ३।८ प्रथमभागे अतएव स्वद्रेष्काणे एवंसर्वत्रज्ञेयम्

॥ द्रेष्काणचक्रम् ॥

| स्वामी | राशि | मे | वृ | मि | क | सि | क | तू | वृ | ध | म | कु | मी |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| नारद | अंश १० | १ | २ | ३ | ४ | [illegible] | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| अगस्ति | २० | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १ | २ | ३ | ४ |
| दुर्वासा | ३० | ९ | १० | ११ | १२ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |

## अथ चतुर्थांशमाह.

स्वर्क्षादिकेन्द्रपतयस्तुर्यांशेशाःक्रियादयः सनकश्चसनंदश्चकुमारश्चसनातनः ५९

||नवमांशचक्रम्||

| स्वामी. | | मे. | वृ. | मि. | क. | सिं. | क. | तु | वृ. | ध. | म. | कुं. | मी. | अंश. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| देव | १ | म | श. | शु | चं | म | श. | शु. | चं | म. | श | शु. | च | ३-२० |
| नृ. | २ | शु. | श. | म | र. | शु. | श. | म. | र. | शु. | श. | मं. | र. | ६-४० |
| राक्षस | ३ | बु. | बृ. | बृ. | बु. | बु. | बृ. | बृ. | बु. | बु. | बृ. | बृ. | बु. | १०-० |
| देव | ४ | चं | मं. | श. | शु. | च | म. | श. | शु. | च. | म | श. | शु. | १३-२० |
| नृ | ५ | र. | शु. | श. | मं. | र. | शु. | श. | म. | र. | शु. | श. | मं. | १६-४० |
| राक्षस | ६ | बु. | बु. | बृ. | बृ. | बु. | बु. | बृ. | बृ. | बु | बु | बृ | बृ. | २०-० |
| देव | ७ | शु. | च. | मं | श. | शु | चं. | म. | श. | शु. | च | म. | श. | २३-२० |
| नृ | ८ | म. | र. | शु | श | मं. | र. | शु. | श | मं. | र | शु | श. | २६-४० |
| राक्षस | ९ | बृ | बु | बु. | बृ. | बृ. | बु. | बु | बृ. | बृ. | बु. | बु | बृ. | ३०-० |

## अथ दशमांशमाह.

दिगंशायातत्श्चोजेयुग्मेतन्नवमाद्वदेत् पूर्वादिदशदिक्पालाइन्द्राग्नियमराक्षसाः ६३ वरुणोमारुतश्चैव कुबेरेशानपद्मजाः अनन्तश्चक्रमादोजेसमेवाव्युत्क्रमेणतु ६४

## अस्योदाहरणम्

अथ विषमराशिदशमांशो विषममेव गणनीयम् समराशिदशमांशेः तस्मान्नवमराशिगणनीयं। यथा लग्नं ३।८।४५ मीनाद्गणनीयम् वृषभदशमांशमेवं सर्वत्र चिन्तनीयम्

॥ सप्तमांशचक्रम् ॥

| स्वामी | लग्ने | मे.० | वृ.१ | मि.२ | क.३ | सिं.४ | क.५ | तु.६ | वृ.७ | ध.८ | म.९ | कुं.१० | मी.११ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| क्षार | ४ १७ | १ | ८ | ३ | १० | ५ | १२ | ७ | २ | ९ | ४ | ११ | ६ |
| क्षीर | ८ ३४ | २ | ९ | ४ | ११ | ६ | १ | ८ | ३ | १० | ५ | १२ | ७ |
| दधि | १२ ५१ | ३ | १० | ५ | १२ | ७ | २ | ९ | ४ | ११ | ६ | १ | ८ |
| आज्य | १७ ८ | ४ | ११ | ६ | १ | ८ | ३ | १० | ५ | १२ | ७ | २ | ९ |
| इक्षुरस | २१ २५ | ५ | १२ | ७ | २ | ९ | ४ | ११ | ६ | १ | ८ | ३ | १० |
| मद्य | २५ ४२ | ६ | १ | ८ | ३ | १० | ५ | १२ | ७ | २ | ९ | ४ | ११ |
| शुद्धजल | ३० ० | ७ | २ | ९ | ४ | ११ | ६ | १ | ८ | ३ | १० | ५ | १२ |

# अथ नवमांशमाह

नवांशेशाश्चरे तस्मात्स्थिरे तन्नवमादितः उभयेत त्पंचमादेरितिचिन्त्यंविचक्षणैः देवानृराक्षसाश्चैवचराविषुग्रहेषुच ६२

## अस्योदाहरणम्

नवमांशगणनया यदा चरराशिस्तदा तत्रैवगणनायदा स्थिरराशेः सकाशान्नवमराशेर्गणनीयो यदा द्विस्वभावस्तदा पंचमराशेर्गणनीयाः, यथा लग्नं ३।८।४।५ चरराशेस्तत्रैवगणना कर्कान्तृतीयं कन्या नवमांशएवं सर्वत्र विलोकनीयम

कर्काद्गणितं तुला द्वादशांशं अमुनाप्रकारेण ज्ञेयम् ६५

॥ अथ द्वादशांशचक्रम् ॥

| स्वामिन. | अंश | मे. | वृ. | मि | क | सि | कं. | तु. | वृ. | ध. | म. | कु | मीन |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| गणेशः | २<br>३० | मं<br>१ | शु.<br>२ | बु.<br>३ | च.<br>४ | र.<br>५ | बु.<br>६ | शु.<br>७ | मं.<br>८ | गु<br>९ | श.<br>१० | श.<br>११ | गु.<br>१२ |
| अश्विनीकुमारौ | ५<br>० | शु.<br>२ | बु.<br>३ | च<br>४ | र.<br>५ | बु.<br>६ | शु.<br>७ | मं<br>८ | गु.<br>९ | श.<br>१० | श.<br>११ | गु.<br>१२ | मं.<br>१ |
| यमः | ७<br>३० | बु.<br>३ | च.<br>४ | र.<br>५ | बु.<br>६ | शु.<br>७ | म<br>८ | गु.<br>९ | श.<br>१० | श.<br>११ | गु.<br>१२ | मं.<br>१ | शु.<br>२ |
| अहिः | १०<br>० | चं.<br>४ | र.<br>५ | बु.<br>६ | शु.<br>७ | मं.<br>८ | गु.<br>९ | श.<br>१० | श.<br>११ | गु.<br>१२ | मं.<br>१ | शु.<br>२ | बु<br>३ |
| गणेशः | [illegible]<br>३० | र.<br>५ | बु.<br>६ | शु<br>७ | मं.<br>८ | गु<br>९ | श.<br>१० | श.<br>११ | गु.<br>१२ | मं.<br>१ | शु.<br>२ | बु.<br>३ | चं.<br>४ |
| अश्विनीकुमारौ | १५<br>० | बु.<br>६ | शा.<br>७ | मं.<br>८ | गु.<br>९ | श.<br>१० | श.<br>११ | गु<br>१२ | मं.<br>१ | शु<br>२ | बु.<br>३ | चं.<br>४ | र.<br>५ |
| यमः | १७<br>३० | शु.<br>७ | म.<br>८ | गु<br>९ | श.<br>१० | चा.<br>११ | गु.<br>१२ | मं.<br>१ | शु.<br>२ | बु.<br>३ | च.<br>४ | र.<br>५ | बु.<br>६ |
| अहिः | २०<br>० | मं<br>८ | गु.<br>९ | श<br>१० | श.<br>११ | गु.<br>१२ | मं<br>१ | शु.<br>२ | बु.<br>३ | च.<br>४ | र<br>५ | बु.<br>६ | गु.<br>७ |
| गणेशः | २२<br>३० | गु.<br>९ | श.<br>१० | श.<br>११ | गु<br>१२ | मं<br>१ | शु.<br>२ | बु.<br>३ | चं.<br>४ | र.<br>५ | बु<br>६ | शु<br>७ | मं<br>८ |
| अश्विनीकुमारौ | २५<br>० | श.<br>१० | श<br>११ | बु.<br>१२ | मं.<br>१ | शु.<br>२ | बु.<br>३ | चं.<br>४ | र.<br>५ | बु.<br>६ | शु.<br>७ | मं<br>८ | शु.<br>९ |
| यम | २७<br>३० | श.<br>११ | गु.<br>१२ | मं.<br>१ | शु.<br>२ | बु.<br>३ | चं.<br>४ | र.<br>५ | बु.<br>६ | शु<br>७ | मं.<br>८ | गु<br>९ | श.<br>१० |
| अहिः | ३०<br>० | गु.<br>१२ | मं.<br>१ | शु.<br>२ | बु.<br>३ | चं.<br>४ | र.<br>५ | बु.<br>६ | शु<br>७ | मं.<br>८ | गु.<br>९ | श<br>१० | श.<br>११ |

## अथ षोडशांशमाह.

अजसिंहाश्वितोज्ञेयानृपांशाः क्रमशः सदा अजादि-

॥ अथ दशांशचक्रम् ॥

| विषमाः स्वामिनः | – | मे. | वृ. | मि. | क | सिं | क. | तु. | वृ. | ध. | म. | कुं. | मी. | समाः स्वामिनः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| इन्द्रः | ३ | मं. १ | श. १० | बु. ३ | बृ. १२ | सू. ५ | शु. २ | शु. ७ | चं. ४ | बृ. ९ | बु. ६ | श. ११ | मं. ८ | अनन्तः |
| अग्निः | ६ | शु. २ | श. ११ | चं. ४ | मं. १ | बु. ६ | बु. ३ | मं. ८ | र. ५ | श. १० | शु. ७ | बृ. १२ | बृ. ९ | पद्मजा |
| यमः | ९ | बु. ३ | बृ. १२ | र. ५ | शु. २ | शु. ७ | चं. ४ | बृ. ९ | बु. ६ | श. ११ | मं. ८ | मं. १ | श. १० | ईशानः |
| राक्षसः | १२ | चं. ४ | मं. १ | बु. ६ | बु. ३ | मं. ८ | सू. ५ | श. १० | शु. ७ | बृ. १२ | बृ. ९ | शु. २ | श. ११ | कुबेरः |
| वरुणः | १५ | सू. ५ | शु. २ | शु. ७ | चं. ४ | बृ. ९ | बु. ६ | श. ११ | मं. ८ | मं. ९ | श. १० | बु. ३ | बृ. १२ | मारुतः |
| मारुतः | १८ | बु. ५ | बु. ३ | मं. ८ | र. ५ | श. १० | शु. ७ | बृ. १२ | बृ. ९ | शु. २ | श. ११ | चं. ४ | मं. १ | वरुणः |
| कुबेरः | २१ | शु. ७ | चं. ४ | बृ. ९ | बु. ६ | श. ११ | म. ८ | मं. १ | श. १० | बु. ३ | बृ. १२ | सू. ५ | शु. २ | राक्षस. |
| ईशानः | २४ | मं. ८ | सू. ५ | श. १० | शु. ७ | बृ. १२ | बृ. ९ | शु. २ | श. ११ | चं. ४ | मं. १ | बु. ६ | बु. ३ | यमः |
| पद्मजा | २७ | बृ. ९ | बु. ६ | श. ११ | मं. ८ | म. १ | श. १० | बु. ३ | बृ. १२ | सू. ५ | शु. २ | शु. ७ | चं. ४ | अग्निः |
| अनन्तः | ३० | श. १ | शु. ७ | बृ. १२ | बृ. ९ | शु. २ | श. ११ | चं. ४ | मं. १ | बु. ६ | बु. ३ | मं. ८ | र. ५ | इन्द्रः |

## अथ द्वादशांशमाह.

द्वादशांशस्यगणनांतत्तरक्षेत्राद्विनिर्दिशेत् । तेषामधीशाः क्रमशोगणेशाऽश्वियमाह्वयः ६५

## अस्योदाहरणम्

द्वादशांशांस्त्वभान् सर्वत्रज्ञेयम् यथालग्नं ३।८।४५। एवंमकारेण

## अथ विंशांशमाह.

अथविंशतिभागानामधिपाब्रम्हणोदिताः क्रियाच्चरेस्थि-
रेचापान्मृगेन्द्राद्द्विस्वभावके ६७ कालीगौरीजयालक्ष्मी
र्विजयाविमलासती ताराज्वालामुखीश्वेता ललिताबग-
लामुखी ६८ प्रत्यंगिराशचीरौद्री भवानीवरदाजया
त्रिपुरासुमुखीचेतिविषमेपरिचिन्तयेत् ६९ समराशौद-
यामेधाछिन्नशीर्षापिशाचिनी धूमावतीचमातंगीबला
भद्रारुणाऽनला ७० पिंगलाछुछुकाघोरावाराहीवैष्णवी
सिता भुवनेशीभैरवीचमंगलाह्यपराजिता ७१

अस्योदाहरणम्

यथा लग्नं ३।२७।४५ मेषादिगणनाकन्या आगतः एवं सर्वत्रज्ञेयम्

## अथ कारकांशोदाहरणम्

उदाहरणार्थकारकांशकुण्डलिः ॥

सू० ८   राहु   ६
१० बु   शनि ७   ५
शुक्र
११   ४
गुरु. ११ गुलिक   १ केतु   ३ भौम
चन्द्रमा १२   २

अत्र तु आत्मकारको भृगुः सच तुला नवांश अतएव तुला लग्नस्थापितः सर्वेग्रहाः यथा यथा नवमांशास्थिता स्तत्र तत्र स्थापिताः ॥

### कारकग्रहाः स्युः

| र | च | म | बु | बृ | शु | श | रा | के | गुलिक |
|---|---|---|---|---|---|---|---|---|---|
| ८ | १२ | ३ | | ११ | ७ | ७ | ७ | १ | ११ |

## अथ कारकांशफलमाह

अधुनासम्प्रवक्ष्यामिकारकस्याधिपान्ग्रहान् योगसंबन्धमात्रेणयथावद्वदतोमम १ स्वांशकारककुण्डल्यां नवमांशाधिपोथवा यस्मिन्राशौस्थितोथिम तद्राशिफलमुच्यते २ मेषादिमीनपर्यन्तंसर्वेषाम्फलमादिशेत् यथावद्भाषितंशूलीपुरोक्तंरुद्रयामले ३ अजांशकारकांशेथुतिष्ठन्तिचपदाग्रहाः तथामूषकमार्जारौदुःखदौभयकारकौ ४ सुयोगेचयदाविप्रमार्जारादिप्रसिद्धौ वृषेकारकांशकेच भयार्तिचचतुष्पदात् ५ सुयुग्मकारकांशभेचतुष्पदात्सिद्धिरितितत्त्वंद्विजोत्तम युग्म कारकांशकेखेटे गंडुवादिरोगसम्भवः ६ कर्कांशेचजलाद्दुःखंजलभीतिर्निसंशयः कुष्ठादिरोगसंभूतंभ्भेफलविपर्ययः ७ सिंहांशकारकेखेटेनिश्चत्वयद्विजोत्तम शुनकादिभ-

यदद्याच्छुभसिद्धिः प्रदायकः ॥ ८ ॥ कन्यायांकारकांशेचे तिष्ठत्येवयदाग्रहाः ॥ मृत्युवत्कण्डुरोगार्तिवह्निदोषेणदुःखभाक् ॥ ९ ॥ तुलाख्यकारकांशेच व्यापारेषुरतोधिकः ॥ क्रयविक्रयकर्ताचयदिजातोनृपालये ॥ १० ॥ वृश्चिकेकारकांशेचसर्पादिभयकारकः ॥ मातुःपयोधरेपीडाजायते द्विजसत्तम ॥ ११ ॥ धनुर्द्धरकारकांशेवाहनाद्भयमादिशेत् उच्चात्पतनंवापिकोपिवस्त्वसमन्वितः ॥ १२ ॥ नक्रकारकांशेविमांसिद्धिर्जलचरादयः ॥ शंखमुक्तप्रवालादिमत्स्यखेचरदेवताः ॥ १३ ॥ कुम्भाख्यकारकांशेच तडागादीनिकारयेत् ॥ कीर्तिवान्धर्मवान्सोपिज्ञायतेगणितागणिः १४ ॥ पश्यन्तिकण्डुरोगादिभवतीहनसंशयः ॥ मीनेच कारकांशेषु सायुज्यमुक्तिभाग्भवेत् ॥ १५ ॥

## अथ कारकांशग्रहाणांफलमाह.

शुभराशौस्तुभांशेवाकारकेधनवान्भवेत् ॥ तदंशकेन्द्रेषुशुभोनूनंराजाप्रजायते ॥ १६ ॥ कारकेशुभराश्यंशेलग्नांशस्थेस्तुभग्रहे उपग्रहस्ययस्थान्त्येस्वोच्चस्वक्षेत्रशुभसंगे १७ पापदृग्योगरहितेकैवल्यंतस्यनिर्दिशेत् मिश्रेमिश्रंविजानीयाद्विपरीतेविपर्ययम् १८ चन्द्रभृग्वारवर्गस्थेकारकेपारदारिकः वृषेतौल्यंशकगते तस्मिन्वाणिज्यपान्भवेत् १९ मेषसिंहांशकेतस्मिन्न्ध्रयान्मूषकदंशकः कारकेकार्मुकांशस्थेवाहनात्पतनम्भवेत् २० अथैकःकारकांशेषु रव्यादितिष्ठतिग्रहः तेषाम्फलम्प्रवक्ष्यामिशृणुत्वंद्विजसत्तम २१ कारकां

शेयदासूर्यस्तिष्ठतिद्विजवीर्ययुक् आदावन्तेपुमान्सो
ऽपिराजकार्येषुतत्परः २२ कारकांशेतुपूर्णेन्दुदैत्या
चार्येणवीक्षितः शतभोगीभवेत्पुरुषोविद्याजीवीभ
वेद्विज २३ कारकांशेयदाभौमेबलाढ्येनयुतेक्षिते
रसवादीकुन्तधारीवह्निकज्जीवनम्भवेत् २४ कार
कांशेयदासौम्येतिष्ठत्यववलाढ्यकः शिल्पकोव्यवहा
रीचवणिक्कृत्यपरोद्विज २५ कारकांशेगुरोधिमकर्म
निष्ठापरोभवेत् सर्वशास्त्राधिकारीचविख्यातोक्षिति
मण्डले २६ कारकांशेयदाशुक्रेराजमानीसदाभवेत्
सेन्द्रियःशताब्दायुःकथनीयंद्विजोत्तम २७ कार
कांशेयदाशौरिर्मृत्युलोकेप्रसिद्धिवान् महतांकर्मणाद्ध
त्तिःक्षितिपालेनपूजितः २८ कारकांशेयदाराहुर्धनुर्द्धा
रीमजायते जांगल्यलोहयन्त्राणिकारकश्चोरसद्ध
मी २९ कारकांशेयदाकेतुस्तिष्ठतिद्विजसत्तम व्य
वहारीगजादीनांसुशान्तिपरद्रव्यके ३० कारकां
शेयदाविमसंस्थितोरविसैंहिके सर्पाद्भीतिर्भवेन्मृत्युः
शुभदृष्ट्यानिवर्तते ३१ कारकांशेभानुतमोशुभषड्
गसंयुतो विषवैद्योभवेन्नूनंविषहर्ताविचक्षणः ३२
भौमेक्षितेकारकांशेभानुस्वर्भानुसंयुते अन्यग्रहानप
श्यन्तिस्ववेश्मपरदाहकः ३३ यदिसौम्येक्षितविमह्य
ग्निदानवजायते पापर्क्षेचगुरोदृष्टेसमीपग्रहदाहकः ३४
सगुलिकेकारकांशेपूर्णेन्दुर्वीक्षितेद्विज सत्याचोरीनीत
धनस्यचोरोजायतेअथवा ३५ सगुलिकेकारकांशेअन्य
ग्रहयुतेक्षिते बुधदृष्टियुतेवापित्रण्डवृद्धि प्रजायते ३६

कारकांशेकेतुयुक्तेपापग्रहनिरीक्षिते । श्रोत्रछेदोभवेन्नूनं
कर्णरोगार्तिनाद्विज ३७ कारकांशेस्थितेकेतौभृगुणा
चैसमीक्षिते पुनोवाजायतेविप्रक्रियाकर्मसमन्वितः ३८
कारकांशेस्थितेकेतौशनिसौम्यनिरीक्षिते बलवीर्येणर-
हितोजायतेसोपिमानवः ३९ सकेतौकारकांशेचबुधशु-
क्रनिरीक्षिते जायतेयोनिपुर्तिकोदासीपुत्रोथवाभवेत् ४०
सकेतौकारकांशेचअन्यग्रहनिरीक्षिते शनिदृष्टिविहीने-
चसस्याज्वररहितोभवेत् ४१ कारकांशेयदाविप्रभृगुभा-
स्करवीक्षिते राज्यमेष्योभवेद्बालोजायतेनात्रसंशयः ४२

तेनात्रसंशयः ४९ कारकांशेचपातालेगुरुयुक्तेनिरी-
क्षिते यष्टिकम्मन्दिरंतस्यजायतेनात्रसंशयः ५०
कारकांशेचपातालेगुरुयुक्तेनिरीक्षिते कणवेष्टितसंयुक्तं
जायतेतस्यमन्दिरम् ५१

## अथ कारकांशे नवमभावफलमाह.

कारकांशेचनवमेशुभखेटयुतेक्षिते सत्यवादीगुरौभक्त
स्स्वधर्मनिरतोभवेत् ५२ कारकांशेचनवमेपापग्रह
युतेक्षिते स्वधर्मनिरतोबाल्येमिथ्यावादीभवेद्द्विज ५३
कारकांशेचनवमेशनिराहुयुतेक्षिते गुरुद्रोहीभवेद्विप्र
शास्त्रेषुविमुखोनरः ५४ कारकांशेचनवमेगुरुभानुयु
तेक्षिते तदापिचगुरुद्रोहीगुरुवाक्यंनमन्यते ५५
कारकांशेचनवमेभृगुभौमयुतेक्षिते षड्वर्गाधिकयोगे-
चामरणपरदारकः ५६ कारकांशेचनवमेक्षतयु-
क्तेक्षितेद्विज परस्त्रीसङ्गमाद्वालावन्ध्यकोभवतिध्रु
वम् ५७ कारकांशेचनवमेगुरुयुक्तेक्षितेद्विज
स्त्रीलोलपोभवेद्वालाविपर्यीनैवजायते ५८

## अथ कारकांशे सप्तमभावफलमाह.

कारकांशेचद्यूनस्थेगुरुचन्द्रयुतेद्विज सुंदरीगेहनीत
स्वपतिभक्तिपरायणा ५९ राहुणाविद्धलाबालाजा
यतेचांगनाद्विज शनिनाचवयाधिक्यारोगिणीवातपस्वि-
नी ६० भौमेनविकलाङ्गीचतथाकान्ताद्यलक्षणा
बुधेणासकुलेगुमात्र्यासक्तापरवेश्मनि ६१ बुधकला-

यतीज्ञेयाकलाभिज्ञाप्रजायते शुक्रेणतद्वज्ज्ञेयाचनि-
र्विशंकाद्विजोत्तम ६२

## अथ कारकांशेतृतीयभावफलमाह.

कारकांशेतृतीयेचपापखेटयुतेक्षिते सशूरोजायतेबा-
लोवीर्यवान्बहुविक्रमी ६३ कारकांशेतृतीयेपिशुभ-
खेटयुतेक्षिते जायतेनरखहृदयः कातरोपिविशेषतः
६४ कारकांशेतृतीयेचषष्ठेपापयुतेक्षिते कृषिकर्मरतो
नित्यंजायतेचनसंशयः ६५

राहुगातामसीं दुर्गाम्भूतप्रेतादिसेवकत् ॥ हेरम्बभक्तः शि-
खिनास्कन्दभक्तोथवाभवेत् ७४ ॥ कारकांशेव्ययेशौरिः
पापराशौयदाभवेत् ॥ तदैवक्षुद्रदेवस्य भक्तिस्तस्यनसं
शयः ७५ पापर्क्षेपिव्ययेशुक्रस्तदापि क्षुद्रसेवकः
कारकान्न्यूनभागोहि अमात्योजायतेग्रहः ॥ ७६ ॥ कार
केचफलम्ब्रूयादमात्येनुचरोभवेत् ॥ आदित्येन्दुधरा
पुत्राङ्गणनीयोष्टमोग्रहः ॥ ७७ ॥ तस्मिन्ग्रहेप्येवफलंव-
क्तव्यनात्रसंशयः ॥ अमात्याद्द्वादशेराशौपापर्क्षेपाप
संयुते ॥ तथापिक्षुद्रदेवस्यभक्तिर्भवतिनिश्चितम् ॥ ७८
अमात्योवर्त्ततेतत्रतन्चादौद्विजसत्तम ॥ सूर्यादिग्रहसंयुक्ते
तत्फलम्पूर्ववद्द्विज ७९

## अथ कारकांशेत्रिकोणफलमाह.

कारकांशेत्रिकोणस्थेरवेटेचतांत्रिकोभवेत् ॥ पापेनक्षुद्र
देवस्यशुभेनशुभसेवकः ॥ ८० ॥ कारकांशेत्रिकोण-
स्थेपापयुक्पापवीक्षिते ॥ भूतानुग्रहकर्तास्यान्निर्विशंकं
द्विजोत्तम ॥ ८१ ॥ कारकांशेत्रिकोणस्थेपापयुक्शुभ-
वीक्षिते ॥ पुत्रेश्वर्यप्रदोनित्यंराजानुग्रहकारकः ॥ ८२ ॥
कारकांशेलग्नेचन्द्रेकुजराहुनिरीक्षिते ॥ क्षयरोगोभवेत्तस्य
स्वासकाशादिरोगयुक् ॥ ८३ ॥ लग्नवित्तेमनन्त्येचपापग्र
ययुतेद्विज ॥ तांत्रिकोजायतेविप्रनिर्विशंकंकुलेद्विज ८४
पापानिरीक्षितेतत्रतन्त्रनिग्राहकोभवेत् ॥ शुभैर्निरीक्षि-
तेवापितंत्रानुग्रहकारकः ॥ ८५ ॥ कारकांशेन्दुशुक्रौच
शुभदृष्टिनिरीक्षिते ॥ रसवादीभवेद्वालोधातूनांभस्मकारकः

वतीज्ञेयाकलाभिज्ञामजायते    शुक्रेणतद्वज्ज्ञेयाचनि·
र्विशंकाद्विजोत्तम   ६२

## अथ कारकांशेतृतीयभावफलमाह·

कारकांशेतृतीयेचपापखेटयुतेक्षिते   सशूरोजायतेबा·
लोवीर्यवान्बहुविक्रमी ६३ कारकांशेतृतीयेपिशुभ·
खेटयुतेक्षिते   जायतेतत्वहृदयः कातरोपिविशेषतः
६४ कारकांशेतृतीयेचषष्ठेपापयुतेक्षिते  कृषिकर्मरतो
नित्यंजायतेचनसंशयः  ६५

## अथ कारकांशेद्वादशभावफलमाह·

कारकांशेव्ययस्थानेउच्चस्थोपिशुभग्रहे   सद्गतिर्जा·
यतेतस्यशुभलोकमवाप्नुयात्  ६६  कारकांशेव्ययके·
तुःशुभकेतुर्युतेक्षिते   तदापिजायतेमुक्तिःसायुज्यप·
दमाप्नुयात् ६७  मेषेचधनुषेवापिकारकांशेव्ययेशि·
खी   शुभग्रहेणसंदिष्टेकेवल्यपदमाप्नुयात् ६८ के·
वलेपिव्ययेकेतुःपापग्रहयुतेक्षितः   नमुक्तिर्जायतेत·
स्यशुभलोकंनपश्यति  ६९  रविणासंयुतेकेतौकार·
कांशेव्ययास्थिते   गौर्यांभक्तिर्भवेत्तस्यशाक्तिकोजायते
नरः ७०  रविभक्तिर्भवेत्तस्यानिर्विशंकं द्विजोत्तम
चन्द्रेणसंयुतेकेतौकारकांशेव्ययास्थिते  ७१  शुक्रेण
संयुतेकेतौकारकांशेव्ययास्थिते   समुद्रतनयाभक्तिर्जाय·
तेसोसमृद्धिमान् ७२  कुजेनस्कन्दभक्तोवाजायतेद्वि
जसत्तम   वैष्णवोबुधशौरिभ्यांगुरुणाशिवभक्तिमान् ७३

भासोभोनजायते वैय्याकरणश्चवेदांगेजायतेतर्कशास्त्र
कृत् २ उक्तस्थानगतःशौरिः सभाजाड्योभवेन्नरः मी-
मांसको भवेन्नूनमुक्तस्थानगतेबुधे ३ कारकांशेधरा-
सूनुर्लग्नेवानवपञ्चमे नैयायिकोभवेन्नूनंसुगमकाव्य
धरोनरः ४ कारकांशेनिशानाथेत्रिकोणेचाथलग्नगे
सांख्यशास्त्रज्ञानिपुणोजायतेमतिमान्नरः ५ भाग्येलब्धे
मबन्धेवाकारकांशेशिखीतथा गणितज्ञोभवेन्नूनंज्योतिः
शास्त्रविशारदः ६ सुराचार्येणसम्बन्धेसाम्प्रदायिक
शास्त्रभृक् येयोगाभाग्यभावेतुयथावद्भाषितंमया ७
वित्तस्थानेपितेज्ञेयाःपूर्ववज्ज्ञायतेफलम् कोपितृतीय
भावेतुकथयन्तिपुराद्विज ८ कारकांशेधनेकेतौतथा
भाग्यालयेगते पापग्रहेणसंदृष्टेवाचालश्चभवेन्नरः
९ कारकांशेनथारूढे धनेरन्ध्रेस्थितेद्विज ग्रहसाम्ये-
तिविज्ञेयोयोगःकेमुद्रमोभवेत् ११० उक्तस्थानेग्रहोनास्ति
नवाकेमुद्रमोभवेत् चंद्रदृष्टेविशेषेणदारिद्र्यार्तियुतोभवे-
त् ११ आरूढाज्जन्मलग्नाद्वापापास्त्रीहानिगोयदि
केवलेसंग्रहत्वापिसमसौख्योशुभास्तुभौ १२ चन्द्रदृष्टि-
विशेषेणयोगेकेमुद्रमोमलः द्वितीयाष्टमभावाभ्यांयो-
गोयंकथ्यतेद्विज १३ कारकांशेतुयेयोगाः पूर्वोक्तागदि-
तामया तत्तद्राशिदशापाकेसर्वेषाम्फलमादिशेत्
१४ एवंदशाप्रदोराशिर्द्वितीयाष्टमयोर्द्विज ग्रहसाम्ये-
तिविज्ञेया केमुद्रंराशिनेक्षिते १५ दशावारम्भसमयेज-
न्मबलग्नाच्छोधयेत् सूर्यादिखेचरान्स्पष्टान्साधये-
जन्मवद्द्विज १६ तत्रवित्ताष्टमेभावेग्रहसाम्येतुयद्भवेत्

शुक्रेन्दौबुधसंदृष्टेसदैद्योहिभवेन्नरः पीयूषपाणिकुश
लःसर्वरोगहरोद्विज ॥ ८७ कारकांशेन्दुतुर्यस्थेदैत्याचा
र्यनिरीक्षितः श्वेतकुष्टीभवेन्नूनंनिर्विशंकंद्विजोत्तम
८८ कारकांशेन्दुचापस्थेयदिशुक्रयुतेक्षिते । पाण्डुचि
त्रीभवेद्बालःश्वेतकुष्टांगपीडितः ८९ कारकांशेन्दुचाप
स्थेधरापुत्रेणवीक्षिते राजरोगीभवेत्तस्यरक्तपित्तादिकोद्
द्विज ९० कारकेचन्द्रधनुषिशिखिनावीक्षितेसति नी
लकुष्टंभवेत्तस्यनिर्विशंकंद्विजोत्तम ९१ चतुर्थेपञ्च
मेरन्ध्रेधनेराहुकुजौयदि क्षयरोगोभवेत्तस्यचन्द्रदृष्ट्यावि
शेषतः ९२ कारकांशेलयस्थानेकेवलःसंस्थितःकु
जः पीटकादिभवेत्तस्यनिर्विशंकंद्विजोत्तम ९३ का
रकांशेलयेकेतुर्ग्रहणीरोगपीडितः स्वर्भानुतुलकौर
न्ध्रेविषवैद्यःप्रजायते ९४ कारकांशेधनेतुर्येकेवलेसं
स्थितेशनौ धनुर्विद्याधरोबालोजायतेपिनसंशयः ९५
कारकांशेसुखेवित्तेकेवलेसंस्थितेशिखी घटिकायंत्रवादी
स्यादिष्टशोधनतत्परः ९६ उक्तस्थानेस्थितेसौम्येतद्व
यत्परमहंसके तथासन्यस्तकेज्ञेयोनिर्विशंकंद्विजोत्तम
९७ उक्तस्थानस्थितेराहौलोहयन्त्रादिकारकः शि
खिनाखड्गकारीचकुजेनकुन्तधारकः ९८ चन्द्रेज्यौ
कारकांशेचलग्नेवानवपञ्चमे ग्रन्थकर्ताभवेन्नूनंसर्ववि
द्याविशारदः ९९ उक्तस्थानगतेशुक्रेस्वल्पग्रन्थकरोद्वि
जः उक्तस्थानगतेसौम्येकिंचिद्ग्रन्थकरोप्यसौ १००
शुक्रेणकाव्यकर्ताचप्राकृग्रन्थेपुतत्परः गुरुणान्वयंत्रं
थानाम्कारकोद्विजसत्तम १ वाक्यहीनोभवेद्बालःस-

भाद्द्विज ६ केचिल्लग्नाद्वदन्त्येवहोरालग्नंविचिन्तयेत्
भावलग्नान्तहोरान्तंचिन्तयेद्द्विजसत्तम ७

## अस्योदाहरणम्

यथा लग्ने ३।८।४५ इष्टम् ६।१७ अत्रतु समलग्नम्
अनएव सार्द्धद्विघटिकापरिमितात् लग्नाद्गणनीयं तृतीयंकन्यालग्नम्

## अथ वर्णदलग्नमाह.

जन्महोराख्यलग्नर्क्षसंख्याग्राह्यापृथक्पृथक् ओजे
लग्नेतुयुग्मेतुचक्रशुद्धेकसंयुता ८ युग्मोजसाम्ये
संयोज्य वियोज्यान्योन्यमन्यथा मेषादितःक्रमादोजे
मीनादुत्क्रमात्समे ९ एवंयल्लग्नमायातं वर्णदंतत्स
कीर्तितम् एवंद्वादशभावानांवर्णदंलग्नमानयेत् १०

## टीका

ओजलग्नप्रसूतानां मेषादितो जन्मलग्नान्तं होरालग्नान्तंच गण-यित्वा तयोर्द्वयोरोजत्वेनयुग्मत्वेन वा साजात्ये संख्याद्वयं संयोजनीयम् एकस्य ओजत्वेन अपरस्य युग्मत्वेन वैजात्येऽधिकसंख्यायां न्यूनसंख्या शोधनीया एवंच यद्योजनोत्तरंवा तन्मेषादितोगणनीयम् तत्रयो राशिरंतिमो लभ्यते सवर्णदराशिर्भवति युग्मलग्नप्रसूतानां मीनाद्य पसव्यक्रमेणजन्मलग्नांतं होरालग्नान्तंच गणयित्वा तयोः संख्या पृथक् पृथक् यात्वा तयोरोजत्वेनयुग्मत्वेन वासाजात्ये संख्याद्वयं योजनीयम् एकमोजमपरं युग्ममितिवैजात्ये परस्परंवियोजनीयम् ततश्चमीनाद्यपसव्य मार्गेणगणनायांयोयोराशिर्लभ्यते सवर्णदइतिवेदितव्यम्

तदाकेमुक्रमोज्ञेयश्चन्द्रदृष्ट्याविशेषतः १७ एवंतन्वादिभावानांदशारंभेप्रयोजयेत् तत्तद्ग्रहानुसारेणफलंचाच्युबुधैःसदा ११८ इतिवृहत्पाराशरहोरापूर्वखण्डसारांशे कारकांशफलकथनंनामनवमोध्यायः ९

---

## अथ भावलग्नमाह.

स्वर्णादृशेतिनाम्नावैकथयामितवाग्रतः यस्याविज्ञानमात्रेणत्वायुर्दायफलंवदेत् १ तत्रादौलग्नभावस्यसाधयेद्विजसत्तम सूर्योदयात्समारभ्यकलापंचप्रमाणतः २ जन्मेष्टकालपर्यन्तङ्गणनीयंप्रयत्नतः ओजलग्ने यदालग्नंसूर्यराश्यनुसारतः ३ समलग्नेजन्मलग्नाधःत्संख्याप्राप्यतेद्विज भावलग्नेविजानीयाद्धोरालग्नेतदोच्यते ४

## भावलग्नोदाहरणमाह.

सूर्योदयादिष्टम् ६।१७ जन्मलग्नम् ३।८ पंचघटी ८ प० ९ पर्यंतमेकभावलग्नम् अत्रतु समलग्ने जन्मकर्कादृगणनीयं सिंहभावलग्नागतम् एवम् ओजलग्ने जन्मसूर्यराशिमारभ्य गणनीयम् ४

## अथ होरालग्नमाह.

द्विसार्धघटिकाप्रिमकालादितिविलग्नभात् प्रयान्तिलग्नात्तन्नामहोरालग्नंद्विजोत्तम ५ यज्जन्मओजलग्नेषु सूर्यादिगणयेत्क्रमात् समलग्नेयदाजन्मगणयेज्जन्म-

पराशिकः पापयोगकृतेविपदादशापर्यन्तजीवनम् २०
रुद्रशूलेयथावायुर्निर्विशंकंद्विजोत्तम वर्णदासप्तमाद्रा-
शेःकलत्रायुर्विचिन्तयेत् २१ पंचमेपुत्रआयुःस्या-
न्मातुःस्यात्तुर्यपंचके तृतीयेभ्रातुरायुःस्याज्ज्येष्ठ-
भ्रातुर्भवेद्द्विज २२ पितुस्तुनवमान्मातुःपंचमाद्वर्णद-
स्यतु शूलराशिदशायांवैप्रबलायामरिष्टकम् २३
एवंतन्वादिभावानांकारयेद्वर्णदादशा पूर्ववत्फलविज्ञे-
यमशुभंशुभंद्विजोत्तम २४ ग्रहाणांवर्णदानैवरा-
शीनांवर्णदादशा ग्रहारूढपदत्वेनचिन्तयेद्ग्रहवर्णदा
२५ दशायाअन्तरंकार्यंभानुभागप्रदापयेत् चरस्थि-
रदशायांवैवर्णदायास्तथैवच २६ यल्लब्ध्वापूर्वमब्दा
नांभानुभागंचकारयेत् क्रमव्युत्क्रमभेदेनसलिरवेद्द
दशान्तरम् २७ पूर्णायांकारकस्यैवकेन्द्रस्थानांदशा-
भवेत् ततःपणफरस्थानामापोक्लिमदशाततः ज-
न्मांगोजन्मलग्नंचकालंहोरामथास्यतु २८

## अथ घटीलग्नमाह.

घटीलग्नंप्रवक्ष्यामिशृणुत्वंद्विजसत्तम सूर्योदयात्समा
रभ्यजन्मकालविधिःक्रमात् २९ यावत्यो घटिकाजा
तातन्मध्येचार्कभाजयेत् एकैकघटिकाविप्रएकैकलग्न
संज्ञकः ३० भानुस्तिष्ठेच्छिष्टघटीर्जन्मलग्नादितोगणयेत्
यावंतिमोराशिलब्धंतद्राशीघटिकातनुः सूर्योदयत्रिंशे
चजन्मवत्संलिरवेद्द्विज ३१ इतिश्रीवृद्धपाराश-
रहोराशास्त्रेपूर्वखण्डसारांशेभावहोरावर्णदघटीलग्नाध्यायः१०

## अथ वर्णदलग्नोदाहरणम्

अत्रतु युग्मलग्नमध्ये जन्मजन्मलग्न ३।८ अतएव मीनादि-विपरीतमार्गगणनीयम् जन्मलग्नान्तं ८ संख्या एवं होरालग्नान्तं ६ संख्या द्वयोःसाजात्यएवयोजनीयम् द्वयोर्योगसंख्या १४ द्वादशाधिकं द्वादशतश्शेषं २ मीनाद्यपसव्यगणनीयम् कुंभवर्णदलग्नम् एवसर्वत्रओजलग्नजन्मे मेषादिक्रमाद्गणनीयम् १०

## अथ वर्णदविचारमाह.

यदिद्वावोजराशौवासमराशौयदाद्विज द्वयंसंयोजनीयंवै संज्ञेयावर्णदादशा ११ एकस्थानेओजराशावपरेसमभेद्विज वैजात्येधिकसंख्यायान्यूनसंख्यांविशोधयेत् १२ मेषादिकेनगणयेत्सव्यमार्गेणवैद्विज यल्लुब्धमंतिमोराशिः सराशिर्वर्णदाभवेत् १३ युग्मलग्नेषुयज्जन्ममीनादिरपसव्यतः क्रमेणलग्नहोरान्तंगणयेद्द्विजसत्तम १४ ओजराशौद्वयंलब्धंतथाह्योसमराशिगे साजात्येयोजनंकार्यंजायतेवर्णदादशा १५ अजात्येपूर्ववत्कार्याधिक्येन्यूनंविशोधयेत् मेषाद्यपसव्यमार्गेणगणनीयंप्रयत्नतः १६ यल्लुब्धमंतिमोराशिस्तद्राशिर्वर्णदा भवेत् वर्षसंख्याविजानीयाच्चरपर्यायमाणतः १७ होरालग्नभयोर्नेयादुर्बलावर्णदादशा यत्संख्यावर्णदालग्नात्तत्रसंख्याक्रमेणतु १८ क्रमव्युत्क्रमभेदेन दशास्यात्सुरुपस्त्रियोः वर्णदाराशिमेषादिमीनादिगणयेत्क्रमात् १९ वर्णदास्यात्त्रिकोणेचपापयुक्तपा-

## पराशर उवाच.

अधुनासम्प्रवक्ष्यामितच्चारूढफलंद्विज यस्यविज्ञा-
नमात्रेणजायतेकर्मसूचकः ७ यवादीशास्त्रियं
राशिरित्युक्तेनचभाषितम् पदमारूढसंज्ञंहितदार-
थविधिद्विज ८

## अथैकादशस्थानमाश्रित्यफलमाह.

पदादेकादशेस्थानेशुभग्रहयुतेक्षिते लक्ष्मीवाञ्जाय
तेबालःप्रजावान्छीलसंयुतः ९ वित्तोपार्जनन्याये-
ननीतिवाञ्जायतेसदा नरोननास्तिकोनूनंनतुशास्त्र
विरुद्धकृत् १० पदादेकादशेविप्रपापखेटयुतेक्षिते
अन्यायोपार्जितंवित्तंविरुद्धंशास्त्रमार्गतः ११ मिश्रे
मिश्रफलंज्ञेयमुच्चमित्रादिक्षेत्रगः बहुधाजायतेलाभं
यत्रतत्रद्विजोत्तम १२ आरूढाल्लाभभवनग्रहःपश्येत्तु
नव्ययम् यस्यजन्मनिसोपिस्यात्प्रबलोधनवानपि १३
दृष्टग्रहाणांबाहुल्येतदाढ्यस्त्वितुंगगे सार्गलेचापितत्रा-
पिबह्वार्गलसमागमे १४ शुभग्रहार्गलेतत्रतत्रापिशुभ
ग्रहार्गले सुखवानिस्वामिनादृष्टेलग्नभाग्यादिकेनवा
१५ जातस्यपुंसःप्राबल्यंनिर्दिशेदुत्तरोत्तरम् उक्तयो-
गेषुयेखेटाद्वादशंतुनपश्यति १६

## अथद्वादशराशिमाश्रित्यफलमाह.

पदारूढेव्ययेविप्रशुभपापयुतेक्षिते बाहुल्यव्ययमित्येवं-

# अथ घटीलग्नोदाहरणम्.

यथा लग्नम् ३।८।४५ इष्टम् ६।१७ कर्कलग्नाद्गणनीयम् मकरलग्नंभवत्यर्थः ॥ इतिश्रीबृहत्पाराशरहोरापूर्वखण्डसारांशे भावहोरावर्णदघटीलग्नादिकथनंनाम दशमोध्यायः १० ५

## अथारूढमाह.

अधुनासम्प्रवक्ष्यामिराश्यारूढपदंद्विज राशीनांद्वादशानांतुयावदीशाश्रयोभवेत् १ संख्यामीशादयादग्रेसमासातत्पदोच्यते राशिवद्ग्रहआरूढंज्ञायतेगणितागणैः २ यावद्दूरंयस्यराशिस्तावत्संख्याक्रमेणवे अग्रेखगारूढपदंज्ञायतेद्विजसत्तम ३ जनुर्लग्नाल्लग्नस्वामी यावद्दूरंहितिष्ठति तावद्दूरंतदग्रेचलग्नारूढंचकथ्यते ४ यदिलग्नेश्वरःस्वर्क्षेकलत्रेसंस्थितोथवा आरूढलग्नमित्याहुर्जन्मलग्नंद्विजोत्तम ५ एवंतन्वादिभावानांभवारूढपदंभवेत् यत्रयत्रग्रहालग्नेतत्रतत्रसुसंलिखेत् ६

उदाहरणार्थमारूढकुण्डलीमाह ॥

धनारूढ भृ
लग्नारूढ
भाग्यारूढ
लाभारूढ १२
पराक्रमारू०
के०
२ चं०
११
१०
व्ययारूढ
सूर्य बुध
३
कर्मारूढ
९ रा
८
४
जायारूढ
गु० ७
श
मातुलारू
मिथनारूढ म० ५
शत्रुरू

## अथारूढोदाहरणम्.

यथाकर्कलग्नस्वामिचन्द्रएकादशास्थिते तस्मादेकादशगणनान्मीनलग्नमारूढं भवतीत्यर्थः ५ ५

अथ जन्मात्मकारकः
५
३ चं
४
६
२
शा
१ भृ
गुप

त्केंद्रकोणेषुतथालाभपदेद्विज लग्नसप्तमराशिपदेसबले खेटसंयुते ३३ श्रीमांश्चजायतेनूनंदेशेविख्यातिवान् भवेत् षष्ठाष्टमेव्ययेस्थानेश्रीमन्तोनभवेत्कदा ३४ पदाल्लग्नेसप्तमेवा केन्द्रेत्रिकोणोपचये सुवीर्यसंस्थिते खेटे भार्याभर्तृसुखप्रदः ३५ एवंलग्नपदाद्विप्रपुत्रभावादिचिन्तयेत् मित्रामित्रेविजानीयाद्व्ययभावेषुवैद्विज ३६ षष्ठाष्टमेव्यये खेटस्तत्तद्भावेषुतिष्ठति यद्यद्भावेषुयद्रंलग्नारूढेविचिन्तयेत् ३७ लग्नारूढंदारपदंमिथःकेंद्रगतंयदि लाभेवापित्रिकोणेवातथाराजधराधिपः ३८ आरूढः पुत्रमित्रैस्तुत्रिलाभः केन्द्रगोयदि द्वयोर्मैत्रीत्रिकोणेषुसाम्यंद्वेषोन्यथाभवेत् ३९ एवंदारादिभावानामर्जयित्वादिमित्रता जातकद्वयमालोक्यचिन्तनीयं विचक्षणैः ४० इतिश्रीबृहत्साराशरहोरापूर्वखण्डसारांशेआरूढफलकथनंनामएकादशोध्यायः ११

---

## पराशर उवाच.

अधुनासम्प्रवक्ष्याम्युपपदञ्चद्विजोत्तम यस्यविज्ञानमात्रेणजायतेफलसूचकः १ पदारूढाद्व्ययस्थानेपदंचोपपदंस्मृतम् लग्नानुचरसंज्ञोपपदंचद्विजसत्तम २

### उपपदस्थोपपदद्वितीयेवाशुभग्रहविशेषफलमाह.

पापक्रान्तेपापयुतेपापर्क्षेपापवीक्षिते पापसम्बन्धसंयोगेउपपदेद्वितीयके ३ प्रव्रज्यायोगविज्ञेयः संन्यासो-

विशेषोपार्जनात्सदा १७ शुभग्रहेस्कमार्गेषुकुमार्गेपाप-
खेचरैः मिश्रैर्मिश्रफलंवाच्यंयथालाभेषुपूर्ववत् १८ पदा
रूढेव्ययेशुक्रे भानुस्वर्भानुवीक्षिते राजमूलाद्व्ययंवाच्यं
चन्द्रदृष्ट्याविशेषतः १९ पदारूढेव्ययेसौम्येशुभखेट
युतेक्षिते ज्ञातिमध्येव्ययोनित्यंपापदृक्कलहाद्व्ययः २०
पदव्ययेसुराचार्येवीक्षितेचान्यखेचरैः करमूलाद्व्ययंवाच्यं
करव्याजेनवैद्विज २१ आरूढेद्वादशेशौरिर्धरापुत्रेण
संयुते अन्यग्रहेक्षितेविप्रभ्रातृमूलाद्धनव्ययम् २२
पदेषुद्वादशेस्थानेयेयोगाःकथ्यतेमया लाभभावेषुयेयो-
गालाभयोगकराःसदा २३ पदेषुसप्तमेराहुरथवास-
स्थितेशिखी उदरव्यथायुतोबालःशिखिनापीडितेधि-
कम् २४ पदेचसप्तमेकेतुःपापखेटयुतेक्षिते साहसी
वैधनकेशीचदीर्घलिंगीभवेन्नरः २५ पदेचसप्तम
स्थानेगुरुशुक्रनिशाकराः चैकोद्वयंत्रयंतत्रलक्ष्मीवान्
कारयेत्ध्रुवम् २६ तुंगस्थेसप्तमेखेटेशुभोवाप्यशु-
भःपदे श्रीमंतोपिभवेन्नूनंसत्कीर्तिसहितोद्विज २७
येयोगाःसप्तमेभावेराज्ञादिकथितंमया तेयोगावित्तभा-
वेषुधूनवच्चिन्त्यतेद्विज २८ उच्चेवाथद्विरण्यंवाजीवोवा
शुभएववा एकोबलीधनगतःश्रियंदिशतिदेहिनः २९
येयोगाश्चपदेलग्नेयथावद्वदतोमम कारकांशस्यकुण्ड-
ल्यांनिर्बाधकांविचिन्तयेत् ३० आरूढावष्टमेपापेशौ-
रिःस्याच्छुभवर्जितः तथावित्तालयेपापेपूर्ववज्ज्ञायते
फलम् ३१ आरूढाद्विनभेसौम्येसर्वदेशाधिपोभवेत्
सर्वज्ञोयदिचेन्नस्यात्कविर्वादीनभार्गवः ३२ आरूढा-

भवतिध्रुवम् तथाभार्याविरोधीस्यादथवास्त्रीविनाशकृत्
४ रविपापत्वनाद्येवसिंहस्थेपापदेसति पूर्वोक्तंनाफ-
लंज्ञेयंजायतेग्रहणीसुखम् ५ मेषादिपापराशौत्रसंस्थि-
तेदिवसाधिपे पूर्वोक्तञ्चफलंज्ञेयंप्रव्रज्यादारनाशकः
६ उपपदेद्वितीयेवाशुभसंबन्धदृष्टियुक् शुभसंशुभ-
संयोगेपूर्वोक्तफलदोभवेत् ७ उपपदेद्वितीयेवानीचांशे
नीचखेटयुक् नीचसंबन्धयोगेवाप्रणीतादारनाशकृत्
८ उच्चांशेउच्चसंस्थेवाउच्चसंबन्धदृष्टियुक् बहुदारा
भवेद्विप्ररूपलक्षणसंयुताः ९ उपपदद्वितीयेपियुग्म
क्षेमपराशितः मिथुनेपिस्थितेविप्रबहुदारयुतोभवेत् १०
उपपदद्वितीयेपिस्वस्वामिखेटसंयुते उत्तरायुषिनिर्दारो
भवत्येवनसंशयः ११ वृषस्थेवातुलेवापिदत्येज्यदारकारके
अन्यराशौचवाविप्रनिर्दारउत्तरायुषि १२ स्वराशौसंस्थि-
तेखेटेनित्याख्येदारकारके उत्तरायुषिनिर्दारोभवत्येवनसं-
शयः १३ उपपदेशोपितुंगस्थेनित्याख्येदारकारके उ-
त्तमकुलाद्दारलाभोनीचस्थेपिविपर्ययः १४ शुभसंबंध
युक्दृष्टेउपपदेदारकारके सुन्दरींलभ्यतेभार्याभव्यारूप-
वतीद्विज १५ संबन्धेशनिराहुभ्यामुपपदेचशनिर्द्विज
निर्दारकारकोवापिशनिराहुयुतेक्षिते १६ अथवा
द्युतोविप्रभार्ययासहितोद्विज स्त्रीविनाशोभवेन्नू-
नंतथास्त्रीपरित्यागवान् १७ उपपदेचसंयुक्तौदी
खिशुक्रौद्विजोत्तम रक्तप्रदररोगार्ताजायतेतस्यभामि-
नी १८ उपपदादिपुसयोगेबुधकेतोद्विजोत्तम अ-
स्थिस्रावयुताबालागृहेतस्यनसंशयः १९ रवीराहुस्तथा

त्सापत्योभवेन्नरः ३५ उपपदेसिंहलग्नेनिशानाथयु-
तेक्षिते सल्पप्रजोभवेद्विप्रतथाकन्याप्रजोभवेत् ३६
सुतभावनवांशाच्चतथापिपुत्रकारकात् यद्वात्रिंशांशकु-
ण्डल्यांपंचमांशात्तदाद्विज ३७ तदीशाच्चिन्तयेद्विप्रसं
ततेर्योगसुत्तमम् एवंसर्वप्रकारेणचिन्तनीयंसदाबुधैः ३८
उपपदेशनीराहुर्भ्रातृस्थोभ्रातृनाशकृत् एकादशेज्येष्ठ
भ्रातुस्तृतीयेचकनिष्ठकम् ३९ उपपदेकादशस्थाने
तृतीयेदानवेज्यके व्यवहितार्थनाशः स्याद्यथासम्भव
तिद्विज ४० लग्नेवापिलयेवापिदैत्याचार्ययुतेक्षिते
व्यवहितांगनाशः स्यान्निर्विशंकंद्विजोत्तम ४१ तृतीये-
कादशेविप्रकुजेज्यबुधचन्द्रमाः भ्रातृबाहुल्यतावाच्यंप्र
तापीवलवत्तरः ४२ शनेरसंयुतेदृष्टेतृतीयेकादशेद्विज
कनिष्ठज्येष्ठयोर्नाशंभिन्नस्थेभिन्नभावहृत् ४३ भ्रा-
तृस्थानेयुतेशौरिर्लाभस्थेवातृतीयगे स्वस्यमातास्त्ति
मतीत्र्यन्यन्नश्यतिवैद्विज ४४ तृतीयेकादशेकेतुर्बहु-
त्यंभगिनीसुतम् भ्रातृस्वल्पसुखंतस्यनिर्विशंकंद्विजो-
त्तम ४५ सप्तमेद्वादशस्थानेसैंहिकेययुतेक्षिते ज्ञा-
नवांश्चभवेद्बालोबहुभाग्ययुतोद्विज ४६ सप्तमेशाद्द्वि-
तीयस्थेपुच्छनाथयुतेक्षिते स्तब्धवाग्जायतेबालस्तथा
स्खलितवाग्द्विज ४७ आरूढेद्वादशभावस्थेपापस्थे
शुभवर्जिते शुभसंबंधरहितेचौरोभवतिनिश्चितम् ४८
आरूढेवापिसौम्येतुसर्वदेशाधिपोभवेत् सर्वज्ञस्तत्रजी-
वः स्यात्कविर्वादीचभार्गवः ४९ आरूढेपिपदेवापिधन-
स्थेशुभखेचरे सर्वद्रव्याधिपोधीमाञ्जायतेद्विजसत्तम
५०

उपपदाद्धनपोयत्रवर्तनेतस्यवित्तभे पापखेचरसंयुक्तेचौ-
रोभवतिनिश्चितम् ५१ सप्तमेशाद्द्वितीयेचराहुस्थेमूक
एवच खलस्थितेयदाविमदंतानामधिकंभवेत् ५२
शिखिनावातव्याधिः स्याद्धद्धास्यादस्फुटोक्तिवान् तत्र
नानाग्रहैर्योगेसिद्धंफलमुदाहरेत् ५३ सप्तमेशाद्द्वि-
तीयेचछायासूनुयुतेद्विज गौरःश्यामोनीलपीतोज्ञायते
बुद्धिमान्नरैः ५४ अमात्यात्तुचराद्द्विमदेवभक्तिंवि-
चिन्तयेत् नीचत्वादेवनीचत्वंशुभपापाच्छुभाशुभम्
५५ कारकांशेपापखगैः पापांशेपापयोगकृत् पाप
वर्गैशुभेहीनेजायतेपरजातवान् ५६ कारकांशेभ-
वेत्पापोनज्ञेयःपरजानकः अन्येषांपापखेटानांयोगं
घटत्वमाप्नुयात् ५७ अथवारंध्रभेपापेनायंयोगोवि-
चिन्त्यते शनिराहूयुतौयत्रशनिराहूः क्षेत्रकेद्विज ५८
पारजातःप्रसिद्धोस्ति ह्यन्येभ्योगुप्तएवच शुभवर्गेप-
दारखेटावर्गोक्तानांयथाद्विज ५९ जारजः कथनमात्रे
नतुजारजइत्यपि यत्रकुत्रापिस्वोच्चेद्वौ कुलमुख्यो
भवेन्नरः ६० आदिषट्कंचपर्यंताग्रहाः सौख्यंवि-
चिन्तयेत् सारसारमहंवक्ष्येतवाग्रेद्विजसत्तम ६१

## अस्योदाहरणम्

जन्मलग्नारूढाद्द्वादशस्थानाधिपतिर्बुधः
तस्य पदमुपपदसंज्ञम् अत्रतु मिथुनलग्नमा-
गमम् [illegible] सर्वत्र ज्ञेयम् ।

उदाहरणार्थमुपपदकुण्डलीमाह.

४
चं २
मं ५
सू १ बु
शु ३
६ रा
१२ के
गु ७
९
१०
श ८
११

## अथ कारकमारकादिविचारमाह.

पंचमंनवमंचैवविशेषधनमुच्यते चतुर्थंदशमंचैवविशे-
षंसुखमुच्यते १ चन्द्रभानूविनासर्वेमारकेमारकाधिपाः
षष्ठाष्टमव्ययेशास्तुराहुः केतुस्तथैवच २ केन्द्राधिप-
तयः सौम्याः शुभंनैवदिशन्तिच क्रूरानैवाशुभंकुर्युः को-
णपाशुभदायकौ ३ धनेशोहिव्ययेशश्चसंयोगात्फ-
लदोमतो लाभारित्र्यधिपापापारन्ध्रेशोनशुभप्रदः ४
जायाकुटुम्बकाधीशौमारकौपरिकीर्तितौ क्रूराःके-
न्द्राधिपाश्चैयात्क्षीणचन्द्ररविस्तथा ५ शनिर्भौम-
श्चविज्ञेयाःप्रबलाह्युत्तरोत्तराः लग्नांबुधूनकर्माणिप्रब-
लान्युत्तराणिहि ६ सुतधर्मौतथास्थानौप्रबलौचोत्तरो
त्तरौ लाभारित्रितयस्थानश्चाधोधःप्रबलंभवेत् ७
पुनर्मारकयोर्मध्येह्युत्तरंप्रबलंमतम् भाग्यस्थानाद्व्ययं
रन्ध्रंतस्मान्नैवाशुभंवदेत् ८ एतत्स्थानानुसारेणग्रहा-
णामानमालिखेत् चन्द्रचान्द्रीगुरुसितौकेन्द्रदोषोत्तरोत्त
रम् ९ तथैवचग्रहाःक्रूराबलंचैवोत्तरोत्तरम् भाग्ये-
शः सर्वदासौम्योनक्रूरःफलदायकः १० पुत्राधिपो
पिशुभदः क्रूरोपिसुखदःस्मृतः त्रिलाभारिपुमृत्यूनांप
तयोदुःखदायकाः ११ शुभापिशुभदोनैवदशायांगच्छ-
पिवा अष्टमाधिपतिर्दोषस्तुलाभेयेनहिक्वचित् अ
लेघष्टाष्टदोपोनवृषभोपिनदोषभाक् १२ यद्यद्भाव
गतोराहुःकेतुश्चजननेनृणाम् यद्यद्भावेशसंयुक्त-
स्तत्फलंप्रदिशेद्दलम् १३

## अथमेषलग्नम्

मन्दसौम्यसिताः पापाः शुभौगुरुदिवाकरौ नसुभंयोगमात्रेणप्रभवेच्छनिजीवयोः १४ परतंत्रेणजीवस्यपापकर्मापिनिश्चितम् कविः साक्षान्निहतास्यान्मारकस्तेनलक्षितः १५ मन्दादयोर्निहन्तारोभवेयुःपापिनोग्रहाः शुभाशुभफलान्येवंज्ञातव्यानिक्रियोद्भवेः १६

## अथवृषलग्नम्

जीवशुक्रेन्दवः पापाः शुभौशनिदिवाकरौ राजयोगकरः साक्षादेकएवरवेःसुतः १७ जीवादयोग्रहाःपापाः सन्तिमारकलक्षणाः बुधस्तत्रफलान्येवज्ञेयानिवृषजन्मनः १८

## अथमिथुनलग्नम्

भौमजीवारुणाःपापाएकएवकविःशुभः शनैश्चरेणजीवस्ययोगोमेषभवोयथा १९ नायशशीनिहंतास्यात्लक्षणंपापनिष्फलम् ज्ञातव्यानिद्वंद्वजस्यफलान्येतानिसूरिभिः २०

## अथकर्कलग्नम्

भार्गवेन्दुसुतौपापौभूसुतांगिरसौशुभौ एकएवग्रहः साक्षाद्भूसुतोयोगकारकः २१ निहन्तारविजोन्येतुमानिनोमारकाह्वयाः कुलीरसंभवस्यैवफलान्युक्ता-

निसूरिभिः २२

## अथ सिंहलग्नम्.

रौहिणेयः सितोपापौ कुजजीवौ शुभावहौ प्रभवेद्योग मात्रेण नशुभं गुरुशुक्रयोः २३ घ्नन्ति सौम्यादयः पापा मारकत्वेन लक्षिताः एवंफलानिवेद्यानि सिंहे यस्यज नुर्भवेत् २४

## अथकन्यालग्नम्

कुजजीवेन्दवः पापा एक एव भृगुः शुभः भार्गवेन्दुसु तावेव भवेतां योगकारकौ २५ निहन्ताकविरन्येतु मारकास्तु कुजादयः प्रतीक्षेतफलान्युक्तान्येवं कन्याभ वेद्बुधैः २६

## अथ तुलालग्नम्

जीवार्कमहिजाः पापाः शनैश्चरबुधौ शुभौ भवेतां राज योगस्य कारकौ चन्द्रतत्सुतौ २७ कुजो निहन्ति जीवा द्याः परे मारकलक्षणाः निहन्तारः फलान्येवं काव्योन तु तुलाभुवः २८

## अथ वृश्चिकलग्नम्

सौम्यभौमाः सिताः पापाः शुभौ गुरुनिशाकरौ सूर्यचन्द्र मसावेवम्भवतां योगकारकौ २९ जीवो निहन्ता सौम्या द्या हन्तारो मारकाह्वयाः तत्तत्फलानि विज्ञेयान्येवं वृ-

श्चिकजन्मनः ३०

## अथ धनुर्लग्नम्.

एकएवकविःपापः शुभौसौम्यदिवाकरौ — योगोभास्कर-
सौम्याभ्यांनिहन्ताभास्वतःसुतः ३१ — घ्नन्तिशुक्रादयः
पापामारकत्वेनलक्षिताः — ज्ञातव्यानिफलान्येवंचापज
स्यमनीषिभिः ३२

## अथ मकरलग्नम्.

कुजजीवेन्दवःपापाः शुभौभार्गवचन्द्रजौ — स्वयंचैवनि-
हन्तास्यान्मन्दोभौमादयःपरे ३३ — तल्लक्षणानिहन्ता-
रःकविरेकः सुयोगकृत् — ज्ञातव्यानिफलान्येवंविबुधैर्मृग
जन्मनः ३४

## अथ कुंभलग्नम्.

जीवचन्द्रकुजाःपापाएकोदैत्यगुरुः शुभः — राजयोगक
रोभौमः कविश्चैवबृहस्पतिः ३५ — निहन्ताघ्नन्तिभौ-
माद्यामारकत्वेनलक्षिताः एवमेवफलान्यूह्यान्येता
निघटजन्मनः ३६

## अथ मीनलग्नम्.

मन्दशुक्रांशवःपापाः सौम्योभौमविधूशुभौ महीसुत
गुरोर्योगेकारणेनैवभूसुतः ३७ — मारकान्कारकान्वीक्ष्य
मन्दज्ञौघ्नन्तिपापिनः — इत्यूह्यानिफलान्येवंबुधैस्तुझषज-

न्मनः ॥ ३८ ॥ एतच्छास्त्रानुसारेणमारकान्निर्दिशेद्बुधः ॥ चन्द्रसूर्यौविनासर्वेमारकाःपरिकीर्तिताः ॥ ३९ ॥ स्वदशायांस्वभुक्तौचनराणांनिधनंनहि ॥ क्वचिद्दशायामिच्छंति स्वभुक्तौनकदाचन ॥ ४० ॥ इतिश्रीबृहत्पाराशरहोरापूर्वखण्डसारांशेकारकमारकादिविचारकथनंनामत्रयोदशोध्यायः ॥ १३ ॥

धर्मस्थानान्निरीक्षयेत् ९ राज्यंचाकाशवृत्तिंचमानं
चैवपितातथा प्रवासस्यऋणस्यापिव्योमस्थानान्नि
रीक्षणम् १० नानावस्तुभवस्यापिपुत्रजायादिका-
नपि रिपूणांरिपवश्चैवभवस्थानान्निरीक्षणम् ११
व्ययंचवैरिवृत्तांतंरिष्फमंत्यादिकंतथा एवंभावफलं
सम्यक्तत्तत्संज्ञानपूर्वकम् १२ व्ययाच्चैवहिज्ञातव्यं
वेतिसर्वत्रबुद्धिमान् योयोभावपतिर्नष्टास्त्रिकेशाद्यैश्च
संयुतः भावंनवीक्ष्यतेसम्यग्ग्रहोवापिमृतोयदा १३
स्थविरोवाभवेत्खेटःक्षीणोवापिप्रपीडितः तदात्भाव-
जंसौख्यंनष्टंब्रूयाद्विशंकितः १४ यदासौम्यग्रहै-
र्दृष्टोभावोभावेशसौम्ययुक् युवाप्रबुद्धराजस्थःकुमारो-
वापितद्भवेत् १५ ईक्षणवशात्तत्रभावसौख्यंवदे-
द्बुधः शुक्रःशुक्रश्चनेत्रश्चचन्द्रमामनसस्तथा १६
आत्मावैदिनकृत्तत्रजीवोजीवित्तसौख्यकम् क्रोधःपरा-
क्रमोभौमोबुधोबालत्वधीमतः १७ शनिर्दुःखमदाः
नाश्चप्रपदःपार्श्वकस्तथा १८ राहुरैश्वर्यकविद्भिमुख-
नाभिपदस्तलः शिरोनेत्रेतथाकर्णनासाचापिकपोलको
१९ हनूमुखंतथावाच्यंकंठांशौबाहुकौतथा पार्श्वेवाहृद-
येचैवक्रोडनाभिस्तथैवच २० बस्तिर्लिंगगुदेवृषणावु
रूजानूचजंघके पदेतिचैवसर्वांगेसंस्थाप्यबुधर्विचक्षणः
२१ लग्नेतत्कालद्रेष्काणेशिरादिपरिकल्पयेत् तस्मा-
द्यस्मिन्स्थितःखेटस्तत्रचिन्हंस्फुटंवदेत् २२ एवंभेदा-
नुभेदेनसर्वत्रैवोपलक्षयेत् संक्षेपेणेतदुदितंमन्यद्गु-
रुअनुसारतः २३

## अथ प्रथमभावफलम्

देहाधिपः पापयुतोऽष्टमस्थो व्ययारिगो वांगसुखं निहन्ति
सर्वत्र भावेषु च योजनीयमेवं बुधैर्भाववशात्फलं हि  २४
एवं तृतीये पि च सप्तमेपि फलं विमृष्यं कृतिभिः प्रयत्नात्  त-
थाव्यये मित्रगृहे रिपो मृते स्थिते विलग्नाधिपतो फलं स्यात्
२५ पापो विलग्नाधिपतिर्विलग्ने चन्द्रे विलग्ने यदि वालकः स्यात्
तदातिरोगं सहि केन्द्रसंस्थत्रिकोणलाभेषु गदं निहन्ति  २६
बलेन तामेव तु पापवन्तामे तस्य वित्तं फलमानुरूप्यताम्
नीचारिसूर्यस्य गृहेषु तिष्ठन्स्वर्क्षादिगृक्षादि गृहत्रयेच  २७
देहाधिपश्चन्द्रगृहाधिपो वा तृतीयरिष्फारिगतो बलः स्यात्
नीचास्तगद्विष्टगृहस्थितो वा कार्श्यं शरीरे रतिगदं करोति  २८
लग्नाधिपो वा जीवो वा शुक्रो वा यदि केन्द्रगे  तस्य पुत्रस्य-
दीर्घायुर्धनवान्राजवल्लभः  २९  लग्नाधिपोऽन्ततवले
न शुभैर्नयकेन दृष्टस्य  केंद्रस्थिते शुभावलोक्यं मृत्यु
हीनेपि दीर्घायुः  ३०  केन्द्रत्रिकोणेषु नयस्य पापे लग्ना-
धिपे सुरगुरुश्चतुरष्टमस्थः  भुक्त्वा सुखानि विविधानि च
पुण्यकर्मा जीवेत्तु वर्षशतमेवाधिमुक्तरोगः  ३१  लग्नेशे
चरराशिस्थे शुभग्रहनिरीक्षिते  कीर्तिश्रीमान्महाभोगी
देहपुष्टिसमन्वितः  ३२  जीवः शुक्रो बुधश्चन्द्रो लग्ने
राशिसमन्वितः  लग्नात्केन्द्रगतश्चैव राजलक्षणसंयुतः ३३
लग्ने राहुसमायुक्ते लग्ने सोमनिरीक्षिते  लग्नांशे मन्दसूनुर्भे
ज्जातश्च यमलो भवेत्  ३४  जातो नरो वाल्यवेष्टीवितांगो
लग्ने फणिर्मन्दसमन्वितश्च  लग्ने च पार्श्वे हितये च पापैर्निरी-

ध्यतेजीवबुधेंदुशुक्रैः ३५ रविचन्द्रौचद्येकस्थावेकां
शकसमन्वितौ त्रिमात्राचत्रिभिर्मासैर्भ्रात्रापित्राचपोषि
तः ३६

## अथ द्वितीयभावफलम्

शुक्रेणयुक्तोयदिनेत्रनाथः शुक्रस्यवाक्षादिगृहत्रयस्य
संबन्ध्यवान्स्याद्यदिदेहपेननेत्रंविधत्तेविपरीतभावम् ३७
तत्रस्थितोचन्द्ररवीनिशांध्यंजात्यंधतांनेत्रपदेहपाकौः पै
त्रर्क्षनाथेनयुतास्तदान्ध्यंकुर्वन्तिमात्रादिफलंतथेदृक् ३८
दोषकृन्नवसर्वत्रस्वोच्चस्वर्क्षगतोग्रहः षडादित्रयसं
स्थाश्चेन्नहिनादोषकृच्छुभः ३९ वागीशवाग्ग्रहाधी
शौषडादित्रयसंस्थितौ मूकतांकुरुतोप्येवंपितृमातृगृ
हाधिपाः ४० वागीशवाग्ग्रहाधीशायुतास्तेत्रयसं
स्थितौ कुर्वन्तितेषांमूकत्वमेवमूह्यंमनीषिभिः ४१
कुटुंबकारकाः केन्द्रत्रिकोणेषुगताग्रहाः सकुटुंबकलत्रे
शाः कलत्रंवाकुटुंबकम् ४२ यत्रयातिचहयस्थावा
यावत्तावत्प्रमाणकम् कलत्रंनिर्दिशेत्प्राज्ञोथवातेषांच
नोवदेत् ४३ विद्याधिपोजीवबुधावविद्यामरित्रयस्थो
कुरुतोथतौचेत् केन्द्रत्रिकोणस्थग्रहोच्चसंस्थोप्रयच्छतां
द्रागनवद्यविद्याम् ४४ एवंबुधस्यांगिरसः षडादि
त्रयस्थितोनीचगृहारिनाथः केन्द्रत्रिकोणस्थगृहोच्चसं
स्थोधनाभिवृद्धिःकुरुतस्तदेव ४५ धनाधिपेगुरु-
र्यस्यधनराशिस्थितेयदि भौमेनसहितेवापिधनवान्
सनरोभवेत् ४६ धनेशेत्लभराशिस्थेलाभेशेवाधनंग-

ते तावुभौकेन्द्रराशिस्थौधनवान्सनरोभवेत् ४७
धनेशकेन्द्रराशिस्थेलाभेशेतत्रिकोणगे गुरुशुक्रयुते
दृष्टेधनलाभमुदीरयेत् ४८ वित्तेशेरिभावस्थेलाभे-
शेस्तङ्गतेयदि वित्तलाभौपापयुतौदृष्टेनिर्धन एवसः ४९
वित्तलाभाधिपौद्विस्थेपापखेचरसंयुते जन्मप्रभृतिदा-
रिद्र्यंभिक्षान्नंलभ्यतेनरः ५० षष्ठाष्टमव्ययस्थेषु
धनलाभाधिपौस्थितौ लाभेकुजोधनेराहौराजदण्डधन
क्षयम् ५१ लाभेजीवेधनेशुक्रे तदीशेशुभसंयुते
व्ययेशुभग्रहयुतेधर्ममूलाद्धनव्ययम् ५२ कुटुंबराशे
रधिपःससौम्येकेन्द्रेथसौम्येचसुहृद्गृहेवा सौम्यर्क्षयु-
क्तोयदिजातपुण्यःकुटुम्बसंरक्षणवान्विभूतः ५३
कुटुंबनाथेपरमोच्चयुक्ते देवेन्द्रपूज्येचसमीक्षितेवा तथा
विधेतद्भवनेभिजातःसहस्रक्षोभुवनमतापी ५४ तन्नाथे
भृगुणाबुधेनसहितेपारावतांशेतथा स्वोच्चे सुहृदंशगृहे
धनपतौस्वस्थानकोलाहलः ५५ कुटुंबराशिस्थप-
तौयदिस्याद्भृगौबुधेतादृशभावनाथे स्वोच्चेसुहृत्पर्से-
त्रगतेथवास्यात्परोपकारीजनरक्षकस्स्यात् ५६ नेत्रे
शेबलसंयुक्तेशोभनाक्षोभवेन्नरः षष्ठाष्टमव्ययेयुक्तेनेत्र
वैकल्यमादिशेत् ५७ धनेशेपापसंयुक्तेधनेपापसमन्वि-
ते असत्यवादीपिशुनःपवनव्याधिसंयुतः ५८

## अथ तृतीयभावफलम्.

सभौमोभ्रातृभावेशःषडादित्रयसंस्थितः भ्रातृक्षेत्र
गतोवापिभ्रातृभावंविनिर्दिशेत् ५९ तौपापयोगतः-

पापक्षेत्रयोगेनवायुनः उत्पाद्यसहजान्सद्योनिहन्ताशा
स्वनिश्चयात् ६० स्त्रीग्रहोभ्रातृभावेशः स्त्रीगृहोभ्रातृ
गोपिवा भगिनीस्यात्तदाभ्राताप्ुंग्रहेपुंग्रहोयदि ६१
मिश्रेमिश्रफलंचात्रबलाबलविनिर्णयः ६१ नाशास्थि
तौसोदरनाथभौमः पापेक्षितेसोदरनाशमाहुः पापेक्षि
तौपापसमागमौवात्रिसप्तविद्याप्रविनाशहेतुः ६२
भ्रातृभेकारकेवापिशुभयुक्तनिरीक्षिते भावेवाबलसं
पूर्णेभ्रातृणांवर्धनंभवेत् ६३ केन्द्रत्रिकोणगेवापिस्वो
च्चमित्रस्ववर्गगे नाथेवाकारकेवापिभ्रातृलाभंवदेद्बुधः
६४ भ्रातृभेबुधसंयुक्तेतदीशेचन्द्रसंयुते कारकेम
न्दसंयुक्तेभगिन्यकाग्रतोभवेत् ६५ पश्चात्सहोद
रेप्येतत्तृतीयस्तुमृतंभवेत् कारकेराहुसंयुक्तेविक्रमेश
स्तुनीचगः ६६ पश्चात्सहोदराभावात्पूर्वस्तुत्रयस्त्र
द्भवेत् भ्रातृस्थानाधिपेकेन्द्रेकारकेतत्त्रिकोणगे ६७
जीवेनसहितश्चोच्चेसंख्याद्वादशसोदराः ६८ अयं
तृतीयगर्भश्चप्रथमाच्चतृतीयके सप्तमश्चैवनवमद्वादश
श्चसृतिप्रदः ६९ शेषाःसहोदरादीर्घाः षड्भार्यायमलो
द्भवेत् व्ययेशेनयुतेभौमेगुरुणासहितोपिवा ७०
भ्रातृस्थानेशशियुतेसप्तसंख्यास्तुसोदराः एतेषांहि
प्रजानाशःशुक्रेयुक्तेक्षितेनहि ७१

## अथ चतुर्थभावफलम्

गेहाधिनाथेनयुतेतुगेहेदेहाधिपेनापिगृहाप्तिलब्धिः यु
तेषष्ठादौतुविपर्ययःस्याद्ग्रहाधिपेदेहपतौचतद्वत् ७२

केन्द्रत्रिकोणेषुशुभग्रहेणयुतेसमीचीनगृहाभिलब्धिः क्षे
त्रस्यचिन्तासदनाधिपेनजीवेनचिन्तातुसुखस्यकार्या ७३
दिव्यांगनावाहनवस्तुभूषाचिन्तातुकार्याभृगुणाबुधेन्द्रैः क
मःशनिभ्यामभिचिंत्यमायुरर्केणतातःशशिनात्रमाता ७४
बुधेनबुद्धिःसदनर्क्षसंस्थांगतेनसस्तेशयुतेनचस्यात् केन्द्र
त्रिकोणेषुगतेषुसत्सप्रपश्यतावापिस्वतुंगगेन ७५ स्व
कीयस्वांशगेस्वोच्चेस्वक्षेत्रस्थानस्थितोयदि सुखवाहनवृ
द्धिःस्याच्छंखभेर्यादिवाद्ययुक् ७६ विचित्रसौधप्रा
कारंमण्डितंगृहमादिशेत् कर्माधिपेनसहितेनाथेचंद्रार्क
सूनुना ७७ बन्धुस्थानेश्वरेसौम्यशुभग्रहनिरीक्षिते
शशिजेलग्नसंयुक्ते बुधपूज्योभवेन्नरः ७८ मातृस्थाने
शुभयुतेतदीशेस्वोच्चराशिगे कारकेबलसंयुक्तेमातुर्दीर्घा
युरादिशेत् ७९ स्वतुंगसहितेहिबुकादिनाथेस्वक्षेत्रिभे
मित्रगृहेस्थितेच शुभेनदृष्टेशुभसंयुतेचक्षेत्राभिवृद्धिं
प्रवदेन्नराणाम् ८० सुखेशेकेन्द्रभावस्थेतथाकेन्द्रे-
स्थितोभृगुः शशीजेस्वोच्चराशिस्थेविद्वान्पण्डितएवसः
८१ सुखेमन्देरवियुतेचन्द्रोभाग्यगतोयदि लाभस्थान
गतेभौमेगोमहिष्यादिलाभकृत् ८२ चरग्रहसमायुक्ते
सुखेतद्राशिनायके षष्ठेभौमेव्ययगतेमूकत्वंमाप्यतेन-
रः ८३ लग्नस्थानाधिपेसौम्येसुखेशेनीचराशिगे
कारकेव्ययराशिस्थेसुखेशेलाभसंयुते ८४ द्वादशेव
त्सरेप्राप्तेनरवाहनलाभकृत् वाहनेरविसंयुक्तेस्वोच्चे
तद्राशिनायके ८५ युतेशुक्रेणसंयुक्तेद्वात्रिंशेवाहनं
भवेत् कर्मेशेनयुतेबन्धुनाथेतुंगांशसंयुते ८६ हि

चत्वारिंशके प्राप्ते नरो वाहनभाग्भवेत् ॥ लाभेशे सुखराशिस्थे सुखेशे लाभसंयुते ॥ ८७ ॥ द्वादशे वत्सरे प्राप्ते नरवाहनलाभकृत् ॥

## अथ पंचमभावफलम्

षडादित्रयसंस्थे तु सुताधीशेऽल्पपुत्रता ॥ केन्द्रत्रिकोण संस्थे तु पुत्रलाभाभिसंभवः ॥ ८८ ॥ सत्पुत्रलाभः सुतप करे ज्येशभेषु गेहेषु गते च भानौ ॥ एकः स्थिरः स्यात्सुत एक एव स्थितः शुभः केन्द्रनवात्मजस्थे ॥ ८९ ॥ पितापि चिन्त्यो नवमे सुतर्क्षे एवंविधश्चिन्तनमूहनीयम् ॥ ९० ॥ स्व अस्य कारको भौमः कर्मस्थाने व्ययं विधिः ॥ अस्तंगते पंचमेशे पापाक्रान्ते च दुर्बले ॥ ९१ ॥ षष्ठे नीचे सुताधीशे काकवन्ध्या विशेषतः ॥ षष्ठस्थाने सुताधीशो लग्नेशे कुजपेक्षणे ॥ म्रियते प्रथमापत्यं काकवंध्यात्वमाप्नुयात् ॥ ९२ ॥ सुताधीशो हि नीचस्थः षडादित्रयसंस्थितः ॥ काकवंध्या भवेन्नारी सुते केतुबुधौ यदि ॥ ९३ ॥ सुतेशो नीचगो यत्र सुतस्थानं न पश्यति ॥ तत्र सौरिबुधौ स्यातां काकवन्ध्यत्वमाप्नुयात् ॥ ९४ ॥ भाग्येशो मूर्तिवर्ती च सुतेशो नीचगो यदि ॥ सुते केतुबुधौ स्यातां सुतं कष्टाद्धि निर्दिशेत् ॥ ९५ ॥ षडादित्रयसंस्थो पि नीचो वाप्यरिसंस्थितः ॥ पापाक्रान्ते सुतस्थाने पुत्रं कष्टाद्धि निर्दिशेत् ॥ ९६ ॥ पुत्रस्थाने बुधक्षेत्रे मन्दक्षेत्रेथवा पुनः ॥ मन्दमान्दियुते दृष्टे तदा दत्तादयः सुताः ॥ रविचन्द्रौ यदैकस्थावेकांशकसमन्वितौ ॥ ९७ ॥ त्रिभिर्मासैः भिरसौ भ्राता हि पित्रारपि पोषकः ॥ पञ्चमे षड्गृहे

युक्ते तदीशेव्ययराशिगे ९८ लग्नेशेन्दुबलोयस्य दत्तपुत्र
भवोदयः सुतभवने भृगुजीवसौम्यनाथे बलसहिते रवि-
लोकिते युते वा बहुसुतजननं वदन्ति सन्तः सुतभवनेश ब
लेन चिन्त्यमेतत् ९९ सुतेशे शशियुक्ते च त्रिराश्यंशगते
पि च तथैव कन्यकालाभं प्रवदेन्मतिमान्नरः १०० सु-
तेशे नरराशिस्थे राहुणा सहितः शशी पुत्रस्थानं गते मन्दे
परजातं भवेच्छिशुम् १०१ सुतेशे राहुसंयुक्ते सुतस्था
नं समाश्रितम् नवांशस्थे चन्द्रगुरुणा परजातो भवेन्नरः
१०२ नलग्नमिंदुं च गुरुर्निरीक्ष्यते न वा शशांकोरविणा समा-
गतः सपापकर्केण युते न वांशको परेण जातं प्रवदन्ति
निश्चितम् १०३ लग्नाद्द्वादशगे चन्द्रे लग्नादष्टमगो गुरुः
पापयुक्ते न संदृष्टे अन्यबीजं न संशयः १०४ पुत्रस्थाना-
धिपे सोच्चे लग्नाच्चेद्दृहित्रिकोणगे गुरुणा संयुते दृष्टे पुत्र
भाग्यमुपैति सः १०५ त्रिचतुःपापसंयुक्ते सुतेशे नाधि-
पे वा युक् सुतेशे नाशराशिस्थे नीचसंस्थो भवेच्छिशुः
१०६ पुत्रस्थानं गते जीवे तदीशे भृगुसंयुते द्वात्रिंशे
त्वत्रयस्त्रिंशे वत्सरे पुत्रलाभकृत् १०७ सुतेशे केन्द्रभा-
वस्थे कारकेण समन्विते षट्त्रिंशे त्रिंशदब्दे च पुत्रोत्पत्ति
विनिर्दिशेत् १०८ लग्नाद्भाग्यगते जीवे जीवाद्भाग्यगते
भृगौ लग्नेशे भृगुसंयुक्ते चत्वारिंशे सुतं लभेत् १०९
पुत्रस्थानं गतो राहुस्तदीशे पापसंयुते नीचराशिगते जीवे
द्वात्रिंशे पुत्रमृत्युदः ११० जीवात्पंचमगे पापे लग्नात्पुत्र
गते पि च षड्विंशे च त्रयस्त्रिंशे चत्वारिंशे सुतक्षयम् १११
लग्ने मांदिसमायुक्ते लग्नेशे नीचराशिगे षट्पंचाशद्वर्षाब्दे-

पुत्रशोकसमाकुलः ११२ चतुर्थे पापसंयुक्ते षष्ठे पाप
समन्विते सुतेशे परमोच्चस्थे लग्नेशेन समन्विते ११३
कारके शुभसंयुक्ते दशसंख्यास्तु सूनवः परमोच्चगते जीवे
धनेशे राहुसंयुते ११४ भाग्येशे भाग्यसंयुक्ते संख्याताल
वसूनवः पुत्रभाग्यगते जीवे सुतेशे बलसंयुते ११५ ध
नेशे कर्मराशिस्थे वसुसंख्यास्तु सूनवः पंचमात्पंचमे म
न्दे सुतस्थे च तदीश्वरे ११६ सूनवः सप्तसंख्याश्चाद्वि
गर्भे यमलं भवेत् वित्तेशे पंचमस्थाने सुतस्थे पंचमाधिपे
११७ षट्संख्याश्च सुतमासिस्तेषां त्रिप्रजामृतिः ल
ग्नात्पञ्चमगे जीवे जीवात्पंचमगे शनौ ११८ मन्दात्पञ्च
मगे राहौ पुत्रमेकं विनिर्दिशेत् पंचमे पापसंयुक्ते गुरोः पंच
मगः शनिः ११९ कलत्रान्तरे पुत्रलाभं कलत्रत्रय भा
भवेत् पंचमे पापसंयुक्ते गुरोः पंचमगे शनौ पंचमे भौम
संयुक्ते लग्नेशे धनसंगते १२० जातजातविनाशश्च दी
पायुश्चैव मानवः १२१

## अथ षष्ठभावफलम्

षष्ठाधिपोपि पापश्चेद्देहे वाप्यष्टमे स्थितः तदा व्रणो भवेद्दे
हे कर्मस्थानेप्ययं विधिः १२२ एवं पित्रादिभावेशास्तत्त
त्कारकसंयुताः व्रणाधिपयुताश्चापि षष्ठाष्टमयुता यदि
१२३ तेषामपि व्रणं वाच्यमादित्येन शिरोव्रणम् इंदुना
चमुखे कण्ठे भौमेन ज्ञेननाभिषु १२४ गुरुणा नासि
कायां च भृगुणा नयने पदे शनिना राहुणा कुक्षौ केतुना च
तथा भवेत् १२५ लग्नाधिपः कुजक्षेत्रे बुधस्य यदि सं-

स्थितः यत्रकुत्रास्थितेज्ञेनवीक्षितोमुखरुक्प्रदः १२६
लग्नाधिपौकुजबुधौचन्द्रेणयदिसंस्थितो राहुणाशनिना
सार्द्धंकुष्टंतत्रविनिर्दिशेत् १२७ लग्नाधिपंविनालग्नेस्थि
तश्चेत्तमसाशशी श्वेतकुष्टंतदाकृष्णाकुष्टंचशनिनास
ह १२८ कुजेनरक्तकुष्टस्यात्तत्तदेवंविचारयेत् ल
ग्नेषष्ठाष्टमाधीशौरविणायदिसंस्थितौ १२९ ज्वरगुडः
कुजेग्रंथिः शस्त्रव्रणमथापिवा बुधेनपित्तंगुरुणा
रोगाभावंविनिर्दिशेत् १३० स्त्रीभिः शुक्रेणशनिना
वायुनासंयुतोयदि गण्डश्चांडालतोनाभोतमः केत्वोर्गृहे
भयम् १३१ चन्द्रेणगण्डसलिलैः कफश्लेष्मादिनाभ
वेत् एवंपित्रापिभावानांतत्तत्कारकयोगतः १३२
गंडंतेषांभवेदेवमूह्यमत्रमनीषिभिः हतशत्रुगृहादी
शिगजवाजिधनाधिपाः १३३ श्रीपतिः स्वोच्चतेजस्वी
गृहारामसुखीभवेत् दीप्तेविरचितंपुंसांप्रभावरिपुनीचयः
१३४ लक्ष्म्यासंलिंगितोदेहेगजमेदनीसहस्रभृत् रो
गस्थानगतेपापेतदीशेपापसंयुते १३५ राहुणासंयुते
मन्देसर्वदारोगसंयुतः रोगस्थानगतेभौमेतदीशेरन्ध्रसं
युते १३६ षड्वर्षेद्वादशेवर्षेज्वररोगीभवेन्नरः षष्ठ
स्थान गतेजीवेतद्गृहेचन्द्रसंयुते १३७ द्वाविंश
कोनविंशेब्देकुक्षिरोगंविनिर्दिशेत् रोगस्थानगतोराहुः
केन्द्रेमांदिसमन्वितः १३८ लग्नेशेनाशराशिस्थेषड्वि
शेक्षयरोगता व्ययेशेरोगराशिस्थेतदीशेव्ययराशिगे
१३९ त्रिंशद्वर्षेकोनवर्षेप्येगुल्मरोगंविनिर्दिशेत् रिपु
स्थानगतेचन्द्रेशनिनासंयुतेयदि १४० पंचपंचाशता

ताविभोग्यंबहुधान्यमाहुः १५४ कलत्रेशेबहुगुणेतुं गवक्रादिहेतुभिः बहुभार्यांतरंविद्यान्छत्रुनीचस्तगेषु च १५५ परमोच्चगतेमंदाधिनाथेमन्दराशीशभरवेच रेणदृष्टे अथवाभृगुसदनेतुंगेबहुभार्याप्रवदन्तिबुद्धिमन्तः १५६ वंध्यासंगोमदेभानोचन्द्रराशिसमास्त्रियः कुजेरजस्वलासंगोवंध्यासंगश्चकीर्तितः १५७ बुधेवश्याचहीनाचवणिकुस्त्रीवाप्रकीर्तितः गुरोर्ब्राह्मण भार्यास्याद्गर्भिणीसंगएवच १५८ हीनाचपुष्पिणी वाच्यामन्दराहुफणीश्वरैः कुजोक्तेसुस्तनामदाव्याधि दौर्बलनस्तथा १५९ काठिनोर्ध्वकुजाचार्येश्रेष्ठस्थूलोत्तमस्तना पापेद्वादशकामस्थक्षीणचन्द्रस्तुपंचगे १६० जातस्यभार्यावश्यस्यादितिजातिविरोधकृत् जामित्रेमन्दभौमस्येतदीशेमन्दभूमिजे १६१ वेश्यायाजारिणीवापितस्यभार्यानसंशयः भौमांशगतेशुक्रे भौमक्षेत्रगतेथवा १६२ भौमयुक्तेचदृष्टेवाभगचुंबनभाग्भवेत् मंदांशकगतेशुक्रेमन्दक्षेत्रगतेपिच १६३ मन्दयुक्तेचदृष्टेचशिश्नचुम्बनतत्परः दारेशोसोच्चराशिस्थेदारेशुभसमन्विते १६४ लग्नेशबलसंयुक्तेसकलत्रसमन्वितः कलत्रनाथेरिपुनीचसंस्थेमूढेथवापापनिरीक्ष्यतेवा १६५ कलत्रभेपापयुतेचदृष्टेकलत्रहानिं प्रवदन्तिसन्तः षष्टाष्टमव्ययस्थेपुमन्देशोदुर्बलोयदि १६६ नीचराशिगतेयुक्तेदारनाशंविनिर्दिशेत् कलत्रस्थानगेचन्द्रेतदीशेव्ययराशिगे १६७ कारकोबलहीनश्चदारसौख्यंनविद्यते भार्याधिपेनीचगृहेचपापऋक्षग

वाबहुपापयुक्ते १६८ क्लीबगृहेसप्तमराशिसंस्थेतस्यो-
दयांशेहिकलत्रसिद्धिः कलत्रस्थानगेभौमेशुक्रजामि
त्रगेशशे: १६९ लग्नेशेरंध्रराशिस्थेकलत्रप्रियवान्भ
वेत् द्विस्वभावगतेशुक्रेसोच्चतद्राशिनायके १७०
दारेशेबलसंयुक्तेबहुदारसमन्वितः दारेशेशुभराशि-
स्थेस्वोच्चस्वऋक्षगेभृगुः १७१ पंचमेनवमेब्देतुवि
वाहः प्रायशोभवेत् दारस्थानंगतेसूर्येतदीशेभृगुसंयु-
ते १७२ सप्तमेकादशेवर्षेविवाहः प्रायशोभवेत्
कुटुंबस्थानगेशुक्रेदारेशेलाभराशिगे दशमेषोडशाब्दे-
चविवाहःप्रायशोभवेत् १७३ लग्नकेंद्रगतेशुक्रेलग्ने-
शेमंदराशिगे वत्सरेकादशेमासेविवाहंलभतेनरः १७४
लग्नात्केन्द्रगतेशुक्रेतस्मात्कामगतेशनौ द्वादशेकोन
विंशेचविवाहःप्रायशोभवेत् १७५ चंद्राज्जामित्रगेशु
क्रेशुक्राज्जामित्रगेशनौ वत्सरेष्टादशेमासेविवाहंल
भतेनरः १७६ धनेशेलाभराशिस्थेलग्नेशेकर्मरा-
शिगे अब्देपंचदशेवर्षेविवाहंलभतेनरः १७७
धनेशेलाभराशिस्थेलाभेशेधनराशिगे अब्देत्रयोदशे
मासेविवाहंलभतेनरः १७८ रंध्राज्जामित्रगेशुक्रेत
दीशेभौमसंयुते द्वाविंशेसप्तविंशाब्देविवाहंलभतेनरः
१७९ दारांशकगतेलग्नेनाथेदारेश्वरेव्यये त्रयोविंशे-
चषड्विंशेविवाहंलभतेनरः १८० रंध्रांशेदारराशि-
स्थेलग्नांशेभृगुसंयुते पंचविंशेत्रयस्त्रिंशेविवाहंलभते
नरः १८१ भाग्याद्भाग्यगतेशुक्रेतद्व्येराहुसंयुते
एकविंशात्त्रयस्त्रिंशेदारलाभंविनिर्दिशेत् १८२ भा-

त्याज्जामित्रगेशुक्रेतद्यूनेदारनायके त्रिंशेवासमविं शाब्देविवाहंलभतेनरः १८३ दारेचनीचराशिस्थेशुक्रेरंध्रारिसंयुते अष्टादशेत्रयःस्त्रिंशेवत्सरेदारनाशनम् १८४ मंदेशेनाशराशिस्थेव्ययेशेमन्दराशिगे वत्सरैकोनविंशाब्देदारनाशंविनिर्दिशेत् १८५ कुटुम्बस्थानगोराहुःकलत्रेभौमसंयुते पाणिगृहेत्रिदिवसेदष्टेवधूमृतिः १८६ रन्ध्रस्थानगतेशुक्रेनदीशेसौरिराशिगे द्वादशेकोनविंशाब्देदारनाशंविनिर्दिशेत् १८७ लग्नेशेनीचराशिस्थेधनेशेनिधनंगते चत्वारिंशत्तु संमासेकलत्रस्यमृतिर्भवेत् १८८ शुक्राज्जामित्रगे चंद्रेचन्द्राज्जामित्रगेबुधे रंध्रेशेसुतभावस्थेप्रथमंदशमाब्दिकम् १८९ द्वाविंशेचद्वितीयेचत्रयःस्त्रिंशेतृतीयके विवाहंलभतेमर्त्योनात्रकार्याविचारणा १९०

## अथाष्टमभावफलम्

आयुःस्थानाधिपःपापैःसहैवव्ययदिसंस्थितः करोत्यल्पायुषंजातंलग्नेशोप्यत्रसंस्थितः १९१ एवंहिशानिनाचिन्ताकार्यातर्कैर्विचक्षणैः कर्माधिपेनचतथाचिंतनंकार्यमायुषः १९२ षष्ठेव्ययेपिषष्ठेशोव्ययाधीशोरिपौव्यये लग्नेष्टमेस्थितोवापिदीर्घमायुःप्रयच्छति १९३ स्वस्थानेस्वांशकेनापिमित्रांशेमित्रमंदिरे दीर्घायुःकरोत्येवलग्नेशोष्टमपःपुनः १९४ लग्नाष्टमपकर्मेशमंदाःकेंद्रत्रिकोणयोः लाभेवासंस्थितास्तद्दिशेयुर्दीर्घमायुषम् येषुयोबलवांस्तस्यानुसारादायुः

रादिशेत् १९५ अष्टमाधिपतौकेन्द्रेलग्नेशेबलवर्जिते
विंशद्वर्षाणिसाजीवेद्वात्रिंशत्परमायुषम् १९६ रंध्रेशो
नीचराशिस्थेरंध्रेपापग्रहैर्युते लग्नेशेदुर्बलेयस्यअल्पा
युर्भवतिध्रुवम् १९७ रंध्रेशोपापसंयुक्तेरंध्रेपापग्रहैर्यु-
ते व्ययेक्रूरग्रहैर्जातेजातमात्रंमृतिर्भवेत् १९८ केन्द्र
त्रिकोणपापस्थः षष्टाष्टशुभगायदि लग्नेरंध्रेशनीचस्थे
जातः सद्योमृतिर्भवेत् १९९ पंचमेपापसंयुक्तेरंध्रेशो-
पापसंयुते रन्ध्रेपापग्रहैर्युक्ते अल्पायुष्यंसजायते २००
रंध्रेशेरन्ध्रराशिस्थेचंद्रेपापसमान्विते शुभदृष्टेनसफलं
मासांतेचमृतिर्भवेत् २०१ लग्नेशेसोच्चराशिस्थेचंद्रे
लाभसमान्विते रन्ध्रस्थानगतेजीवेदीर्घायुष्यंनसंशयः
२०२

## अथ नवमभावफलम्

भाग्याधिनाथोपिचभाग्यकर्ताशुक्रोपिपापैः सहचेत्त्रिधुस्या
त् विपदादिभावेषुचभाग्यहीनंकेंद्रत्रिकोणापगतोति-
भाग्यम् २०३ अनेनधर्मः परिकल्पनीयः पितातुचिं
त्यौनिजमातुलस्य शुभेशुभस्थानगतेशुभंस्याद्विपर्य-
येतत्रविपर्ययःस्यात् २०४ भाग्यस्थितेवाहनराशिसं
स्थेशुक्रेचजीवेशुभराशियुक्ते भाग्याधिपेकोणचतुष्टय
वाबहुत्वदेशाभरणान्नयानम् २०५ गुरुस्थानगतेजीवे
नदीशेकेंद्रसंस्थिते लग्नेशेबलसंयुक्ते बहुभाग्याधिपो-
भवेत् २०६ भाग्येशेबलसंयुक्तेभाग्येभृगुसमन्विते ब-
लाकेन्द्रगतेजीवेपितृभाग्यसमन्वितः २०७ भाग्यस्थाना-

द्वितीयेवासुरवेभौमसमन्विते भाग्येशेनीचराशिस्थेपिता
निर्धनएवसः २०८ भाग्येशेपरमोच्चस्थेभाग्यांशेजीवसंयु
ते लग्नाच्चतुष्टयेशुक्रेपितादीर्घायुरादिशेत् २०९ भा
ग्येशेकेन्द्रभावस्थेगुरुणाचानिरीक्षते तत्सिताद्वाहनैर्यु-
क्तोराजावातत्समोभवेत् २१० भाग्येशेकर्मभावस्थेक-
र्मेशेभाग्यराशिगे कर्मेशेचधनाढ्यश्चकीर्तिमांस्तत्सिता
भवेत् २११ परमोच्चांशगेसूर्येभाग्येशेलाभसंस्थिते ध
र्मिष्ठोनृपवात्सल्यःपितृपुण्योभवेन्नरः २१२ लग्नात्त्रि
कोणगेसूर्येभाग्येशेसप्तमस्थिते गुरुणासहितेदृष्टेपितृ
भक्तिसमन्वितः २१३ भाग्येशेधनभावस्थेधनेशेभाग्य
राशिगे द्वात्रिंशात्परतोभाग्यंवाहनंकीर्तिसंभवः २१४
लग्नेशेभाग्यराशिस्थेषष्ठेशेभाग्यराशिगे अन्योन्यवै-
रंभवतेजनकःकुत्सितोभवेत् २१५ कर्मेशेरिपुरंध्रस्थे
फभवनेजीवेच्चाभिक्षाशनः भाग्येशेयदिजन्मकालसम-
येप्राप्नोतिदीक्षांरविः २१६ कर्माधिपेनसहितोविक्र-
मेशोविधिर्बलः नीचराशिविमूढस्थोयोगोभिक्षाशना
त्मभुः २१७ षष्ठाष्टमव्ययेभानूरंध्रेशोभाग्यसंयुते
व्ययेशेलग्नराशिस्थेषष्ठांशपंचमेस्थिते २१८ जात
स्यजननात्पूर्वंजनकस्यमृतिर्भवेत् रंध्रस्थानगतेसूर्ये
रंध्रेशेभाग्यनायके २१९ जातस्यप्रथमाब्देतुपितुर्मर
णमादिशेत् व्ययेशेभाग्यराशिस्थेनीचांशेभाग्यना
यके २२० तृतीयेषोडशेवर्षेजनकस्यमृतिर्भवेत् ल
ग्नेशेनाशराशिस्थेरंध्रेशेभानुसंयुते २२१ द्वितीयेद्वा
दशेवर्षेपितुर्मरणमादिशेत् भाग्याद्रन्ध्रगतेराहुर्भाग्या

द्भाग्यगतेरवौ २२२ षोडशेष्टादशेवर्षेजनकस्यमृति
र्भवेत् भाग्याद्रंध्रगतेराहुर्भाग्याद्भाग्यगतेरवौ २२३
राहुणासहितेसूर्येचंद्राद्भाग्यगतेशनिः सप्तमेकोनविं
शाब्देतातस्यमरणंध्रुवम् २२५ भाग्येशेव्ययराशिस्थे
व्ययेशेभाग्यराशिगे चतुश्चत्वारिवर्षाच्चपितुर्मरणमा-
दिशेत् २२६ रव्यंशेचास्थितेचन्द्रेलग्नेशेरन्ध्रसंयुते पं
चत्रिंशेकचत्वारिवत्सरेपितृनाशनम् २२७ पितृस्था-
नाधिपेसूर्येमंदभोमेनसंयुते पंचाशद्वत्सरेप्राप्तेजनक
स्यमृतिर्भवेत् २२८ भाग्यात्सप्तमगेसूर्ये भ्रातृसप्तम
गस्तमः षष्ठमेपन्चविंशाब्देपितुर्मरणमादिशेत् २२९
रन्ध्रजामित्रगेमन्देमन्दाज्जामित्रगेरवौ त्रिंशेकविंशेष
ड्विंशेजनकस्यमृतिर्भवेत् २३० भाग्येशेनीचराशिस्थे
तदीशेभाग्यराशिगे षड्विंशेत्रयस्त्रिंशेपितुर्मरणमा-
दिशेत् २३१ रव्यंशकास्थितेचन्द्रेलग्नेशेरन्ध्रसंयुते
पञ्चत्रिंशेकचत्वारिवत्सरेपितृनाशनम् २३२ पितृ-
स्थानाधिपेसूर्येचन्द्रभौमसमन्विते पञ्चाशद्वत्सरेमासे
जनकस्यमृतिर्भवेत् २३३ परमोच्चांशगेशक्रे भाग्ये
शेनसमन्विते भ्रातृस्थानेशनियुतेबहुभाग्याधिपोभवे-
त् २३४ गुरुणासंयुतेभाग्येतदीशेकेन्द्रराशिगे विंशद्व
र्षात्परंचैवबहुभाग्यंविनिर्दिशेत् २३५ परमोच्चांशगेसौ-
म्येभाग्येशेभाग्यराशिगे षट्त्रिंशाच्चपरंचैवबहुभाग्यंवि-
निर्दिशेत् २३६ लग्नेशेभाग्यराशिस्थेभाग्येशेलग्नसंयु-
ते गुरुणासंयुतेद्युनेधनवाहनलाभकृत् २३७ भा-
ग्याद्भाग्यगतोराहुर्भाग्यस्थेनिधनंगते भाग्येशेनरराशि-

स्थेभाग्यहीनोभवेन्नरः २३८ भाग्यस्थानगतेमन्देशशि·
नीचसमन्विते लग्नेशेनीचराशिस्थेभिक्षाशीचनरोभवेत्
२३९

## अथ दशमभावफलम्.

कर्माधिपोबलोनश्चेत्कर्मवैकल्यमादिशेत् सैंहिकेन्द्रत्रि
कोणस्थोज्योतिष्टोमादियोगकृत् २४० अत्रायुषश्चि
न्तनंचकार्यंस्यात्कर्मणस्तथा शत्रुनीचग्रहे त्यक्ताषष्ठा·
ष्टमगृहेतथा २४१ दशमेपापसंयुक्तेलग्नेपापसमन्वि
ते दुष्कृतिंलभतेमर्त्यः स्वजनानांविदूषकः २४२ क
र्मेशेनाशराशिस्थेकर्मेशेराहुसंयुते जनद्वेषीमहामूर्खो
दुष्कृतिंलभतेनरः कर्मेशद्यूनराशिस्थेमन्दभौमेनस
युते २४३ द्यूनेशेपापसंयुक्तेशिश्नोदरपरायणः तुंग
राशिसमाश्रित्यकर्मेशेगुरुसंयुते २४४ भाग्येशेकर्म
राशिस्थेमानैश्वर्यप्रतापवान् लग्नेशेकर्मराशिस्थेकर्मे·
शेलग्नसंयुते २४५ तावुभौकेन्द्रगौवापिसुखजीवनभा·
ग्भवेत् कर्मेशेबलसंयुक्तेमानेगुरुसमन्विते २४६ व
स्त्राभरणसौख्यादिलभतेनात्रसंशयः लग्नस्थानगते
सूर्येराहुभौमसमन्विते २४७ रविपुत्रेणसंयुक्तेकर्म·
छेत्ताभवेन्नरः मानेचराशेयदिचोच्चवाशेभागीरथी·
स्नानफलंलभेत्तत् मानेचमीनेयदिवार्कपुत्रेसन्यास
योगंप्रवदंतितस्य २४८ मानेजीवेभग्रज्ञतेलग्नेशेब·

मेनाथेस्वोच्चसमाश्रिते २५० गुरुणासहितेदृष्टेसकर्म
सहितोभवेत् कर्मेशेलग्नभावस्थेलग्नेशेनसमन्विते
२५१ केन्द्रत्रिकोणगेचन्द्रेसत्कर्मनिरतोभवेत् कर्मस्था
नगतेमन्दनीचखेचरसंयुते २५२ कर्मांशेपापसंयुक्तेक
र्महीनोभवेन्नरः कर्मेशेवांशराशिस्थेरन्ध्रेशेकर्मसंस्थि
ते पापग्रहेणसंयुक्तेदुष्कर्मनिरतोभवेत् २५३ कर्मे
शेनीचराशिस्थेकर्मस्थेपापखेचरे कर्मात्कर्मस्थितेपापे
कर्मवैकल्यमादिशेत् कर्मस्थानगतेचन्द्रेतदीशेतत्त्रिको
णगे २५४ लग्नेशेकेन्द्रभावस्थेसत्कीर्तिसहितोभवेत्
लाभेशेकर्मभावस्थेकर्मेशेबलसंयुते २५५ देवेन्द्रगुरु
णादृष्टेसत्कीर्तिसहितोभवेत् कर्मस्थानाधिपेभाग्येल
ग्नेशेकर्मसंयुते लग्नात्पंचमगेचन्द्रेख्यातिकीर्तिर्विनिर्दि
शेत् २५६

## अथैकादशभावफलम्

लाभाधिपोयदालाभेतिष्ठेत्केन्द्रत्रिकोणयोः बहुला
भंतदाकुर्यादुच्चसूर्यांशगोपिवा २५७ लाभेशेधनराशि
स्थेधनेशेकेन्द्रसंस्थिते गुरुणासहितेभावेगुरुलाभंवि
निर्दिशेत् २५८ षट्त्रिंशेवत्सरप्राप्तेसहस्रद्वयनिष्क
भाक् केन्द्रत्रिकोणगभावेनाथेशुभसमन्विते चत्वा
रिंशेतुसम्प्राप्तेसहस्रार्धंचनिष्कभाक् २५९ लाभ
स्थानेगुरुयुतेधनेचन्द्रसमन्विते भाग्यस्थानगतेशुक्रे
षट्सहस्राधिकोभवेत् २६० लाभाच्चलाभगेजीवेगु
रुचन्द्रेणसंयुते धनधान्याधिपःश्रीमान्रत्नाद्याभरण

र्युतः २६१ लाभेशेलग्नभावस्थेलग्नेशेलाभसंयुते
त्रय स्त्रिंशेतुसंप्राप्तेसहस्रंनिष्कभाग्भवेत् २६२ धनेशे
लाभराशिस्थेतदीशेधनराशिगे विवाहात्परतश्चैवबहु
भाग्यंसमादिशेत् २६३ धैर्येशेलाभराशिस्थेलाभे
शेभ्रातृसंस्थिते भ्रातृभावाद्धनप्राप्तिर्दिव्याभरणसं
स्थितः २६४ लाभेपापेचव्ययेपापयुक्तेदृष्टेपापे
क्षेत्रयुक्तेनयुक्ते लाभात्कामेलाभविघ्नेनिरर्थेसौ
म्यार्थयोवीक्षणंविघ्ननाशः २६५

## अथ द्वादशभावफलम्

चन्द्रोव्ययाधिपोधर्मेलाभमंत्रेषुसंस्थितः स्वोच्चस्वर्क्ष
निजांशेवालाभधर्मात्मजांशके २६६ दिव्यांगारादिप
र्यंकोदिव्यगन्धैकभोगवान् परार्धरमणोदिव्यवस्त्रमा
ल्यादिभूषणः २६७ परार्थसंयतांवित्तोदिनानिनय
तिप्रभुः एवंस्वशत्रुनीचांशेश्रष्टांशेवाष्टमेरिपो २६८
संस्थितःकुरुतेजातंकांतासुखविवर्जितम् व्ययाधि
क्यपरिक्रान्तंदिव्यभोगनिराकृतम् २६९ सहिकेन्द्र
त्रिकोणस्थः स्वस्त्रियालंकृतःस्वयम् एवंभ्रात्रादिभा
वेषुतत्तत्सर्वंविचारयेत् २७० लग्नस्यपूर्वार्द्धे १० ११ १२
१२३ गतानभोगाःफलंप्रदद्युस्त्वपरोक्षकंत परार्द्धे ४
५ ६ ७ ८ ९ षट्कोपगताःपरोक्षंफलंवदंतीतिबुधाःपुरा
णाः २७१ व्ययस्थानगतोराहुर्भौमार्करविसंयुतः
तदीशेनार्कसंयुक्तेनरकेपतनंभवेत् २७२ व्ययस्थान
गतेसौम्यंतदीशेसोच्चगाशिगे शुभयुक्तेशुभैर्दृष्टेप्राप्त

स्यान्नसंशयः २७३ व्ययेशेपापसंयुक्तेव्ययेपापसम
न्विते पापगृहेणसंदृष्टेदेशादेशान्तरंगतः २७४ व्यये-
शेशुभराशिस्थेव्ययऋक्षेशुभसंयुते शुभग्रहेणसंदृ-
ष्टेस्वदेशात्संचरोभवेत् २७५ व्ययेमन्दाहिसंयुक्तेभू
मिजेनसमन्विते शुभदृष्टेश्वसंप्राप्तिःपापमूलाधनार्ज
नम् २७६ लग्नेशेव्ययराशिस्थेव्ययेशेलग्नसंयुते भृ-
गुपुत्रेणसंयुक्तेधर्ममूलाद्धनव्ययम् २७७ लग्नेजातं
रविर्हन्तिषष्ठेजातंशनैश्चरः अग्रजंपृष्टजंहन्तिसहज-
स्थोधरासुतः २७८ पत्निस्थानेयदाराहुःपापयुग्मे
नवीक्षितः पत्नीयोगस्थितातस्यभूतापिम्रियतेचि-
रात् २७९ षष्ठेचभवनेभौमःसप्तमेराहुसंभवः अ-
ष्टमेचयदाशौरिस्तस्यभार्यानजीवति २८० इति
श्रीबृहत्पाराशरहोरापूर्वखण्डसारांशे द्वादशभावविचार
कथनंनाम चतुर्दशोध्यायः १४

---

मैत्रेयउवाच.

परजातंकथंज्ञेयंकथंज्ञेयंशुभाशुभम् एतत्सर्वंसमा-
चक्ष्वग्रहाणांराशिनाम्फलम् १

पराशर उवाच.

तुर्यचन्द्रेक्षितःखेटःशत्रुभिर्वायुतेक्षितः परेणजायते
बालोनिश्चितंचयथाप्सुः २ त्रिषष्टहिबुतार्थाशोय-
दालग्नेस्थितस्तदा तथापिपरजातःस्याद्भृत्याधन्य

सुतादिभिः ३ लग्नेक्रूरोस्तगःसौम्यःकर्मस्थेरविनन्दनः अस्मिन्योगेचयोजातोजायतेवर्णसंकरः ४ मूर्तौचेन्दुश्चदुश्चिक्येभूमिनन्दनभार्गवो यदापंचादशावर्षेतदापिपरबालकः ५ ग्रहराजस्थितेलग्नेचतुर्थेसिंहिकासुतः स्वदेवरात्सुतोत्पत्तिर्जातातस्यनसंशयः ६ लग्नेराहुधरापुत्रौसप्तमेचन्द्रभास्करौ नीचेनश्चापगंबालोयदाराज्ञिभवेदपि ७ सूर्ययुक्तेन्दुलग्नस्थेसप्तमेभौमभास्करौ अस्मिन्योगेयदाजन्मपरेणैवहिजायते ८ केन्द्रशून्यभवेद्यस्यसोपिजातःपरेणहि द्विषष्टाष्टमरिःफेषुग्रहास्तिष्ठन्तियस्यसः ९ परजातोभवेत्सत्यमन्यत्रेष्वपिसंस्थितः एकस्थानेयदास्तेशलग्नेशौसोपिजारजः १० जीवोनिशाकरंलग्नंनेक्षितेपिसजारजः जीववर्गविहीनांशेतदायोगःपरेणजः ११ द्विशत्रुचेककेन्द्रस्थावन्यग्रहविवर्जितो तदापिपरजातस्स्यात्स्थिरलग्नेविशेषतः १२ चतुर्थेदशमेलग्नेपापयुग्विधुसंस्थितः लग्नेशेनेक्षितंलग्नंतदापिपरबालकः १३ लग्नेशेसंस्थितेलग्नेपरजातकदाचन भंगोयंसर्वयोगानामितिकथितंमया १४

## अथ लग्नेशद्वादशभावस्थितफलमाह

लग्नेशेलग्नकेपुंसःसुदेहोस्तभुजाक्रमी मनस्वीचातिचांचल्योहिभार्यापरगामिवा १५ लग्नेशोधनगेलाभसुलाभीपीडितोनरः सुशीलोधर्मविन्मानीबहुदारगुणैर्युतः १६ लग्नेशेसहजेषष्ठेसिंहतुल्यपराक्रमी सर्वसम्पद्यु-

तोमानीद्विभार्योमतिमान्सुखी १७ लग्नेशेदशमेतुर्येपि-
तृमातृसुखान्वितः बहुभ्रातृयुतःकामीगुणसौंदर्यसंयु-
तः १८ लग्नेशेपंचमेमानीसुतसौख्यंचमध्यमम् प्रथ-
मापत्यनाशः स्यात्क्रोधीराजप्रवेशकः १९ लग्नेशः स-
प्तमेयस्यभार्यातस्यनजीवति विरक्तोवाप्रवासीवादरि-
द्रोवानृपोपिवा २० लग्नेशेव्ययगेचाष्टेसिद्धविद्याविशार-
दः द्यूतीचोरोमहाक्रोधीपरनार्यातिभोगकृत् २१ ल-
ग्नेशेनवमेपुंसोभाग्यवान्जनवल्लभः विष्णुभक्तःपटुः
वाग्मीपुत्रदारधनैर्युतः २२

## अथ धनेशाद्द्वादशभावस्थितफलमाह

धनेशोधनगोपुंसोधनवान्गर्वसंयुतः भार्याद्वयंत्रयंवा-
पिसुतहीनःप्रजायते २३ धनेशेसहजेतुर्येविक्रमीमति
मान्गुणी परदाराभिगामीचलोभीवादेवानिन्दकः २४
धनेशेरिपुगेशत्रोधनम्प्राप्नोतिनिश्चितम् शत्रुतोनाशाधि-
तस्यगुदेचोरोभवेद्रुजः २५ धनेशेसप्तमेयःपरजा-
याभिगामिनः जायातस्यभवेद्वेश्यामातापिव्यभिचा-
रिणी २६ धनेशेमृत्युगेहस्थेभूमिद्रव्यंलभेद्ध्रुवम्
जायासौख्यंभवेत्स्वल्पंज्येष्ठभ्रातृसुखंनहि २७ धने-
शेनवमेलाभेधनवानुद्यमीपटुः बाल्येरोगीसुखीपश्चा
द्यावदायुःसमाप्यते २८ धनेशेदशमेयस्यकामीमा-
नीचपंडितः बहुदारधनैर्युक्तःसुतहीनोपिजायते २९
धनेशेव्ययगेमानीसाहसीधनवर्जितः जीविकानृपगे-
हाच्चज्येष्ठपुत्रसुखंनहि ३० धनेशेचतनौपुत्रीस्वकुटुं

वस्यकंटकः धनवान्निष्ठुरःकामीपरकार्येषुतत्परः ३१

## अथ तृतीयेशद्वादशभावस्थितफलमाह

तृतीयेशेतृतीयस्थेविक्रमीसुतसंयुतः धनयुक्तोमहा
हृष्टोभुनक्तिसुखमद्भुतम् ३२ तृतीयेशेसुखेकर्मेपं
चमेचासुखीसदा अतिक्रूराभवेद्भार्याधनाढ्योमति
मानति ३३ तृतीयेशोरिपौयस्यभ्राताशत्रुर्महाधनी
मातुलानांसुखंनस्यान्मातुल्याभोगमिच्छति ३४ तृ
तीयेशेव्ययेभाग्येस्त्रीभिर्भाग्योदयोभवेत् पितातस्य
महाचारःसुखेपिदुःखदर्शितः ३५ तृतीयेशेष्टमेद्यूने
राजद्वारेमृतिर्भवेत् चौरोवापरगामीवाबाल्येकष्टंदिनेदि
ने ३६ तृतीयेशेतनौलाभेस्वभुजार्जितवित्तमान् मू
र्खःकृशोमहारोगीसाहसीपरसेवकः ३७ गुदाभंजनि
कःस्थूलःपरभार्याधनेरुचिः स्वल्पारंभीसुखीनस्या
त्तृतीयेशेधनेगते ३८

## अथ चतुर्थेशद्वादशभावस्थितफलमाह

तुर्येशेतुर्यगेमंत्रीभवेत्सर्वधनाधिपः चतुरःशीलवा
न्मानीधनाढ्यःस्त्रीप्रियःसुखी ३९ तुर्येशेपंचमे
भाग्येसुखीसर्वजनप्रियः विष्णुभक्तिरतोमानीस्व
भुजार्जितवित्तवान् ४० सुखेशेशत्रुगेहस्थेतदास्याद्ब
हुमातृकः क्रोधीचौरोभिचारीचदुष्टचित्तमनस्वपि
४१ सुखेशेसप्तमेलग्नेबहुविद्यासमन्वितः पित्रा
र्जितधनत्यागीसभायांमूकवद्भवेत् ४२ सुखेशोव्य

यस्त्वधस्थेसुखहानीभवेन्नरः पितृसौख्यंभवेदल्पंक्रूरी
बोवाजारजोपिवा ४३ सुखेशेकर्मगेहस्थेराजमान्यो
भवेन्नरः रसायनीमहाहृष्टोभुनक्तिसुखमद्भुतम्
४४ सुखेशेसहजेलाभेनित्यरोगीभवेन्नरः उदारो
गुणवान्दातास्वभुजार्जितवित्तवान् ४५ सर्वसम्पद्यु-
तोमानीसाहसीकुहकान्वितः कुटुंबसंयुतोभोगीसु-
खेशेचधनंगते ४६

## अथ सुतेशद्वादशभावस्थितफलमाह.

सुतेशःपञ्चमेयस्यतस्यपुत्रोनजीवति क्षणिकःक्रू-
रभाषीचधार्मिकोमतिमान्भवेत् ४७ सुतेशेषष्ट-
रिःफस्थेपुत्रःशत्रुत्वमाप्नुयात् मृतसुतोथवाह्यपुत्रोवा
धनपुत्रोथवाभवेत् ४८ सुतेशेकामगेमानीसर्वधर्म
समन्वितः तुंगयष्टिस्तनुस्वामीभक्तियुक्तेकतेजसा
४९ सुतेशेऽष्टायुषिविन्तेबहुपुत्रोनसंशयः कासश्वा-
सीसुखीनस्यात्क्रोधयुक्तोधनान्वितः ५० सुतेशे
नवमेकर्मेपुत्रोभूपसमोभवेत् अथवाग्रंथकर्ताचवि-
ख्यातःकुलदीपकः ५१ सुतेशेलाभभवनेपंडितो
जनवल्लभः ग्रंथकर्तामहादक्षोबहुपुत्रधनान्वितः ५२
सुतेशेलग्नसहजेमायावीपिशुनोमहान् लोष्टापिदत्त
वान्नैवकश्चिद्द्रव्यस्यकाकथा ५३ सुतेशेमातृभवने
चिरंमातासुखंभवेत् लक्ष्मीयुक्तःसुबुद्धिश्चसचिवोथ
वागुरुः ५४

## अथ षष्ठेशद्वादशभावस्थितफलमाह.

षष्ठेशेरिपुभावस्थेस्वज्ञातिशत्रुवद्भवेत् परजातिभ-
वेन्मित्रंभूमौनचलतिध्रुवम् ५५ षष्ठेशेसप्तमेलाभे
लग्नेवायशवान्भवेत् धनवान्गुणवान्मानीसाहसी
पुत्रवर्जितः ५६ षष्ठेशेष्टमरिष्फस्थेरोगीशत्रुर्मनी-
षिणाम् परजायाभिगामीचजीवहिंसासुतत्परः ५७
षष्ठेशेनवमेयस्यकाष्ठपाषाणविक्रयी व्यवहारेकचि-
द्धानिःकचिद्वृद्धिर्भवेत्किल ५८ षष्ठेशेकर्मवित्तस्थे
साहसीकुलविश्रुतः परदेशीसुखीवक्तास्वकर्मणिक
निष्ठकः ५९ षष्ठेशेसहजेतुयेक्रोधेनारक्तलोचनः
मनस्वीपिशुनोद्वेषीचलचित्तोतिवित्तवान् ६० षष्ठेशे
पंचमेयस्यचलमित्रधनादिकम् दयायुक्तःसुखीसौ-
म्यःस्वकार्येचतुरोमहान् ६१

## अथसप्तमेशद्वादशभावस्थितफलमाह.

सप्तमेशेतनौचास्तेपरजायासुलम्पटः दुष्टोविचक्षणो
धीरोवातरुक्स्थीयतेहृदि ६२ जायेशेचाष्टमेषष्ठे
सरोगीकामिनींलभेत् क्रोधयुक्तोभवेद्वापिनसुखंल-
भतेकचित् ६३ द्यूनेशेनवमेवित्तेनानास्त्रीभिःसमाग
मः आरंभीदीर्घसूत्रीचस्त्रीसुचिन्ताहिकेवलम् ६४
द्यूनेशेदशमेतुयेनास्यजायापतिव्रता धर्मात्मासत्य
संयुक्तःकेवलंदन्तरोगवान् ६५ द्यूनेशेसहजेलाभे
मृतपुत्रःप्रजायते कदाचिज्जीवतीकन्यायत्नात्सुत्रोपि

जायते ६६ द्वादशेसप्तमेशास्थदरिद्रःकृपणोमहान् चारकन्याभवेद्भार्यावस्त्राजीवीचनिर्धनी ६७ सर्वगुणयुतो मानीभवेत्सर्वधनाधिपः सदैवहर्षसंयुक्तःसप्तमेशेसुतेस्थिते ६८

## अथाष्टमेशद्वादशभावस्थितफलमाह.

द्यूतश्चोरोन्यथावादीगुरुनिन्दासुतत्परः अष्टमेशेष्टमस्थानेभार्यापररताभवेत् ६९ अष्टमेशेतपस्थानेमहापापीचनास्तिकः सुतहाह्यथवावंध्यापरभार्याधनेरुचिः ७० अष्टमेशेसुखेकर्मेपितृहनोवन्धुवर्जितः मातापित्रोर्भवेन्मृत्युःस्वल्पकालेनभीतियुक् ७१ अष्टमेशेसुतेलाभेतस्यवृद्धिर्नजायते द्रव्यंनस्थीयतेगेहेस्थिरबुद्धिर्भवेज्जनः ७२ अष्टमेशेव्ययेषष्ठेनित्यंरोगीप्रजायते जलसर्पादिकाद्घातोभवेत्तस्यचशैशवे ७३ अष्टमेशे तनौकामेभार्याद्वयंसमादिशेत् विष्णुद्रोहरतोनित्यंव्रणरोगीप्रजायते ७४ धनंतस्यभवेत्स्वल्पंगतंवित्तंनलभ्यते अष्टमेशेधनेबाहूबलहीनःप्रजायते ७५

## अथभाग्येशद्वादशभावस्थितफलमाह

धनधान्ययुतोनित्यंगुणसौंदर्यसंयुतः वहुभ्रातृसुखंयुक्तंभाग्येशेनवमेस्थिते ७६ भाग्येशेदशमेतुयमन्त्री सेनापतिर्भवेत् पुण्यवान्यशवान्वाग्मीसाहसीक्रोधवर्जितः ७७ भाग्येशेपंचमेलाभेभाग्यवान्जनवल्लभः गुरुभक्तिरतोमानीधीरोधीरगुणैर्युतः ७८ भाग्येशेतु-

तुलेरिःफे भाग्यहीनो भवेद्ध्रुवम् मातुलस्यसुखंनस्या ज्ज्येष्ठभ्रातासुखंतथा ७९ भाग्येशेचमदेकल्पेगुणवा न्यशवान्भवेत् कदाचिन्नभवेत्सिद्धंयत्कार्यंकर्तुमिच्छ ते ८० भाग्येशेसहजेवित्तेसदाभाग्यातुचिन्तकः धन वान्गुणवान्कामीपंडितोजनवल्लभः ८१

## अथ दशमेशद्वादशभावस्थितफलमाह॰

दशमेशेसुखेकर्मेज्ञानवान्सुखविक्रमी गुरुदेवार्चनर तोधर्मात्मासत्यसंयुतः ८२ दशमेशेसुतेलाभेधनवान् पुत्रवान्भवेत् सर्वदाहर्षसंयुक्तः सत्यवादीसुखीनरः ८३ कर्मेशेऽरिव्ययेयस्यशत्रुभिःपरिपीडितः चातुर्य गुणसम्पन्नः कचिच्चनसुखीनरः ८४ दशमाधिपतौल ग्नेकविताशुणसंयुतः बाल्येरोगीसुखीपश्चाद्धर्यवृद्धि र्दिनेदिने ८५ धनेमन्देचसहजेकर्मेशोयदिसंस्थितः मनस्वीगुणवान्वाग्मीसत्यधर्मसमन्वितः ८६

## अथ लाभेशद्वादशभावस्थितफलमाह

लाभेशेसंस्थितेलाभेसवाग्मीजायतेध्रुवम् पाण्डित्य कवितांचैववर्द्धतेचादिनेदिने ८७ प्राप्तिस्थानाधि पेरिःफेम्लेच्छसंसर्गकारकः कामिकोबहुकान्तश्च क्षणिकोलम्पटःसदा ८८ लाभेशेसंस्थितेलग्नेधन वान्सात्विकोमहान् समदृष्टिर्महान्वक्ताकौतुकीचभ वेत्सदा ८९ लाभेशेचधनेपुत्रेनानासुखसमन्वितः पुत्रवान्धार्मिकश्चैवसर्वसिद्धिप्रदायकः ९० लाभेशे

सहजेधृत्तेतीर्थेषुतत्परोमहान् कुशलःसर्वकार्येषुकेव-
लंशूलरोगवान् ९१ लाभेशेषष्ठभवनेनानारोगसम-
न्वितः सर्वसुखंभवेत्तस्यप्रवासीपरसेवकः ९२ ला-
भेशेसप्तमेरन्ध्रेभार्यातस्यनजीवति उदारोगुणवान्कर्मी
मूर्खोभवतिनिश्चितम् ९३ लाभेशेगगनेधर्मेराजपूज्यो
धनाधिपः चतुरःसत्यवादीचनिजधर्मसमान्वितः ९४

## अथ व्ययेशद्वादशभावस्थितफलमाह.

व्ययेशेरिव्ययेपापीमातृमृत्कविचिन्तकः क्रोधीसंता-
नदुःखीचपरजायासुलम्पटः ९५ व्ययेशेमदनेलग्ने
जायासौख्यंभवेन्नहि दुर्बलःकफरोगीचधनविद्यावि-
र्जितः ९६ व्ययेशेद्वितयेरन्ध्रेविष्णुभक्तिसमन्वितः
धार्मिकःप्रियवादीचसकलगुणसंयुतः ९७ भार्याद्वे-
षीप्रियद्वेषीगुरुद्वेषीभवेन्नरः व्ययेशेसहजेधर्मेस्वश-
रीरस्यपोषकः ९८ व्ययेशेदशमेलाभेपुत्रसौख्यंभ-
वेन्नहि मणिमाणिक्यमुक्ताभिधनंकिंचित्समाल-
भेत् ९९ एतत्तेकथितंविप्रभावानांचफलाफलम्
बलाबलविवेकेनसर्वेषांफलमादिशेत् १०० वक्रीचेत्
स्वचतुर्थःस्यात्फलंभौमोददातिच बुधस्तुर्यस्यदेवेज्य
पंचमेशशिभार्गवो १०१ सप्तमस्यतमध्वंसीपुत्रस्यनव
मस्यच वित्तस्यविपुवत्यर्केददातिस्वफलंविधुः १०२
ग्रहेपूर्णफलेप्राप्तेफलम्पूर्णंसमादिशेत् अर्द्धमर्द्धंपाद-
हीनेतन्मिदंपादमंघ्रिणा १०३ भावानांद्वादशानांचसर्वे
षांफलमादिशेत् भावस्थानांग्रहाणांचफलंतेकथितंम-

ग्र॰ १०४ ..इतिश्रीबृहत्पाराशरहोरापूर्वखण्डसारांशेभा-
वस्थग्रहाणांफलकथनंनामपंचदशोध्यायः १५

## अथ प्राणीनांपूर्वजन्मशापद्योतकम्.

### पार्वत्युवाच.

देवदेवजगन्नाथशूलपाणेवृषध्वज केनयोगेनमर्त्यानां
बालाख्यंशिशुनाशनम् १ तत्सर्वंयत्रयोगिनांब्रूहिमे-
शशिशेखर शापमोक्षंचकृपयामाणिनामल्पमेधसाम्
२

### शङ्करउवाच.

साधुपृष्टंत्वयादेविकथयामिसविस्तरात् शृणुष्वेकमना
भूत्वाबलाबलवशादपि ३ ज्ञेयंसुनिश्चितंसर्वंराशिच
क्रेविशेषतः मेषादिमीनपर्यन्तंमूर्त्यादिद्वादशक्रमात् ४
भावंचभावजंज्ञात्वाफलम्ब्रूयाद्विचक्षणः तनुर्धनंतबं
धुमातृपुत्रशत्रुस्मरस्मृतिः ५ पितृकर्मचलाभंचव्य-
यान्ताभावसंज्ञकाः गुरुलग्नेशदारेशपुत्रस्थानाधिपे
षुच ६ सर्वेषुबलहीनेषुवक्तव्यात्वनपत्यता रव्या-
र राहुशनयःपुत्रस्थाबलसंयुताः ७ कारकाद्यासीणब-
लात्त्वनपत्यत्वमादिशेत् पुत्रस्थानगतेराहौकुजेनापि
निरीक्षिते ८ कुजक्षेत्रगतेवापिसर्पशापात्सुतक्षयः
पुत्रेशेराहुसंयुक्तेपुत्रस्थेभानुनन्दने
सर्पशापात्सुतक्षयः ९ कारकेराहु

जिते विलग्नेशे भौमयुते सर्पशापात्सुतक्षयः १० कारके भौमसंयुक्ते लग्ने च राहुसंयुते पुत्रस्थानेश्वरे दुःस्थे सर्पशापात्सुतक्षयः ११ भौमांशे भौमसंयुक्ते पुत्रेशे सोमनन्दने राहुमांदियुते लग्ने सर्पशापात्सुतक्षयः १२ पुत्रस्थाने कुजक्षेत्रे पुत्रे राहुसमन्विते सौम्यदृष्टेयुते वापि सर्पशापात्सुतक्षयः १३ पुत्रस्था भानुमन्दाराः स्वर्भानुः शशिजोंगिराः निर्बलो पुत्रलग्नेशौ सर्पशापात्सुतक्षयः १४ लग्नेशे राहुसंयुक्ते पुत्रेशे भौमसंयुते कारके राहुसंदृष्टे सर्पशापात्सुतक्षयः १५ तद्दोषपरिहारार्थं नागपूजां समारभेत् १६ स्वगृह्योक्तविधानेन प्रतिष्ठां कारयेत्सुधीः नागमूर्तिं सुवर्णेन कृत्वा पूजां समाचरेत् १७ गोभूतिलहिरण्यादि दद्याद्वित्तानुसारतः एवं कृते तु नागेन्द्रप्रसादाद्वर्धते कुलम् १८ पुत्रस्थानं गते भानौ नीचे मन्दांशकस्थिते पार्श्वयोः क्रूरसम्बन्धे पितृशापात्सुतक्षयः १९ पुत्रस्थानाधिपे भानौ त्रिकोणे पापसंयुते क्रूरान्तरे पापदृष्टे पितृशापात्सुतक्षयः २० भानुराशिस्थिते जीवे पुत्रेशे भानुसंयुते पुत्रे लग्ने पापयुते पितृशापात्सुतक्षयः २१ लग्नेशे दुर्बले पुत्रे पुत्रेशे भानुसंस्थिते पुत्रे लग्ने पापयुते पितृशापात्सुतक्षयः २२ पितृस्थानाधिपे पुत्रे पुत्रेशे वा तथा स्थिते लग्ने पुत्रे पापयुते पितृशापात्सुतक्षयः २३ पितुःस्थानाधिपो भौमो पुत्रेशेन समन्वितो लग्ने पुत्रे पितृस्थाने पापात्संततिनाशनम् २४ पितृस्थानाधिपे दुःस्थे कारके पापराशिगे पुत्रे लग्ने स्वरे पापे पितृशापात्सुतक्षयः २५ लग्नपंचमभावस्था भानुभौमशनि-

श्वराः रन्ध्रेशे रिःफे राहुजीवौ पितृशापात्सुतक्षयः २६
लग्नादष्टमे भानौ पुत्रस्थे भानुनन्दने पुत्रेशे राहुसंयुक्ते ल
ग्ने पापे सुतक्षयः २७ व्ययेशे लग्नभावस्थे रन्ध्रेशे पुत्र
राशिगे पितृस्थानाधिपे रन्ध्रे पितृशापात्सुतक्षयः २८
रोगेशे पुत्रभावस्थे पितृस्थानाधिपे तथा कारके राहुसंयु
क्ते पितृशापात्सुतक्षयः २९ तद्दोषपरिहारार्थं गया
श्राद्धं च कारयेत् ब्राह्मणान्भोजयेदत्र अयुतं वा सहस्र
कम् ३० कन्यादानं ततः कृत्वा गां च दद्यात्सवत्सकाम्
एवं कृते पितुः शापान्मुच्यते नात्र संशयः ३१ वर्द्धते
च कुलं तस्य पुत्रपौत्रादिभिस्तदा दृष्टियोगपदैः सर्वफलं
ब्रूयाद्विचक्षणः ३२ पुत्रस्थानाधिपे चन्द्रे नीचे वा पापम
ध्यगे हिबुके पंचमे पापे मातृशापात्सुतक्षयः ३३
लाभे मन्दसमायोगे मातृस्थाने शुभेतरे नीचे पंचमगे च
न्द्रे मातृशापात्सुतक्षयः ३४ पुत्रस्थानाधिपे दुःस्थे ल
ग्नेशे नीचराशिगे चन्द्रे पापसमायोगे मातृशापात्सुतक्षयः
३५ पुत्रस्थानाधिपे दुःस्थे चन्द्रे पापांशसंयुते लग्ने पु
त्रे पापयुते मातृशापात्सुतक्षयः ३६ पुत्रस्थानाधिपे

मन्दोमातृशापात्सुतक्षयः ४१ नाशस्थानाधिपेपुत्रेपु-
त्रेसोनाशराशिगे चन्द्रमातृपतौदुःखेमातृशापात्सुत-
क्षयः ४२ चन्द्रक्षेत्रेयदालग्नेकुजराहुसमन्विते च-
न्द्रमन्दौपुत्रसंस्थौमातृशापात्सुतक्षयः ४३ लग्नेपु-
त्रेरन्ध्रपरिःफेत्वारराहुरविःशनिः मातृलग्नाधिपौदुः-
स्थौमातृशापात्सुतक्षयः ४४ नाशस्थानगतेजीवेकु-
जराहुसमन्विते पुत्रस्थानेमन्दचन्द्रौमातृशापात्सुतक्ष
यः ४५ ग्रहयोगपदैःसर्वंफलम्ब्रूयाद्विचक्षणः शु-
भेसौख्यंविनिर्दिष्टंमिश्रेमिश्रंमकीर्तितम् ४६ सेतुस्ना
नंप्रकुर्वीतगायत्रीलक्षसंज्ञकं ग्रहदानंचकर्तव्यंरौप्य
पात्रेपयस्थितिः ४७ ब्राह्मणान्भोजयेत्तद्दद्यात्स्व-
स्यमदक्षिणाम् कर्तव्यंभक्तियुक्तेनाष्टविंशात्सहस्रकं
४८ एवंकृतेयदादेविशापान्मोक्षोभविष्यति तत्पुत्रं
लभतेपश्चाद्वृद्धिःस्यात्तस्यसंततेः ४९ अतःपरंप्र-
वक्ष्यामिभ्रातादौशापकारणम् पापयोगेनभ्रातेनका-
रकेणबलाबले ५० भ्रातृस्थानाधिपेपुत्रेकुजराहुस-
मन्विते पुत्रलग्नेश्वरौरन्ध्रेभ्रातृशापात्सुतक्षयः ५१
लग्नेसुतेकुजेमन्देभ्रातृपेभाग्यराशिगे कारकेनाशरा-
शिस्थेभ्रातृशापात्सुतक्षयः ५२ भ्रातृस्थानेगुरौनीचे
मन्दःपंचमगोयदि नाशस्थेनातुपुण्यारात्भ्रातृशापा-
त्सुतक्षयः ५३ मूर्तिस्थानाधिपेरिःफेभौमःपंचमगो
यदि पुत्रेशेरन्ध्रभावस्थेभ्रातृशापात्सुतक्षयः ५४
पापमध्यगतेलग्नेसुतभेपापमध्यगे नाथौचकारकौदुः
स्थेभ्रातृशापात्सुतक्षयः ५५ कर्मेशेभ्रातृभावस्थे

पापयुक्तेसतेस्मुखे पुत्रेचकुजसंयुक्ते भ्रातृशापात्सुत- क्षयः ५६ पुत्रस्थानेबुधक्षेत्रेशनिराहुसमन्विते रिः फेविदारौशापत्वाद्भ्रातृशापात्सुतक्षयः ५७ लग्नेशे भ्रातृराशिस्थेभ्रातृस्थानाधिपेसुते लग्नभ्रातृसुतेपापे भ्रातृशापात्सुतक्षयः ५८ भ्रात्रीशेनाशराशिस्थेपुत्र- स्थेकारकेतथा राहुमांदियुतेदृष्टेभ्रातृशापात्सुतक्षयः ५९ नाशस्थानाधिपेपुत्रेभ्रातृनाथेनसंयुते रन्ध्रेभ्रा- रार्किसंयुक्तेभ्रातृशापात्सुतक्षयः ६० भ्रातृशापविमो- क्षार्थंश्रवणंविष्णुकीर्तनम् चान्द्रायणंचरेत्पश्चात्कावे- र्यांविष्णुसन्निधौ ६१ अश्वत्थस्थापनंकार्यंदशधेनूःप्र- दापयेत् प्राजापत्यंचरेत्तत्रभूमिंदद्यात्फलान्विताम् ६२ एवंयःकुरुतेभक्त्यापुत्रवृद्धिःप्रजायते ६३ पुत्रस्थाने बुधेजीवकुजराहुःसमन्विते लग्नेमन्दसमायोगेमातुला- त्सुतनाशनम् ६४ लग्नपुत्रेश्वरौपुत्रेबुधभौमसमन्वि- ते मन्देमातुलशापत्वात्पुत्रसन्ततिनाशनम् ६५ लु- सेपुत्राधिपेलग्नेसप्तमेभानुनन्दने लग्नेशेबुधसंयुक्तेत- स्यसंततिनाशनम् ६६ ज्ञातिस्थानाधिपेलग्नेव्ययेशे- नसमन्विते शशिसौम्यकुजेपुत्रेतस्यसंततिनाशनम् ६७ पुत्रलग्नाधिपोयुक्तावन्योन्यंवाथवीक्षितौ पुत्रे परस्परस्थौवापुत्रयोगाइमेस्मृताः ६८ तद्दोषपरिहारा- र्थंविष्णुस्थापनमुच्यते वापीकूपतडागादिबन्धनंसेतु- दर्शनम् ६९ पुत्रवृद्धिर्भवेत्तस्यसम्पद्वृद्धिःप्रजायते इदं योगग्रहेष्वेवफलंब्रूयाद्विचक्षणः ७० गुरुक्षेत्रेयदाराहुः पुत्रेजीवारभानुजाः धर्मस्थानाधिपेनाशे ब्रह्मशापात्सुत

क्षयः ७१ विद्यागर्वेणयोमर्त्योब्राह्मणानवमन्यते त
द्दोषंब्रह्मशापत्वात्संततेस्तस्यनाशनम् ७२ धर्मेशेपुत्र-
भावस्थेपुत्रेशेनाशराशिगे जीवाररहुमृत्युस्थेब्रह्मशापा-
त्सुतक्षयः ७३ धर्माधिपेनीचगतेव्ययेशेपुत्रराशिगे
राहुयुक्तेक्षितेवापिब्रह्मशापात्सुतक्षयः ७४ जीवेनीच-
गतेराहुर्लग्नेवापुत्रराशिगे पुत्रस्थानाधिपेदुःखेब्रह्मशापा
त्सुतक्षयः ७५ पुत्रस्थानाधिपेजीवेरन्ध्रेपापसमन्विते
पुत्रेशार्कचंद्रोवाब्रह्मशापात्सुतक्षयः ७६ मंदांशेमंदसंयु
क्तेजीवेभौमसमन्विते पुत्रेशेव्ययराशिस्थेब्रह्मशापात्सु
तक्षयः ७७ लग्नेगुरुयुतेमन्देभाग्येराहुसमन्विते व्यये
गुरुसमायोगेब्रह्मशापात्सुतक्षयः ७८ तस्यदोषस्य
शान्त्यर्थंकुर्याच्चान्द्रायणंनरः ब्रह्मकूर्चत्रयंकृत्वाधेनुंद-
द्यात्सदक्षिणाम् ७९ पंचरत्नानिदद्यानिसुवर्णेनस-
मन्वितम् अन्नदानंततःकुर्यादयुतंवासहस्त्रकम् ८०
एवंकृतेतुसत्पुत्रंलभतेनात्रसंशयः मुक्तशापोविशुद्धात्मा
सपुमान्सुखमेधते ८१ दारेशेपुत्रभावस्थेदारेशस्यां
शपेशनौ पुत्रेशेनाशराशिस्थेपत्निशापात्सुतक्षयः ८२
कलत्रेशेनाशसंस्थेरिःफेशेपुत्रराशिगे ८३ कारकेपाप
संयुक्तेपत्नीशापात्सुतक्षयः पुत्रस्थानगतेशुक्रेकामपेर-
न्ध्रमाश्रिते कारकेपापसंयुक्तेपत्नीशापात्सुतक्षयः ८४
कुटुम्बेपापसबन्धेकामेशेनाशराशिगे पुत्रेपापग्रहैर्युक्तेप
त्नीशापात्सुतक्षयः ८५ भाग्यस्थानगतेशुक्रेदारेशेना
शराशिगे लग्नेपापेसुतेपापेपत्नीशापात्सुतक्षयः ८६
भाग्यस्थानाधिपेशुक्रेपुत्रेशेरन्ध्रराशिगे गुरुलग्नेशदारेशा-

दुस्थासंततिनाशनम् ८७ पुत्रस्थानेभृगुक्षेत्रेराहुचन्द्रस
मन्विते व्ययेलग्नेधनेपापेस्त्रीशापात्सुतनाशनम् ८८
सप्तमेमन्दशुक्रौचरन्ध्रेज्येपुत्रगेरवौ लग्नेराहुसमायोगे
पत्नीशापान्सुतक्षयः ८९ धनेकुजेव्ययेजीवेपुत्रस्थेभृ-
गुनन्दगे राहुयुक्तेक्षितेवापिपत्नीशापात्सुतक्षयः ९०
नाशस्थोवित्तदारेशौपुत्रेलग्नेकुजेशनौ कारकेपापसंयुक्ते
पत्नीपापात्सुतक्षयः ९१ लग्नपंचमभाग्यस्थाराहुमन्द
कुजाःक्रमात् रन्ध्रस्थौपुत्रदारेशौपत्नीशापात्सुतक्षयः
९२ तस्यदोषस्यशांत्यर्थंकन्यादानंदिशंचरेत् लक्ष्मीनारा-
यणंदेवंसर्वाभरणभूषितम् ९३ मूर्तिदानंचकर्तव्यंदश
धेनूःप्रदापयेत् शय्यांचभूषणंचैवदम्पत्योर्दापयेत्सुधीः
९४ पुत्रंप्रसूयतेतस्यभाग्यवृद्धिश्चजायते मन्त्रशाप
मिदंमर्त्यःपिशाचंबाध्यतेसदा ९५ कर्मलोपंपितृभ्य-
श्चतच्छापाद्वंशनाशनम् सुतस्थितोमंदसूर्यौक्षीणचन्द्र-
स्तुसप्तमे ९६ लग्नेव्ययेराहुजीवौप्रेतशापात्सुतक्षयः
पुत्रस्थानाधिपेमन्देनाशस्थेलग्नगेकुजे कारकेनाशरा-
शिस्थेप्रेतशापात्सुतक्षयः ९७ लग्नेपापेव्ययेभानौ
सुतेचारार्किसोमजाः पुत्रेशोरन्ध्रभावस्थप्रेतशापात्सु
तक्षयः ९८ लग्नेपापाव्ययेभानौसुतेचारार्किसोमजाः
पुत्रेशोरन्ध्रभावस्थेप्रेतशापात्सुतक्षयः ९९ लग्नेराहुस-
मायोगेपुत्रस्थेभानुनन्दने कारकेनाशराशिस्थेप्रेतशापा-
त्सुतक्षयः १०० लग्नेराहुश्चशुक्रेज्येचन्द्रेमंदसुतेतथा
लग्नेशेमृत्युराशिस्थेप्रेतशापात्सुतक्षयः १०१ लग्नेराहु
समायोगेपुत्रस्थेभानुनन्दने कुजदृष्टेयुतेचापिप्रेतशापात्

सुतक्षयः १०२ कारकेनीचराशिस्थेपुत्रस्थानाधिपेस्थि-
रे नीचदृष्टेनीचयुतेप्रेतशापात्सुतक्षयः १०३ लग्ने
मन्देसुतेराहौरन्ध्रेभानुसमन्विते व्ययेभौमसमायोगेप्रेत
शापात्सुतक्षयः १०४ कामस्थानाधिपेदुःस्थेपुत्रेचन्द्र
समन्विते मन्दमान्दियुतेलग्नेप्रेतशापात्सुतक्षयः १०५
बाधस्थानाधिपेपुत्रेशनिशुक्रसमन्विते कारकेनाशरा-
शिस्थेप्रेतशापात्सुतक्षयः १०६ तद्दोषस्यप्रशांत्यर्थंविष्णु
श्राद्धंचकारयेत् रुद्रस्नानंप्रकुर्वीतब्रह्ममूर्तिंप्रदापयेत् १०७
धेनूरजतपात्रंचनीलंचैवप्रदापयेत् एतत्कर्मकृतेतत्रशाप
मोक्षःप्रजायते १०८ पुत्रप्राप्तिर्भवेत्तस्यविप्रेभ्योदक्षि-
णांदिशेत् पुत्रेराहुरविसौम्याःकारकेशुभसंयुते शु-
भेनवीक्षितेवापिबहुपुत्रंसमादिशेत् १०९ पुत्रेशेशुभ-
राशिस्थेशुभदृष्टिसमन्विते कारकेकेन्द्रभावस्थेबहुपुत्रं
समादिशेत् ११० लग्नेशेपुत्रराशिस्थेपुत्रेशेलग्नमाश्रिते
केन्द्रत्रिकोणगेजीवेबहुपुत्रंसमादिशेत् १११ पुत्रस्थानग-
तेराहौमन्दांशकविवर्जिते बहुपुत्रंनरंविंद्याच्छुभग्रहनि-
रीक्षिते ११२ पुत्रस्थानाधिपेस्वोच्चेलग्नेशेशुभसंयुते का-
रकेशुभसंयुक्तेबहुपुत्रंसमादिशेत् ११३ पुत्रस्थानेतदीशो
वागुरोवाशुभवीक्षिते शुभेनसहितेवापिबहुपुत्रंसमादि-
शेत् ११४ परिपूर्णबलेजीवेलग्नेशेपुत्रराशिगे पुत्रेशे
बलसंयुक्तेबहुपुत्रंसमादिशेत् ११५ पुत्रस्थानगतेजी-
वेपरिपूर्णबलान्विते लग्नेशेबलसंयुक्तेपुत्रयोगाइमेस्मृ
ताः ११६ वर्गोत्तमांशगेजीवेलग्नेशस्यांशपेशुभे पुत्रे-
शेन्युतेदृष्टेपुत्रयोगाइमेस्मृताः ११७ वित्तेशेपुत्रभावस्थे

परिपूर्णबलान्विते वैशेषिकांशकेजीवेपुत्रयोगाइमेस्मृताः
११८ लग्नात्पुत्राधिपेस्वोच्चेअन्योन्यत्वादिवीक्षिते परस्प
रस्थानगतेपुत्रयोगाइमेस्मृताः ११९ पुत्रस्थानाधिपस्थां
शराशीशेशुभसंयुते शुभेनवीक्षितेवापिपुत्रयोगाइमेस्मृ
ताः १२० लग्नपुत्राधिपोकेन्द्रेशुभग्रहसमन्विते कुटु
म्बेशेबलाढ्येतुपुत्रयोगाइमेस्मृताः १२१ लग्नेशेदार
भावस्थेदारेशेलग्नमाश्रिते द्वितीयेशेविलग्नस्थेपुत्रयोगा
इमेस्मृताः १२२ दारेशेग्रहसंयुक्तेनवांशभवनाधिपे
पुत्रवित्तविलग्नेशेपुत्रयोगाइमेस्मृताः १२३ इतिबहुपुत्र
योगः पुत्रवित्तकलत्रेशाः संयुक्तानवभागपाः पापां
शकाःपापयुताअनपत्यत्वमादिशेत् १२४ गुरुर्लग्नेश
दारेशापुत्रस्थानाधिपेषुवा सर्वेषुबलहीनेषुवक्तव्यत्वनप
त्यता १२५ व्ययेशसंयुतांशेशेमृत्युराशौस्थितयदि
पुत्रेशेक्रूरषष्ट्यंशेअनपत्यत्वमादिशेत् १२६ लग्नपुत्रे
श्वरोदुःस्थेकारकेनीचराशिगे अनपत्यग्रहेपुत्रेअन
पत्यत्वमादिशेत् १२७ क्रूरषष्ट्यंशकेजीवेपुत्रस्थेनाश
राशिगे पुत्रेशेनाशराशिस्थेअनपत्यत्वमादिशेत् १२८
लग्नाधिपेकुजेस्वोच्चेरन्ध्रेमन्दयुतेरवौ शुभदृष्टिसमायोगं
चिरात्पुत्रमुपैतिसः १२९ लग्नेमन्देगुरौरन्ध्रेव्ययेभौमसम
न्विते शुभदृष्टेस्वतुंगेवाचिरात्पुत्रमुपैतिसः १३० पुत्र
स्थामन्दजीवज्ञालग्नपुत्राधिपेशुभौ पुत्रेशेशुभराशिस्थे
चिरात्पुत्रमुपैतिसः १३१ लग्नेमन्देगुरौरन्ध्रेव्ययेभौमस
न्विते शुभदृष्टेस्वतुंगेवाचिरात्पुत्रमुपैतिसः १३२ सुतं
राह्वर्केशुक्रेज्याशुभर्क्षेशुभवीक्षित पुत्रेवोशुभराशिस्थे

चिरात्पुत्रमुपैतिसः १३३ लग्नेसौम्येधनेपापेतृतीयेपाप-
खेचरे पुत्रेशेशुभराशिस्थेचिरात्पुत्रमुपैतिसः १३४ इ-
तिपुत्रयोगाः पुत्रस्थानेकुजेमन्देबुधक्षेत्रेविलग्नपे बुधदृ-
ष्टेयुतेवापितदादत्तासुतादयः १३५ पुत्रस्थानेबुधक्षेत्रेमंद
क्षेत्रेथवाभवेत् मन्दमांदियुतेदृष्टेतदादत्तासुतादयः १३६
पुत्रस्थानेबुधक्षेत्रेबुधसंस्थेक्षितेपिवा लग्नाधिपेशनौवापि
दत्तपुत्राभवंतिहि १३७ पुत्रेशेमन्दसंयुक्तेकुजेसौम्य
निरीक्षिते लग्नाधिपेबुधांशेवादत्तपुत्राभवंतिहि १३८
कामेशेलाभभावस्थेपुत्रेशेशुभसंयुते पुत्रेमन्देबुधेवापिद-
त्तपुत्राभवन्तिहि १३९ पुत्रेशेभाग्यभावस्थेभाग्येशे
कर्मराशिगे पुत्रेमन्दजदृष्टेतुदत्तपुत्रेणसन्ततिः १४०
लग्नाधिपेभृगोर्नीचेपुत्रेमन्दसमन्विते कारकबलसंयु-
क्ते दत्तपुत्रात्तुसन्ततिः १४१ पुत्रस्थानाधिपेचन्द्रे लग्ने
पुत्रेशनेश्वरे परिपूर्णबलेजीवेदत्तपुत्रात्सुतंभवेत् १४२
पुत्राधिपेरवौलग्नेपुत्रस्थौशनिसोमजौ पुत्राधिपेबलयुते
दत्तपुत्रात्सुतावहः १४३ लग्नाधिपेबुधेपुत्रेकुजदृष्टिस
मन्विते कारकेलाभराशिस्थेदत्तपुत्रात्सुतावहः १४४
लग्नाधिपेगुरौपुत्रेशनिदृष्टिसमन्विते पुत्रेशेभौमराशिस्थे
दत्तपुत्राभवंतिहि १४५ हरिवंशोरविणाशशीत्रिपुरहाभौमेत्व
रुद्रीक्रियासौम्येसम्पुटकांस्यपात्रविधिवज्जीवेचपेत्र्याति-
थिः शुक्रेगोप्रतिपालनंचकथितंमन्देचमृत्युंजयःकन्या
दानभुजंगकेतुकपिलासंतानसौख्यप्रदा १४६ यावत्सं-
ख्याभवेद्राशिस्तावद्दारंविनिर्दिशेत् शिवविष्णुस्थापनाद्वा
स्त्रत्पंयोगात्सुखंभवेत् १४७ इ० वृ० पू० सा० संता० भा० फलाध्या०
१६

# अथ त्रिकोणशोधनमाह.

राशिचक्रंयथामार्गेनिक्षिप्याष्टग्रहस्यच त्रिकोणशोध
नंकुर्यादादौसर्वेषुराशिषु १

## उदारणार्थं इमानि चक्राणि.

| अथ रवेरष्टकवर्गः ४८ | | | | | | | | चन्द्राष्टकवर्गः ४९ | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| सू | च | म | बु | गु | शु | श | ल | सू | च | म | बु | गु | शु | श | ल |
| १ | ३ | १ | ३ | ५ | ६ | १ | ३ | ३ | १ | २ | १ | १ | ३ | ३ | ३ |
| २ | ६ | २ | ५ | ६ | ७ | २ | ४ | ६ | ३ | ३ | ३ | २ | ४ | ५ | ६ |
| ४ | १० | ४ | ६ | ९ | १२ | ४ | ६ | ७ | ६ | ५ | ४ | ४ | ५ | ६ | १० |
| ७ | ११ | ७ | ९ | ११ | ० | ७ | १० | ८ | ७ | ६ | ५ | ७ | ७ | ११ | ११ |
| ८ | ० | ८ | १० | ० | ० | ८ | ११ | १० | ९ | १० | ७ | ८ | ९ | ० | ० |
| ९ | ० | ९ | ११ | ० | ० | ९ | १२ | ११ | १० | ११ | ८ | १० | १० | ० | ० |
| १० | ० | १० | १२ | ० | ० | १० | ० | ० | ११ | ० | १० | ११ | ११ | ० | ० |
| ११ | ० | ११ | ० | ० | ० | ११ | ० | ० | ० | ० | ११ | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |

| भौमाष्टकवर्गः ३९ | | | | | | | | बुधाष्टकवर्ग. ५४ | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| र | च | म | बु | गु | शु | श | ल | र | च | मं | बु | गु | शु | श | ल |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | १ | १ | ० | १ | १ | ० |
| ३ | ३ | १ | ३ | ६ | ६ | १ | १ | ५ | २ | २ | ३ | ६ | २ | २ | १ |
| ६ | ६ | २ | ५ | १० | ८ | ४ | ३ | ६ | ४ | ४ | ५ | ८ | ३ | ४ | २ |
| १० | ११ | ४ | ६ | ११ | ११ | ७ | ६ | ९ | ६ | ७ | ६ | ११ | ४ | ७ | ४ |
| ११ | ० | ७ | ११ | १२ | १२ | ८ | १० | ११ | ८ | [illegible] | ९ | १२ | ५ | ८ | ६ |
| ० | ० | ८ | ० | ० | ० | ९ | ११ | १२ | १० | ९ | १० | ० | ८ | ९ | ८ |
| ० | ० | १० | ० | ० | ० | १० | ० | ० | ११ | १० | ११ | ० | ९ | १० | १० |
| ० | ० | ११ | ० | ० | ० | ११ | ० | ० | ० | ११ | १२ | ० | ११ | ११ | ११ |

गुरोरष्टकवर्गः ५६

| र | च | मं | बु | गु | शु | श | ल |
|---|---|---|---|---|---|---|---|
| १ | २ | १ | १ | १ | २ | ३ | १ |
| २ | ५ | २ | २ | २ | ५ | ५ | २ |
| ३ | ७ | ४ | ४ | ३ | ६ | ६ | ४ |
| ४ | ९ | ७ | ५ | ४ | ९ | १२ | ५ |
| ७ | ११ | ८ | ६ | ७ | १० | ० | ६ |
| ८ | ० | १० | ९ | ८ | ११ | ० | ७ |
| ९ | ० | ११ | १० | १० | ० | ० | ८ |
| १० | ० | ० | ११ | ११ | ० | ० | १० |
| ११ | ० | ० | ० | ० | ० | ० | ११ |
| ० | ० | ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० |

शुक्राऽष्टकवर्ग. ५२

| र | च | मं | बु | गु | शु | श | ल |
|---|---|---|---|---|---|---|---|
| ८ | १ | ३ | ३ | ५ | १ | ३ | १ |
| ११ | २ | ४ | ५ | ८ | २ | ४ | २ |
| १२ | ३ | ६ | ६ | ९ | ३ | ५ | ३ |
| ० | ४ | ९ | ९ | १० | ४ | ८ | ४ |
| ० | ५ | ११ | ११ | ११ | ५ | ९ | ५ |
| ० | ८ | १२ | ० | ० | ८ | १० | ८ |
| ० | ९ | ० | ० | ० | ९ | ११ | ९ |
| ० | ११ | ० | ० | ० | १० | ० | ११ |
| ० | १२ | ० | ० | ० | ११ | ० | ० |

शनेरष्टकवर्गः ३९

| र | च | म | बु | गु | शु | श | ल |
|---|---|---|---|---|---|---|---|
| १ | ३ | ३ | ६ | ५ | ६ | ३ | १ |
| २ | ६ | ५ | ८ | ६ | ११ | ५ | ३ |
| ४ | ११ | ६ | ९ | ११ | १२ | ६ | ४ |
| ७ | ० | १० | १० | १२ | ० | ११ | ६ |
| ८ | ० | ११ | ११ | ० | ० | ० | १० |
| १० | ० | १२ | १२ | ० | ० | ० | ११ |
| ११ | ० | ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० |

लग्नाष्टकवर्गः ४९

| र | च | म | बु | गु | शु | श | ल |
|---|---|---|---|---|---|---|---|
| ३ | ३ | १ | १ | १ | १ | १ | ३ |
| ४ | ६ | ३ | २ | २ | २ | ३ | ६ |
| ६ | १० | ६ | ४ | ४ | ३ | ४ | १० |
| १० | ११ | १० | ६ | ५ | ४ | ६ | ११ |
| ११ | १२ | ११ | ८ | ६ | ५ | १० | ० |
| १२ | ० | ० | १० | ७ | ८ | ११ | ० |
| ० | ० | ० | ११ | ९ | ९ | ० | ० |
| ० | ० | ० | ० | १० |  | ० | ० |
| ० | ० | ० | ० | ११ |  | ० | ० |

## अथ सूर्यरेखाचक्रम्

| कु | मी | मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | रा. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| र. बु. | शु. मं | ल. | | | | | | | | चं | श. बु. | |
| । | । | ० | । | ० | ० | । | । | । | । | । | ० | रविः |
| । | ० | ० | । | ० | ० | ० | । | । | ० | ० | ० | चंद्र. |
| ० | । | । | ० | । | ० | ० | । | । | । | । | । | मंगळः |
| ० | । | ० | । | । | ० | ० | । | । | । | । | ० | बुधः |
| ० | ० | ० | ० | । | । | ० | ० | । | ० | । | ० | गुरुः |
| । | ० | ० | ० | ० | ० | । | । | ० | ० | ० | ० | शुक्रः |
| । | ० | । | ० | ० | । | । | । | ० | । | ० | । | शनिः |
| । | । | ० | ० | । | । | ० | । | । | ० | ० | । | ल. |
| ५ | ४ | २ | ३ | ४ | ३ | ३ | ७ | ६ | ४ | ४ | ३ | यो. रे. |
| ३ | ४ | ६ | ५ | ४ | ५ | ५ | १ | २ | ४ | ४ | ५ | यो. बिं |

## अथ सूर्यत्रिकोणैकाधिपत्यशोधनम्

| र. बु. | शु. मं | ल | | | | | | | | चं | श. बु | ग्रहाः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| कुं | मी | मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | राशयः |
| ५ | ४ | २ | ३ | ४ | ३ | ३ | ७ | ६ | ४ | ४ | ३ | रेखा |
| १ | १ | ० | ० | ० | ० | १ | ४ | २ | १ | २ | ० | त्रि. शो. |
| १ | १ | ० | ० | ० | ० | १ | ० | ० | ० | २ | १ | ए. शो. |

ग्रहपिण्डः ४० राशिपिण्डः ५१ उभययोगपिण्डः ९१

## अथ चन्द्ररेखाचक्रम्

| ध. | म. | कुं | मी | मे | वृ | मि | क | सिं | क | तु | वृ | राशयः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| चं. | श. बु. | र. गु. | शु. मं | ल | | | | | | | | ग्रहाः |
| । | ० | ० | ० | । | ० | ० | । | । | । | ० | । | रविः |
| । | ० | । | ० | ० | । | । | ० | । | । | । | ० | चंद्रः |
| । | । | ० | ० | । | । | ० | । | । | ० | ० | ० | मंगलः |
| ० | । | ० | । | । | । | ० | । | । | ० | । | । | बुधः |
| । | ० | । | । | ० | । | ० | ० | । | । | ० | । | गुरुः |
| । | । | ० | ० | । | । | । | ० | । | ० | । | | शुक्रः |
| ० | ० | ० | । | ० | । | । | ० | ० | ० | ० | । | शनिः |
| ० | । | । | ० | ० | ० | । | ० | ० | । | ० | ० | ल |
| ५ | ४ | ३ | ३ | ३ | ६ | ४ | ४ | ५ | ५ | २ | ५ | रेखाः |
| ३ | ४ | ५ | ५ | ५ | २ | ४ | ४ | ३ | ३ | ६ | ३ | बिंदवः |

## अथ चन्द्रत्रिकोणैकाधिपत्यशोधनम्

| चं | श. बु | सू. गु | शु. मं | लग्न | | | | | | | | ग्रहाः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| धं | म | कुं | मी | मे | वृ | मि | क | सिं | क | तु | वृ | राशयः |
| ५ | ४ | ३ | ३ | ३ | ६ | ४ | ४ | ५ | ५ | २ | ५ | रेखाः |
| २ | ० | १ | ० | ० | २ | २ | १ | २ | १ | ० | २ | त्रिको. शो. |
| २ | ० | १ | ० | ० | ० | १ | १ | २ | १ | ० | ० | एका. शो. |

ग्रहपिण्डः २५ राशिपिण्डः ६६ उ. योगः ९१.

## अथ भौमरेखाचक्रम्·

| राशयः | मी | मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कु |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ग्रहाः | मंशु | ल | | | | | | | | चं | शबु | रवृ |
| रवि. | • | \| | • | • | \| | • | • | • | \| | \| | • | • |
| चन्द्रः | • | • | \| | • | • | • | • | \| | • | • | • | \| |
| मंगळः | \| | \| | • | \| | • | • | \| | \| | • | \| | \| | • |
| बुध. | \| | • | \| | \| | • | • | • | • | \| | • | • | • |
| गुरु· | • | • | • | • | \| | • | • | • | \| | \| | \| | • |
| शुक्र· | • | • | • | • | • | \| | • | \| | • | • | \| | \| |
| शनि· | • | \| | • | • | \| | \| | \| | \| | \| | • | \| | • |
| लग्न | • | \| | • | \| | • | • | \| | • | • | • | \| | \| |
| रेखाः | २ | ४ | २ | ३ | ३ | २ | ३ | ४ | ४ | ३ | ५ | ३ |
| बिन्दव. | ६ | ४ | ६ | ५ | ५ | ६ | ५ | ४ | ४ | ५ | ३ | ५ |

## अथ भौमत्रिकोणैकाधिपत्य शोधनम्

| ग्रहाः | मशु· | ल | | | | | | | | चं | शबु | सूबु |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| राशयः | मी | मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कु |
| रेखा· | २ | ४ | २ | ३ | ३ | २ | ३ | ४ | ४ | ३ | ५ | ३ |
| त्रिको शो· | • | २ | • | • | १ | • | १ | १ | २ | १ | ३ | • |
| एका शो· | • | • | • | • | १ | • | • | • | • | १ | ३ | • |

ग्रहपिण्ड ३१ राशिपिण्ड २८ यो· पिं ५९·

## अथ बुधरेखाचक्रम्·

| राशयः | म· | कु | मी | मे· | वृ | मि | क· | सिं | क | तु | वृ | ध. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ग्रहाः | बुश | रश | मंशु | ल | | | | | | | | चन्द्र |
| रवि | \| | • | • | • | • | \| | \| | • | • | \| | • | \| |
| चन्द्र | \| | • | \| | • | \| | • | \| | • | \| | \| | • | • |
| मंगळः | \| | • | \| | \| | • | \| | • | • | \| | \| | \| | \| |
| बुध | \| | • | \| | • | \| | \| | • | • | \| | \| | \| | \| |
| गुरु· | \| | • | • | • | • | • | \| | • | \| | • | • | \| |
| शुक्रः | \| | • | \| | \| | \| | \| | \| | • | • | \| | \| | • |
| शनिः | \| | \| | • | \| | • | • | \| | \| | \| | \| | \| | • |
| लग्न | \| | \| | • | \| | \| | • | \| | • | \| | • | \| | • |
| रेखाः | ८ | २ | ४ | ४ | ४ | ४ | ६ | १ | ६ | १ | ५ | ४ |
| बिन्दव | • | ६ | ४ | ४ | ४ | • | २ | ७ | २ | २ | ३ | ४ |

## अथ बुधत्रिकोणैकाधिपत्यशोधनम्·

| ग्रहाः | बु·श | र·श | मं मी | ल· | | | | | | | | चन्द्र· |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| राशयः | म | कु | मी | मे | वृ | मि | क | सिं | क | तु | वृ | ध· |
| रेखा | ८ | २ | ४ | ४ | ४ | ४ | ६ | १ | ६ | ३ | ५ | ४ |
| त्रि शो | ४ | • | • | ३ | • | २ | २ | • | २ | ४ | १ | ३ |
| एका शो | ४ | • | • | २ | • | • | २ | • | • | • | १ | ३ |

ग्रहपिण्डः५७, राशिपिंड ७० यो· १३२ ·

## अथ गुरोः रेखाचक्रम्

| कुं | मी | मे | वृ | मि | क | सिं | कं | तु | वृ | ध | म | राशयः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| गु र | मं शु | ल | | | | | | | | च | श बु | ग्रहाः |
| । | । | । | । | ० | ० | । | । | । | । | । | ० | रवि |
| ० | ० | । | ० | । | ० | । | ० | । | ० | ० | । | चन्द्र |
| ० | । | । | ० | । | ० | ० | । | । | ० | । | । | भौम |
| । | ० | । | । | । | ० | ० | । | । | । | ० | । | बुध |
| । | । | । | । | ० | ० | । | । | ० | । | । | ० | गुरु |
| ० | ० | । | ० | ० | । | । | ० | ० | । | । | । | शुक्र |
| ० | । | ० | । | । | ० | ० | ० | ० | ० | । | ० | शनि |
| । | ० | । | । | ० | । | । | । | । | ० | । | । | लग्न |
| ४ | ४ | ७ | ५ | ४ | २ | ५ | ५ | ५ | ४ | ६ | ५ | रेखा |
| ४ | ४ | १ | ३ | ४ | ६ | ३ | ३ | ३ | ४ | २ | ३ | बिन्दव |

## अथ गुरुत्रिकोणैकाधिपत्यशोधनमाह

| गु र | शु मं | ल | | | | | | | | च | श बु | ग्रहाः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| कु | मी | मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | राशयः |
| ४ | ४ | ७ | ५ | ४ | २ | ५ | ५ | ५ | ४ | ६ | ५ | रेखा |
| ० | २ | ३ | ० | ० | ० | ० | ० | १ | २ | १ | ० | त्रि० |
| ० | २ | १ | ० | ० | ० | ० | ० | ० | २ | १ | ० | ए० शोध० |

ग्रहपिण्डः २० राशिपिण्ड २१ उ यो पि० ४१

## अथ भृगुरेखाचक्रमिदम्

| मी | मे | वृ | मि | क | सिं | कं | तु | वृ | ध | म | कुं | राशयः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| शु मं | ल | | | | | | | | च | श बु | र गु | ग्रहाः |
| ० | ० | ० | ० | ० | ० | । | ० | ० | । | । | ० | रवि |
| । | । | ० | ० | । | । | ० | । | । | । | । | । | चन्द्र |
| ० | ० | । | । | ० | । | ० | ० | । | ० | । | । | मंगल |
| । | ० | । | । | ० | ० | । | ० | । | ० | ० | ० | बुध |
| ० | ० | ० | । | ० | ० | । | । | । | । | ० | ० | गुरु |
| । | । | । | । | । | ० | ० | । | । | । | । | ० | शुक्र |
| । | । | । | ० | ० | । | । | । | । | ० | ० | ० | शनिः |
| ० | । | । | । | । | । | ० | ० | । | । | ० | । | लग्न |
| ४ | ४ | ५ | ५ | ३ | ४ | ४ | ४ | ७ | ५ | ४ | ३ | रेखा |
| ४ | ४ | ३ | ३ | ५ | ४ | ४ | ४ | १ | ३ | ४ | ५ | बिन्दव |

## भृगुत्रिकोणैकाधिपत्यशोधनम्

| शु मं | ल | | | | | | | | च | श बु | गु र | ग्रहाः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| मी | मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कु | राशयः |
| ४ | ४ | ५ | ५ | ३ | ४ | ४ | ४ | ७ | ५ | ४ | ३ | रेखा |
| १ | ० | १ | २ | ० | ० | ० | १ | ४ | १ | ० | ० | त्रि० |
| १ | ० | ० | ० | ० | ० | ० | ० | ० | १ | ० | ० | ए० |

ग्रहपिण्ड ३५ राशिपिण्ड ५६ योगपिण्ड ९१.

## अथ शनिरेखा चक्रम्

| मकरः | कुम्भ | मीन. | मेषः | वृषभ. | मिथुनः | कर्कः | सिंहः | कन्या | तुल | वृश्चिक | धन. | राशयः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| श बु | र गु | शु म | लग्न | | | | | | | | चन्द्र | ग्रहाः |
| ० | १ | १ | ० | १ | ० | ० | १ | १ | ० | १ | १ | रविः |
| ० | १ | ० | ० | १ | ० | ० | ० | ० | १ | ० | ० | चन्द्रमाः |
| १ | १ | ० | ० | १ | ० | १ | १ | ० | ० | ० | १ | भौमः |
| ० | ० | ० | ० | ० | १ | ० | १ | १ | १ | १ | १ | बुधः |
| १ | ० | ० | ० | ० | १ | १ | ० | ० | ० | ० | १ | बृहस्पति |
| १ | १ | ० | ० | ० | ० | ० | १ | ० | ० | ० | ० | शुक्रः |
| ० | ० | १ | ० | १ | १ | ० | ० | ० | ० | १ | ० | शनिः |
| १ | १ | ० | १ | ० | १ | १ | ० | १ | ० | ० | ० | लग्नम् |
| ४ | ५ | २ | १ | ४ | ४ | ३ | ४ | ३ | २ | ३ | ४ | रेखाः |
| ४ | ३ | ६ | ७ | ४ | ४ | ५ | ४ | ५ | ६ | ५ | ४ | विन्दवः |

## अथ शनेः त्रिकोणैकाधिपत्यशोधनम्

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| श बु | सू बृ | शु मं | लग्न | | | | | | | | चं | ग्रहाः |
| म | कु | मी | म | वृ | मि | क | सिं | क | तु | वृ | ध | राशयः |
| ४ | ५ | २ | १ | ४ | ४ | ३ | ४ | ३ | २ | ३ | ४ | रेखा |
| १ | ३ | ० | ० | १ | २ | १ | ३ | ० | ० | १ | ·३ | त्रि० शो० |
| १ | ३ | ० | ० | ० | ० | १ | ३ | ० | ० | ० | ३ | ए० शो० |

ग्रहपि० ७० राशिपिण्डः९९ उ० यो० पि० १६९

## अथ लग्नरेखा चक्रम्.

| मे. | वृ. | मि | क | सिं | क | तु | वृ | ध | म | कु | मी | राशयः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ल | | | | | | | | चं | श बु | र गु | शु मं | ग्रहाः |
| १ | १ | ० | १ | ० | ० | ० | १ | १ | १ | ० | ० | रविः |
| ० | १ | ० | ० | ० | १ | १ | १ | ० | ० | १ | ० | इन्दुः |
| ० | १ | ० | ० | १ | ० | ० | ० | १ | १ | —० | १ | भौमः |
| ० | १ | १ | १ | १ | ० | १ | १ | १ | ० | —१ | १ | बुधः |
| १ | १ | १ | १ | ० | ० | १ | १ | ० | ० | —० | १ | गुरुः |
| १ | १ | १ | १ | ० | ० | १ | १ | ० | ० | —० | १ | शुक्रः |
| १ | ० | १ | ० | ० | ० | १ | १ | ० | १ | ० | १ | शनिः |
| ० | ० | १ | ० | ० | १ | ० | ० | ० | १ | १ | ० | लग्न |
| ४ | ५ | ५ | ३ | ३ | २ | ५ | ६ | ३ | ५ | ४ | ४ | रेखाः |
| ४ | ३ | ३ | ५ | ५ | ६ | ३ | २ | ५ | ३ | ४ | ४ | बिं० |

## लग्नत्रिकोणैकाधिपत्यशोधनमाह

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ल | | | | | | | | च | श बु | सू गु | शु मं | ग्रहाः |
| मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कु | मी | राशयः |
| ४ | ५ | ५ | ३ | ३ | २ | ५ | ६ | ३ | ५ | ४ | ४ | रेखा |
| १ | ३ | १ | ० | ० | ० | १ | ३ | ० | ३ | ० | १ | त्रि० शो० |
| १ | २ | ० | ० | ० | ० | १ | २ | ० | ३ | ० | १ | ए० शो० |

ग्रहपिण्ड.४५ रा० पिण्ड ७७ उ० योगपिण्ड.१२२.

त्रिकोणंतुकथंप्रोक्तंमेषसिंहादयःक्रमात् वृषकन्यामृगाख्येषुतुलाकुंभयुग्मेषुच २ कर्कवृश्चिकमीनास्तेत्रिकोणाः स्युःपरस्परम् त्रिकोणेषुचयन्न्यूनंतत्तुल्यंत्रिषुशोधयेत् ३ एकस्मिन्भवनेशून्यंतत्त्रिकोणनशोधयेत् समत्वेसर्वगेहेषुसर्वंसंशोध्यबुद्धिमान् ४ इति श्रीबृहत्पाराशरहोरापूर्वखण्डसारांशेत्रिकोणशोधनंनाम सप्तदशोऽध्यायः १७

## अथ त्रिकोणशोधनोदाहरणमाह.

॥जन्माङ्ग चक्रमिदम्॥

१२ शु मं
२ के
३
१
११ बृ सू
४
१० श बु
५
७
चं ९
६
रा ८

त्रिकोणत्रयस्थानेषु यन्न्यूनं फलं तत्स्थानत्रयेषु शोध्यम् तद्यथा सूर्याष्टकवर्गे मेषाधो रेखाफलम् २ सिंहाधः फलम् ३ धनाधः फलम् ४ एतदूनम्फलं त्रिषु शोधितेजातम् धनाधः २ मेषाधः ० सिंहाधः १ तथा वृषाधः ३ कन्याधः ७ मकराधः ३ इदं त्रिषुशोधिते मकराध ० वृषाधः ० कन्याधः ४ तथा कुम्भाधः ५ मिथुनाधः ४ तुलाधः ६ एवं त्रिषु शोधिते तुलाधः २ मिथुनाधः ० कुम्भाधः १ तथा मीनाधः ४ कर्काधः ३ वृश्चिकाधः ४ इदं त्रिषु शोधिते कर्काध ० वृश्चिकाधः १ मीनाधः १ इत्येकप्रकारः त्रिषु त्रित्रिकोणेषु एकस्थाने शून्यं भवति तदा त्रिकोणशोधनं तत्र नकार्यम् त्रिषु स्थानेषु यथा स्थितरेखा फलंस्थाप्यम् अत्रतु कल्पितोदाहरणम् वृषाधोरेखाफलम् ३ कन्याधः ५ मकराधः ० अतएव यथास्थि

तम्फलं स्थापितं तत् त्रिकोणशोधनाभावः एवं सर्वत्रज्ञेयम् इति द्वितीयप्रकारः - त्रिषु त्रिकोणेषु रेखाफलं समान भवति तदा स्था नत्रयेषु सर्वं शोधयेदित्यर्थात् त्रिषुशून्यमेव स्थाप्यम् तद्यथा गुरोरष्टकवर्गे वृषाधो रेखाफलं ५ कन्याधः ५ मकराधः ५ अत्र फलसाम्यत्वात् त्रिषु स्थानेषु शून्यं स्थापितं एवं सर्वत्र ज्ञेयम् इति तृतीयप्रकारः इति बृहत्पाराशरहोरापूर्वखण्डसारांशे त्रिकोणशोधनाध्यायः १७

## अथैकाधिपत्यशोधनमाह

एवंत्रिकोणंसंशोध्यपश्चादेकाधिपत्यता क्षेत्रद्वयफलानिस्युस्तदासंशोधयेद्बुधः १ क्षीणेनसहचान्यस्मिञ्छोधयेद्ग्रहवर्जिते- ग्रहयुक्तेफलेहीनेग्रहाभावेफलाधिके २ अनेनसहचान्यस्मिन्शोधयेद्ग्रहवर्जिते फलाधिकेग्रहैर्युक्तेचान्यस्मिन्सर्वमुत्सृजेत् ३ उभयोर्ग्रहसंयुक्तेनसंशोध्यःकदाचन उभयोर्ग्रहहीनाभ्यांसमत्वेसकलंत्यजेत् ४ सग्रहाग्रहतुल्यत्वात्सर्वसंशोध्यमग्रहात् कुलीरसिंहयोराश्योः पृथक्क्षेत्रंपृथक्फलम् ५ इतिश्रीबृहत्पाराशरहोरापूर्वखण्डसारांशे एकाधिपत्यशोधनंनामाष्टादशोऽध्यायः १८

## अथैकाधिपत्यशोधनोदाहरणमाह

भौमादीनांक्षेत्रद्वयमस्ति तत्रविचारः क्षेत्रद्वये एकंग्रहयुक्तं फलंहीनंभवति द्वितीयं ग्रहहीनंफलाधिकं भवति तदा ऊनं

# अथ ग्रहराशिपिण्डानयनोदाहरणम्

एकाधिपत्यशोधितसिद्धांकेषु तत्तद्ग्रहाश्रितराश्यधःस्थितमङ्कानां तत्तद्ग्रहगुणकैर्गुणयित्वा गुणिताङ्कानां योगे ग्रहपिण्डो भवति पुनः राशिगुणकगुणितराश्याङ्का राशिपिण्डो भवति तद्यथा कुंभस्थौ रविगुरो कुम्भाधस्थाङ्क १ रविगुणकाः ५ गुरोगुणांकाः १० गुणयेत् गुणिताङ्काः५।१० मीनाश्रितौ शुक्रभौमो तस्यराश्यधस्थाङ्क १ शुक्रगुणकाः ७ भौमगुणकाः ८ गुणयेन गुणिताङ्काः ७।८ धनराशि सहितश्चन्द्रस्तस्य राश्यधस्थाङ्कः २ चन्द्रगुणकाः ५ गुणिताङ्काः १० मकराश्रितौ शनिबुधौ तस्यराश्यधस्थाङ्कः० गुणितानां योगे ग्रहपिंडः ४० पुनः राशिपिण्डः कुंभाधः १ कुम्भगुणकाः ११ गुणिताङ्काः ११ मीनाधस्थाङ्कः १ मीनगुणकाः १२ गुणिताङ्काः १२ सिंहाधः १ सिंह गुणकाः १० गुणिताङ्काः १० धनाधः २ धनगुणकाः ९ गुणितांकाः १८ गुणितानांयोगे राशिपिण्डः ५१ उभयोर्योगे योगपिण्डः ९१ एवं सूर्याष्टकवर्गपिण्डं अनयारीत्या सर्वत्रज्ञेयम् इतिश्रीबृहोरापूर्वखंडसारांशे पिण्डोत्पत्तिकथनंनाम एकोनविंशोध्यायः १९

---

# अथाष्टकवर्गफलमाह

आत्मप्रभावशक्तिश्चपितृचिन्तारवेःफलम् मनोबुद्धिप्रसादंचमातृचिन्तामृगांकतः १ भ्रातृसत्त्वंगुणंभूमिंभौमेनतुधिचिन्तयेत् २ वाणिज्यकर्मवृत्तिश्चबुधेनतुविचिन्तयेत् गुरुणादेहपुष्टिंचबुद्धिपुत्रार्थसम्पदः ३ भृगोर्विवाहकर्माणिभोगस्थानंचवाहनम् वेश्यास्त्रीजन

गात्राणिशुक्रेणैवनिरीक्षयेत् ४ आयुष्यंजीवनोपायंदुः
खशोकमहद्भयम् सर्वक्षयंचमरणंमन्देनैवनिरीक्षये
त् ५ रविःपिताशशीमाताभ्राताभौमोबुधःसुहृत् मा
तुलेयःस्मृतोजीवोज्ञानपुण्येस्त्रियःसितः एषामृक्षेच
तत्कालेमरणंकुरुतेशनिः ६ तत्तत्कारकभावकर्ण
गुणितंशोध्यावशिष्टम्फलंविंशत्यासहसप्तभिश्चविहृतंत
त्क्षेषताराशनौ तातस्याज्जननीसहोदरजवोबन्धुःसु
तःस्त्रीस्वयंतत्तुल्यंविलयंप्रयान्तिविपुलंश्रीनाथहेतुश्चवा
७ आदित्याष्टकवर्गंचनिक्षिप्याकाशचारिषु अर्कस्थि
तस्यनवमोराशिःपितृगृहंस्मृतम् ८ तद्राशिफलसं
ख्याभिर्वर्द्धयेद्योगपिण्डकम् सप्तविंशोद्धृतंशेषंन-
क्षत्रंयातिभानुजम् ९ तस्मिन्कालेतस्यतस्यभाव-
स्यार्त्तिविनिर्दिशेत् तस्मिन्कालेपितृक्लेशोभवतीतिन
संशयः १० तत्त्रिकोणगतेवापिपितापितृसमोपिवा
मरणंतस्यजानीयाद्दशाछिद्रेषुकल्पयेत् ११ अर्कात्तु
तुर्यगेराहौमन्देवाभूमिनन्दने गुरुशुक्रेक्षणाऽकृतेपितृहा
जायतेनरः १२ लग्नाच्चन्द्राद्गुरुस्थानेयातेसूर्यसुतेयदि
पित्रोर्नाशंतदाकालेवीक्षितेपापसंयुते १३ दशानुकूल
कालेनयोजयेत्कालवित्तमः लग्नात्सुखेशराशीशदशा
यांचपितृक्षयः १४ सुखनाथदशायांतुबहुमासेश्वसंशयः
पितृजन्माष्टमेजातस्तदीशेलग्नगेपिवा १५ तेनैवपितृ
कार्याणिकारयेन्नात्रसंशयः सुखेशोलाभलग्नस्थेचन्द्रल
ग्नाद्विशेषतः १६ पितृगृहसमायुक्तेजातःपितृवशानु
गः तेनैवपितृकार्याणांकर्मशेषंसमापयेत् १७ पितृ

## अथ ग्रहराशिपिण्डानयनोदाहरणम्.

एकाधिपत्यशोधितसिद्धांकेषु तत्तद्ग्रहाश्रितराश्यधःस्थितमङ्कानां तत्तद्ग्रहगुणकैर्गुणयित्वा गुणिताङ्कानां योगे ग्रहपिण्डो भवति पुनः राशिगुणकगुणितराश्याङ्का राशिपिण्डो भवति तद्यथा कुंभस्थौ रविगुरौ कुम्भाधस्थाङ्क १ रविगुणकाः ५ गुरौ गुणांकाः १० गुणयेत् गुणिताङ्काः५।१० मीनाश्रितौ शुक्रभौमौ तस्यराश्यधस्थाङ्क १ शुक्रगुणकाः ७ भौमगुणकाः ८ गुणयेन गुणिताङ्काः ७।८ धनराशिसहितश्चन्द्रस्तस्यराश्यधस्थाङ्कः २ चन्द्रगुणकाः ५ गुणिताङ्काः १० मकराश्रितौशनिबुधौ तस्यराश्यधस्थाङ्कः० गुणितानां योगे ग्रहपिंडः ४० पुनः राशिपिण्डः कुंभाधः १ कुम्भगुणकाः ११ गुणिताङ्काः ११ मीनाधस्थाङ्कः १ मीनगुणकाः १२ गुणिताङ्काः १२ सिंहाधः १ सिंहगुणकाः १० गुणिताङ्काः १० धनाधः २ धनगुणकाः ९ गुणिताङ्काः १८ गुणितानांयोगे राशिपिण्डः ५१ उभयोर्योगे योगपिण्डः ९१ एवं सूर्याष्टकवर्गेपिण्डं अनयारीत्या सर्वत्रज्ञेयम् इतिश्रीबृहोरापूर्वखंडसारांशे पिण्डोत्पत्तिकथनंनाम एकोनविंशोध्यायः १९

---

## अथाष्टकवर्गफलमाह

आत्मप्रभावशक्तिश्चपितृचिन्तारवेः फलम् मनोबुद्धिप्रसादंचमातृचिन्तामृगांकतः १ भ्रातृसत्वंगुणंभूमिंभौमेनतुविचिन्तयेत् २ वाणिज्यकर्मवृत्तिश्चबुधेनतुविचिन्तयेत् गुरुणादेहपुष्टिंचबुद्धिपुत्रार्थसम्पदः ३ भूगोर्विवाहकर्माणिभोगस्थानंचवाहनम् वेश्यास्त्रीजन

गात्राणिशुक्रेणैवनिरीक्षयेत् ४ आयुष्यंजीवनोपायंदुः
खशोकमहद्भयम् सर्वक्षयंचमरणंमन्देनैवनिरीक्षये
त् ५ रविःपिताशशीमाताभ्राताभौमोबुधःसुहृत् मा
तुलेयःस्मृतोजीवोज्ञानपुण्येस्त्रियःसितः एषामृक्षेच
तत्कालेमरणंकुरुतेशनिः ६ तत्तत्कारकभावकर्ण
गुणितंशोध्यावशिष्टम्फलंविंशत्यासहसप्तभिश्चविहृतंत
च्छेषताराशनौ तातस्याज्जननीसहोदरजयोबन्धुःसु
तःस्त्रीस्वयंतत्तुल्यंविलयंप्रयान्तिविपुलंश्रीनाथहेतुश्चवा
७ आदित्याष्टकवर्गंचनिक्षिप्याकाशचारिषु अर्कस्थि
तस्यनवमोराशिःपितृगृहंस्मृतम् ८ तद्राशिफलसं
ख्याभिर्वर्द्धयेद्योगपिण्डकम् सप्तविंशोद्धृतंशेषंन-
क्षत्रंयातिभानुजम् ९ तस्मिन्कालेतस्यतस्यभाव-
स्यार्तिंविनिर्दिशेत् तस्मिन्कालेपितृक्लेशोभवतीतिन
संशयः १० तत्त्रिकोणगतेवापिपितापितृसमोपिवा
मरणंतस्यजानीयाद्दशाछिद्रेषुकल्पयेत् ११ अर्कात्तु
तुर्यगेराहौमन्देवाभूमिनन्दने गुरुशक्रेक्षणंऋतेपितृहा
जायतेनरः १२ लग्नाच्चन्द्राद्गुरुस्थानेयातेसूर्यसुतेयदि
पित्रोर्नाशंतदाकालेवीक्षितेपापसंयुते १३ दशानुकूल
कालेनयोजयेत्कालवित्तमः लग्नात्सुरेशराशीशदशा
यांचपितृक्षयः १४ सुखनाथदशायांतुबहुमातेश्चसंशयः
पितृजन्माष्टमेजातस्तदीशेलग्नगेपिवा १५ तेनैवपितृ
कार्याणिकारयेन्नात्रसंशयः सुरेशेलाभलग्नस्थेचन्द्रल
ग्नाद्विशेषतः १६ पितृगृहसमायुक्तेजातःपितृवशानु
गः तेनैवपितृकार्याणांकर्मशेषंसमापयेत् १७ पितृ

जन्मतृतीयर्क्षेजातःपितृधनाश्रितः पितृकर्मगृहेजातःपि
तृतुल्यगुणान्वितः १८ तदीशेलग्नसंस्थेपिपितृश्रेष्ठोभवे
त्सुतः सूर्याष्टवर्गेयच्छून्यंमासंसंवत्सरंमति १९ वि
वाहव्यवहारादिमासेऽस्मिन्वर्जयेत्सदा कलहोमासदुःखा
निशून्यमासेभवन्तिच २० एवमादिफलंज्ञात्वामासम्मति
समाचरेत् संशोध्यपिण्डसूर्यस्यरन्ध्रमानेनवर्द्धयेत् २१
द्वादशादिहृताच्छेषंमेषादिगणयेत्पुनः तस्मिन्मासेमृ
तिंविंद्यात्तत्त्रिकोणगतेपिवा २२ सूर्यादिकल्पयेत्त्वन्य
परतोभास्करेमृतिः विशेषंभावसूत्रेश्रपितुर्दायादिकादि
शेत् २३

शून्यराशिगतेविधौ २४ तन्नक्षत्रंपरित्यज्यंशुभकर्माणिकारयेत् चन्द्राष्टमेशानिक्षेत्रत्रितयेषुविशेषतः २५ आयामव्याधिदुःखानिलभतेनात्रसंशयः चन्द्रात्सुख फलात्पिण्डंवर्द्धयेच्छोध्यपूर्ववत् २६ शेषमृक्षेशनौ यातेमातृहानिंविनिर्दिशेत् तत्त्रिकोणेषुवाकेचिद्दशा छिद्रेषुकल्पयेत् २७ चन्द्राल्लग्नात्सुखस्थानेभौमेवा भास्करात्मजे दृश्यतेवातयोःस्थानम्पूर्वोक्तेकालसङ्गते २८ तदभावेस्वयंमृत्युर्दशान्तरगतेपिवा चन्द्रात्सुखेष्टमेराशौस्त्रिकोणेदिवसाधिपे २९ मात्रावियोगमस्तीतिनिर्दिशेल्लग्नतःपितुः पितृवामातृचिन्तायांभास्करादीन्प्रकल्पयेत् ३०

## अस्योदाहरणम्

चन्द्रो धनराशावस्ति अष्टमो सिंहराशिस्तस्येशः सूर्यः अयंधनिष्ठानक्षत्रेस्ति अतः धनिष्ठा ज्येष्ठा रेवती एतेषु नक्षत्रेषु आयामो व्याधिदुःखादिलभेत् तस्मादेतेषु नक्षत्रतृतीयेषु शोभनं नकुर्यात् तथा चन्द्रात् सुखस्थानं मीन १२ अत्रस्थफलम् ३ चन्द्रस्य शुद्धयोगपिण्डः ९१ फलेनगुणिताङ्काः २७३ सप्तविंशति २७ भक्तेर्लब्धं १० व्यर्थंशेषं ३ कृत्तिकानक्षत्रं तत्त्रिकोणे कृत्तिका उत्तराफाल्गुनि उत्तराषाढानक्षत्रगतेशनौमातृकष्टम् अथवायोगपिण्डः ९१ रश्मिमानेन २गुणितांकाः १८२ द्वादशभक्तेलब्धम् १५ व्यर्थ शेषं२ वृषभकन्यामकरराशिगतेशनौ मातृकष्टम् मात्राभावे तत्समानस्यकष्टम् ३०

## अथ भौमफलम्.

भौमाष्टवर्गेसंचिंत्यभ्रातृविक्रमधैर्य्यकम् भौमास्थितस्यस हजोराशिभ्रातृगृहंस्मृतम् ३१ त्रिकोणेशोधनंकृत्वायत्रभू यांसितत्रच भूमिर्भवतिभार्यावाग्रहगेहोथवायदि ३२ भौमोवलविहीनश्चेद्दीर्घायुर्भ्रातरोभवेत् फलानियत्र क्षीयंतेतत्रभूमितरास्मृताः ३३ तद्राशिफलसंख्येभ्य वर्द्धयेच्छोध्यपूर्ववत् शेषमृक्षंशनौयातेभ्रातृहानिर्विनिर्दि शेत् ३४

## अस्योदाहरणम्.

भौमः मीनराशिस्थः अस्मात्तृतीयराशिः वृषभः तस्यफलं २ भौमस्ययोगपिण्डः ५९ फलेनगुणितांकाः ११८ सप्तविंशति २७ भक्तेलब्धम् ४ अर्थशेषं १० मघा तत्त्रिकोणमघामूल अश्वि नीनक्षत्रगते शनौ भ्रातृकष्टं अथवा भौमयोगपिण्डः ५९ रन्ध्र मानेन३ वर्द्धितः १७७ द्वादश१२ भक्तेलब्धम् १४ व्यर्थशेषं ९ धनराशिः तत्त्रिकोणे धनमेषसिंहराशिगते शनौ भ्रातृकष्टम् ३४

## अथ बुधफलम्.

बुधात्तुर्यंकुटुम्बंचधनपुत्रादिमातुलः तत्पंचमेमन्त्रविद्या लिपिबुद्ध्यादिचिन्तयेत् ३५ बुधाष्टवर्गसंशोध्यशेषमृ क्षगतेशनौ बन्धुमित्रविनाशादीन्लभतेनात्रसंशयः ३६

## अस्योदाहरणम्

बुधो मकरेस्ति अस्माच्चतुर्थः मेषः १ तत्रस्थम्फलम् ४ बुधस्य

योगपिण्डः १३२ फलेनगुणितांकाः ५२८ सप्तविंशति २७ भक्ते लब्धम् १९ व्यर्थशेषम् १५ स्वातिशतभिषाआर्द्रानक्षत्रगते शनौ बन्धुमित्रादिकष्टम् अथवायोगपिण्डः १३२ रन्ध्रमानेन ५ गुणि- [illegible]ः ६६० द्वादशभक्तेर्लब्धं ५५ व्यर्थशेषम् ० मीनकर्कवृश्चिक [illegible]गतेशनौ बंधुमित्रादिकष्टम् एवं पंचमस्थानाद्बन्ध्वादिविचा रणीयम् ३६

## अथ गुरुफलम्

जीवात्पंचमतोज्ञानम्पुत्रधर्मधनादिकम् गुरुरष्टकव गेषुसन्तानमपिकल्पयेत् ३७ गुरुस्थितसुतस्थानेया- वंतोधिष्ठतेफलम् शत्रुनीचग्रहंत्यक्त्वातावन्तश्चसुता स्मृताः ३८ संख्यानवांशतुल्यावातदीशस्याथवापुनः सुतभेशनवांशैश्वसमानावाधिकल्पयेत् ३९ गुरोरष्टक वर्गेषुशोध्यशेषफलानिच क्रूराश्रितफलंत्यक्त्वाशेषास्त स्यात्मजाःस्मृताः ४० व्ययार्थसुतसंस्थैश्चपापैः स्यात् क्षीणसन्ततिः गुरोरष्टकवर्गेषुसुतराशिस्थितंसमम् ३३ अल्पात्मजःसविज्ञेयोगुरौपंचमगेपिवा तदीशयोगदृष्टेवा तदापुत्रान्समादिशेत् ४१ एतैर्बहुप्रकारैश्चकल्पयेत्का- लवित्तमः बहुलक्षणसंयोगेतदातस्मिन्समादिशेत् ४२ वंशस्यादियोगाश्चपुरस्ताद्दृश्यतेमया पूर्वोक्तलक्षणे- नात्रवंशभर्तुः समादिशेत् ४३

## अस्योदाहरणम्

गुरुःकुंभराशिस्थः अस्मात्पंचमोराशिः मीनोस्तितस्यफलं

४ गुरोर्योगपिण्डः ९१ फलेनगुणितांकाः ३६४ सप्तविंशति २७ भक्तेलब्धम् १३ व्यर्थशेषं ११ पूर्वाफाल्गुनि पूर्वाषाढा भरणिनक्षत्र गतेशनौ सन्तानकष्टं अथवा योगपिण्डः ९१ रन्ध्रमानेन ५ गुणितांकाः ४५५ द्वादश १२ भक्ते लब्धम् ३७ व्यर्थ शेषम् ११ कुंभमिथुनतुला राशिगतेशनौ सन्तानकष्टम् ४३

## अथ शुक्रफलम्

भृगोरष्टकवर्गेचनिक्षिप्याकाशचारिषु येषुयेषुफलानि स्युर्भूयांसिकिलतत्रतु ४४ भूमिंकलत्रंविन्तंचतद्देशेनि दिशेन्नृणाम् शुक्राज्जामित्रतोलब्धिर्दारेशान्वितादिग्भवा ४५ दाराधिपस्थितंक्षेत्रंदाराजन्मर्क्षकंविदुः तस्योच्चनीचराशौवाकेचिदिच्छन्तितद्विदः ४६ तस्या शकत्रिकोणेवाभार्यायाजन्मसंभवेत् लग्नेन्द्वोर्भाग्यभं जन्मलग्नंतत्परिकीर्तितम् ४७ तयोःसमागमक्षेत्रं कल्पयेत्तत्रबुद्धिमान् स्वक्षेत्रस्थोच्चगोवापिस्वमित्रर्क्ष गतोपिवा ४८ स्वमित्रांशगतोवापिवक्तव्यंदारलक्षणम् शुक्रजामित्रतोलब्धिस्त्रिकोणाद्देशादिकस्त्रियः ४९ प्रोक्तराशिर्यदादाराजन्मर्क्षेसंततिस्तदा अनुक्त राशिजन्मर्क्षमास्तिचेन्नास्तिसंततिः ५० भृगुर्दारेशशुक्त र्क्षेफलसंख्यास्त्रियोविदुः क्षेत्रस्त्रीग्रहणेसाम्यंनृपस्य द्विगुणंतथा ५१ मन्दांशेमन्दसंयुक्तेमन्दक्षेत्रेथवाभृगौ नीचांशेपापसंयुक्तेनीचस्त्रीभोगमिच्छति ५२ मेदिनीतनयभागनिवासीमेदिनीजवसदालययुक्तः मंगलेक्षणयुतःसितस्तदाऽत्यन्तसुन्दरपराङ्गनारतः ५३

भौमांशकगतेशुक्रे भौमक्षेत्रगतेपिवा भौमेनयुतदृष्टेश्च
परस्त्रीभोगमिच्छति ५४ दारागारेमन्दभांशेकुजांशेम
न्दाराभ्यांवीक्षितेयस्यपुंसः स्यात्तद्दाराजारिणीचंचला
वावेश्यादासीस्वामिसन्तोषनिघ्नी ५५ जामित्रेमन्द
भौमांशेतदीशेमन्दभौमगे वेश्यावाजारिणीवापितस्य
भार्यानसंशयः ५६ पापारूढांशगेचन्द्रेजामित्रेव्ययगेपि
वा पापग्रहान्वितेशुक्रेस्त्रीहेतोःशुचमावहेत् ५७
शुक्रांशकसमानास्त्रीवर्णरूपगुणान्विता भवेच्छशांक
तुल्यावादारेशस्यगुणान्विता ५८ सपापभागगेविधो
व्ययंगनालयेपिचेत् सपापभार्गवेंगनानिमित्ततःशुचा
प्रदम् ५९ सितांशकप्रमाणिकास्त्रियोभवन्ति सद्गु
णाः भवेश्वरांशसंमिताः स्वनाथतुल्यसद्गुणाः ६०
शुक्रान्मन्देत्रिकोणस्थेनष्टंजीवेऽसुखप्रदम् तेषाम्बला
बलत्वेनभार्यायालक्षणंवदेत् ६१ एवमादिफलंज्ञात्वा
निर्दिशेच्छुक्रवर्गतः ६२

## अस्योदाहरणम्

भृगोर्योगपिण्डः ४१ शुक्रात्सप्तमः कन्या तस्य फलेन ५
गुणितांकाः १६५ सप्तविंशति २७ भक्ते लब्धम् ६ व्ययशेषं ३ भ-
राणि पूर्वाफाल्गुनिपूर्वाषाढानक्षत्रगतेशनौ जायाकष्टम् अथवा
योगपिण्डः ४१ स्त्रभमानेन ४ गुणितांकाः १६४ द्वादश १२ भक्ते
लब्धम् १३ व्ययशेषम् ८ वृश्चिकमीनकर्कराशिगतेशनौ जाया
कष्टम् ६२

## अथ शनिफलम्

शनैश्चरास्थितस्थानादष्टमंमृतिरुच्यते शनेरष्टकवर्गेच
स्वस्यायुष्यंविनिर्दिशेत् ६३ लग्नात्प्रभृतिमन्दान्तम्फ
लान्येकत्रकारयेत् लग्नादिफलतुल्याब्देव्याधिवैरंसमा
दिशेत् ६४ मन्दादिलग्नपर्यंतंफलान्येकत्रसंयुतम् म-
न्दादिफलतुल्याब्देव्याधितस्यसमादिशेत् ६५ तयो-
र्योगसमाब्देतुमृत्युयोगः प्रचक्षते शोध्यादिगुणनंकृत्वा
पिण्डंसंस्थाप्ययत्नतः ६६ अष्टमस्थफलेर्हत्वासप्तविं
शतिभाजितम् शतादूर्ध्वंतुतत्पिण्डंशतमेवत्यजेत्ततः
६७ आयुःपिण्डंतुजानीयात्प्राग्वद्वेलांतुकल्पयेत्
त्रिकोणैकाधिपत्यंसंशोधनंविरच्यच ६८ पिण्डसं-
स्थाप्यगुणयेल्लग्नादष्टमगैःफलैः सप्तविंशतिहृच्छेषंमृ
त्युकालंवदेद्बुधः ६९ समूलाष्टकवर्गेचयत्रनास्तिफलं
गृहे तत्रनास्तिफलंतत्रयदायातिशनैश्चरः ७० त
द्ग्रहेरविचन्द्रौचेद्दशाछिद्रंमृतिंवदेत् दशाछिद्रसमायो
गेमृत्युरेवनसंशयः ७१ मन्दाष्टवर्गराशीनांहीनराशौ
क्षयोभवेत् तद्गृहेभास्करेमन्देतस्मिन्कालेमृतिंवदेत्
७२ मन्दाष्टवर्गादथरिष्टयोगेदुष्टानिवर्षाणिविचारयन्ति
पूर्वोक्तसंशोधनतोहिशुद्धंपिण्डंसुधीमान्विलिखेत्पृथक्
स्थम् ७३ लग्नात्तुमन्दान्तमथोफलानामैक्यंशनेर्लग्न
मुपांत्यमेव तद्योगतुल्येशरदीहकालेव्याधिंमृतिंवा
परदेशयानम् ७४ धनक्षयंतत्प्रतितुल्यवर्षेतद्योग
योगाब्दसमेतुकष्टम् सामर्थ्यहीनग्रहपाककालेप्राप्ते

तदानिश्चयतोमृतिःस्यात् ७५ विलग्नशनिमध्यगानि चफलानिसन्ताडयेन्नगे ७र्नविहृतानिशेषमितभेखलेयाति चेत् तदाधनसुखक्षतितदनुचांगभादष्टमस्थितेर्विगुण येद्गणंभ२७परिशेषभस्थेशनौ ७६

## अत्रोदाहरणम्

लग्नप्रभृतिमन्दांतंफलानि १४४३४३२३४ एतेषामैक्यं २८ एतत्तुल्येवर्षेशरीरे व्याधिवामृतिंवा परदेशयानं धनक्षयं लभते तथा मन्दप्रभृतिलग्नान्तं फलानि ४५२ एषां योग ११ एतत्तुल्याब्देपूर्वव- त्कष्टम् उभयोर्योगसमानाब्दे ३९ पूर्ववत् धनक्षयादियोगोभवति मृत्युयोगाभावः पुनः विलग्नाच्छनिमध्ये यानि फलानि २८ नगे ७ताडितानि १८९ भ २७ विहृतावशेषं ० एतन्मितभे रेवतीन- क्षत्रगते खले सुखक्षतिः स्यात् अथवा शनेः योगपिण्डः १६९ लग्नादष्टमस्थफलेन ३ गुणितः ५०७ भ२७ परिशेषः २१ उ- त्तराषाढा कृत्तिका उत्तराफाल्गुनिनक्षत्रगते शनौ सुखधनक्षतिः स्यात् ७६

मयातिवियदब्दकेसतिदशाद्यरिष्टेसति भृशंतदामरणनि- श्चयंनिगदितंनोमृषा त्रिकोणभवनेततोपिसतिदुष्टपा कोदयेप्रयातिमरणंपुमानपिचरक्षकश्चेच्छिवः ७७

## अस्यार्थः

मन्दाष्टकवर्गेयस्मिन्राशौविचच्छून्यं भवति तस्मिन्राशौ यातेशनौदशारिष्टेसतिवादुष्टपाकोदयेदुष्टदशायांतस्मिन्वदकेमरण निश्चयोवाच्यः ततोपिकोणेदुष्टदशायांवामरणं भवति यदिशिवोरक्ष-

## अथ शनिफलम्

शनैश्चरास्थितस्थानादष्टमं मृतिरुच्यते शनेरष्टकवर्गेन स्वस्यायुष्यंविनिर्दिशेत् ६३ लग्नात्प्रभृतिमन्दान्तम्फलान्येकत्रकारयेत् लग्नादिफलतुल्याब्देव्याधिवैरंसमादिशेत् ६४ मन्दादिलग्नपर्यंतफलान्येकत्रसंयुतम् मन्दादिफलतुल्याब्देव्याधितस्यसमादिशेत् ६५ तयोर्योगसमाब्देतुमृत्युयोगः मचक्षते शोध्यादिगुणनंकृत्वा पिण्डंसंस्थाप्ययत्नतः ६६ अष्टमस्थफलेर्हत्वासप्तविंशतिभाजितम् शतादूर्ध्वंतुतत्पिण्डं शतमेवत्यजेत्ततः ६७ आयुःपिण्डंतुजानीयात्प्राग्वद्वेलांतुकल्पयेत् त्रिकोणैकाधिपत्यंसंशोधनंविरच्यच ६८ पिण्डंसंस्थाप्यगुणयेल्लग्नादष्टमगैःफलैः सप्तविंशतिहृच्छेषंमृत्युकालंवदेद्बुधः ६९ समूलाष्टकवर्गेचयत्रनास्तिफलंगृहे तत्रनास्तिफलंतत्रयदायातिशनैश्चरः ७० तद्ग्रहेरविचन्द्रोचेद्दशाछिद्रेमृतिंवदेत् दशाछिद्रसमायोगेमृत्युरेवनसंशयः ७१ मन्दाष्टवर्गराशीनांहीनराशौक्षयोभवेत् तद्गृहेभास्करेमन्देतस्मिन्कालेमृतिंवदेत् ७२ मन्दाष्टवर्गादथरिष्टयोगे दुष्टानिवर्षाणिविचारयन्ति पूर्वोक्तसंशोधनतोहिशुद्धंपिण्डंसुधीमान्विलिखेत्पृथक्स्थम् ७३ लग्नातुमन्दान्तमथोफलानामैक्यंशनेर्लग्नमुपांत्यमेव तद्योगतुल्येशरदीहकालेव्याधिंमृतिंवा परदेशयानम् ७४ धनक्षयंतत्प्रतितुल्यवर्षेतद्योगयोगाब्दसमेतुकष्टम् सामर्थ्यहीनग्रहपाककालेप्राप्ते

तनयादिसौख्यं गुरोरष्टकवर्गे गुरोर्लग्नान्तं फलैक्यं ८ लग्नाद्गुर्वन्तं फलैक्यम् ४८ एतत्तुल्याब्दे धनादिसौख्यं शुक्राष्टकवर्गे शुक्रा लग्नान्तंफलैक्यं ४ लग्नाच्छुक्रान्तंफलैक्यम् ४६ एतत्तुल्याब्दे ध नतनयादिसौख्यम् भविष्यति एवंलग्नाष्टकवर्गेपिबोद्धव्यम् ७९ शनेरष्टकवर्गे शून्यंनास्ति इतिशनेरष्टकवर्गः ८०

## अथ सर्वाष्टकवर्गफलमाह

सर्वाष्टकग्रहफलैर्विधियोज्यचक्रंमूर्त्यादिगुण्यमशुभंशुभमेव तत्र जन्मादितःफलसमेवदशाःसमीक्ष्ययात्राविवाहसम येबहुमृत्युसुक्तः ८१ मेषादिभानांसकलाष्टवर्गेउत्पन्न रेखागणमेवकुर्यात् धृत्यादि१८ तत्त्वान्तमितंकनिष्ठं त्रिंशावसानंकिलमध्यवीर्याः ८२ त्रिंशाधिकंतूत्तमवी र्यदाः स्युःशरीरसौख्यार्थयशोविशेषाः स्वस्वाष्टवर्गेय दिवेदहीनाःकुशायसौख्यायचवेदपुष्टाः ८३ दशमभ वनरेखाभ्योधिकंलाभमानंभवतियदिविहीनंस्याद्व्यया ख्यततोपि अधिकतरविलग्नंभोगसम्पत्तिभग्नाविनि मयवशातस्तद्विपरीत्यंजनस्य ८४ मध्या१० स्फलाधिके लाभोमध्यात्क्षीणफलेव्ययः यस्यरेखाधिकंलग्नंभोग वानर्थवान्भवेत् ८५ प्रादक्षिण्यादिभावानांसकलफ लयुतिंदिक्चतुष्कक्रमेणकृत्वातद्भागतोयःसमधिकफल तःशोभनंहानिमल्पात् सौम्याःस्वोच्चस्वगेहोदितखचर युतेदिग्विभागेस्वकार्येवित्तेशाशासुवित्तंमृतिपतिगतदिग्भा गेदेहनाशः ८६

ता तदापिमृत्युः स्यात् ७७

## पुनः भौमफलम्

भौमान्तंतनुतः कुजात्तनुलयंयोगेफलानांतथातत्तुल्यंशर दीहकष्टमनिशंशस्त्रानलोत्थंभयम् मन्दारांगभयोः फलैक्यकमितेसौम्योज्झितेशस्त्रभीर्मन्दारैक्यमितेफल क्षतिभयंराहोः सुखानांक्षतिः ७८

## अस्योदाहरणम्.

भौमाष्टकवर्गे तनुतः लग्नात् भौमान्तं फलैक्यं ३६ अथवा भौमात् लग्नांतं फलं २ उभयोर्योगफलम् ३८ एतत्तु २ ३६ ३८ ल्यवर्षेशरीरव्याध्यादिकष्टम् ७८

## अथ शुभासुभफलमाह.

शुभखचरफलैक्यप्राप्तवर्षेनिता धर्मतनयसुखानांप्रा जनंस्यान्मनुष्यः धरणितनयवर्गेबिन्दुसंज्ञातयोगेतत्तु ल्यमिहवर्षेपापगेमृत्युभीतिः ७९ मार्तण्डपुत्राष्टक वर्गमध्येयद्यद्गृहेशून्यफलंभवेच्च तत्तद्भमध्येरवि जेथसूर्येतदाशरीरामयपीडनंस्यात् ८०

## अस्योदाहरणम्

चन्द्राष्टकवर्गेचंद्राल्लग्नान्तं फलैक्यं १५ लग्नाच्चन्द्रान्तम्फलैक्यं ३४ एतत्तुल्याब्दे १५ ३४ धनादिसौख्यंबुधाष्टकवर्गेबुधाल्लग्नान्तं फलैक्यम् १४ लग्नाद्बुधान्तंफलैक्यं ४२ मेतत्तुल्याब्दे १४ ४२ धन

मृत्युभावेन्नाभात्कोणानिघ्नंफलंमृत्युजंसूर्य१२शेषर्क्षयुक्तेरवौ
तत्त्रिकोणेथवारिष्टमासंवदेत्तातमातृगृहाद्येथवाकल्पयेत् ८९
सूर्यजात्सूनमृतीश्वरान्तंचतत्पिण्डकंताडितंमृत्युमानेनच
सूर्यशेषर्क्षगेभास्करेनाशनंतत्त्रिकोणेथवास्याद्विधिः सर्वतः
९०

## टीका.

मृत्युभावेश्वरोयस्मिन् राशावस्ति तत्त्रिकोणं त्रिकोणजशोधितफलेन मृत्युजं मृत्युभावस्थितं फलं गुणयेत् सूर्यशेषे द्वादशभक्ते शेषर्क्षयुक्ते शेषराशियुक्ते रवौ तत्त्रिकोणे वारिष्टमासंवदेदित्यर्थः अथवा तातमातुर्गृहात्कल्पयेदिति ९०

मीनाद्यंमिथुनान्तकंप्रथमकंप्रोक्तंवयःप्राक्तनैः कर्काद्यंवणिजान्तकंतरुणतासंज्ञंचमध्यंबुधैः कुंभांतंस्थविरान्तकं
चबहुभिर्यत्तत्फलैःसंयुतं तत्सौख्यार्थविशेषकंबलयुतेनायंविशेषाच्छुभम् ९१

## टीका.

मीनाद्यमिति अत्रवयस्त्रिधामीनाद्यंमिथुनान्तकम् मीनमेषवृषमिथुना एतेराशयः प्रथमवयोज्ञेयाः कर्काद्यंवणिजान्तकं कर्कसिंहकन्यातुलाएतेराशयः तरुणवयोज्ञेयाः तथा वृश्चिकधनुर्मकरकुम्भा एतेराशयः स्थविरावृद्धवयाज्ञेयाः यद्यद्बहुभिः सफलैर्युतं तत्तद्वयसि सौख्यार्थविशेषकं ज्ञेयम् बलयुतेनाय बलयुतग्रहेण युक्तंविशेषाच्छुभंज्ञेयम् ९१

### अथ राहुयुक्तगुरुफलमाह

राहुयुक्तगुरुराशिगे ९। १२ गुरोनत्त्रिकोणमप्यरिष्टकारकं

## टीका.

भानां लग्नादिद्वादशराशीनां प्राग्दक्षिणेनसव्यमार्गेण दिक्चतुष्कक्रमेण पूर्वादिदिक्षु राशित्रयंत्रयंज्ञेयं तत्रलग्नद्वादशैकादशराशयः पूर्वादिक् तथा दशमनवमाष्टमराशयो दक्षिणादिक् सप्तमषष्ठपंचमराशयः पश्चिमादिक् चतुर्थतृतीयद्वितीयराशयः उत्तरादिक् पूर्वादिदिक्चतुष्कस्य प्रत्येकं राशित्रयस्य सकलफलयुतिंयोगंकृत्वा तद्भागैर्यत्रसमधिकफलं तद्दिशि शोभनंवाच्यम् यत्राल्पफलंतद्दिशि हानिर्वाच्या ८६

## अथ भावफलमाह.

भावंधिलोक्यसदसत्फलदायकंयत्तद्राशिसंभवफलैश्वतुदुक्तपिण्डम् ८७ पिण्डेरवाताडितभावशेषे१२राशौ तस्मिन्यातिसौरिःसमायाम् यस्यांतत्तद्भावहानिंचविद्यात्प्राहुर्वशोवाथवातात्रिकोणे कृत्वाविन्दुभ्यस्तुकालं सुधीमान्तस्माद्वाच्यःप्राप्तिकालःशुभत्वे ८८

## टीका.

भावमिति लग्नपिण्डंसंगुण्यभैः सप्तविंशः २७तिभिर्विभज्य शेषभे यदासौरिः प्रायाति तदातस्यभावफलस्यनाशःस्यात् ८७ पिंडइति पिण्डलग्नपिंडे ताडिते भावफलेनगुणयेत्द्वादशात्कंशेषे यस्मिन्समायां वर्षेसौरिर्याति तस्मिन्वर्षे तद्भावहानिं विंद्यात्ज्ञातव्येत्यर्थः अथवा तत्त्रिकोणइति एवं सुधीमान् विन्दुभ्यस्तत्कालं शुभत्वे तस्मात्प्राप्तिकालोवाच्यः ८८

## अत्रोदाहरणम्

लग्नम् ७।६।३।४२ चन्द्रः ८।२५।२९।३८ नवांशमानं ३२० त्रिषष्ठ्यागुणिते ६३ जातः २१० अंशात्त्रिंशद्भक्ते जाताराशयः ७ एभिर्युक्तौलग्नचन्द्रौ लग्नम् ७।६।३।४२ चन्द्रः ३।२५।२९।३८ लग्नस्य चतुःषष्टितुल्ये नवांशे वृश्चिकलग्ने चन्द्रस्य चतुःषष्टितुल्ये नवांशे कर्कलग्ने देहमुक्तिकालः एवं सर्वत्र विचारणीयम् ९९

## अथ समुदायाष्टकवर्गफलमाह.

सर्वाष्टकग्रहफलैर्विनियोगचक्रंमूर्त्यादिगुणयमशुभंत्रभमेषतत्र जन्मादितःफलसमेतदशासमीक्ष्ययात्राविवाहसमयेबहुमृत्युयुक्तः १०० सर्वकर्मफलोपेतंह्यष्टकवर्गउच्यते अन्यथाफलविज्ञानंदुर्ज्ञेयंगुणदोषजम् १०१ त्रिंशाधिकफलायेस्यूराशयस्तेशुभप्रदाः त्रिंशान्तंपंचविंशादिराशयोमध्यमाः स्मृताः १०२ अतिक्षीणफलायेचराशयः कष्टदुःखदाः श्रेष्ठराशिषुसर्वेषुशुभकार्याणिकारयेत् १०३ श्रेष्ठान् राशीन्मुहूर्तेषुयोजयेन्मतिमान्नरः तत्तज्जन्मप्रभावास्तुपुंसस्तैः सार्द्धमाचरेत् १०४ कष्टराशिमुहूर्तेषुवर्जयेन्मतिमान्नरः मध्यात्फलाधिकेलाभोमध्यात्क्षीणफलेव्ययः १०५ लग्नंफलाधिकंयस्यभोगवानर्थवान्हिसः विपरीतेनदारिद्र्यंभविष्यतिनसंशयः १०६ लग्नेयावत्फलंचास्तितद्राशायाःफलंवदेत् मूर्त्यादिव्ययपर्यन्तदृष्ट्वाभावफलानिवै १०७ अधिकेशोभनंविंद्यात्क्षीणहीने

ऐवासूर्यादिष्वागतेष्वपि १६ षष्ठाष्टमव्ययेशानांस्फुट
योगगतेशनौ मृतिंतत्रविजानीयात्तत्त्रिकोणगतेपिवा १७

## अथ निधनचन्द्रमाह.

अष्टमेशत्रिकोणेविधुः स्याद्यदायोगमिन्दोतथातन्नवांशे
पिवा तत्त्रिकोणेप्रयातेमृतिंनिर्दिशेन्निश्चयात्स्वल्प
रेखोद्भवेवासरे १८

## टीका.

यो अष्टमभावेशो ग्रहोऽस्ति तस्य त्रिकोणे यदाविधुर्योगया
ति अथवा अष्टमेशो यस्मिन्नवांशोऽस्ति तस्य त्रिकोणे यदाविधुः
प्रयाति तदा स्वल्पस्वल्परेखोद्भवेवासरे निश्चयान्मृतिः निर्दि
शेदित्यर्थः १८

## अथ निधनलग्नमाह.

जन्मलग्नेन्दुगानन्द९भागाःक्रमाद्देदषष्ट्यंश ६४ राशौप्रयाते
तनौ मृत्युजन्मांगनीचोदयेशून्यगेदुष्टपाकोदयेदेहमु
क्तिर्भवेत् १९

## टीका.

जन्मलग्नेन्दुगाः जन्मलग्नस्य चन्द्रस्यच नन्दभागानवांशाः क्र
माद्देदषष्ट्यंशराशौ चतुःषष्टिनवांशतुल्यराशौ तनौ लग्नेवाचन्द्रेया
तिसति देहमुक्तिर्भवेदित्यर्थः अथवा मृत्युजन्मांगनीचोदये उच्चा
न्नीचं सप्तममित्युक्तत्वात् मृत्युनीचोदयं सिंहः जन्मांगनीचोदयंस
प्तमत्वंमकरस्तत्रप्रयाते तनौ लग्ने शून्यगेलग्नाष्टकवर्गे तत्रशून्यंफ
लंचेत्तदादुष्टपाकोदये दुष्टग्रहस्य दशायाम् देहमुक्तिर्भवेदित्यर्थः १९

## टीका.

जन्मकालीनमष्टकवर्गंसंपाद्य यस्मिन्नेवराश्यंतर संक्रमोभवति तस्मिन्दिने सर्वेषामष्टकवर्गरेखासु सकलफलंवाच्यम् ११९

## अथ रेखाशान्तिफलमाह

रेखाभिः सप्तभिर्युक्ते मासेमृत्युर्नृणाम्भवेत् स्कवर्णविंशतिपलंदद्याद्दौतिलपर्वतौ १२० वसुभिर्जातिहीनःसन् शीघ्रंमृत्युवशोनरः असत्फलविनाशायदद्यात्कर्पूरजां तुलाम् १२१ रेखाभिर्नवभिः सर्पान्म्रियतेमनुजोध्रुवम् चतुर्भिःसंयुक्तंरथंदद्याच्छुभाप्तये १२२ रेखाभिर्दशभिःशस्त्रात्प्राणान्त्यजतिमानवः दद्याच्छुभफलप्राप्त्यैकवचंवज्रसंयुतम् १२३ रुद्रैःप्राप्याभिशापंचप्राणैर्मुक्तोभवेन्नरः दिक्पलैःस्वर्णघटितांमदद्यात्प्रतिमांविधोः १२४ आदित्यैर्जलदोषेणमानवस्य मृतिंवदेत् भूमिंदद्याद्ब्राह्मणायप्राप्याच्छुभफलंभवेत् १२५ त्रयोदशभिर्व्याघ्रान्मानवोमृत्युमाप्नुयात् विघ्नोहिरण्यगर्भस्यदानंकुर्याच्छुभाप्तये १२६ व्याचिरज्जीवितंजह्याच्छक्रैःकालेनभक्षितः वराहप्रतिमांदद्यात्कनकेनविनिर्मिताम् १२७ राज्ञोभयंतिथिभिर्नेस्त्रहस्तीमदीयते रिष्टभूपैःकल्पतरोःप्रतिमांचनिवेदयेत् १२८ अपिचन्द्रैर्व्याधिभयंगुडधेनुंनिवेदयेत् कलहोष्टनृभिर्दद्याद्द्लगोभूहिरण्यकम् १२९ देशत्यागोर्कैश्च नैःस्याच्छान्तिंकुर्याद्विधानतः विंशत्याबुद्धिनाशःस्या

चमृत्यवे मध्यमेमध्यमंयातिविचार्यम्भावसंमतम् १०८
खण्डत्रयंविनिक्षिप्यदशानयनवत्तथा पापग्रहसमारू
ढंखण्डंक्लेशकरंस्मृतम् १०९ सौम्येजुष्टंशुभंज्ञेयंमिश्रे
मिश्रफलंवदेत् खण्डत्रयफलंज्ञात्वादशाफलमुदीरयेत्
११० लग्नात्प्रभृतिमन्दान्तमेकीकृत्यफलानिवै सं
प्तभिर्गुणयेत्पश्चात्सप्तविंशोद्धृतात्फलम् १११ तत्त
मानगतेपापेदुःखंवारोगमादिशेत् मन्दात्प्रभृतिलग्नां
मेवमेवंप्रकल्पयेत् ११२ भौमाच्चलग्नपर्यंतमेकीकृत्यतु
बिन्दवः पूर्ववत्गुणितंकृत्वावर्षमेवम्प्रकल्पयेत् ११३
तद्वर्षेपापसंयुक्तेव्याधिमृत्युभयंभवेत् वर्षेषुहीनभा
षुतद्भावंवर्जयेत्तदा ११४ गोष्टंक्षेत्रंकृपिंवापिषष्ट्य
शोस्थितंशुभम् क्षीणराशौस्थितंद्रव्यंतद्द्रव्यंनाशतां
व्रजेत् ११५ वित्तेश्वरस्यदिग्भागेवित्तमाप्नोतिनिश्चि
तम् रन्ध्रेश्वरस्यदिग्भागेदेहस्तत्रविनश्यति ११६ मे
षादियद्ग्रहगतावसुसंख्ययातास्तद्भावपुष्टिबलबुद्धिक
राभवन्ति षट्पंचसप्तसहितानिशुभप्रदानिश्रित्वैकक
र्णयुतभानिनवोभनानि ११७ मिश्रम्फलंभवतिसा
गरकर्णयोगेरोगापवादभयदायदिशून्यभावाः एकादि
कर्णयुतभात्तुसुखग्रहाणांभिन्नाष्टवर्गजनिसर्वफलम्प्रव
च्मि ११८

## अथ मासफलमाह.

संक्रमदिनेग्रहाणामष्टकवर्गेषुचारवशात् रेखैक्याच्छु
भमशुभम्मासफलंतद्दशाद्दिनफलंच ११९

## अथ नाभसयोगमाह·

अधुनावैर्विस्तरतः कथितायोगास्तुनाभसानाम्ना अ-
ष्टादशशतगुणितास्तेषांसंक्षेपेणवक्ष्यामि १ आश्रया
ख्यास्त्रयोयोगा दलयोगद्वयंततः आकृतिर्विंशतिःसं
ख्यायोगानां सप्तकंस्मृतम् २ रज्जुयोगोमुशलश्चन
लोमाला भुजंगमौ ३ गदायोगश्चशकटोशृंगाटकविहं
गमौ हलवज्रयवाश्चैवकमलोवापियूपको ४ शर
शक्तिदण्डनौकाकूटछत्रधनूंषिच अर्द्धेन्दुयोगश्चक्रा
ख्यः समुद्रश्चेतिविंशतिः ५ वीणादामनिकायोगोपा
शकेदारशूलकाः युगगोलौततःप्रोक्तायोगाद्वात्रिंशका
इमे ६

## अथाश्रययोगत्रयमाह·

सर्वेचरस्थाअपिवास्थिरस्थाद्विदेहसंस्थायदिवाभवन्ति
क्रमेणरज्जुर्मुशलंनलश्चयोगत्रयंस्यादिदमाश्रयाख्यम् ७

## अथदलाख्ययोगद्वयमाह·

केन्द्रत्रयेसौम्यखगैस्तुमालाखलग्रहैव्यालसमाह्वयः
स्यात् इदंतुयोगद्वितयंदलाख्यंमुनीश्वरेणप्रतिपादि
तंहि ८

## अथाकृतियोगविंशतिमाह·

आसन्नकेन्द्रद्वयगैर्गदाख्योलग्नास्तसंस्थैःशकटःसम
स्तैः खबन्धुयातैर्विहगःप्रविष्टःशृंगाटकंलग्नवात्म
जस्थे· ९ धनारिखस्थैस्त्रिमदायगैर्वाचतुर्थरन्ध्रव्यय

त्कुर्याल्लक्षमितंजपम् १३० भूमिपक्षैरोगपीडादद्यान्द्वा न्यस्यपर्वतम् यमाब्धिभिर्बन्धुपीडादद्यादादर्शकम्बुधः १३१ रामपक्षयुतोमासेनानाक्लेशान्प्रपद्यते सौवर्णप्र तिमांदद्याद्रवेःसप्तपलैःक्रमात् १३२ वेदाब्धिभिर्बन्धु हीनोदद्याद्गोदानकंदश सत्वेरोगार्थनाशश्चजपहोमादि कारयेत् १३३ ऋतुपक्षैर्बुद्धिहीनःपूज्यावागीश्वरीतथा धनक्षयःस्यान्नक्षत्रैःश्रीसूक्तंतत्रसंजयेत् १३४ वसुपक्षे युतेमासेनलाभोहानिरखेचरैः सूर्यहोमंचविधिनाकर्तव्यंशु भकांक्षिभिः १३५ एकोनत्रिंशताचापिचिन्ताव्याकुल ताभवेत् घृतवस्त्रसुवर्णानितत्रदद्याद्विचक्षणः त्रिं शताधनधान्याप्तिरितिजातकनिर्णयः १३६ भूवन्हिभि र्महोद्योगःपुत्रसम्पद्गुणाग्निभिः सहेमवस्त्रलाभश्च चतुस्त्रिंशत्समन्वित १३७ पंचरामैर्भवेन्द्धीमान्षट्त्रिं शत्सुतवित्तदा १३८ सप्तत्रिंशद्धनस्याप्तिरष्टत्रिंशत्सु खार्थदा द्रव्यरत्नाप्तिरेकोनचत्वारिंशद्भिविद्यते १३९ धनवान्कीर्तिमांश्चैवचत्वारिंशतिवर्द्धते अतऊर्ध्वंयशो र्थाप्तिःपुण्यश्रीरुपचीयते १४० इतिश्रीबृहत्पारा शरहोरापूर्वखण्डसारांशेऽष्टकवर्गफलकथनंनामविंशो ध्यायःसमाप्तः २० श्रीरामःक्षमसन्नोऽस्तु

तिरिक्तदेहा धनसंचयभागिनोऽतिनिपुणाश्च बंधुहिता
श्च सुरूपा जलयोगे संप्रसूयन्ते १९ नित्यंसुखप्रधाना
वाहनवस्त्रान्नभोगसम्पन्नाः कांताःसुबहुस्त्रीकामालयां
यांसम्प्रसूताःस्युः २० विषमाःक्रूरानिःस्वानित्यदुःखा
र्दिताःसुदीनाश्च परभक्ष्यपाननिरताःसर्पभवाभवन्ति
नराः २१ सततोद्युक्ताःर्थवशायज्वानःशास्त्रगेयकुश
लाश्च धनकनकरत्नसंम्पत्सम्प्रयुक्तामानवागदायां
तु २२ रोगार्ताःकुनखाःमूर्खाःशकटानुजीविनोनिः
स्वाः मित्रस्वजनविहीनाःशकटेजाताभवन्तिनराः २३
भ्रमणारुचयोविकृष्टादूतास्करतानुजीविनोधृष्टाः कल
हप्रियाश्चनित्यंविहगयोगेसदाजाताः २४ प्रियक
लहाः समरसहाःकखिनोनृपतेःप्रियाः शुभकलत्राः
व्याख्यायुवतिहृष्याः शृंगाटकसंभवामनुजाः २५ व
न्धाशिनोदरिद्राःकृषिबलादुःखिताश्चसोद्वेगाः बन्धुसु
हृद्भिःसंत्यक्ताः प्रेष्याहलसंज्ञकेसदापुरुषाः २६ आ
द्यन्त्यवयःसुखिनःशूराःसुभगानिरीहाश्च भाग्यविही
नावज्रमध्येजाताःखलाविरुद्धाश्च २७ व्रतनियमम
गलपरावयसोमध्येसुखार्थपुत्रयुताः दातारःस्थिरचि
त्तायवयोगभवाःसदापुरुषः २८ विभवगुणाढ्याः
स्थिरायुषोविपुलकीर्तयःशुद्धाः शुभशतकाःपृथ्वीशाः
कमलभवामानवानित्यम् २९ निधिकरणेनिपुणधियः
स्थिरार्थसुखसंयुताःसुतमाश्च नयनसुखसंप्रहृष्टावा
पीयोगेनराजाताः ३० व्यसनविविद्यानिरतस्त्यायुनः
सत्वसम्पन्नः व्रतनियमनिरतोयूपेजातोविशिष्टश्च ३१

संस्थितैर्वा नभस्तलस्थैर्हलनामयोगः किलोदितोयं निखिलागमज्ञैः १० लग्नस्मरस्थानगतैः शुभाख्यैः पापैश्चमेषूरणबन्धुयातैः कज्जाभिधस्तैर्विपरीतसंस्थै र्यवश्चमिश्रैः कमलाभिधानः ११ त्यक्त्वाकेन्द्राणिचे न्खेटाश्चोपस्थानेषुसंस्थिताः वापीयोगोभवेदेवंगदितः पूर्वसूरिभिः १२ लग्नाच्चतुर्थात्स्मरतः खमध्याच्चतु र्ग्रहस्थैर्गगनेचरेन्द्रैः क्रमेणयूपश्चशरश्चशक्तिदण्डः प्रदिष्टः खलुजातकज्ञैः १३ लग्नाच्चतुर्थात्स्मरतःख मध्यात्ससर्क्षगैर्नौरथकूटसंज्ञः छत्रंधनुश्चान्यगृहम वृत्तैर्नौपूर्वकेयोगइहार्द्धचन्द्रम् १४ तनोर्धनाद्येकगृ हान्तरेणस्युःस्थानषट्केगगनेचरेन्द्राः चक्राभिधान श्चसमुद्रनामायोगाइतीहाकृतिजाश्चविंशत् १५

## अथ सप्तसंख्यायोगनामान्याह.

येयोगाः कथिताःपुराबहुतरास्तेषामभावेभवेद्गोलश्चैक गतैर्युगंद्विगृहगैः शूलस्त्रिगेहोपगैः केदारश्चचतुर्थस र्वस्वचरैः पाशोस्तुपंचास्थितःषट्स्थैर्दामनिकाचसप्तगृह र्वीणेतिसंख्याइमे १६

## अथैतेषांफलानिक्रमेणाह.

अटनभयासरूपाः परदेशास्वास्थ्याभागिनोमनुजाः क्रू राःखलस्वभारज्जुभवाः सदाकथिताः १७ मान ज्ञानयुतांकस्थैर्युक्तानृपमियाःख्याताः बहुपुत्राः स्थिरचित्ताः मुसलसमुत्थाभवन्तिनराः १८ न्यूना

४४ ॥ सुबहुनासुपयोज्याकृषीबलाःसत्यवादिनःसुखिनः ॥ केदारेसम्भूताश्चलस्वभावाधनैर्युक्ताः ॥ ४५ ॥ तीक्ष्णाल साधनहीनाहिंस्रासुवहिष्कृतामहाशूराः ॥ संग्रामेलब्धशब्दाःशूलेयोगेभवंतिनराः ४६ ॥ पाखण्डवाधिनोबाधन रहितावावहिष्कृतालोके ॥ सुतमातृधर्मरहितायुगयोगेनरा जाताः ॥ ४७ ॥ बलसंयुक्ताविधनाविद्याविज्ञानवर्जिताम लिनाः ॥ नित्यंदुःखितदीनागोलेयोगेभवन्तिनराः ४८ सर्वास्वपिदशास्वेतेभवेयुःफलदायिनः ॥ प्राणिनामिति विज्ञेयाःप्रवदन्तितवाग्रजः ४९ ॥ इतिश्रीबृहत्पाराश रहोरापूर्वखण्डसारांशेनाभसयोगादिफलकथननामएकविंशो ध्यायः २१

---

## अथ गजकेशरीयोगमाह

केन्द्रस्थितेदेवगुरौमृगांकाद्योगस्तदाहुर्गजकेसरीति ॥ दृष्टे सुतेवेन्दुसुतःशशाकेनीचास्तहीनैर्गजकेसरीस्यात् ॥ १ ॥ गजकेसरिसंजातस्तेजस्वीधनवान्भवेत् ॥ मेधावीगुणस म्पन्नोराजप्रियकरोभवेत् २ ॥

## अथामलायोगमाह

यस्यजन्मसमयेशशिलग्नात्सद्ग्रहेयदिचजन्मनिसंस्थः ॥ तस्यकीर्तिरमलाभुवितिष्ठेदायुषोन्तमविनाशनसम्पत् ३ ॥ लग्नादूघाचन्द्रलग्नाद्वादशमेशुभसंयुते ॥ योगोयममला नामकीर्तिराचन्द्रतारकी ४ ॥ राजपूज्योमहाभोगीदाताब-

इष्टंकरणेदस्युबन्धनमृगयाधनसेवितोपिमांसादः हिंस्राः
कुशिल्पकराः शरयोगेसम्प्रसूयंते ३२ धनरहितविफल
दुःखितनीचाऽलसाश्चिरायुषःपुरुषः संग्रामबुद्धिनिपुणाः
सत्यांजाताःस्थिराःशुभगाः ३३ हतपुत्रदारनिःस्वाः सर्व
त्रनिर्घृणाःस्वजनबाह्याः दुःखितनीचाः मेष्यादण्डभ्र
चाभवन्तिनराः ३४ सलिलोपजीविविभवावल्लभाः
रव्यातकीर्तयोदुःष्टाः कृपणामलिनोलुब्धानौसंजाताः
रवलाःपुरुषाः ३५ अनृतकथनबन्धनपापानिष्किंच
नाः शठाः क्रूराः कूटसमुत्थानित्यंभवन्तिगिरिदुर्गवा
सिनोमनुजाः ३६ स्वजनाभयोदयावान्नानानृपवल्ल
भःप्रकृष्टमतिः प्रथमेंत्येचवयसिनरः सुखवान्दीर्घा
युरातपत्रेस्यात् ३७ आनृतिकगुप्तपालाश्चौराः किन
याश्चकाननेनिरताः कार्मुकयोगेजाताभाग्यविहीनावयो
मध्येशुभगाः ३८ सेनापतयःसर्वेकान्तशरीरानृपप्रि
यांबलिनः मणिकनकभूषणयुताभवन्तियोगेवार्धचं
द्राख्ये ३९ प्रणताशेषनराधिपःकिरीटरत्नप्रभास्फु
रितपादः भवतिनरेन्द्रोमनुजश्चक्रेयोजायतेयोगे ४०
बहुरत्नधनसमृद्धाभोगयुताधनजनप्रियाःससुताः उद
धिसमुत्थाःपुरुषाः स्थिरविभवाःसाधुशीलाश्च ४१ प्रिय
गीतनृत्यवाद्यनिपुणाः सुखिनश्चधनवन्तः नेतारोबहु
भृत्यावीणायांकीर्तिताःपुरुषाः ४२ दामिन्यामुपकारि
नयसुधनयुक्तोमहेश्वरःख्यातः बहुसुतरत्नसमृद्धोधी
रोजायेतेतविद्वांश्च ४३ पाशेबन्धनभाजः कार्यदक्षाःप्रपं
चकाराश्च बहुभाषिणोविशीलाबहुभृत्याः सम्प्रसूताश्च

गजाश्वनाथः वित्तादिगेनिधिपतिः पितृभक्तियुक्तोधी रोग्ररूपधनवान्नरचक्रवर्ती १२ जातोयदाविक्रममालिकायांभूपः सशूरोधनकश्चरोगी सुखादिकाचेद्बहुदेशभाग्यभोगीमहादानपरोमहीपः १३ पुत्राद्यायेदिमालिकानरपतिर्यज्वाथवाकीर्तिमान्जातः षष्टगृहान्वनेचसुखभृत्प्राप्नोतिदरिद्रोभवेत् कामादिगृहमालिकायदिबहुस्त्रीवल्लभोभूपतिर्दीर्घायुर्धनवर्जितोनरवरः स्त्रीनिर्जितश्चाष्टमात् १४ धर्मादिग्रहमालिकागुणनिधिर्यज्वातपस्वीविभुः कर्माद्यायदिधर्मकर्मनिरतः सम्पूजितः सज्जनैः लाभाद्राजवरांगनामणिमतिः सर्वक्रियादक्षको जातोरिष्फगृहाद्बहुव्ययकरः सर्वत्रपूज्योभवेत् १५

## अथ चामरयोगमाह

लग्नेश्वरेकेन्द्रगतेस्वतुंगेजीवेक्षितेचामरनामयोगः सौम्यद्वयेलग्नगृहेकलत्रेनवास्यदेवायदिचामरःस्यात् १६ योगेजातश्चामरेराजपूज्योविद्वान्वाङ्मीपण्डितोवामहीपः सर्वज्ञः स्याद्वेदशास्त्राधिकारीजीवेद्वर्षेसप्ततिर्वत्सराणाम् १७

## अथ शंखयोगमाह

अन्योन्यकेन्द्रगृहगौसुतशत्रुनाथौलग्नाधिपेबलयुतेयदि शंखयोगः लग्नाधिपेचगगनाधिपतौचरस्थेभाग्याधिपेबलयुतेतुतथावदन्ति १८ शंखेजातोभोगशीलोदयालुः स्त्रीपुत्रार्थक्षेत्रवान्पुण्यकर्मा शास्त्रज्ञानाचारसाधुक्रियावान्जीवेद्वर्षेवत्सराणामशीतिम् १९

न्धुजनप्रियः परोपकारीगुणवान् मलायोगसमुद्भवः ५

## अथ शुभाशुभयोगमाह.

शुभाशुभाढ्येयदिजन्मलग्नेशुभाशुभाख्योभवतस्तदानीम् व्ययस्वगैःपापशुभैर्विलग्नात्पापाख्यसौम्यग्रहकर्त्रीच ६ शुभयोगभवोवाग्मीरूपशीलगुणान्वितः पापयोगोद्भवःकामीपापकर्मपरार्थयुक् ७

## अथ पर्वतयोगमाह

सौम्येषुकेन्द्रग्रहगेषुसपत्नरन्ध्रेशुद्धेथवाशुभयुतेयदिपर्वतःस्यात् लग्नांत्यपौयदिपरस्परकेन्द्रयातौमित्रेक्षितौभवतिपर्वतनामयोगः ८ भाग्यान्वितःपर्वतयोगजातोविद्याविनोदाभिरतःप्रदाता कामीपरस्त्रीजनकेलिलोलस्तेजोयशस्वीपुरनायकःस्यात् ९

## अथ काहलयोगमाह.

अन्योन्यकेन्द्रग्रहगौगुरुबन्धुनाथौलग्नाधिपेबलयुतेयदिकाहलःस्यात् कर्मेश्वरेणसहितेतुविलोकितेवास्वोच्चस्वकेसुखपतौयदिताहशःस्यात् १० ओजस्वीसाहसीमूर्खश्चतुरंगबलैर्युतः यत्किंचिद्ग्रामनाथस्तुजातःस्यात्काहलेनरः ११

## अथ मालिकायोगमाह.

लग्नादिसप्तगृहगायदिसप्तखेटाजातोमहीपतिरनेक

## अथमत्स्ययोगमाह

लग्नधर्मगतेपापेपंचमेसदसद्युते चतुरस्त्रंगतेपापेयोगोयं मत्स्यसंज्ञकः २६ कालज्ञःकरुणासिंधुर्गुणधीबलरूप वान् यशोविद्यातपस्वीचमत्स्ययोगेसमुद्भवः २७

## अथ कूर्मयोगमाह.

कलत्रपुत्रारिगृहेषुसौम्याःस्वतुंगमित्रांशकराशियाताः तृ तीयलाभोदयगास्त्वसौम्यामित्रोच्चसंस्थोपदिकूर्मयोगः २८ विख्यातकीर्तिर्भुविराज्यभोगीधर्माधिकःसत्वगुणप्रधानः धीरःसुखीवागुपकारकर्ताकूर्मोद्भवोमानवनायकोवा-२९

## अथ खड्गयोगमाह.

भाग्येशेधनभावस्थेधनेशेभाग्यराशिगे लग्नेशेकेन्द्रको णस्थेखड्गयोगइतीरितः ३० वेदार्थशास्त्रनिखिलाग मतत्त्वयुक्तिबुद्धिप्रतापबलवीर्यसुखानुरक्ताः निमेत्सरा श्चनिजवीर्यमहानुभावाःखड्गेभवन्तिपुरुषाःकुशलाःकृत ज्ञाः ३१

## अथ लक्ष्मीयोगमाह

केन्द्रमूलत्रिकोणस्थेभाग्येशेपरमोच्चगे लग्नाधिपेबला ढ्येचलक्ष्मीयोगइतीरितः ३२ गुणाभिरामोबहुदेशनाथो विद्यामहाकीर्तिरनंगरूपः दिगन्तविश्रांतनृपालवन्द्योराजा धिराजोबहुदारपुत्रः ३३

## अथ भेरीयोगमाह.

स्यान्त्योदयास्तभवनेषुवियच्चरेषुकर्माधिपेबलयुतेयदिभे
रियोगः केन्द्रेगतेसुरगुरौसितलग्ननाथौभाग्येश्वरेबलयुते
तुतथैववाच्यम् २० दीर्घायुषाविगतरोगभयानरेन्द्राव-
द्धार्थभूमिसुतदारयुताः प्रसिद्धाः आचारभूरिसुखशौर्य
महानुभावाभेरीप्रयातमनुजानिपुणाःकुलीनाः २१

## अथ मृदङ्गयोगमाह.

उच्चग्रहांशकपतौयदिकेन्द्रकोणेतुंगस्वकीयभवनोपगतेब
लाढ्ये लग्नाधिपेबलयुतेतुमृदंगयोगः कल्याणरूपनृप
तुल्ययशप्रदःस्यात् २२

## अथ श्रीनाथयोगमाह.

कामेश्वरेकर्मगतेस्वतुंगेकर्माधिपेभाग्यपसंयुतेच श्रीना
थयोगःशुभदस्तदानींजातोनरःशक्रसमोनृपालः २३

## अथ शारदायोगमाह.

योगःशारदसंज्ञकःसुतगतेकर्माधिपेचन्द्रजेकेन्द्रस्थेदिन
नायकेनिजगृहभांसेतिवीर्यान्विते चन्द्रात्कोणगतेपुरंद
गुरौसौम्यत्रिकोणेकुजेलाभेवायदिदेवमंत्रिणिबुधात्तच्छार
दासंज्ञकः २४ स्त्रीपुत्रबन्धुसुखरूपगुणानुरक्ताभूपप्रि
यागुरुमहीसुरदेवभक्ताः विद्याविनोदरतिशीलतपोबला
ढ्याजाताःस्वधर्मनिरताभुविशारदाख्ये २५

## अथ लग्नाधियोगमाह

लग्नादारेचूनगृहाष्टमस्थैः शुभैर्नपापाग्रहयोगदृष्टैः लग्नाधियोगोभवतिप्रसिद्धः पापैः सुखस्थानविवर्जितैश्च ४२ लग्नाधियोगेबहुशास्त्रकर्ताविद्याविनीतश्चबलाधिकारी सुख्यस्तुनिष्कापटिकोमहात्मालोकेयशोवित्तगुणाधिकःस्यात् ४३

## अथ चन्द्रयोगादीनाह

सहस्ररश्मितश्चन्द्रेकंटकादिगतेसति न्यूनमध्यवरिष्ठानिधनधीनैपुणानिच ४४ स्वांशेधिमित्रस्यांशेवायास्थितेदिवसेशशी गुरुणा दृश्यते तत्रजातोवित्तसुखान्वितः ४५ स्वाधिमित्रांशगश्चन्द्रोदृष्टोदानवमंत्रिणा निशासुकुरुतेलक्ष्मींछत्रध्वजसमाकुलाम् विपर्ययस्थे शीतांशौजायन्तेऽल्पधनानराः ४६

## अथाधियोगमाह

शशिनःसौम्याःषष्ठेचूनेवानिधनसंस्थितावास्युः स्यादधियोगेजातःसौम्यैस्सबलैर्धराधीशः मध्यबलैर्मन्त्रीस्यादधमबलैः सैन्यनायकःस्यात् ४७ चन्द्राद्बृद्धिगतैः सौम्योधर्मशीलोमहाधनी द्वाभ्यांसमोल्पवसुमानेकेनपरिकीर्तितः चन्द्राल्लग्नाद्ग्रहाभावेदारिद्रोदुःखितोभवेत् ४८

## अथ कुसुमयोगमाह

स्थिरलग्नेभृगौकेन्द्रेत्रिकोणेन्दौशुभेतरे मानस्थानगतेसौरेयोगोयंकुसुमोभवेत् ३४ दातामहीमण्डलनाथवन्द्यो भोगीमहावंशजराजमुख्यः लोकेमहाकीर्तियुतः प्रतापी नाथोनराणांकुसुमोद्भवः स्यात् ३५

## अथ पारिजातयोगमाह

विलग्ननाथस्थितराशिनाथस्थानेशराशीशतदंशनाथः केन्द्रत्रिकोणोपगतोयदिस्यात्स्वतुंगगेवायदिपारिजातः ३६ मध्यान्तसौख्यः क्षितिपालवन्द्योयुद्धप्रियोवारणवाजियुक्तः स्वकर्मधर्माभिरतोदयालुर्योगोनृपः स्याद्यदि पारिजातः ३७

## अथ कलानिधियोगमाह

द्वितीयेपंचमेजीवेबुधशुक्रयुतेक्षिते क्षेत्रेतयोर्वासम्प्राप्ते योगः स्यात्सकलानिधिः ३८ कामीकलानिधिभवः सुगुणाभिरामः संस्तूयमानचरणोनरपालमुख्यैः सेनातुरंगमदवारणशंखभेरीवाद्यान्वितोविगतरोगभयारिसंघः ३९

## अथ पारिजातादियोगानाह

सपारिजातश्चुचरः सुखानिनीरोगतासुतमवर्गयातः सगोपुरांशेयदिगोधनानिसिंहासनस्थः कुरुतेविभूतिं ४० करोतिपारावतभागयुक्तोविद्यायशः श्रीविपुलंनराणाम् सदेवलोकेबहुयानसेनामैरावतस्थोयदिभूपतित्वम् ४१

ष्काणचतुष्टयेपुसहितामूलत्रिकोणेपुवा तत्तत्कालवला न्वितास्तुखचरावर्गोत्तमांशेपिवातेसर्वेशुभदाभवन्तिहितदा स्वान्तर्दशादावपि ७९ इतिश्रीबृहत्पाराशरहोरापूर्वख ण्डसारांशे बहुयोगफलकथनंनाम द्वाविंशोऽध्यायः

---

## अथ मारकभेदाध्यायः

त्रिविधाश्चायुषायोगाः स्वल्पायुर्मध्यमोत्तमाः द्वात्रिंशा त्पूर्वमल्पायुर्मध्यमायुस्ततोभवेत् चतुषष्ठ्याः पुरस्ता त्तुततोदीर्घमुदाहृताः १ उत्तमायुःशतादूर्ध्वं ज्ञातव्यं मुनिसत्तम चतुर्विंशतिवर्षाणामायुर्ज्ञातुंनशक्यते २ जपहोमचिकित्साद्यैर्बालरक्षांतुकारयेत् पित्रोर्दोषैर्मृ ताःकेचित्केचिन्मातृग्रहैरपि ३ अपरेऽरिष्टयोगाच्चत्रि विधाबालमृत्यवः अल्पायुर्योगजातस्यविपत्प्रायेमृतिंवदेत् ४ जातस्यमध्यमेयोगेप्रत्यरिस्तुमृतिर्भवेत् दीर्घायुर्यो गजातानांवधभेतुमृतिर्भवेत् ५ त्रिषुयोगेषुसर्वेषुप्रत्येकं त्रिविधंभवेत ६ अल्पायुरल्पमध्यंतुपूर्णायुस्त्रिविधंभवे त मध्यमादल्पमध्यंतुपूर्णायुस्त्रिविधंभवेत् ७ दीर्घा युषोल्पमध्यंतुपूर्णायुस्त्रिविधंभवेत् एवंबहुविधंप्रोक्त मायुषस्तुविनिर्णयम् ८ अष्टमर्क्षतृतीयंचलग्नादायुरु दाहृतम् द्वितीयंसप्तमस्थानंमारकस्थानमुच्यते ९ लग्नेशरन्ध्रपत्योश्चलग्नेन्द्वोर्लग्नहोरयोः पूर्वाण्येवम्प्रयु जीयात्संवादादायुषांत्रयं १० चरेचरःस्थिरद्वंद्वाःस्थिरे द्वंद्वचरास्थिराः द्वंद्वस्थिरोभयचरादीर्घमध्याल्पकायुषः ११

## टीका

चरेति चरराश्योर्यदि लग्नेशाष्टमेशौ भवतस्तदा दीर्घमायुः स्थिरद्विस्वभावयोर्वा लग्नेशाष्टमेशौ यदि तदापि दीर्घायुः चरस्थिरयोर्यदि लग्नेशाष्टमेशौ तदा मध्यायुः स्थिरद्विस्वभावयोर्वा लग्नेशाष्टमेशौ यदि तदापि मध्यमायुः स्थिरयोर्यदि लग्नेशाष्टमेशौ तदाऽल्पायुः चरद्विस्वभावयोर्यदि लग्नेशाष्टमेशौ तदाऽल्पायुः एवं मन्दचन्द्राभ्यां लग्नहोराभ्यां निश्चितमिति ११

अल्पमध्यमपूर्णायुःप्रमाणमिहयोगजम् विज्ञायप्रथमं पुंसां ततोमारकचिन्तनं १२ वृश्चिके मकरे जन्म नृणां राहुमृतिप्रदः ग्रहस्थितांशभेदेशानिः स्यान्मारको ध्रुवम् १३ महामारकसंज्ञौतौ मांदीकेतु इतिस्मृतौ जायाकुटम्बकाधीशौ मारकावष्टमेश्वरौ १४ प्रायेणमारकोराशिदशास्वत्रविशेषतः षष्ठभेपापभूयिष्ठे षष्ठेशोमुख्यमारकः १५ षष्ठत्रिकोणगोवापिमुख्यमारकइष्यते मध्यायुषिमृतिःषष्ठदशायामष्टमस्यवा १६ षष्ठात्त्रिकोणगस्यपुनर्दीर्घाल्पविषयोभवेत् षष्ठेबलयुतेतस्यात्रिकोणेमृतिमादिशेत् १७ षष्ठेशश्चेद्बलाढ्यः स्यात्तत्त्रिकोणंमृतिंवदेत् व्यवस्थेयंसमस्तापिकारकादिदशास्वसु १८ चरेचरस्थिरद्वंद्वाइतियोराशिरागतः सएवमारकोराशिर्भवतीतिविनिर्णयः १९ मारकेशदशाकालेमारकस्थस्यपापिनः पाकेपाकयुजांपाके संभवेनिधनंदिशेत् २० असंभवेव्ययाधीशदशायां मरणंनृणाम् अभावेव्ययभावेशसंबंधिग्रहभुक्तिषु २१ तदभावेऽष्टमेशस्यदशायांनिधनंपुनः

मन्दश्चेत्पापसंयुक्तोमारकग्रहयोगतः तिरस्कृत्यग्रहान्
सर्वान्निहन्तापापकृच्छ्दा २३ मारकग्रहसंबंधीपापक-
र्ताशनिस्तदा तिरस्कृत्यग्रहान्सर्वान्निहंताभवतिध्रुवम्
२४ एतद्दशांतभुक्त्यादौविचार्यैवमृतिंवदेत् सद्रेषु
काणपश्चैवतथावैनाशकाधिपः २५ विपत्तारामत्यरी
शोवधभंगस्तथैवच आद्यंतपौचविज्ञेयौचन्द्राक्रांतग्र
हाधिपः २६ दशास्विसेषुकालेषुमारकोमरणप्रदः दु
ष्टतारापतेःपाकेनिर्याणंकथितंबुधैः २७ चेदंगपोयदिगृहे
ष्वरिरंध्रहीनंपूर्णेसुहृद्यतिसमःसममायुराहुः चाल्पमपी
हितसमारिपदेऽपिपूर्णेमध्यंचहीनमिहजातकतत्त्वविज्ञाः २८
अधुनासंप्रवक्ष्यामिमारकाख्यंग्रहंद्विज तस्मात्फल
मभेदेनकथयामितवाग्रतः २९ स्यात्मकारकलग्राच्च
चिन्तयेद्द्विजसत्तम मातृषष्ठाष्टमंरिष्फंधनंद्यूनान्तरेष्व
पि ३० सर्वपाश्चलवान्खचरोमारकोग्रहउच्यते सर्वेबल
समानत्वेमारकःसंज्ञकोग्रहः ३१ षष्ठाधिपस्तुप्रायेणब
हुमकारेणमारकः तेषांमध्येधिकारीचषष्ठेशोमुख्यमार-
कः ३२ मारकग्रहाश्रितोराशिमारकस्वामिनाथवा
ताभ्यांमहादशाकालेविज्ञात्सयोस्थिरादिका ३३ पाकेमृत्यु
विजानीयान्निर्विशंकंद्विजोत्तम मारकाग्रहयोश्चेद्यदि
वीर्यसमन्विताः ३४ तत्तद्दशांतेर्धिमरोगकष्टादिसम्
भवः षष्ठाधिपदशायांचनिधनंभवतिध्रुवम् ३५
न्यूनातिरिक्तभेदेनबहवश्चेद्यत्रमारकाः दुर्बलाश्च
राशीशोदशास्त्वल्पानिदाभवेत ३६ प्रबलस्यदशा-
यांचमहारोगार्तिमृत्युच भयशोकमृतार्द्धातिस्तास्त

राशिभयंभवेत् ३७ अथमारकदशायांचमहत्यानिध
नाश्रयी भूतामंतर्दशामाहत्वाग्रेकथयाम्यहो ३८ मा
रकग्रहाश्रयीभूतमहापाकेविचिन्तयेत् करकश्चविलग्ना
द्वासप्तमाद्वाद्वितीयकम् ३९ षष्ठाष्टरिःफनाथानामप
हारारष्टकेमृतिः तेषामन्तर्दशार्धशास्तेषांमध्येबलाढ्यकः
४० तदीयांतरदशाकालेनिधनंभवतिध्रुवम् त्वपरापा
ककालेतुरोगदुःखातिवान्द्विज ४१ बलिशुक्रस्यशनि
र्नोग्राह्यंषष्टाष्टमादिकम् इतियद्यूननाथेनज्ञेयंचैवांतरां
तरम् ४२ लग्नसप्तमयोर्मध्येबलवान्त्वद्विधीयते षष्ठा
ष्टमेशोहिसुखयोस्त्वंव्ययेशामुपलक्षणम् ४३ द्वाभ्याम
ध्येत्रभिप्रायश्चाष्टमेशोहिमारकः षष्ठस्थेपापबाल्येतु
षष्ठेशोसुख्यमारकः ४४ मध्यायुषिसमायोगेचिन्त
येद्विजसत्तम षष्ठेशाश्रयराशीशदशायांनिधनंभवेत्
४५ षष्ठात्वष्टेतराद्वापित्रिकोणेगोपिमारकः दीर्घस्या
युषियोगेनचिन्तनीयंद्विजोत्तम ४६ षष्ठस्यवातदीशस्य
त्रिकोणेसंस्थितोग्रहः तस्याश्रितस्वामिराशिदशायांनिधनं
ध्रुवम् ४७ यष्टेबलवतेविप्रतत्रिकोणेविचिन्तयेत् त
दीशेवात्रिकोणेषुप्रायेणापिमृतिंवदेत् ४८ राहुराशिस्त
मावेशावलवान्मारकःस्मृतः लग्नरन्ध्रद्वयंमध्येनाश्र
यीभूतयोद्विज ४९ सराशिमारकोज्ञेयोग्रहरीत्याविचिं
तयेत् तत्तद्राशिदशायांतुतदीशाश्रयराशिच ५०
दशायांनिधनंवाच्यंपुराशंभुमणोदितम् अपरेतुचरेत्या
दिपूर्ववत्तत्समाप्तिच ५१ योराशिःसतुविज्ञेयोमारक
स्तंतिसंमतः तद्दशायांचनिधनंनिर्दिशंकंद्विजोत्तम ५२

अत्राध्यायेषु सर्वेषु योगा गदितं मया तेषां सर्वं समा-लोच्य जातकस्य मृतिं वदेत् ९२ इतिश्रीबृहत्पाराशरहोरापूर्वखण्डसारांशे मारकभेदकथनंनामत्रयोविंशोऽध्यायः २३

---

## अथायुर्दाध्यायमारंभः

### मैत्रेयउवाच.

कर्मवेत्तामहाभागआयुर्दागहनेगतिः निर्विशङ्कंम्म-माग्रेचकथयस्वकृपानिधे १

### पराशरउवाच.

अधुनासम्प्रवक्ष्यामिआयुर्दायागतिंतव यस्यविज्ञानमात्रेणकालज्ञोभवतिध्रुवम् २ लग्नेशादष्टमेशाभ्यामायुर्दायंविचिन्तयेत् दीर्घमध्याल्पयोगंत्वंयथावद्गदतो-मम ३ चरेचरेस्थितेह्यचलग्नरन्ध्राधिपौयदि पूर्णायुर्योगविज्ञेयंनिर्विशङ्कंद्विजोत्तम ४ स्थिरर्क्षेलग्ननाथोहिलग्नेशोद्वन्द्वेस्थितं तदायुःपूर्णयोगश्चसम्भवेद्गणिताग्रणिः ५ तन्चाधीशास्थितद्वंद्वस्थिरस्थितिलग्नाधिपे पूर्णायुर्योगविज्ञेयंनिर्विचारंद्विजोत्तम ६ अथातःसंप्रवक्ष्यामिमध्यायुर्योगमुत्तमम् चरेलग्नाधिपंविप्रस्थिरेरन्ध्रपतिर्यदि ७ तदामध्यायुपज्ञेयंद्वाद्वंद्वमध्यमायुषः अधुनाल्पायुर्योगंचतवाग्रेकथयाम्यहम् ८ लग्नाधीशाचरेयस्यद्वंद्वभेरंध्रनायके तस्याल्पायुर्महाप्राज्ञनिर्वि-

शंकद्विजोत्तम ९ स्थिरेस्थिरेस्थितेहोचलग्नरन्ध्राधि
पेद्विज स्वल्पायुस्तत्रविज्ञेयंसृष्टिकर्त्रीमगेोदितम् १०
पूर्ववत्तनुचंद्राभ्यामायुर्योगंविचिन्तयेत् जन्मेंदौवास्थि
तेद्यूनेचान्यस्थेमन्दचंद्रयोः ११ त्रिधायोगःसमासो
क्ताचिन्तयेद्गणिताग्रणीः एकरूपत्रयंयोगाश्चायुपि
सुधीचिन्तयेत् १२ एकरूपत्वयोगेद्वे तृतीयोभिन्नरूप
कः द्वयोर्योगेनसंग्राह्यंनग्राह्यंचैकरूपतः १३ योगेत्र
यंत्रयंरूपभिन्नंभिन्नंभवेद्द्विज होरालग्नविलग्नाभ्यांमा
मायुर्योगनिश्चितम् १४ लग्नेशादष्टमेशाभ्यांयोगेकंकथि
तंद्विज होरालग्नाभ्यांद्वितीयंयोगयोगंविचिन्तयेत् १५
तृतीयंशनिचन्द्राभ्यांचिन्तनीयंसदाद्विज लग्नेन्दुमदनेवा
पिचिन्तयेल्लग्नचन्द्रतः १६ यंत्रोद्धारमहंवक्ष्येशृणुत्वं
तद्द्विजोत्तम चतुरेखालिखेत्तिर्यक्चतुरूर्ध्वंलिखे
त्पुनः १७ नवकोष्टत्रयेयोगाद्दीर्घमल्पाल्पमायुषि
आद्यत्रयेचरंलेख्यंतद्धस्थेक्रमेणच १८ चरस्थिरंद्वि
स्वभावंसंलिखेद्द्विजसत्तम मध्येस्थिरत्रयंकोष्टेतद्धो
द्विस्वभावतः १९ द्वंद्वंचरंस्थिरंलेख्यंनिर्दिशांकंद्विजोत्तम
अंतत्रयेद्विस्वभावंतद्धःस्थिरमादिशेत् २० स्थिरंद्वंद्वं
चरंविमक्रमेणसंलिखेत्सुधीः तिर्यक्कोष्टानुसारेणदी
र्घमध्याल्पमायुषि २१ एवंपंक्तित्रयेविप्रआदौपंक्तित्रये
णच चरोधःस्थिरपंक्तिश्चस्थिरपंक्तिरधोभयम् २२ च
तुरस्त्रांलिखेद्यंत्रंनवकोष्टांतरेद्विज प्रथमांकेनसंलेख्यम्
द्वंकोष्टेत्रयात्मके २३ तिर्यक्पंक्तौचाद्वित्रीणितिर्यक्पंक्ति
त्रयेष्वपि तदधोरूर्ध्वपंक्तौस्मिन्लिखेदंकत्रयंद्वयम् २४

मध्यपंक्त्यूर्द्ध्वसंलेख्यं द्वयं चैकं त्रयस्पुनः अन्त्यपंक्त्यूर्द्ध्वके लेख्यं त्रयं द्वेकं द्विजोत्तम २५ एवं क्रमेणवै विप्रमतिकोष्टत्रिपंक्तिषु दीर्घमध्याल्पआयुष्याद्विज्ञेयानि भवन्ति हि २६ अधरोत्तरक्रमेणैव वामभागत्रिकोष्टके दीर्घायुश्चविजानीयान्निर्विशंकं द्विजोत्तम २७ मध्यकोष्टत्रयं मध्यं दक्षिणकोष्टत्रयेल्पकम् सप्तविंशतिकाभेदाभाषिताद्विजसत्तम २८ लग्नाष्टमेशयोर्विप्रदीर्घादौच त्रयंत्रयम् नवकोष्टं विजानीयादायुःसाधनहेतवे। २९ तद्वयं संविजानीयात्कोष्टांकलग्नचन्द्रयोः नवकोष्टामहाप्राज्ञविज्ञेयालग्नहोरयोः ३० एवं चरादि राशीनां भेदेनापि पृथक्पृथक् नानाभेदादिसंयुक्तं तवाग्रेकथयाम्यहं ३१

अथ दीर्घाद्यनेकभेदानामायुचक्रम्.

| | | |
|---|---|---|
| दीर्घायुः<br>चरः १ लग्नेशः<br>चरः १ अष्टमेशः | मध्यायुः<br>चरः १ लग्नेशः<br>स्थिरः २ अष्टमेशः | अल्पायुः<br>चरः १ लग्नेशः<br>द्विस्वभावः ३ अष्टमेशः |
| दीर्घायुः<br>स्थिर २ लग्नेश<br>द्विस्वभाव ३ अष्टमेश | मध्यायुः<br>स्थिर २ लग्नेश<br>चर १ अष्टमेशः | अल्पायुः<br>स्थिर २ लग्नेश<br>स्थिर २ अष्टमेश |
| दीर्घायुः<br>द्विस्वभाव ३ लग्नेश<br>स्थिर २ अष्टमेश | मध्यायुः<br>द्विस्वभाव ३ लग्नेश<br>द्विस्वभाव ३ अष्टमेश | अल्पायुः<br>द्विस्वभाव ३ लग्नेशः<br>चर १ अष्टमेशः |

कदाचित्कश्चिद्भवतिइत्युक्तंद्विजसत्तम लग्नाष्टमेश
योरेकन्तुपरंलग्नचन्द्रयोः ३२ विलग्नहोरयोरन्यदतिप
क्षत्रयंद्विज तेदभिःप्रेत्यसंवादादित्यादियोगसंकथम्
३३ दीर्घमध्याल्पभेदेषुचरेत्यादिनिरूप्यते द्वात्रिंश
च्चतुःषष्टिपट्नवतिस्वरूपके ३४ षट्त्रिंशद्वाद्विस
साब्देष्वष्टोत्तरशताब्दके चत्वारिंशञ्चाशीतेर्विंशोत्तर
शतात्मके ३५ योगान्यग्रहमायुष्यांवाशेषेषुसमान्यतः
समागतेषुआयुर्दास्पष्टीकरणसंकथाम् ३६ पूर्णमा-
दोहानिरन्तेऽनुपातेमध्यमोभवेत् राशिद्वयस्ययोगार्द्धव
षाणांस्पष्टमुच्यते ३७ एवंद्विकानांसंचिन्त्यप्रयाणांयो
गवान्मते यत्रास्यायुर्येन्निर्णीतंयोगजालेनयाकृतम् ३८
तत्रायुर्दीर्घसंलब्धासिद्धिमध्याद्यधिर्भवेत् निर्विशंकम
हाप्राज्ञस्फुटीपातानुपाततः ३९ लब्धाब्दमनुपातेन
मध्यमध्यापियोजयेत् दीर्घायुषांविजानीयात्संस्फुटी
चपलात्मका ४० मध्यमायुर्लभेत्तत्रअल्पायुःसिद्धि
संभवम् पूर्ववदनुपातेनयत्रयुक्मध्यमायुषि ४१
कदाचित्सर्वयोगेनअल्पायुःसममागते यत्रभावानुपा
तस्यतत्रैकखण्डःसिद्ध्यति ४२ खण्डत्रयप्रयोगेनआ
युर्दाकथितामया द्वात्रिंशत्षट्त्रिंशाब्दाचत्वारिंशतमे
द्विज ४३ किंग्राह्यंकियतोग्राह्यंकदाचिद्ग्राह्यमाण
कः इतिसंशयनिवृत्यर्थंकथयामिपृथक्पृथक् ४४
लग्नेशादष्टमेशाभ्यांतदायुर्योगसंभवः चत्वारिंशात्म
कंखण्डंसंग्राह्यंद्विजसत्तम ४५ योगत्रयेषुचागत्य
अल्पायुर्द्विजसत्तम द्वात्रिंशाब्दकखण्डंचसंज्ञेयंब्रह्म-

णोदितम् ॥ ४६ ॥ कदाचिदनुपातेनयुक्तेसिद्धिःप्रजायते
दत्तावेदनतुसंदेहोरुद्रशूलंविचिन्तयेत ॥ ४७ ॥ अधुना
सम्प्रवक्ष्यामिअनुपातविधिंद्विज ॥ पृथक्स्पष्टंचसंस्था
प्यविलग्नेशाष्टमेशयोः ॥ ४८ ॥ गतराशीन्त्यजेद्विप्रवि-
द्यमानेनसंगुणेत् ॥ त्रैराशिकेकखण्डस्ययदासंवर्षमा-
दिशेत् ॥ ४९ ॥ लग्नेशस्याष्टमेशस्यत्रायुरागतयोर्द्विज
वर्षादिपिण्डयोर्योगंतदर्धंस्पष्टजायते ॥ ५० ॥ दीर्घमायुर्ले
भेद्विप्रद्विसप्ताब्देषुयोजयेत् ॥ तदाचाशीतमेयोज्यंदीर्घ
संज्ञास्फुटंभवेत् ॥ ५१ ॥ मध्यमायुषियत्रैवंषट्त्रिंशान्नभ
वेदयोः ॥ अनुपातेनचागत्येयुक्तंव्दमध्यमायुषोः ॥ ५२ ॥
त्रैराशिकंमहंवक्ष्येतवाग्रेकथयाम्यहम् प्रमाणमिच्छा
तुल्यंचस्थाप्यमाद्यंतयोर्द्वयोः ॥ ५३ ॥ मध्येफलेन्यजा
तोचसंगुणेदिच्छयाद्विज ॥ प्रमाणसंस्फुटंफलंतस्याख्य
मनुपातकम् ॥ ५४ ॥ दीर्घमध्यायुषिविप्रअनुपातानियो
जयेत् ॥ अल्पायुषियदालब्धमभावमनुपातकम् ॥ ५५ ॥
प्रवर्तमानमायुःस्याज्जन्मप्रभृतिमेवच विलग्नहोरयोरेवं
तदेवंलग्नचन्द्रयोः ॥ ५६ ॥ समागतायुषिस्तस्याचान्तखं
डेस्फुटीकृतम् ॥ सर्वयोगेषुचविप्रसंस्कारमनुपाततः ॥ ५७ ॥
होरालग्नादिमांशेतुपूर्णमंतर्वाकिंचन स्पष्टीकरणमेत
त्स्याद्दीर्घमध्याल्पकायुषी ॥ ५८ ॥ होरालग्नंस्फुटीकृत्य
विकलादिद्विजोत्तम ॥ तस्यत्रैराशिकस्पष्टंपूर्ववद्योजयेत
पुनः ॥ ५९ ॥ अन्तखण्डेषुसंयोज्यमायुष्यनिर्णयंभवेत्
द्विसार्द्धघटिकामध्येत्रिंशदंशस्फुटंद्विज ॥ ६० ॥ आनी
यपूर्वरीत्याब्दासूर्यराशेश्चलग्नभात् पूर्वाध्यायेष्वहंव-

क्ष्येतवाग्रेद्विजसत्तम ६१ अधुनासम्प्रवक्ष्यामिआयु
साधनहेतवे कक्ष्याह्रासंतथावृद्धिशानियोगेनवैद्विज
६२ लग्नाधीशःशनियुतोहोराधीशोयथाद्विज कक्ष्या
ह्रासंभवेत्तत्रयत्रशौरिश्चनिर्बलः ६४ आयुर्दायसमा
पन्नेकक्ष्यात्रीणिप्रजायते दीर्घमध्याल्परूपंचेत्तत्प्रमा
णंवदाम्यहम् ६५ षट्त्रिंशब्देनकक्ष्यैकातस्याहानिः
प्रजायते मध्यमायुर्भवेत्तत्रनिर्दिशेद्द्विजोत्तम ६६
मध्यमायुःसमागत्यस्वल्पायुर्जायतेध्रुवम् योगेल्पायुः
समायातोशनिर्योगंकरोत्यपि ६७ षट्त्रिंशाब्दस्वरूपे
णकक्षाह्रासंभवेद्द्विज अत्यल्पायुर्विजानीयाद्बालेननि
धनंभवेत् ६८ अथयोगत्रयेपिप्रशनियोगंकरोतिच
एकएकादशाब्दह्रासःकक्षाह्रासंतिदंक्रमात् ६९ ततः
फलविशेषार्थंगुणदोषौवदाम्यहम् गुणैःप्रपूरितःशौरिः
कक्षावृद्धिंकरोतिच ७० दोषयुक्तेभवेद्धानिस्ताभ्यां
निर्णयमुच्यते स्वर्गतुंगादिगुणिभिर्युक्तोमार्तण्डवंशजः
७१ कक्षावृद्धिकरोविप्रविभागेनायुवृद्धिकृत् अत्य
ल्पायुर्भवेदल्पमल्पामध्यंप्रजायते ७२ मध्यमाज्जा
यतेदीर्घंकक्षावृद्धिस्त्वलक्षणम् एवंनीचारिगःशौरिःपा
पदृष्टिसमन्वितः ७३ कक्षाह्रासकृतविप्रविभागेना
युर्हानिकृत् वृद्धाद्भवतिमध्यायुर्मध्यादल्पायुजाय
ते ७४ अल्पादन्यन्न्यकायानाबाल्येनिधनसंभवः
लग्नेशोवापिहोरेशोकेचलेशनिसंयुते ७५ पापर्क्षपाप
युक्तेवापापदृष्टिसमन्विते कक्ष्याह्रासंनकुर्वीतविनानी
चारिगैर्द्विज ७६ एवंतुङ्गादिरहितंनकक्षावृद्धिकारयेत्

शुभर्क्षेशुभसंयुक्तेशुभदृष्टिस्वतुंगगे ७७ पापयोगेनर
हितेकक्षावृद्धिकरः शनिः एवंनीचादिदोषेणकक्षान्हासः
प्रजायते ७८ साधारण्येस्थितेयुक्तेकृष्टेचातिनराकृते
अधुनासम्प्रवक्ष्यामिकक्ष्यावृद्धिद्वितीयकम् ७९ गुरु
णास्थानसंबंधेभविष्यतिद्विजोत्तम लग्नेवासप्तमेवापि
तुंगादिगुणसंयुते ८० शुभर्क्षेशुभदृग्युक्तेकक्षावृद्धिक
रोगुरो जीवनेसंशयंयस्यअल्पायुर्वृद्धिकारकम् ८१
अल्पायुषेचमध्यायुर्मध्यात्तेदीर्घमायुषि एवंभेदानु
भेदेनकथयामितवाग्रतः ८२ अथायुबाधकंविप्रदर्श
यंतिचचाग्रके दीर्घायुयोगसंप्राप्यप्रकारशकलेष्वपि
८३ किंदशायांचनिधनमितिकर्तुमपेक्षया निर्णयंत
स्यकुर्वीततत्राथैकथयाम्यहम् ८४ यस्यदीर्घायुषंलब्
धापर्यंतमध्यमायुषि निरापवादताज्ञेयातदग्रेनिधनमुच्य
ते ८५ मध्यायुषःसमायोगेलब्धापूर्वप्रकारतः नि
र्विशंकाल्पपर्यन्तंतदग्रेमृत्युचिन्तयेत् ८६ योगेल्पायुःस
मागत्यस्वयंखंडेविचिंतयेत् किंचिद्दशायांनिधनंभविष्य
तिद्विजोत्तम ८७ दीर्घेद्विसप्ततिवर्षेतदूर्द्ध्वंचिन्तयेन्मृ
तिम् षट्त्रिंशदब्दादूर्ध्वेचचिन्तयेन्मध्यमायुषि ८८
अथस्पष्टंप्रवक्ष्यामिमलिनेद्वारबाह्ययोः नवांशेनिधनं
तस्यत्रिशूलीभाषितेपुरा ८९ द्वारेद्वारेशयोविप्रमालिन्यं
तन्नवांशके जातस्यहिभवेन्मृत्युः सत्यमेवनसंशयः
९० पाकभोगद्वयेविप्रचिन्तनीयंप्रयत्नतः स्वयंपापः
पापदृष्टेःपापखेटसमन्विते ९१ तन्नवांशदशाकाले
निधनंचभवेद्ध्रुवम् निर्विशंकमहाभागतदंतरगतेमृतिः ९२

द्वारेचवाद्यराशेवानवांशेनिधनंभवेत् पापयोगेनचांशेशान्त
दनंतरगतेद्विज ९३ यदादशामदोराशिःपापसंज्ञामजायते
लग्नाद्यावतयोदूरंतावद्दूरंविभागकाः ९४ अधुनासंभव
क्ष्यामिनवांशकपदेनच प्रतिराशिनवांशेननवाब्देनदशा
स्थिरम् ९५ विशेषरूपमेमोक्तंनवाब्दाद्वारवाह्ययोः
राशिसंबंधिनोयाद्याश्चरदशायांविचिन्तयेत् ९६ भावानां
स्पष्टकृत्येवंद्वारबाह्यविचिन्तयेत् यद्भावस्पष्टतद्दीसग्रह
नवांशेषुभोद्विज ९७ रीत्यब्दपसमानीतेमरणंभवति
ध्रुवम् एवंतन्वादिभावानांस्पष्टीकार्यायथार्थतः ९८
ग्रहनवांशायुरीत्याच्च द्वादशानांनवांशके नवांशायुसमा
नेनविशेषंचसमादिशेत् ९९ एवंविचिन्तयेद्रूपिमद्वारबा
ह्यद्वयोरपि मलिनत्वमथैवंदंनिधनंनतुकथ्यते १००
अन्येनरस्यमलिनेसर्वत्रइतिचिन्तयेत् पापराश्याक्रा
न्तरांशेपाकांशेनिधनंद्विज १०१ एवंचरदशाकालेद्वारे
शस्यमलिन्यते नदीशाश्रयराशोस्मिन्त्वशपाकेभवेन्मृतिः
१०२ एवंचरदशामध्येचिन्त्यतेद्वारबाह्ययोः त्रिकोणान्त
रदशामासेनिधनंजातकस्यच १०३ अथवायोगायुर्दाय
समासिसमयेष्वपि प्रोक्तेमरणाश्रयीभूतेचिंतनीयंद्विजो
त्तम १०४ खण्डेवायदिपाकस्यवाह्यस्यमलिनेयदि द
शानहिसमासेयातत्त्रिकोणाब्दकेमृतिः १०५ अधुना
संभवक्ष्यामिमृत्युयोगापवादके शुभदृष्याशुभयोगेशु-
भेखेचरसंयुते १०६ नचद्वारेनवाह्येचद्वारेशेचोपलक्षि
ते द्वारेशाश्रयनवांशेतुदशायांनिधनंभवेत् १०७ अ
थेवंशुभदृग्योगाभावेप्यपिद्विजोत्तम नवांशकालेषुदशा

अपवादंवदाम्यहम् १०८ लग्नेशतुंगगेविप्रयस्यजन्मनि
जायते द्वारेद्वारेशवाह्यानांमालिन्येपियदाभवेत् १०९
शुभदृग्योगभावेचनवांशेनिधनोच्यते नतुमृत्युर्भवेत्तस्य
नवाब्दाद्वृद्धिजायते ११० द्वारबाह्यनवांशेचदशायान्त
मपिद्विज पुनर्नवाब्दपर्यन्तंद्वारबाह्यंकरोत्यपि १११
द्वितीयराशिसंबन्धेनवाब्देग्रहरीततः समागतेतदायुश्च
वृद्धिर्भवतिनिश्चितम् ११२ बृहान्तर्कदामृत्युस्तस्यनि
श्चात्मकोच्युतः सर्वात्मनामृत्युयोगः शुभदृग्योगसंभवः
११३ लग्नेशतुंगराशिस्थेइत्याकांक्षाद्विजोत्तम तस्यावि
निर्णयंकर्तुंस्पष्टमुक्तेनभाषितम् ११४ यस्यवृद्धिकरेवि
प्रपदेशस्यदशान्तरे निधनंचभवेत्तस्यनिर्विशंकंवदाम्य
हम् ११५ पदेशस्यनवांशेवाल्लग्नाष्टमत्रिकोणगे दशा
यानिधनंतस्ययस्यवृद्धिपदंभवेत् ११६ यदिवृद्धाब्दमा
दायनिधनंनभवेत्कदा दशात्रयाणामंतेतुमृत्युर्भवतिनि
श्चितम् ११७ पदेशस्यदशातत्रलग्नारूढपदस्यच रंध्रा
रूढतदाग्राह्यंतदीशस्यदाद्विज ११८ तदाश्रयेराशिदशा
ग्राह्यमाणाद्विजोत्तम अत्रकेवलखेटानांदशायांचिन्त
येत्सुधीः ११९ यद्यपदेशस्यदशानिसर्गलविलक्षणा
दशाविंशोत्तरीरीत्यादशाचाष्टोत्तरीमता १२० तदापदद
शायांचनिधनंगणितागणिः अक्षपदेतदीशस्यपदशोच
तयोर्दशा १२१ नाथांतेनसमारीत्याराशिखेटाह्वयोर्दशा
निवर्त्तितादशाविप्रतदेतुविचिन्तयेत् १२२ चरपर्या
दशारीत्यापदेशस्यदशान्तरे अवश्यंनिधनंतस्यनिर्वि
शंकंद्विजोत्तम १२३ तथापदेशस्यदशातत्त्रिकोणेचभो

द्विज नवांशकदशारीत्या समानीय दशान्तरे १२४ पुनः पदत्रिकोणस्थामनंतरगते द्विज दशायां निधनं वाच्यं जातकस्य न संशयः १२५ नवांशकदशा प्रोक्ता द्विधाग्राह्या द्विजोत्तम ताभ्यां लग्नाष्टमाधीशाच्च अथवा राशिकोणपः १२६ दशायां निधनं वाच्यं भिर्भूली भाषितं पुरा इत्येषां निधनं योगादवश्यं चिन्तयेद् द्विज १२७ इति श्री बृहत्पाराशरहोरापूर्वखण्डसारांशे आयुर्दाकथनं नाम चतुर्विंशोध्यायः २४

---

## पराशर उवाच.

अथातः संप्रवक्ष्यामि प्रकारं वै द्वितीयकम् यस्य विज्ञानमात्रेण आयुर्दासूचिको भवेत् १ विलग्नात्मदशाधिप अष्टमेशान्तयोर्द्वयोः मध्ये चैको वलिं चिन्त्यं सोपि स्यादायुः प्रदो ग्रहः २ केन्द्रादित्रिकयोगेन दीर्घमध्याल्पमायुषि सा विज्ञेया महाभाग्य तवाग्रे प्रवदाम्यहम् ३ केन्द्रस्थितेपि दीर्घायुर्मध्यायुः पणफरे स्थिते आपोक्लिमे स्थिते त्वल्पमायुर्भवतीति निश्चितम् ४ कर्कलग्ने पुकुण्डल्यां तदेव चिंतयेद् द्विज लग्नाद्वा मदने वापि वाष्टमेशान्तयोर्द्वयोः ५ ताभ्यां मध्ये वली चैकः स्थिते केन्द्रादि पूर्ववत् दीर्घमध्याल्पभेदेन आयुर्निश्चित्य पूर्ववत् ६ पूर्ववद् द्वन्द्वखण्डस्यत्रै राशिकक्रमेण च आयुर्दावाः कृतस्पष्टं प्रवक्ष्यामि इदं वचः ७ स्वस्मिन् समवले खेटे ऽनधिके च वले द्विज नवीयतायां दीर्घादिविपरीत्यायुषी भवेत् ८ दीर्घमध्ये च थाल्पं

चत्र्यल्पंवाकिंचितिर्भवेत् विपरीतंयोगभंगेपिसत्यमेवन
संशयः ९ सप्तमात्सप्तमेविप्रनवमेकारकेस्थिते वि-
परीतंचदीर्घादियोगायुर्नतुसंशयः १० अथाग्रेऽनेकभेदा
नामायुषोनिर्णयःकृतः दीर्घादित्रयरूपेणइत्युक्तंब्रह्म
णोदितम् ११ जन्मलग्नाष्टमेशौद्वौचिन्तयेज्जन्मपत्र-
के पंचमेकादशेविप्रदीर्घायुश्चमजायते १२ ला
भेतृतीयगेमध्यआयुर्दायंविचिन्तयेत् लाभेवित्तेत्रि
कोणेवाआयुरल्पंभवेद्विज १३ गतायुर्लाभगेद्वेच
जातकोपिनजीवति एवंसमस्तजन्तूनामीदृशयोगंवि
चिन्तयेत् १४ क्षपाकरांशमारभ्यबाणभिश्चकरादि
भिः उदयादिविनागर्भेरायुर्लग्नंप्रकल्पयेत् १५ ग
णनायांचभावानामायात्यष्टविनाडिका त्रैराशिक
क्रमेणैवंत्रिंशदंशंप्रकल्पयेत् १६ राश्यंशककला
दीनांशुद्धस्पष्टंद्विजोत्तम कृतायुस्पष्टलग्नस्यत्र्यव
श्यांकमिदंमतम् १७ अथैवभिन्नमार्गेणआयुर्दा
यंनिरूपितम् तनुतन्वेशतद्राशियत्पुभानांत्रिकोणके
१८ अल्पमध्यचिरायुष्येरूपवर्षप्रमाणतः अष्टमे
शादियोगेननिर्याणंकारकोग्रहः १९ लग्नत्रिकोणगे
ल्पायुर्लग्नेशस्यत्रिकोणगे मध्यमायुर्विजानीयान्निर्वि
शंकंद्विजोत्तम २० लग्नेशात्स्वीयराशौवात्रिकोणेर
न्ध्रनायके दीर्घायुषीप्रदातव्यंपुराशंभुप्रणोदितम् २१
तेषांमध्येत्रिकोणानांविभागेचनवंकथम् स्वल्पमध्य
चिरायुष्यंद्वादशाब्दाधिकेनच २२ अल्पायुषस्त्रयो
भेदास्त्रयस्थानेपृथक्पृथक् विलग्नेशाष्टमेशादिलग्न-

स्थपिद्विजोत्तम २३ द्वादशाष्टभवेदायुश्चतुर्विंशतिपंच
मे नवमेचषट्त्रिंशाब्दमित्येवंनतुसंशयः २४ लग्ने
शराशिकोणेषुलग्नरन्ध्राधिपादिचेत् तत्रास्थितेष्टवेदाब्दे
षष्ठ्यब्दंपञ्चमेस्थिते २५ नवमस्थेद्विसप्ताब्दं तन्नैव
कमिदंमतम् लग्नेशाश्रितराशीशात्रिकोणेषुस्थितेद्विज
२६ लग्नेशादष्टमेशादित्रिभागदायमायुपि लग्नस्थेच
तुराशीतिः पंचमेशद्नवांशके २७ नवमेष्टोत्तरशतं
वर्णेष्वायुर्विनिर्णयः द्वादशाब्दानुपातेनचस्थेतच्छुभम
णोदितम् २८ तुलामेषविलग्नेषुमायःशुक्रोभवेद्बली
सदशादौस्वरूपंस्यादन्तेचस्यात्स्वभावतः २९ पूर्वार्द्धे
चस्पष्टदशामेषस्यापितुलस्यच चरपर्यायसमानीतेश्च
ब्देचाकाब्दयोजयेत् ३० द्वादशाब्दाधिकेकृत्वापूर्व
मायुःसमागते नाथांताब्दसमूहेचमेलनीयंद्विजोत्तम
३१ तत्रचायंविभागश्चलवाग्रेकथितंद्विज लग्नेशादौ
समारंभप्रथमाशादिसंख्यया ३२ योजयेद्द्वादशाब्दंच
आयुसाधनहेतवे अन्तेत्रिंशत्तमंशान्तेलग्नेस्पष्टेसति
द्विज ३३ स्वभावतद्भवाच्छून्येद्वादशाब्दंतुयोजये
त् मध्येतथानुपातेचविधायंचयदागतम् ३४ तद्यो
जनीयंकर्तव्यंनिर्विंशंकस्वभावतः इत्येवनाथांताब्दाये
स्वभावजोभवतिच ३५ नाधिकंचैवनाब्देनस्युकोल
ग्नस्थितोयदि भानुनष्टेचशून्यात्तेनयुक्तंद्वादशात्मकः
३६ एकोष्टमेशःस्वोच्चस्थेपर्यायार्द्धम्प्रयच्छति नात्र
स्थोनाशयेत्पर्यायधमायुपिनिश्चितम् ३७ नीचरं
ध्रेशसंयुक्तःपर्यायार्द्धंपृथक्पृथक् ग्रहाविनाशयत्यं-

वनिर्णीतिपरमायुषि ३८ उच्चरन्ध्रेशसंयुक्तेग्रहैःमर्त्ये कमुन्नयेत् एकैवमध्यपर्यायपरमायुर्विनिश्चितम् ३९ रविकुजशनिराहुमरणेबलिनःक्रमात् विशेषदुर्बलंहित्वागृह्णीयाद्बलिनंसुधीः ४० केतुश्चशनिवद्रोचनार्थेनेमित्यनिर्दिशेत् शनिनाराहुणावापियुक्तेसौम्यैरवीक्षिते ४१ पर्यायमेकंतन्मध्यएकराशौमृतिंवदेत् तयोस्तुरुभयोगेतुतदाशामृतिमादिशेत् ४२ भोगराशौदुर्बलेवाप्रबलेवाग्रहेस्थिते तथापिनिर्दिशेत्कालेमरणंतन्नसंशयः ४३ केतोःश्रीमद्दसानस्थेनाथवान्शुभवीक्षिते केतोदशांतेमृत्युः स्याच्छुभदृष्टेनकिंचन ४४ तन्वार्धीशाष्टमेशाभ्यांयोगेनायुःकृतेद्विज अष्टमेशात्तदुच्चस्थेचरपर्याब्दप्रमाणके ४५ अर्धाधिकाब्ददलंवयोजयेत्पूर्वमायुषि एवंनाथांतरीत्याचचरपर्यातिरिक्तकः ४६ मर्यादयापियद्यायुरष्टमेशेनदीयते तत्सर्वमर्धादिक्येचाविधेयाद्विजसत्तम ४७ एवरन्ध्रपतिर्विप्रनीचराशिगतोपिच दीयमानायुरर्द्धंचे न्नाशयतिनसंशयः ४८ एवंरन्ध्रपतिर्विप्रनीचखेटेन संयुतः तद्ग्रहेणदीयमानमायुरूर्द्धंविपश्यति ४९ एवरन्ध्रपतिर्विप्रतुंगखेटेनसंयुतः ग्रहास्तेनदीयमानमायुरर्द्धंचवर्द्धति ५० एवमुक्तंचविप्रेन्द्रपरमायुर्विनिश्चितम् लग्नेशाच्चाष्टमेशाभ्यांयोगायुर्दीयमागते ५१ तेषुसंस्कारमाज्ञेयमिदंपूर्वोक्तसंकथाम् लग्नेशादायुरित्येवतत्तद्योगकलात्मकम ५२ संयुक्तांश्चग्रहांउच्चनीचादिगुणदोषतः

प्रदायतः ५३ द्वित्र्यादिमृत्युयोगश्चप्रबलापूर्वभाषि
तम् नैसर्गिकोपिवीर्यायतस्यपाकेमृतिर्भवेत् ५४ र
व्याररराहुमंगूनांचतुःखेदांतरेबली तस्ययोगानुसारेण
जातकस्यमृतिंवदेत् ५५ अष्टमेशेनसंयुक्तेशनिराहुकु
जारविः नवीक्षितेग्रहैर्वाथतस्यमृत्युंविनिर्दिशेत् ५६
एषांतरेषुप्रबलासातत्स्वामिकराशिगे पाकेमृत्युंविजा
नीयान्निर्विशंकंद्विजोत्तम ५७ एतेषांचतुःखेदानाम
ध्येचेकोवलिःक्वचित् तस्यराशिदशाकालेमृतिस्थान
विनिर्दिशेत् ५८ मृत्युस्थानविभूतायांसिन्द्धायांचमहा
दशा तत्तस्यापिक्रमेणैवतदनंतरदशाप्रदा ५९ रा
शितुमारकत्वेनजलवदागमेपिच शूलाद्यधिष्ठातृग्रह
दशान्तरगतेमृतिः ६० शुभग्रहेणसम्बन्धेशनिराह्वो
स्तयोरपि तत्तत्स्वामिदशाकालेमरणंचाथनिर्दिशेत्
६१ तदाश्रयेणराशिपाकेमृत्युर्भवतिनिश्चितम् नि-
र्विशंकंमहाप्राज्ञपुराशंभुमणोदितं ६२ सुखदुःखा
दिसंब्रूयात्पाकराशौविचिन्तयेत् भोगान्तरगतात्तु
तत्तद्वीर्यानुसारतः ६३ सबलासुखसम्भूताहुर्बला
दुःखदायका वैषम्येनफलंवाच्यंतथामरणमेवच ६४
द्वादशेदशमेवापिसंस्थितेपुच्छनायके पापदृष्टेदशामा
सेतदन्तरगतेमृतिः ६५ द्वादशेदशमेकेतुःशुभग्रहः
निरीक्षिते नायंयोगोमहाप्राज्ञनकष्टंनतुमृत्युकृत् ६६
प्राणिनीत्युक्तविमेन्द्रप्राणानयनकथ्यते राश्याधीन
बलीज्ञेयंतदुक्तंकथ्यतेधुना ६७ अग्रहास्यग्रहोज्यायां
न्सग्रहेस्वाधिकग्रहः सोमेनचरास्थिरद्वंद्वाःक्रमात्स्युर्ब-

लशालिनः ६८ अधुनासम्प्रवक्ष्यामिमध्यायुर्योगनि
श्चितम् मारकांतरेणविमतवाग्रेकथयाम्यहम् ६९
विलग्नात्मदशावान्येदुभयोरष्टमेशयोः संस्थितेन्यतरो
विप्रमध्यायुर्योगउच्यते ७० अयंयोगःस्थितेसेवादीर्घ
स्यमध्यपादके बालस्यमध्यतापादकेपिदितिविवेचन
म् ७१ अथदीर्घादियोगेषुत्रयेषुद्विजसत्तम कक्षा
ह्रासकृतेयोगान्दर्शयामितवाग्रतः ७२ लग्नसप्तमयो
विप्रद्विहोदशयोरपि षष्ठरंध्राधिपस्यापिजनुर्लग्नेपिवः
चिन्तयेत् ७३ पापाक्रांतेपापयोगेपापमध्यत्वमागते
कक्षाह्रासोविजानीयान्निर्विशंकंद्विजोत्तम ७४ दी
र्घस्यमध्यमायाताभवेदायुपिमध्यमं अल्पादल्पंचवि
ज्ञेयंकक्षाह्रासस्यलक्षणम् ७५ कक्षाह्रासयदा-
र्थोपिपूर्ववज्जायतेध्रुवम् अथैवंलग्नकुंडल्यांपापयोगत्रि
कोणगे ७६ लग्नपंचमभाग्येषुपापयोगकृतेद्विज क
क्षाह्रासभवेद्विप्रनिर्विशंकं विधेःस्रुत ७७ अत्रा-
स्मिन्कारकेलग्नेचिन्तयेज्जनुलग्नवत् कारकांशेद्यूनरा
शेःपापमध्यत्वमेवहि ७८ एकयोगःसविज्ञेयः कक्षा
ह्रासंचपूर्ववत् अथैककक्षाह्रासस्यचापवादंवदाम्य
हम् ७९ एकस्यकक्षाह्रासंचवित्तपंचान्यथाभवे
त् पूर्ववच्छुभयोगेनकक्षावृद्धिर्भविष्यति ८० ज
नुर्लग्नेकारकेचचिन्तयेत्पूर्ववद्विज लग्नेद्यूनेधनेरिप्के
षष्ठेरन्ध्रेत्रयस्थले ८१ शुभखेटकृतेयोगाःकक्षावृ-
द्धिर्भवत्यपि चिंतयेत्पूर्ववद्विप्रत्रिकोणेषुद्वयस्थले ८२
जनुर्लग्नेकारकेच शुभयोगंकरोतिच कक्षावृद्धिर्नसंदे-

ह्रोभविष्यतिद्विजोत्तम ८३ कारकस्थेत्रिकोणेषुनीचस्थे
पापखेचराः कक्षाव्ह्रासमहाभाग्नावितयेनभविष्यति
८४ कारकांशेत्रिकोणेषुशुभखेटेक्रमस्थले कक्षावृद्धि
र्भवेत्तत्रनसंदेहोद्विजोत्तम ८५ कारकेपापखेटाच्चचा
त्तगेपापसंयुते कक्षाह्रासंभवेत्तत्रमणीतेद्विजसत्तम
८६ कारकेशुभसंयुक्तेस्वतुंगेशुभखेचराः कक्षावृद्धि
र्भवेत्तत्रानिर्विशंकंद्विजोत्तम ८७ पापकारकगतान्
ह्रासवृद्धिर्योकथिताद्विज अथैवगुरुणाकक्षाह्रास
वृद्धिर्वदाम्यहम् ८८ वित्तेव्ययेलग्नषष्टेत्रिकोणेपाप
योर्द्विज कक्षाह्रासंभवेत्तत्रपूर्ववद्द्विजसत्तम ८९ गु-
रौनीचस्थतुंगेचसंयुक्तेऽशुभखेचरैः कक्षाह्रासंकरो
त्येवनिर्विशंकंद्विजोत्तम ९० वित्तेयंचगुरोज्ञेयंपूर्वव
द्योजनेद्विज मागुक्तार्यकृतेयंचकक्षासर्वामचक्षते ९१
तथैवशुभयोगेषुचापवादंवदाम्यहम् उक्तस्थानेशुभे-
यौगेपूर्णेन्दुशुक्रयोर्द्विज ९२ योगमकरणेकक्षाह्रासं
चनतुवृद्धिंच तत्रैकराशिवृद्धिश्चभवत्येवनसंशयः ९३
पूर्ववदुक्तपापेषुशनिनायोगकारकम् कक्षाह्रासंचत
त्रैवंयत्रैकराशिह्रासकृत् ९४ अधुनासम्प्रवक्ष्यामि
विशेषेणद्विजोत्तम आलंब्यस्थिरदशायांचयोगानिथ
नमेवच ९५ शशिनंदपावकाचोदित्युक्ताचदशास्थिरा
चरेस्थिरंद्विस्वभावेभानुनाराशिषुद्विज ९६ त्रिभिस्त्रि
भिराशिरेकंखण्डाश्चत्वारएवच कस्मिन्खण्डेपुनिध
नंतस्ययोगंविचिन्तयेत् ९७ अस्मिन्खण्डेमृत्युयोगस्त
स्मिन्खंडेविचिंतितम् मरणंभवतीत्यर्थनिर्विशंकंवदा-

म्यहम् ९८ योगत्रयमहं वक्ष्ये दीर्घमध्याल्पभेदतः च
त्वारः खण्डे यत्रायुरागतं तत्र चिन्तयेत् ९९ दीर्घायुर्योग
वत्तु यस्मिन् खण्डे समागते तस्मिन् खण्डेषु निधनं भव-
त्यपि न संशयः १०० वक्ष्यमाणप्रकारेण मध्यमल्पायु
षि द्विज निधनाश्रयखण्डेषु लक्षणाक्रांतया दशा १
तद्दशायां च निधनं भवत्येव द्विजोत्तम कदाचिन्मृतिस्त
त्र क्लेशादुःखभयानि च १०२ भवंति तत्र संकार्यं पुन
रित्थं वदाम्यहम् पापद्वयमध्यगते राशिपाके मृतिर्भवेत्
१०३ लग्नाद्वाकारकाद्विप्र पापाक्रान्ते त्रिकोणगे द्वाद-
शाष्टमराश्येवं पापाक्रान्तं भवेदपि १०४ तद्दशायां च
निधनं जातकस्य न संशयः खण्डास्थिरदशायाञ्च वि
तर्नीयं प्रयत्नतः १०५ पाकराशेस्त्रिकोणेषु द्वादशाष्टमरा
शिषु पापाक्रांते तद्दशायां निधनं भवति ध्रुवम् १०६
शुभमध्ये मृतिर्नैव पापमध्ये मृतिर्भवेत् पुनरपि निधना
र्थाय राशिदोषं वदाम्यहम् १०७ द्वादशाष्टमयोर्पत्योर्द्द
ष्टे क्षीणेन्दुशुक्रयोः तद्दशायां च निधनं सत्यमेव न संश
यः १०८ क्षीणेन्दु केवलं दृष्टिः शुक्रदृष्टिश्च केवलम्
दृष्टिमात्रेण निधनं स्थिरदशायां विचिन्तयेत् १०९ मृ-
त्युस्थानेन यद्दृष्टिः पापमध्यर्क्षं पश्यति तस्याद्दशास-
मालोक्य व्योमषष्ठाधिपाद्द्विज ११० निरीक्षितेन वा
दोषद्वयोः स्थाने द्विजोत्तम तत्रैव निधनं ज्ञेयं भाषितं च
तवाग्रके १११ पूर्वोक्तनिधनस्थाने महापाकं नरेष्वपि
व्योमषष्ठाधिपो विप्र तयोरंशो निरीक्षिते ११२ राशांतरद-
शाकाले निधनं भवति ध्रुवम् अन्तर्दशायां रूपेद्दे निधन

स्थानमेवच ११३ इतिश्रीवृहत्पाराशरहोरा
पूर्वखण्डसारांशे आयुर्दायकथनंनामपंचविंशोऽध्यायः २५

## पराशरउवाच.

अथातः सम्प्रवक्ष्यामिनिधनार्थेविशेषतः मकारांतर
दशायास्तदरुद्रोद्विजसत्तम १ लग्नधूनाष्टमेशौच
तयोर्मध्येचयोबलिः प्राणीरुद्रः सविज्ञेयः सूर्यादिखे
चरोपिच २ तयोर्मध्येबलीचिंत्यःशुभदृष्टेनसंयुते
दुर्बलःसोपिगौणाख्योरुद्रग्रहइतीर्यते ३ तत्रैवप्राणि
रुद्रस्यविशेषगुणयत्फलम् प्रवक्ष्यामिनवाग्रेचशृणु
ष्वत्वंमहामते ४ शुभैर्युक्तेशुभैर्दृष्टेशुभसंबंधकार
कः प्राणीरुद्रःसविज्ञेयस्तस्याधीनायुरेवच ५ रु
द्रशूलान्तमायुःस्यात्त्रिकोणान्तेतथापुनः लग्नान्तेपं
चमान्तेचनवमांतेत्रयस्थले ६ चिन्तनीयंमहाप्राज्ञ
तत्तद्राशिदशान्तरे अल्पमध्यंचदीर्घायुर्योगभेदान्
संशयः ७ यत्राल्पायुःसमायोगेत्रिकोणमध्यमान्त
रे आयुस्तत्रैवविज्ञेयस्तदग्रेचक्रमेणच ८ योगे
मध्यायुषंप्रासेत्रिकोणेमध्यमांतगे आयुर्दायसमाप्तिश्च
निर्विशंकंद्विजोत्तम ९ दीर्घायुर्योगसंलब्धेत्रिकोणांत
वमांतगे दशांतरेमहाप्राज्ञआयुर्दायसमाप्तये १०
अथैवलग्नधूनादिआरभ्यश्चदशाक्रमः प्रवृत्तिर्जन्म
तोज्ञेयानिर्विशंकंद्विजोत्तम ११ यत्ररुद्रग्रहस्यापिस्तु
भदृत्वंभाव्यते तत्रजीवस्यनष्टत्वात्नेदंफलमितिस्थितिः

तिः १२ अथैवरुद्रशूलान्तमायुर्दायेतिकारणे यो-
गेस्मिंश्चसमुत्कर्षात्किंचिद्दर्शयतिद्विज १३ प्राणीरु
द्रेशुभेदृष्टेफलंपूर्वोक्तदायकः शुभयोगेनसंदेहोरुद्र
शूलान्तमायुषि १४ स्थितएवफलंजन्मकथितंकार-
णान्तरे निरुक्तेशुभसंयोगेकिंतर्कयतिभोद्विज १५
पूर्वमेवफलंसाधोसमुत्कृष्टेतदेवचेत् सुतरांतदेववक्त
व्यंनिर्विशंकंद्विजोत्तम १६ अनेनपूर्वयोगेनफलंकिंचि
द्विन्यूनता अद्योत्तितादुक्तकालात्पूर्वपश्चात्मृतिर्य-
दि १७ निरुक्तयोगश्चतदाअपवादंवदाम्यहम् र
विविशायनितरांपापयोगोभवेद्द्विज १८ योगोयंनिष्फलं
वाच्यंपुराब्रह्ममणोदितम् इदंफलंनभवतियोगेस्मिन्द्वि
जसत्तम १९ नाशयोगस्यवक्तव्यंफलंवापिभयंकर
म् अधुनासंप्रवक्ष्यामिगौणरुद्रस्यवैद्विज २० गुण
प्रकर्षेणफलंविशेषेणतथाग्रतः गौणरुद्रेमहामाज्ञम-
न्दारेन्दुनिरीक्षिते २१ अभावेशुभयोगस्यपापयोगान्त
रेतथा शूलान्तात्फलविभेद्रआयुर्दायेभवत्यपि २२
शुभदृष्टेवाशूलांतात्परत्रायुर्भवेदपि योगद्वयपरत्वेनयो
जनीयंनसंशयः २३ एतद्योगद्वयंकिंचिन्न्यूनताग्राम
पिद्विज नेदंफलंप्रवक्तव्यंमैत्रेयोउभापितेपुरा २४
शुभदृष्टिभवेच्चैवयोगंचपरपूर्ववत् शुभदृष्टवसंस्थाच
पापयोगाद्यभावतः २५ कृतएकोहियोगश्चपूर्वयोज
नमेवच अशुभयोगेस्तुभौदृष्टौयोगोयमपरोद्विज २६
पापयोगेरभावेचशुभदृष्टौचसंयुते कैसुतिकाख्यन्याये
नसिद्धोयोगस्तृतीयकः २७ पुरामणोदितश्शंभुस्त-

20196
वाग्रेकथयाम्यहम् द्वितीययोजनायांतुशुभदृष्टिसमन्विते
२८ पापयोगैरभावेचयोगः प्रथमउच्यते पापयोगेमहाभा
ग्शुभदृष्टिह्यभावके २९ द्वितीययोगपक्षेहंपूर्वस्मिन्द्वि
जसत्तम पापयोगैरभावेनशुभदृष्टिविवर्जितः ३० के
मुतिकाख्यन्यायेनतृतीयोयोगउच्यते अथैवमाणिरुद्र
स्यह्युक्तापक्षांतरेकथा ३१ तत्रैवप्रथमेयोगेशुभदृष्टि
विवर्जिते शुभयोगादयोगश्चद्वितीयोक्तेनयोगकृत् ३२
तृतीयेनद्वयःस्यापियोगभंगंकरोत्यपि अधुनोक्तेत्रया
भावेमंदादिदृष्टिमात्रतः ३३ एवंस्थितेसुयोगस्वनिः
शंकंप्रतिपद्यते अशुभैःखेचरैर्दृष्टेपापयोगइतिस्थितिः
३४ शुभयोगविहीनेचमन्दारेन्दुनिरीक्षिते तदायुःप्र
तीविमसमानादितियोजयेत् ३५ प्रथमद्वितीयेसंतोपातयोग
रभावच योगोभंगमपेक्षाचतृतीयोक्तमहंवदेत् ३६ पा
पदृष्टिमात्रमेवंयोगनिर्वाहकारणे अपवादविहीनेनइत्ये
वोक्तंतृतीयके ३७ माणिवागौणरुद्राभ्यांताभ्यामाश्रि
त्यमेवच गुणविशेषआयुरंतवक्ष्यामीहमहामते ३८
गौणरुद्रशुभैर्योगेशुभदृष्टिसमन्विते रुद्रशूलांतमायु
श्चयोजनीयंद्विजोत्तम ३९ पूर्वोक्तमाणिरुद्रेणद्वियोग
प्राणकेनच द्वाभ्यांशूलांतमायुश्चतवाग्रेकथितंमया
४० अधुनासंप्रवक्ष्यामिद्वयोर्निर्वाहकारणे तयोरूपं
भिन्नभिन्नंशृणुध्वंमुनिपुंगव ४१ माणिरुद्रेशुभैर्दृष्टे
योगोयंद्विजसत्तम शुभयोगेतिकावातीश्चूलांतायुर्विनि
श्चितम् ४२ गौणरुद्रेशुभैर्दृष्टेयोगोयंक्लेशदायकः रो
गशोकभयंकर्तामृत्युंनैवकरोतिच ४३ शुभयोगेमहा

प्राज्ञयोगोयंबलवत्तरः तस्यशूलांतमायुश्चनिर्दिशेत्
नसंशयः. ४४ उभौरुद्रौशुभग्रहैर्योगदृष्टौद्वयोरपि.
शुभग्रहेणक्लेशश्चरुद्रशूलांतमायुषि ४५ प्राणीचामा
णिरुद्राभ्यांकृतयोगद्वयेनच तयोर्वासंभवंव्यामितवा
ग्रेद्विजसत्तम ४६ मार्तंडरहितेचान्यःपापयोगकृते
द्विज योगद्वयंनभवतिपातमुक्तंद्वयोरपि ४७ शु-
भयोगःशुभैर्दृष्टैरुभयेपिविनारविम् पापयोगकृतोवि
प्रभवयोगोविनश्यतु ४८ शुभयोगःशुभैर्दृष्टिरभावे
नभवत्यपि यत्रायुःकथयांचक्रुर्वक्तव्योद्विजसत्तम
४९ उभयोःपापयोगेचकश्चिद्रोगार्तिकोभवेत् क्लेश
शोकनृपाद्भीतिर्देशपर्यटनंद्विज ५० शुभदृष्टिस्त्व
भावेचशुभयोगविवर्जिते पापयोगमभावेनमरणंसा
रणंदशा ५१ शुभयोगदृष्ट्याभावेपापयोगेद्विजोत्त
म पुत्रदशाचलश्चैवसप्रसादोनसंशयः ५२ अ-
स्मिन्प्रकरणेचैवमुपपत्तौद्विजोत्तम शुभवर्गोपापव
र्गोतवाग्रेकथयाम्यहम् ५३ अर्कारमंदफणिनःक्र
मात्क्रूराश्चथाश्रयम् चंद्रोपिक्रूरएवात्रकश्चिदंगार-
काश्रयात् ५४ गुरुशिखिकविज्ञाश्चयथापूर्वंशुभ
ग्रहाः क्रूरखेटामहामाज्ञचार्काद्याउत्तरोत्तरम् ५५
क्रूराःक्रूरखेटगाश्चक्रूराणिह्यपवादकम् शुभक्षेत्रगताः
क्रूराःक्रूरतामुपशाम्यंति ५६ गुर्वोदयःशुभग्रहाय
थापूर्वंबुधःकविः कवितःकेतुर्विज्ञेयंकेतवोवाक्पतिर्द्वि
ज ५७ क्रमेणैवविजानीयाच्छुभखेटातरोत्तरम्
यथापूर्वंक्रूरग्रहाःक्रूराश्रयसमागते ५८ एवंक्रोयंस-

मापन्नंक्रोयेयंत्शोभनांश्रयाः एवंगुर्वादिसौम्याश्चशुभाः श्रेयातिशोभनाः ५९ क्रूराश्चयेसौम्यखेटासौम्यतान श्यतेक्वचित् एवमेवापरावुक्तंकथयामिद्विजोत्तम ६० प्रत्येकंशुभराशिस्सउच्चस्थोवाबुधः शुभः गुरुशुक्रौ चसौम्यस्थौततोन्येच्चशुभाःस्मृताः ६१ पूर्वस्मिन्पाप योगेनयोगभंगद्वयेद्विज निरूपितंतवाग्रेचानिर्विशंकंन संशयः ६२ योगद्वयेपिभंगार्थेपापदृष्टोविशेषकम् नदर्शयतिकदापिस्यात्तवाग्रेकथयामिवै ६३ शुभग्र हैरभावेचमन्दारेन्दुनिरीक्षिते पापयोगेशुभेदृष्टेपरत श्चायुषिद्विज ६४ माणिरुद्रेप्यगोणेनशुभयोगविवर्जि ते पापयोगेथवादृष्टेतथाशुभनिरीक्षिते ६५ चाप रतानुविज्ञेयाःपूर्ववद्विजसत्तम अत्रोपपदपापाच्चरा- होरप्युपलक्षणम् ६६ एवंसूर्यातिरिक्तोपिपापयोग मथापिच तस्यैवहानुवादाच्चराहोश्चिदुपबृंहणात् ६७ परिग्रहदर्शनाचपरतोरुद्रपाश्रयात् शुभस्था नेश्चायुरंतःशूलत्रयमलंघनात् ६८ नतुशूलदशा- यांचआयुरंतंद्विजोत्तम एवंशूलेचेतदंतशूलरीत्ये तिवार्थके ६९ पूर्वोक्तेपापयोगेनशुभयोगेथदृष्टितः कृतयोगद्वयस्यापिभंगार्थेचवदाम्यहम् ७० शुभयो- गेनचेविमपापयोगोतिदुर्बलः शुभदृष्टिकृतेयोगःपाप- दृष्टेःकथंक्षमः ७१ नभंजनसमर्थस्यकोटियत्नकृते द्विज शुभकृद्योगभंगार्थेपापयोगमपेक्षितम् ७२ शुभयोगेदृष्टिकृतेपापयोगापिभंजकः शुभदृष्टिकृते योगःपापयोगोविनश्यति ७३ यदायुर्दायमध्यस्थये

दितव्यंद्विजोत्तम पापमात्रस्यशूलत्वेप्रथमक्षेमृतिर्वदेत्
७४ द्वौरुद्रेपूर्ववक्ष्येहंयदिएकत्रसंस्थिते मित्रमध्य
मशूलर्क्षेशुभमात्रेंतिममृतिः ७५ द्वयोपापीचप्रथमे
शूलेमृत्युर्भवत्यपि यद्येकरुद्रपापीचद्वितीयः शुभखे-
चरः ७६ मध्यशूलेमृतिर्विप्रनिर्विशंकंभविष्यति शु-
भग्रहद्वयेविप्रएकत्रयदितिष्ठति ७७ अंतशूलेमृ
तिर्ज्ञेयाविशूलीभाषितम्पुरा एवंभेदानुभेदेनज्ञेयंस
र्वंत्रबुद्धिमन् ७८ शूलक्षेत्रेचरुद्रौद्वौयदिपापोथ
वाशुभः मिश्रग्रहोथवाविप्रचिन्तयेद्बलवत्तरः ७९
दीर्घायुरायुयोगेनभंगाभावेद्विजोत्तम मृत्युशूलदशा
यांचपापयोगंविनारविः ८० क्रूराश्रयेषुक्षेत्रेषुशु
भनामाश्रयेषुच निर्योगमितरेषांतुशूलर्क्षेनिर्दिशेद-
यम् ८१ शुभनामत्रपक्षेतुतथाक्रूराश्रयेषुच त
स्मिन्जातकशूलर्क्षेमृतिंब्रूयान्नसंशयः ८२ यद्यमा
नीरुद्रयोगेयत्किंचिन्न्यूनताद्विज तर्हिरुद्राश्रयंतच्च
त्रिधानपरतोपिच ८३ रुद्राश्रयेपिचायुर्दासमानि
भवंतिध्रुवम् प्रायेणचिन्तयेद्विप्रपूर्वापरमयत्नतः
८४ यद्यात्रमाणेरुद्रस्ययोगपूर्णंभवत्यपि रुद्र
शूलेपरत्वेनआयुर्दायसमासचे ८५ रुद्राश्रयेणमाये
णशूलमेकद्वयंत्रयम् उल्लंघनंकृतेविप्रयदियोगविशेष
तः ८६ तर्हिरुद्राश्रयंष्चवंमायेणायुर्भवेद्ध्रुवम् ता
वद्वर्षेणकथनंजीवनंजातकस्यच ८७ इत्युक्तंच
प्रयाणेचपूर्वंरुद्राश्रयाद्द्विज आयुर्दायसमासंच
कष्टयोगादिकारके ८८ रुद्राश्रयात्तुह्येवंहिनिरु-

क्तेऽप्यायुषिद्विज ॥ कंभवेद्विशेषरूपंतथाग्रेदर्शयामिच
८९ मेषलग्नेविशेषेणआयुरुद्राश्रयांतके ॥ कष्टरोगा
दिकुर्वीतपूर्णायुर्नसमाप्यते ९० दंहरागौस्थितोरुद्रो
प्राणीगोएणद्वयेपिवा रुद्राश्रयंतदंतेवाआयुर्दायभव
त्यपि ९१ आयुर्दायोगभेदेनप्रथमेमध्यमोत्तमे ॥ दर्श
यितितथाग्रेचकथांशंभुमणोदिताम् ९२ स्वल्पमध्यम
दीर्घायुर्योगादिकंवदेद्द्विज ॥ तदायुर्दायमल्पादियथो
क्तंकथितंमया ९३ स्वल्पायुः प्रथमेशूलेमध्यमायुर्द्वि
तीयके ॥ दीर्घायुश्चतृतीयांतेशूलांतेनिधनंभवेत् ९४
अधुनासंप्रवक्ष्यामितथाग्रेद्विजनन्दन ॥ मृत्युर्मुख्यात्र
यीभूतादशायांतर्दशास्वपि ९५ ततः फलविशेषार्थ
माहेश्वरगृहंद्विज ॥ लक्षयंतितदाग्रेचतस्मादायुर्विनि
श्चितम् ९६ चिन्तयेत्कारकेलग्नेअष्टमेशोमहेश्वरः
अथैवान्यप्रकारेणमाहेश्वरंवदाम्यहम् ९७ कारकेतु
गराशिस्थेसग्रहोबलवत्तरः ॥ रिःफरंध्राधिपोमध्येसोपि
माहेश्वरोग्रहः ९८ कारकाच्चग्रहाभावेनाथोमाहेश्व
रोभवेत् ॥ रिष्फरंध्राधिपोविप्रबलेसामान्यतांयदि ९९
द्वयंमाहेश्वरंयातोयथारुद्रग्रहोद्वयम् ॥ ताभ्यांनिर्ण
यार्थंचप्रकारान्यद्वदाम्यहम् १०० सकारकस्या
गश्चेद्राहुकेतुरर्थविना ॥ माहेश्वरोभवत्येवविकल्पनद्वि
जोत्तम १०१ कारकस्याष्टमेपापग्रहोमाहेश्वरोभवेत्
रविचन्द्रौचचान्द्रीचगुरुशुक्रशनिस्तमः १०२ अति
नागणनायांचयत्पष्टःकारकग्रहात् ॥ सोपिमाहेश्वरो
ज्ञेयानवभागसमुच्चयात् १०३ एवंनवविभागश्च

राशिव्यवहारोच्चतात् तदीयंतृतीयोरवेटोरव्यादिनामहे
श्वर १०४ यद्याकारकस्थानाच्चषष्ठाधिपलयेस्थिते
सोपिमाहेश्वरोज्ञेयोनिर्विशंकंद्विजोत्तम १०५ महे
श्वरग्रहस्यापिब्रह्मसाहित्यकेनच ततोब्रह्मग्रहंवक्ष्ये
विशेषेणफलायवै १०६ लग्नाद्वासप्तमाद्वापिरिपुरं
ध्रव्ययाधिपाः एतेषुबलवानविप्रमेषादिविषमस्थिते
लग्नसप्तमयोर्मध्येराशिर्योबलवान्भवेत् उच्चरपृष्ठ
भागाद्यसंयोगोविद्यमानतः १०८ एतद्गुणत्रयंयुक्त
स्सोपिब्रह्माग्रहोच्यते लग्नस्यपृष्ठभागंचषट्कंचधून
वादिकम् १०९ सप्तमस्यपृष्ठभागेषट्कलग्नादिकं
द्विज बलवान्विषमस्थोपिब्रह्माखेटसहोच्यते ११०
ब्रह्मणालक्षणाक्रांतेबलवान्वापिपातयोः शनिराहु
मथाकेतुर्यदिषष्ठोग्रहोद्विज १११ रव्यादिगणनायांच
शन्यादौतृतीयोग्रहः स्थानात्षष्ठराशिगेचषष्ठरा
श्याधिपोथवा ११२ सोपिब्रह्माग्रहोज्ञेयोनिर्विशं
कंद्विजोत्तम बहुनाब्रह्मणाक्रांतेकिंग्रहंग्राह्यमाण
कः ११३ इतिसंदेहनिर्णायंतवाग्रेकथयामिच
द्वित्र्यादिग्रहाणांचयोगोब्रह्माणलक्षितः ११४ यो
गःस्वजातियोग्राह्यकारकंजातियोग्रहः बहूनामधि
कोभागःसोपिब्रह्माग्रहोच्यते ११५ राहोर्ब्रह्मत्वयो
गेनत्वधिकारीयदाभवेत् विपरीतंविजानीयात्सर्वेषु
न्यूनभागकं ११६ इत्येकपापपूर्वोक्तंब्रह्मणाग्रह
कारकात् रन्ध्राधीशोष्टमस्थोवाजात्यमाणेक्यवा
क्यतः ११७ द्वौब्रह्माविपरीत्यर्थं सायवाबहुब्रह्मणा

सामान्यभागान्तरद्विकतमोग्राह्यमाणकः ११८ सर्वेभागसमानस्तुमग्रहात्सग्रहोबली इतिन्यायेनविज्ञेयंवलःयान्ब्रह्मणोच्यते ११९ अह्मत्वेनप्रधानेनब्रह्मकार्यंकरोत्यपि सचब्रह्मग्रहंग्राह्यंपुराशंभुमणोदितम् १२० अधुनासंप्रवक्ष्यामिब्रह्ममाहेश्वरोग्रहो विशेषेणफलंब्रूयात्तवाग्रेद्विजनंदन १२१ ब्रह्मग्रहाश्रितेशस्याष्टशादिपरिचिन्तयेत् माहेश्वरर्क्षपर्यंतंजातकस्यायुषिद्विज १२२ तत्तद्राशित्रिकोणेषुराशिरंतर्गतेमृतिः चरश्चस्थिरपर्यंतंदशायांचिंतयेद्द्विज १२३ तथामहादशायांचआयुर्दायंविलोकयेत् विंशोत्तर्यादिकंचैवयथान्यायेषुयोजयेत् १२४ माहेश्वरस्थयोराशिरष्टमेशाश्रयोद्विज तत्तद्राशित्रिकोणेषुराशिरंतर्गते मृतिः १२५ अत्राब्दइतिनिर्देशात्तत्तद्राशिदशाक्रमः अब्दाद्वादशधाभागेअंतरेकेकराशितः १२६ एकेकोब्दांतरदशाविज्ञेयागणिताग्रणी द्वादशाब्दोल्पमाधिक्येभानुनाभागदापयेत् १२७ मासेंतरदशाज्ञेयान्यूनाधिकन्नजायते अब्दानांद्वादशाधिक्येभानुराश्यान्तरंदशा १२८ दशाब्देद्वादशान्यूनंयस्मिन् राशौदशाद्विज भागद्वादशमध्येचसमासंतदनंतरम् १२९ महादशाक्रमेणैवचालनीयेतिज्ञापितम् चार्कभागेन्तरदशानयनंद्विजसत्तम १३० इतिश्रीबृहत्पाराशरहोरापूर्वखण्डसारांशेरुद्रमाहेश्वरब्रह्मग्रहलक्षणकथनंनामषड्विंशोध्यायः २६

## अथ पितुरादिनिर्याणमाह.

अधुनासंप्रवक्ष्यामिपितुरादिद्विजोत्तम योगंनिर्याणका रव्यातंयथाशंभुपुरोदितम् १ लग्नसप्तमयोर्मध्येयोरा शिर्बलवान्द्विज तस्याराशिसमारभ्यक्रमेणपूर्ववद्द्विज २ प्रवर्तकदशारीत्यारुद्रशूलदशांतरे भविष्यतिपितु र्मृत्युर्निर्विशंकंद्विजोत्तम ३

## अथ मातुर्निर्याणम्.

लग्नाद्वासप्तमाद्वापिबलिराशिचतुर्थकः तस्याश्शूल दशायांचमातुर्मृत्युर्नसंशयः ४

## भ्रातृनिर्याणम्.

लग्नाद्वासप्तमाद्वापिबलीवीक्षेत्तृतीयकम् तस्याःशूले दशायांचभ्रातृनिर्याणमेवच ५

## भगिनीपुत्रनिर्याणमाह

लग्नाद्वासप्तमाद्वापिराशिपंचमकेबली तस्याःशूलदशा यांचनिर्याणंभगिनिपुत्रयोः ६

## ज्येष्ठभ्रातुर्निर्याणम्

लग्नाद्वासप्तमाद्वापिएकादशेबलीद्विज तस्यशूलद शायांचनिर्याणंज्येष्ठभ्रातृकम् ७ लग्नाद्वासप्तमाद्वा पिनवराशिबलीद्विज निर्विशंकंभवेत्तस्यशंभुनाक्

थितम्पुरा ८ मातापित्रोःकारकाभ्यांचिन्तयेत्पूर्ववद्द्वि
ज तदायुर्निधनंचापिदीर्घादीनांप्रभेदतः ९ भानु
भार्गवयोर्मध्येसद्वीर्यमधिकोद्विज ग्रहादित्यादिरीत्या
च्चसरवेटःपितृकारकः १० चन्द्रमंगलयोर्मध्येतथैव
रविशुक्रयोः वलेनरहितःसोपिपापग्रहनिरीक्षिते ११
पित्रादिकताभजतेयथाक्रमद्विजोत्तम उभयोर्बलसा
म्येचह्युभोपुत्रादिकारको १२ द्विविधंचिन्तयेत्तत्रमा
ण्यमाणिविभेदतः पित्रादिकारकस्यैवंप्राणीफलंवदा
म्यहम् १३ पित्रादिकारकेविप्रशुभग्रहनिरीक्षिते
मातृकारकाश्रयीभूतराशितत्त्रिकोणगे १४ दशा
यांनिधनंवाच्यंमातापित्रोरथत्रयम् अथप्राणीकार
कस्यतत्वाग्रेकथितम्फलम् १५ अप्राणिकारकस्यै
वमष्टमेशोबलान्वितः तस्याश्रयीभूतराशित्रिकोणे
निधनंभवेत् १६ यदारन्ध्रेसवीर्यान्यतच्छूलेनिधनं
द्विज पितृमातृकारकेचशूलेनिधनमेवच १७ यद्दा
प्राणीकारकस्यएवंऋक्षांतरेणच फलंवैनिर्दिशोद्विप्र
रंतद्भावनायके १८ अप्राणिकारकफलंनिर्देशोद्ध्रयगे
द्विज सर्वप्रकाराइत्येवंचिन्तयेद्रुद्रशूलवत् १९ अ-
ल्पाद्यायुर्योगंचेदायुर्दानयनंद्विज दशासंचारभेदेन
आयुर्दायंचपूर्ववत् २० राश्यादौनिर्णयंचादौतद्वि
शेषफलाप्तये तन्वादिव्ययभावेषुभावतत्तत्समुचित
म् २१ तत्तत्कारकमाश्रित्यराश्यारूढंशिनि तयेत्
द्वारबाह्यादिशंसर्वंराश्याद्यंद्विजसत्तम २२ अधुना
संप्रवक्ष्यामिपितुर्निधनहेतवे विशेषकंदर्शयंतिपुन

रुक्तंचवैद्विज २३ रविज्ञेयःक्रियेयोगेलग्नाद्रिष्फ१२
क्षेगेस्थितौ बुधसूर्यौश्रयीभूतलग्नमेषेदशान्तरे २४ ल
ग्नभूतस्यमेषस्यासिंहस्यापिदशान्तरे चक्रुर्व्यंपितृनिध
नंनिर्विशंकंद्विजोत्तम २५ लग्नेयदिपापखेटोमेषराशौ
रविस्तथा योगेमेषमहापाकेवापिरंतर्गतेमृतिः २६
अधुनासंमवक्ष्यामितवाग्रेद्विजनन्दन बाल्येचापित्रोमर
णंमयोक्तंचविशेषतः २७ पित्रोःकारकयोर्विप्रमाण्य
माणिहीनोपिवा व्यर्कोतेपापयोगेचशुभेयोगविवर्जि
ते २८ दशाब्दान्यूनमित्येवंपित्रोर्मृत्युर्यथाक्रमम् र
विदृष्टाशुभंदृष्टेनायंयोगोद्विजोत्तम २९ रव्यारूढवि
लग्नेस्मिन्पित्रोर्भावंविचारयेत् तद्दशायांफलंवाच्यं
पित्रोर्दुःखसुखादिकम् ३०

## अथ कलत्रनिधनमाह

कलत्रकारकःखेटस्तदारूढराशिचिन्तनम् तत्त्रिको
णदशायांचकलत्रनिधनंभवेत् ३१

## अथान्यनिधनमाह.

तत्तत्कारकाश्रयेचत्रिकोणर्क्षदशान्तरे तेषांचमातुला
दीनांनिधनंभवतिध्रुवम् ३२ एवंभावकलत्रादिनद्दशा
रूढंयंत्रके चिन्तयेदायुसामर्थ्येसर्वंफलसमानकम्
३३ लग्नाच्चकारकाद्वापितृतीयेपापखेचरे शुभेदृष्टे
थवापिमदुष्टम्मरणमुच्यते ३४ तत्तत्कारकतदीशा
त्तृतीयेपापयोगकृत् तेषांतेषांप्रवक्तव्यंदुष्टंमरणमेवच
३५

तत्तद्भावात्कारकेशास्तृतीयेशुभदृष्टियुक् तेषांतेषां शुभेयोगैर्मरणंभवतिद्विज ३६ शुभाशुभद्वयेयोगेदृष्टेवापितृतीयगे शुभाशुभात्मकंविप्रमरणंभवतिध्रुवम् ३७ ॥ ॥ श्रीरामोजयतु ॥

## अथ मरणनिमित्तान्याह.

तृतीयेभानुनादृष्टेतथायुक्तेवलाढ्यके राजहेतोर्भवेन्मरणंनिर्विशंकंद्विजोत्तम ३८ तृतीयेचंद्रेणयुतेषष्ठेवापश्यतोमृतिः तृतीयेशनिराहुभ्यांदृष्टेवापियुतेथवा ३९ विषार्तिमरणंवाच्यंजलाद्वावह्निपीडनात् गर्तादुच्चात्प्रपतनंबंधनेवामृतिर्भवेत् ४० तृतीयेचक्ष्मान्दीन्चषष्ठेवापियुतेद्विज कृमिकुष्ठादिनासत्वंमरणंचाविनिर्दिशेत् ४१ तृतीयेगुरुणादृष्टेयुक्ते शोफादिनामृतिः तृतीयेभृगुयुक्दृष्टेमहरोगेणवैमृतिः ४२ बहुयुक्तेतृतीयेचबहुरोगयुतामृतिः तृतीयेतत्रवेदाश्चयोगेदृष्टियुतेथवा ४३ तयेवचन्द्रयोगेचतत्तद्रोगेनवैमृतिः अनेनयोगभावेनतस्य मृत्युंसुनिश्चितम् ४४

## अथ निधनदेशभेदमाह.

तृतीयेशुभयोगेनशुभदेशेमृतिर्भवेत् पापेनकीटके देशेमिश्रेमिश्रस्थलेमृतिः ४५ तृतीयेगुरुशुक्राभ्यांयोगेज्ञानेनवैमृतिः ४६ गुरुशुक्रातिरिक्तान्ययोगेशिथिलतामृतिः मिश्रेमिश्रामृतिरितिएवंकर्माणि

कर्मभावविशेषेणफलदाताद्विजोत्तम ४७ लग्नद्वाद
शमध्येचशान्त्यादिस्त्रितयग्रहाः स्थितापित्रोर्नसंस्का
रंकुर्वीतनिजहस्ततः ४८ लग्नादीनांचभावानांपूर्वा
र्द्धेद्वादशादिकम् परार्द्धेस्थितमन्त्यादिवीक्षितेपिन
संशयः ४९ लग्नादियस्यमध्येतुशुभग्रहनिरीक्षिते
नामयोगंविजानीयात्पुराशंभुमणोदितम् ५० इति
श्रीबृहत्पाराशरहोरापूर्वखण्डसारांशे निधनकथनंनाम
सप्तविंशतितमोध्यायः २७

---

## पराशर उवाच.

अथातःसम्प्रवक्ष्यामिराजयोगादिकम्पदम् ग्रहाणां
स्थानभेदेनराशिदृष्टिवशात्फलम् १ तपस्थानाधिपो
मंत्रीमंत्राधीशोविशेषतः उभावन्योन्यसंदृष्टौजात
श्चेदिहराज्यभाक् २ यत्रकुत्रापिसंयुक्तौतौवापि
समसप्तमौ राजवंशोद्भवोबालोराजाभवतिनिश्चि
तम् ३ वाहनेशस्तथामानेमानेशोवाहनेस्थितः
बुद्धिधर्माधिपाभ्यांतुदृष्टोचेदिहराज्यभाक् ४ सु
तेशकर्मेशसुखेशलग्ननाथायदाधर्मपसंयुताश्चेत् नृ
पोत्तमश्चेदिहवारणाढ्यःस्वतेजसाव्याप्तदिगन्तरालः ५
सुखकर्माधिपौचैवमंत्रिनाथेनसंयुतौ धर्मेशेनाथवा
युक्तोजातश्चेदिहराज्यभाक् ६ सुतेश्वरोधर्मपसंयु
तश्चेल्लग्नेश्वरेणापियुतोविलग्ने सुखेचवामानगृहेथ
वास्याद्राज्याप्तिषिक्तोयदिराजवंशः ७ धर्मस्था

नेगुरुक्षेत्रेस्वगृहेभृगुसंयुते पंचमाधिपसंयुक्तेजातश्चे
दिहराज्यभाक् ८ निशार्द्धोच्चदिनार्द्धोच्चपरसार्द्धद्विना
डिका शुभान्तदुद्भवोराजाधनीवातत्समोपिवा ९
चन्द्रः कथिंकविश्चन्द्रंपश्यत्यपितृतीयगः शुक्राच्चंद्रेत
तःशुक्रेतृतीयेवाहनार्थवान् १०

## अथ द्वादशयोगमाह.

लग्नवित्तोस्त्वदुश्चिक्योत्रितुर्योतुर्यपञ्चमो द्विपात्मजो
षष्टमारोस्त्रीरन्ध्रोमृतिभाग्यको ११ धर्मकर्मोखला
भौचारिष्फलाभौतनुव्ययो पुष्कलालाभयोगाद्यराज
भृत्यंचमूपकम् १२ अमात्यंदारुणंकर्मराजयोगंमिया
मृतिम् भाग्यव्ययंराजयोगंभूमिद्रव्यमृणव्ययम् धि
त्तहानिर्द्वादशैतेयोगावैसर्वदास्मृताः १४

## अथ चतुर्विधसंबंधमाह.

प्रथमःस्थानसंबन्धोदृष्टिजस्तुद्वितीयकः तृतीयस्त्वेक
तोदृष्टिस्थित्यैकत्रचतुर्थकः १५ अन्योन्यगौतथास्वे
स्वेसंयुतावन्यभेस्थितः पूर्णेक्षितोमिथोवापिचैकवर्ग
गतौयदा १६

## अथाग्रे राजाऽमात्ययोगादिबाधकमाह.

तदायोगोभवेत्तत्रविबलोनैवयोगकृत् शत्रुयुक्तेक्षितो
पापवीक्षितोनैवयोगकृत् व्ययमृत्युःषडायस्थावथ
वातत्संयुतो १७ यदाधीशौतदाप्यत्रभवतोनैव

कर्मभावविशेषेणफलदाताद्विजोत्तम ॥ ४७ ॥ लग्नद्वाद
शमध्येचग्नान्यादिस्त्रितयग्रहाः ॥ स्थितापित्रोर्नसंस्का
रंकुर्वीतनिजहस्ततः ॥ ४८ ॥ लग्नादीनांचभावानांपूर्वा
र्द्धेद्वादशादिकम् ॥ परार्द्धेस्थितमन्यादिवीक्षितेपिन
संशयः ४९ लग्नादियस्यमध्येतुशुभग्रहनिरीक्षिते
नामयोगंविजानीयात्पुराशंभुमणोदितम् ५० इति
श्रीबृहत्पाराशरहोरापूर्वखण्डसारांशे निधनकथनंनाम
सप्तविंशतितमोध्यायः २७

---

## पराशर उवाच.

अथातःसम्प्रवक्ष्यामिराजयोगादिकम्पदम् ग्रहाणां
स्थानभेदेनराशिदृष्टिवशात्फलम् १ तपस्थानाधिपो
मंत्रीमंत्राधीशोविशेषतः उभावन्योन्यसंदृष्टौजात
श्चेदिहराज्यभाक् २ यत्रकुत्रापिसंयुक्तौतौवापि
समसप्तमौ राजवंशोद्भवोबालोराजाभवतिनिश्चि
तम् ३ वाहनेशस्तथामानमानेशोवाहनेस्थितः
बुद्धिधर्माधिपाभ्यांतुदृष्टौचेदिहराज्यभाक् ४ सु
तेशकर्मेशसुखेशलग्ननाथायदाधर्मपसंयुताश्चेत् नृ
पोन्तरश्चेदिहवारणाढ्यःस्वतेजसाव्याप्तदिगन्तरालः ५
सुखकर्माधिपौचैवमंत्रिनाथेनसंयुतौ धर्मेशेनाथवा
युक्तोजातश्चेदिहराज्यभाक् ६ सुतेश्वरोधर्मपसंयु
तश्चेल्लग्नेश्वरेणापियुतोविलग्ने सुखेथवामानगृहेथ
वास्याद्राज्याधिपःक्तोयदिराजवंशः ७ धर्मस्था

तंभवेत् उपासनाद्वितीयेस्याद्भक्तिस्त्वैरावतेभवेत् ३०
धर्मेशेपारिजातस्थेतीर्थकृत्त्वत्रजन्मनि पूर्वेपिमनुजो
वाप्योह्युत्तमेचोत्तमोभवेत् ३१ गोपुरेमखकर्ताचप
रेचैवात्रजन्मनि सिंहासनेभवेद्वीरः सत्यवादीजिते
न्द्रियः ३२ सर्वधर्मपरित्यागीधर्मैकपदमाश्रितः
पारावतेपरेचैवहंसश्चैवात्रजन्मनि ३३ लगुडीपितृदं
डीस्याद्देवलोकेनसंशयः द्वितीयेचन्द्रपदंगच्छेत्कृ
त्वाविहयमेधकम् ३४ ऐरावतेतुधर्मात्मास्वयंध-
र्मोभविष्यति श्रीरामःकुंतिपुत्रोवाद्वितीयानभवि
ष्यति ३५ पारिजातादीनांवाच्यंफलमेवंकसंस्थितम्

## अथ विशेषयोगफलमाह

अथयोगफलंब्रूमोज्ञातव्यंचविशेषतः ३६ लक्ष्मी
स्थानंत्रिकोणंचविष्णुस्थानंचकेन्द्रकम् तयोःसंबं
धमात्रेणराजयोगादिकंभवेत् ३७ केन्द्रपुत्रेशयो
र्योगेयोगेमात्याभिदोभवेत् पारिजातादिकेतौचतदा
योगःस्फु
तरबलंभवेत् ३८ लग्नेशोनधनेशाद्यान्नैवयोगः स्फु
रत्वाधिपात् मंत्रेशोमात्यतांयातिसमनाधीशयोगतः
३९ कर्मेशस्यतुयोगेनराजासाचिव्यतामियात् के
न्द्रधर्मेशयोर्योगेराजावैराजवंदितः ४० धर्मकर्माधि
पौचैव्यत्ययं तावुभौस्थितौ युनक्तिचेत्तदावाच्यं
पारिजातस्थितौतौ सर्वसौख्यसमन्वितम् ४१ उत्तमेचोत्तमोनृपोगजवाजी
तुनृपोलोकानुशिक्षकः उत्तमेचोत्तमोनृपोगजवाजि
रथादिमान् ४२ गोपुरेनृपशार्दूलोनृपैश्चाधिमघृ-

योगकृत् राजामात्यादियोगानांनश्यंतिवक्रगावपि १८

## अथ पारिजातादिशुभाशुभविचारमाह

त्रिषडायाष्टरिष्फेशाः पारिजातेव्यवस्थिताः दायका न्यभवेभावेयत्रयेयेविचारिताः १९ द्वितीयेचोत्तमास्ते तेतृतीयेचान्नदामता चतुर्थेतेचराजानः पंचमेगुरवो मताः २० भूदेवाश्वतथाषष्ठेदेवाज्ञेयाश्वसप्तमे अ ष्टमेपशवोज्ञेयादुःखदाश्चात्रजन्मनि २१ दुःस्था६ ८।१२ श्चेवभवत्येतेतदातेनैवबाधकाः केन्द्रकोण स्थिताश्चैववाधकान्नभवेन्नवत् २२ विषमेचभवेत् स्त्रीणांसमेवैपुरुषोमतः षष्ठेवैचोरितंद्रव्यं स्यष्ट मेहननंकृतम् २३ हननंहरणंरिष्फेतृतीयेकेतवं कृतम् पौश्चल्यंवंधनेप्रोक्तंकृतघ्नत्वंभवेत्कृतम् २४

## अथपारिजातादिफलमाह.

तन्वेशःपारिजातस्थस्तदादाताभवेऽत्रहि उत्तमेचोत्त मोदातागोपुरेपुरुषत्त्वयुक् २५ सिंहासनेभवेन्मान्यः शूरःपारावतांशके सभासदोदेवलोकेद्वितीयेचमुनी मतः २६ ऐरावतेगजेंद्रुष्टादिग्योगानभवेद्ध्रुवम् र धेरशोवापिजायेशोराज्येशोप्यंवमर्वाह् २७ पारि जातेसुताधीशोविद्याचैवकुलोचिता उत्तमेचोत्त माविद्यागोपुरेभवनांकिता २८ सिंहासनेतथावा च्यंसाचिव्येनयुतातथा पारावतेतथावाच्यंब्रह्मवि द्यासमन्वितम् २९ सुतेशेदेवलोकस्थेकर्मयोगान्वि

तंभवेत् उपासनाद्वितीयेस्याद्भक्तिस्त्वैरावतेभवेत् ३०
धर्मेशोपारिजातस्थेतीर्यकृत्त्वत्रजन्मनि पूर्वेपिमनुजो
वाच्योह्युत्तमेचोत्तमोभवेत् ३१ गोपुरेमखकर्ताचप
रेचैवात्रजन्मनि सिंहासनेभवेद्वीरः सत्यवादीजिते
न्द्रियः ३२ सर्वधर्मपरित्यागीधर्मैकपदमाश्रितः
पारावतेपरेचैव हंसश्चैवात्रजन्मनि ३३ लगुडीपितृदं
डीस्याद्देवलोकेनसंशयः द्वितीयेचन्द्रपदंगच्छेत्कृ
त्वावैहयमेधकम् ३४ ऐरावतेतुधर्मात्मास्वयंध
र्मोभविष्यति श्रीरामःकुंतिपुत्रोवाद्वितीयोनभवि
ष्यति ३५ पारिजातादीनांवाच्यंफलमेवैकसंस्थितम्

## अथ विशेषयोगफलमाह

अथयोगफलंब्रूमोज्ञातव्यंचविशेषतः ३६ लक्ष्मी
स्थानंत्रिकोणंचविष्णुस्थानंचकेन्द्रकम् तयोःसंबं
धमात्रेणराजयोगादिकंभवेत् ३७ केन्द्रपुत्रेशयो
र्योगेयोगोमात्याभिदोभवेत् पारिजातादिकेतोचतदा
तत्सबलंभवेत् ३८ लग्नेशेनधनेशाद्यान्नैवयोगः स्व
रवाधिपात् मंत्रेशोमात्यतांयातिसप्तमाधीशयोगतः
३९ कर्मेशस्यतुयोगेनराजासाचिव्यतामियात् के
न्द्रधर्मेशयोर्योगेराजावैराजवंदितः ४० धर्मकर्माधि
पौचैवव्यत्ययेतावुभौस्थितौ युनक्तिचेत्तदावाच्यं
सर्वसौख्यसमन्वितम् ४१ पारिजातस्थितौतौ
तुनृपोल्लोकानुशिक्षकः उत्तमेचोत्तमोभूपोगजवाजी
रथादिमान् ४२ गोपुरेनृपशार्दूलोनृपेभ्योग्रिमपू

जितः सिंहासनेचक्रवर्त्तिः सर्वक्षोणिप्रपालकः ४३
अस्मिन्योगेहरिश्चन्द्रोमानवश्चोत्तमस्तथा बलिर्वैश्वा
नरोराजाश्चन्येचैवतुचक्रपाः ४४ कलियुगेचभावि
तातथाराजायुधिष्ठिरः भविताशालिवाहश्चतथाविज
याभिनन्दनः ४५ नागार्जुनस्तथाभूपस्तदन्येचैव
गोपुरे पारावतांशकेन्यश्चजातामन्वादयस्तथा ४६
देवलोकेतुप्रथमेहरेश्चैवावतारणम् मत्स्यादिकल्कि
पर्यन्ताः सप्तवर्गाद्भवामताः ४७ द्वितीयेदेवलो
केतुज्ञेयाश्चेन्द्रादयः परे ऐरावतेचप्रथमेजातः स्वायं
भुवोमनुः ४८ एवंसर्वप्रकारेणज्ञात्वाचैवविचक्ष
णः कोणकेन्द्रादिनाथानांयोगः सर्वविधायकः ४९
चतुःकेन्द्राधिपोह्येनकोणपोचधनाधिपः ऐरावतादि
संस्थास्तेकुर्वल्लोकोत्तरोत्तरम् अनेनैवप्रकारेणवेत्तिस
र्वंप्रबुद्धिमान् ५० इतिश्रीबृहत्पाराशरहोरापू
र्वखण्डसारांशेराजयोगादिविचारकथनंनामाऽष्टाविंशो
ध्यायः २८

---

## पराशर उवाच.

अथातः संप्रवक्ष्यामिराजयोगान्द्विजोत्तम येषांवि
ज्ञानमात्रेणनृपाणांपूज्यभाग्भवेत् १ येयेयोगाः
पुराशंभुभाषिताःशैलजाग्रतः तेषांसर्वमहंवक्ष्येत
वाग्रेद्विजनन्दन २ चिंतयेत्कारकंलग्नंजनुर्लग्नमथवा
द्विज राजयोगप्रदातारोलग्नोहोमणतोदितम् ३

आत्मकारकपुत्राभ्यांराजयोगंप्रकल्पयेत् तनुपंच
मनाथाभ्यांतथैवद्विजसत्तम ४ विलग्नात्पंचमाधी
शः पुत्रात्मकारकद्वयोः विप्रसंबंधयोगेनज्ञेयावीर्यब
लान्विताः ५ लग्नेथसप्तमेवापिलग्नेशेसप्तमाधिपे
पुत्रात्मकारकौविप्रलग्नेवासप्तमेपिच ६ संबंधेवी
क्षितेतत्रदृष्टेवंपंचमाधिपे उच्चतांचनवांशस्थेशुभग्र
हनिरीक्षिते ७ महाराजेतियोगोयंसत्रजातःसुखी
नरः गजवाजिरथैर्युक्तसेनासंगमनेकधा ८
भाग्येशात्कारकेलग्नेपंचमेसप्तमेपिवा राजयोग
प्रदातारोगजवाजिधनैरपि ९ कारकाद्विचतुर्थेच
पंचमेभावगेद्विज शुभखेटेनसंदेहोराजयोगंददा
तिच १० कारकात्तृतीयेषष्ठेराश्योरुभयपापयुक्
राजवंशोद्भवेविप्रराजयोगस्तथाभवेत् ११ लग्ना
धीशाद्यूननाथाद्धनेतुर्येचपंचमे शुभखेटयुतेविप्र
राजाचभवतिध्रुवम् १२ तृतीयेषष्ठेपापेराजाच
भवतिध्रुवम् योगद्वयेशुभेपापेकथंस्यात्फलनिश्च
यः १३ नदरिद्रीभवेज्जीवोनराजाजायतेद्विज
समानकुलजंप्राज्ञप्रतिष्ठागौरवान्वितम् १४ कार
केपंचमेशुक्रःसितेन्दुयुतवीक्षितः तन्वारूढपदेल
ग्नेराजचर्गोभवेन्नरः १५ जन्मांगेवापिकालांगेलि
प्तांगेखेचरेक्षिते रव्यादयस्त्रयस्थानेराजयोगप्रदाय
काः १६ जन्मांगेचहिहोरांगेकालांगेयेनकेनचित्
रव्यादिदृष्टिमात्रेणसराजाभवतिध्रुवम् १७ स्वक्षेत्रे
तुनवांशेवाद्रेष्काणेभानुजादयः लग्नंचसप्तमंविप्र

पश्यंतिराजयोगकृत् १८ पूर्णदृष्टेपूर्णयोगमर्द्धेचार्द्ध
विधीयते पादेनपादयोगंचराजयोगमिदंक्रमात् १९
षड्कुंडल्यांतरेविप्रपश्यंतिभास्करादयः राजयोगप्र
दातारोनिर्विशंकंद्विजोत्तम २० लग्नस्थानेपूर्णदृ-
ष्ट्यासप्तमेस्वल्पवीक्षिते स्वल्पराज्यप्रदोविप्रषड्ल
ग्नेषुविचिन्तयेत् २१ एवंनवांशकुंडल्यांद्रेष्काणेपिवि
चिन्तयेत् लग्नसप्तमयोःखेटोराजयोगप्रदायकः २२
उच्चग्रहेराजयोगोलग्नद्वयमथापिचेत् राशेर्द्रेष्काणतो
शाच्चराशेरंशादथापिवा २३ यद्वाराशिदृगालाभ्यांल
ग्नेदृष्टेतुयोगतः प्रायेणायंजातकस्तुप्रभुणामेवदृश्य
ते २४ जन्मकालघटीलग्नएकेनैवनिरीक्षिते उच्चा-
रूढेतुसंप्राप्तेचंद्राक्रांतेविशेषतः २५ क्रांतेवागु-
रुशुक्राभ्यांकेनाप्युच्चग्रहेणवा दुष्टार्गलाग्रहाभावेरा-
जयोगोनसंशयः २६ शुभारूढतत्रचन्द्रेधनेदेवगु
रुस्तथा उच्चदृष्टेग्रहेवाथह्युच्चखेटेतथाग्रहे २७
राजयोगप्रदाताचनिर्विशंकंद्विजोत्तम यत्रयेपिशुभा
रूढेचंद्रसतिसमानकम् २८ उच्चग्रहेराजयोगोलग्न
द्वयमथापिवा आरूढप्रबलस्याश्चयोगवाहनदोस्मृतः
२९ शुक्राच्चन्द्रेततःशुक्रेतृतीयेवाहनार्थवान् अ
न्योन्यपश्यतोविप्रदैत्याचार्यनिशाधिपौ ३० आरूढे
पितृतीयस्थेतथासंबंधकारकः जन्मलग्नेपिसंयोगे
जायतेवाहनार्थवान् ३१ शुभेलग्नेशुभेत्वर्थेतृतीये
पापखेचरैः चतुर्थेतुशुक्रभेप्रासेराजावातत्समोपिवा
३२ उच्चोवाहरिणांकोवाजीवोवाशुक्रएववा एको-

बलिधनंगतः श्रियंदिशतिदेहिनः ३३ लग्नंपश्यंति येखेटास्तेसर्वेशुभदायिनः नीचखेटोपिलग्नंचेत्पश्ये द्राजाप्रकीर्तितः ३४ षष्ठाष्टमेतृतीयेचलाभेसंबंधनी चकृत् यद्ग्रहःपश्यतेलग्नंराजयोगप्रदायकः ३५ राजयोगोजन्मलग्नंपश्येदुच्चग्रहोयदि षष्ठाष्टमगतं नीचेलग्नेपश्यतियोगकृत् ३६ षष्ठाष्टमाधिपंनीचेल ग्नंपश्यतिवाथवा तृतीयेलाभगेनीचेलग्नंपश्यतिरा ज्यदः ३७ षष्ठाष्टमाधिपोखेटोशुभौयोकांचना श्रितो पश्यतोजन्मलग्नंचराजयोगसुदाहृतम् ३८ चरेतुपंचमेषष्ठेस्थिरेषुनवमेद्विज उभयेकेन्द्रसंदृष्टरा जयोगप्रदायकः ३९ चतुर्थेशुभखेटश्चेद्राजयोगः प्रकीर्तितः बलयुक्तश्चतुर्थोपिराजादिषुयथोत्तरम् ४० चरेत्तुर्येस्वल्पफलंस्थिरेतुर्येचमध्यमम् द्वि स्वभावेपूर्णफलंराजयोगप्रदायकः ४१ अग्रहा त्सग्रहोज्यायानितिरीत्याविचिन्तयेत् उच्चयुक्ताग्र हःकश्चिल्लाभगोवाचतुर्थगः ४२ धनास्थितोवा लग्नंचेत्पश्येद्धाहनकारकः राजयोगाद्यभावेतुधन धान्यविनिर्णयः ४३ शुभपापदृशालग्नेततःके न्द्रादियोगतः यस्यलग्नांशकेसौम्याःप्राबल्यंतस्य निश्चितम् ४४ कुबेरश्चपतंगश्चहालांशश्चकिरीट कः विद्युल्लतांशसमायांशमोहनःकिन्नरांशकः ४५ भुजंगेंद्रांशकोर्गलाकोकिलांशोत्तमःस्मृतः राशीनांद्वादशांशेशुग्रहस्थित्याफलंवदेत् ४६ केंद्रां शाश्चेसुशुभदाराजयोगफलप्रदाः द्विपदुष्टःकाद-

शांशामध्यमाःपरिकीर्तिताः ४७ अन्येंशास्त्वध
माज्ञेयाएवमंशविनिर्णयः ग्रहाणांचैवलग्नानामंश
गत्याम्फलंवदेत् ४८ लग्नगेष्वंशगेष्वेषुजायतेयदि
मानवः यस्यजन्मनिचन्द्रोवायुक्तःस्वांशेषुसंस्थितः
४९ तस्यैतेकथितायोगास्सफलाःपरिकीर्तिताः पू-
र्णन्यूनफलंविप्रग्रहयुक्तानुसारतः ५०

## अथ राजचिह्नयोगानाह.

कारकात्तुर्यभावस्थोसितेंदुर्द्विजसत्तम आदावंतेवि
शेषश्चराजचिन्हेनसंयुतः ५१ ध्वजावांदुंदुभिर्नादति
ष्ठतिचदिवानिशम् सर्वेषांचैवयोगानामविरुद्धाविचि
न्तयेत् ५२

## अथ धीयोगानाह.

कारकेवातथारूढेत्रिषष्टेचागताग्रहाः वीक्षंतिका
रकाल्लग्नमातृनाथेनदृष्टियुक् ५३ बुद्धिमान्जाय
तेबालस्तीव्रबुद्धिर्विचक्षणः तथातृतीयखेटेशोकार
कलग्नोवीक्षते ५४ तथापिपूर्ववद्योगात्सुधीमान्
जायतेनरः शास्त्रवेत्ताकविर्दक्षोभवत्यत्रनसंशयः५५

## अथ सुखयोगमाह.

लग्नाच्चकारकाद्वापिचतुर्थेयस्यवैद्विज लग्नकारक
योर्दृश्याभवन्तिसुखिनोनराः ५६

## अथ सेनाधीशयोगमाह

कारकेवातथारूढेलग्नाद्वासप्तमाद्दिज तृतीयेषष्ठे पापाः सेनाधीशोभवेन्नरः ५७

## अथ प्रधानयोगानाह

राज्येशोपिजनुर्लग्नादमात्येशयुतेक्षिते अमात्यकारकेणापिप्रधानत्वंनृपालये ५८ लाभेशोर्वाक्षिते लाभेपापदृष्टिविवर्जिते तथाराज्यालयेविप्रप्रधानत्वं कुलेपिच ५९ अमात्यकारकेणापिकारकेन्द्रेश संयुते तीव्रबुद्धियुतोबालः सेनाधीशोपिजायते ६० स्वक्षेत्रयेथमध्येवावाद्विकेद्विजसत्तम क्रमेणभाग्य वृद्धिःस्यान्नृपवेशोथवाभवेत् ६२ पंचमात्कार केलग्नेसप्तमेनवमेपिवा राजयोगमितिप्रोक्तंविख्या तोविजयीभवेत् ६३ कारकात्केन्द्रकोणेषुतुंगर्क्षेको पिसंस्थितः भाग्यपेनयुतोदृष्टोराज्यमंत्रीप्रजायते ६४ कारकेयस्यराशीशेलग्नगेसंयुतेक्षिते मंत्रि त्वमुख्ययोगोयंवार्द्धिकेनात्रसंशयः ६५ कारके शुभसंयुक्तेपंचमेसप्तमेपिवा यत्कारकेयदाप्राप्तेत त्कारकेधनंलभेत् ६६ नीचखेटबलैर्युक्तउक्तस्था नगतेद्विज तदाशुभफलंवाच्यंकारकेशेनदृष्टियुक् ६७ भाग्यारूढपदेलग्नेकारकान्नवमेपिवा राजयो गप्रदातारोनिर्दिशंकुद्विजोत्तम ६८ लाभेशोलाभभ वनेपापदृष्टिविवर्जितः कारकेशुभसंयुक्ते लाभंतस्य

नृपालये ६९ शुभर्क्षेंशभसंयुक्ते शुभदृष्टेथ राज्यभा
क् धनुर्लग्नेतथारूढे एतस्मिन्राज्यभाक्भवेत् ७०

## अथ राजयोगरसायनमाह

स्वांशेवर्गोत्तमेकेन्द्रेपुण्येशःकारकोऽथवा राज्यारू
ढपदेवापितदासंचररसायनम् ७१ कारकेकारका
रूढेधनेस्वर्क्षोच्चगेस्वगे सिद्धिर्वासिद्धसंयुक्तेतथाति
श्ररसायनम् ७२ धर्मकर्माधिपोस्वोच्चेतथावर्गो
त्तमेयदि नवमेपंचमेलाभेराज्यातिर्वारसायनम् ७३
मूलत्रिकोणगेलग्नेकारकेशोद्विजोत्तम मंत्रनाथेन
संयुक्तःकीर्तियुक्तरसायनम् ७४ धर्मेशोधर्मलाभ
स्थःपंचमेशोपिपंचमे कारकेन्द्रयुतेदृष्टःस्वेच्छापूर्ण
धनानिच ७५ सोच्चादिपदसंयुक्तेकारकेशःशुभा
लये सततंसुखमाप्नोतिधातुभस्मरसायनात् ७६
सुखशोमानभावस्थेमानेशो सुखसंयुते लग्नका
रकयोर्दृष्टेभिक्षुयोगोतिसंमतः ७७ कर्मेशोनव
मेयस्यसुखेशःपंचमेपिवा परस्परंतदीशोवास्वर्णा
सतत्रकमतः ७८ वागीशःकारकेलग्नेस्वोच्चादिप
दसंयुते भौमांशोमृत्युरादित्यःसौख्येशःकालसंज्ञकः
७८ सौम्यांशेर्द्धमृहरकःस्पष्टकर्मस्वदेशतः एवंप्रा
णपदस्पष्टेपूर्वाध्यायेमयाकृतम् ७९ सगुलिककार
कांशेचपूर्णेन्दुवीक्षितेद्विज सत्यंचौर्यादिनीतिश्च
स्वचौरोजायतेऽथवा ८० सगुलिकेकारकांशेत्र
न्यग्रहयुतेक्षिते बुधदृष्टियुतेवापित्र्यंडवृद्धिःप्रजायते

८१ कारकांशेस्थितेकेतौरविसौम्यनिरीक्षिते बलवी-र्येणरहितोजायतेसोपिमानवः ८२ सकेतौकारकांशेनबुधशुक्रनिरीक्षिते राजयोनीजन्मचेत्स्याद्दासीपुत्रोथवाभवेत् ८३ सकेतौकारकांशेवाभृगुभास्करवीक्षिते शास्त्रान्तरेसिद्धिगाद्यंविशेषंराजयोगकं यत्तुराभाषितंशंभुस्तन्मयागदितंद्विज ८४ देयंस्वशिष्यपुत्रभ्योनदेयंयस्यकस्यचित् ८५ कुपुत्राय कुशिष्यायप्राणान्तेनप्रकाशयेत् गुह्याद्गुह्यमिदंशास्त्रमातंशंभुप्रसादतः ८६ इतिश्रीबृहत्पराशरहोरापूर्वखण्डसारांशराजयोगादिकथनंनामएकोनत्रिंशतितमोध्यायः २९

## पराशर उवाच.

अथातःसम्प्रवक्ष्यामिधनयोगंविशेषतः पंचमेतुभृगुक्षेत्रेतस्मिन्शुक्रेणसंयुते १ लाभेशनिश्चरयुतेबहुद्रव्यस्यनायकः पंचमेसौम्यनक्षत्रेतस्मिन्सौम्ययुतेयदि २ लाभेचचन्द्रभौमौतुबहुद्रव्यस्यनायकः पंचमेतुशनिक्षेत्रेतस्मिन्सूर्यस्तुतोयदि ३ लाभेसोमात्मजस्थेवाबहुद्रव्यस्यनायकः पंचमेतुरविक्षेत्रेतस्मिन्रवियुतेयदि ४ लाभेरवेद्रपूज्यस्थेबहुद्रव्यस्यनायकः पंचमेतुशनिक्षेत्रेतस्मिन्शनियुतेयदि लाभेभौमेनसंयुक्तेबहुद्रव्यस्यनायकः ५ पंचमेतुगुरुक्षेत्रेतस्मिन्गुरुयुतेयदि लाभेतुचन्द्रभौमौचेद्बहुद्रव्य

स्यनायकः ६ भानुक्षेत्रेगतेतस्मिन्लग्नेभानुस्थितेयदि भौमेनगुरुणायुक्तोदृष्टोवास्याद्युतोधनिः ७ चन्द्रक्षेत्र गतेलग्नेतस्मिन्चन्द्रयुतेयदि जीवभौमयुतेयस्तुदृष्टेर्जा तोधनीभवेत् ८ भौमक्षेत्रगतेलग्नेतस्मिन्भौमयुतेय- दि सोमशुक्रार्कजैर्युक्तेदृष्टेश्रीमान्नरोभवेत् ९ गुरुक्षेत्रगतेलग्नेतस्मिन्गुरुयुतेयदि सौम्यभौमयुते दृष्टेर्जातोयस्तुधनीश्वरः १० बुधक्षेत्रयुतेतस्मिन्दृष्टेसौम्य युतेयदि शनिशुक्रयुतेदृष्टेजातोयस्तुधनीनरः ११ भृगुक्षेत्रेगतेलग्नेतस्मिन्भृगुयुतेयदि शनिसौम्ययुतेदृ ष्टेजातोयस्तुधनीनरः १२ येयेग्रहाधर्मपः बुद्धिपा भ्यांयुक्ताश्चदृष्टाश्चसुखप्रदास्ते रन्ध्रेश्वरादिव्ययपै र्युताःस्युःशोकप्रदामारकनायकेश्च १३ क्रूरसौम्य विभागेनस्वस्थानादिवसातथा ग्रहाणांस्थानभेदेन राशिदृष्टिवशात्फलम् १४ इतिश्रीबृहत्पाराशर होरापूर्वखण्डसारांशे धनयोगविचारकथनन्नामत्रिंशोऽ ध्यायः ३०

---

## अथ दरिद्रयोगाध्यायमाह.

लग्नेशेवैरिष्फगतेरिष्फेशेलग्नमागते मारकेशयुते दृष्टेजातस्यान्निर्धनोनरः १ लग्नाधिपेशत्रुग्रहेगतेवा षष्ठेश्वरेलग्नगतेपिवाचेत् विलग्नपेमारकनाथदृष्टेजा तोभवेन्निर्धनकोपिसुख्यः २ लग्नेन्दुकेतुयुक्तोवाल- ग्नेशेनिधनंगते मारकेशयुतेदृष्टेजातोवैनिर्धनोभवेत्३

षष्ठाष्टमव्ययगते लग्नेशोपापसंयुते मारकेशयुते दृष्टे राजवंश्योपि निर्धनः ४ विलग्ननाथे रविनाशरिष्फनाथे नयुक्ते यदि पापदृष्टे मंत्रात्मजेनाथयुतेपि दृष्टे शुभेर्न दृष्टे सभवेद्दरिद्रः ५ मित्रेशोधर्मनाथश्चषष्ठकर्मस्थितौक्रमात् दृष्टौचेन्मारकेशेन जातः स्यान्निर्धनोनरः ६ पापग्रहे लग्नगते राज्यधर्माधिपौविना मारकेशयुते दृष्टे जातस्यान्निर्धनोनरः ७ यद्भावेशो रन्ध्ररिष्फारिसंस्थो यद्भावस्था रन्ध्ररिष्फारिभेशाः पापैर्दृष्टो मन्दइष्टेथवाचेद्दुःखाक्रान्तश्चंचलो निर्धनः स्यात् ८ चन्द्राक्रांतनवांशेशोमारकेशयुतोयदि मारकस्थानगोवापि जातोसौनिर्धनोनरः ९ विलग्नेशनवांशेशो रिष्फषष्ठाष्टगोयदि मारकेशयुतो दृष्टो जातोसौनिर्धनोनरः १० धनसंस्थौच भौमेन्दुकथितौ धननाशकौ बुधेक्षितौ माशाधित्तं कुरुतस्तत्रगः शनिः ११ निःस्वतां कुरुतेतत्र रविर्नित्यंयमेक्षितः महाधनयुतं व्यान्तं शन्यदृष्टः करोत्यसौ १२ धनभावगताः सौम्याः कुर्वन्त्येव धनंबहु बुधदृष्टोगुरुस्तत्र निर्धनंकुरुतेनरम् १३ बुधश्चन्द्रेक्षितस्तत्र सर्वस्वंहंतिनिश्चितम् क्रूरखेटादियोगैश्चदारिद्र्यंसंभवेन्नृणाम् १४ येयेमहाधर्मपवृद्धिपाभ्यांयुक्तानदृष्टा वहुदुःखदास्ते रंध्रेचरादिव्ययपैर्युतास्तेव्ययप्रदामारकनायकेन १५ प्रोक्तयोगयदाभावे दरिद्रोजायते ध्रुवम् शुभस्थानगताः पापाः पापस्थानगताः शुभाः १६ धनार्तिजायते बालो भोजनेनप्रपीडितः कदापिलभतेन्नंचवस्त्रार्थं

चिन्तयान्वितः १७ कारकाद्वाविलग्नाद्वारन्ध्रेरिस्फद्वि-
जोत्तम लग्नकारकयोर्दृष्ट्यादरिद्रार्तियुतोनरः १८
लग्नाद्वाकारकाद्वापिद्वादशेयस्यवैद्विज लग्नकारक-
योर्दृष्ट्याव्ययशीलोभवेन्नरः १९ लग्नेशोर्वाक्ष्यतेल,
ग्नंकारकेशोपिकारकम् प्राबल्यव्ययशीलोपिजा-
यतेद्विजसत्तम २०

## अथ बंधनयोगमाह

पश्चाल्लग्नात्कारकाद्वायदावाधिनद्वादशे पंचमेनवमे
वापितथाषष्ठेपिद्वादशे २१ तृतीयेकादशेविमचतु
र्थेदशमेपिवा ग्रहसाम्येतथाविप्रएकमेकंद्वयंद्वयम् २२
तथात्रयंत्रयंतिष्ठेदितिरीत्यानभश्चराः धिनद्वोद्वाद
शेह्येचतथास्याच्चत्रयेत्रयम् २३ इतिक्रमेणसाम्ये
नवन्धकारकउच्यते भृंखलाबंधयोगोपिजायतेद्विज
सत्तम २४ राशीनांराशिनाथानांशुभसंबंधकेद्विज
तदानिरोधस्संजातस्तनुपीडाविधीयते २५ द्वादशोद्वि
तयेवापित्रिकोणेरिष्फषष्ठगे लाभेत्रयेव्योमतुर्येपापा
वैबन्धकारकाः २६ तथानत्तद्दशानांचसंबंधखलखेद
तः महारभृंखलाद्विमबन्धयोगोनसंशयः २७
भार्गवात्कारकाद्वापिलग्नारूढपदाद्विज त्रिकोणस्थो
यदाराहुस्सूर्यदृष्टेपिनेत्ररुक् २८ इतिश्रीवृहत्पा-
राशरहोरापूर्वखण्डसारांशेदरिद्रयोगकथनंनामएकत्रिं
शोध्यायः ३१

## अथ पूर्वजन्मवर्णनाध्यायः

अथवक्ष्येविशेषेणपूर्वपापस्यनिश्चयम् ॥ नवांशामेष
मारभ्यमेषादौहिक्रमाद्वदेत् १ निशाकरनवांशाधि
पांनिश्चित्यसर्वशः २ मेषेमेषनवांशकेषुचक्रमा
न्मेषस्यभूयाद्वधउक्षायामपराधकंचसुधियोनिश्चित्यगो
संज्ञकम् जितुभेचांशवधस्तथासुनियतंगर्भेणयुक्ताद्व-
देत्ककेंसर्पवधस्तथासुनियतंसिंहेचतुष्पाद्वधः ३
वन्यानांमृगजातीनांवधंदावानलेनाहि सिंहेनिश्चित्य
मतिमान्वदेद्वांशोपरिस्तथा ४ कन्यायांचवदेद्वि-
द्वान्पापस्त्रीत्यागजंमुने धनस्याहरणब्याजात्
तौलिनीचवदेद्बुधः ५ वृश्चिकेग्रामचटकेवधंचे
चांडजस्यहि मित्रद्रोहकृतंब्रूयाद्धन्विनीचाविशंकि
तः ६ फलानांवृक्षजातीनांमकरेचौर्यछेदनम्
कुंभेचैवानुसूयातावाच्याविप्रविपश्चितः ७ ब्रूया
द्विप्रवधंमीनपूर्वार्द्धेतुविपश्चितः उत्तरार्द्धेधनादा-
नंतद्वधंपरिकल्पितम् ८ एकांशेचैकजन्मस्य
द्वंशेचैवद्विजन्मनोः त्र्यंशेचैवत्रिजन्मस्याच्छेषे
जन्मचतुष्टयम् ९ एवंसर्वत्रनिश्चित्यलग्नेचैवहि
जन्मनि ककोद्याविप्रजन्माद्यंवदेत्सर्वत्रनिश्च
यम् १० अन्यथाजारजोभूयाल्लग्नेन्दुनेक्षितेगु
रुः एवंचाष्टोत्तरशतंनवांशाः परिकीर्तिताः ११
क्षात्रियेक्षात्रियादीनांवैश्येचैवविशादिकान् शूद्रे
शूद्रादिकान्वाच्यंविप्रेवैब्राह्मणादिकान् १२ परे

जन्मनिजन्मस्याहुञ्चाचेहैवकंवदेत् तदीशेस्वोच्च
तांप्राप्तेमृतेस्वर्गेगतोभवेत् १३ तदीशेनीचतांप्राप्ते
नरकादागत्यजाड्यवान् यमत्वेचसमाल्लोकान्मित्रेती
र्थेतनुंत्यजेत् १४ तदीशेवारिवेश्मस्थेमृतःभेतत्वमा
प्नुयात् तस्मादागत्ययज्ञासौपापंपुण्यंभुनक्तिहि १५
तदीशेपापसंयुक्तेनीचेवापिस्थितेसति व्रजिनंताम
संपूर्वकृतंतामसनिश्चितम् १६ कुजकेतुसमायुक्ते
समस्थेराजसंवदेत् शुभेप्युच्चस्थितेवाच्यंसात्विकंवृ
जिनंबुधैः १७ अनेनैवप्रकारेणलग्नेनिश्चित्यबुद्धि
मान् इहजन्मनिसंयोज्यंक्रूरसाम्यंसमत्वकम् १८
सर्वस्यमानवस्यापिनक्षत्रत्रयमीरितम् जन्मनक्षत्र
मेकंतुद्वितीयमनुजन्मच १९ त्रिजन्मचत्रितीयंस्या
द्भ्रातृव्यंमुनिसत्तम २० इतिश्रीबृहत्पाराशर
होरापूर्वखण्डसारांशेपूर्वजन्मवर्णनंनामद्वात्रिंशोध्यायः३२

---

सुजन्मा उवाच.

आजन्ममृत्युपर्यंनंजगतःसुखदुःखकम् ब्रूहिमेकृप
यासौम्यविवाहादिसुतादिकम् १

लोमश उवाच.

सूर्यांगारशुमन्दानामंशान्संयोज्यमस्कृतः तदायुः
शरदाद्यस्यभागंकृत्वावदेतफलम् २ तद्भागेदुर्वृतं
वाच्यंयूनातेपीडनंक्वचित् वेदानात्सुखंकिंचित्प

डुनासेस्त्रियाभयम् ३ दशोनासेहृदिपीडाभूयोना सेहिभेषजम् विंशोनासेस्फुटतनुतत्वोनासेश्रुतीव्य था ४ त्रिंशोनासेसीनलादीन्द्विवेदोनासेभयंमृतेः पंचाशन्न्यूनकेनासेवारिभीतिनिगद्यते ५ षष्ट्यूना सेहृतंचौरैर्वन्हिसप्ततिन्यूनहृत् खाष्टोनासेऽल्पघा तादिनवन्यूनासकेषुच ६ शतोनासेसुतोसत्तिर्व्या धिमृष्टोनरोनके षोडशोत्तरशतेनासेविवाहपरिक ल्पितम् ७ विंशाधिकशतेनासेपक्षाद्यनेमृतिर्भवेत् एवंभागप्रभेदेनजीवानांसुखदुःखकम् ८ न्यूनांको भागन्यूनेनक्रमाशुभफलादिशेत् तेषांयोगोहि मन्- क्केवाद्वोवाणप्रयुतोदलो ९ पूर्वोत्तरोहिमवतः स- माःसमसुखासुखा त्रिभागेतात्रिभागेवाघातादल्या न्व्रणान्वदेत् १० विस्फोटकंतास्त्रिभागेकल्प्यास्तु ल्याःसमीक्षते तुर्यांशेतच्चतुर्थांशेमरणमात्रिकादयः ११ धनांशेवित्तहरणंसहजांशेतनोर्मृतिः मातृमृ- त्युःसुखांशेतुसुतांशेःसुतमृत्युदः १२ रिपुभागेरि पोर्मृत्युर्जायांशेस्यास्त्रियामृतिः रंध्रांशेऋणदामृ- त्युर्भाग्यांशेचभर्तामृतिः १३ कर्मांशेपितरंहंतिला भांशेनष्टजीविकाम् व्ययांशेपशुबाहादिर्मृत्युःस्या न्नियतंद्विज १४ लग्नांशेमृत्युमित्रस्यगुरूणांसह- चारिणाम् पंचमांशेप्रासिकरस्तत्पंचांशेधनंलभेत् १५ षष्ठांशेदुःखदस्तस्यतषष्टांशश्चचादिशेत् स- प्तांशेतद्दशांशेवाघातावाच्याःशिलादयः १६ लग्ने वित्तेशिलाघातोजलघातस्त्रितुर्ययोः पुत्रेषष्ठेवृस-

घातोमन्दमृत्योचतुष्पदात् १७ धर्मेकर्मेकर्कघातो
व्ययेलाभेसरीसृपात् एवंस्थितिःस्याद्ग्रहाणांसतां-
शफलंवदेत् १८ आद्यांशोपुण्यदानादिरुद्रांशेसमदुःख-
कम् अष्टमांशोमित्रयोगोनवमांशोगुरुंवदेत् १९
अर्कांशोतिव्ययंवाच्यंविश्वांशे१३मानहानिदः शक्रांशे
१४कलहंवाच्यंतिथ्यंशो१५चोरकान्वदेत् २० नृपां-
शेपरजायादिसंगावातिनिगद्यते अत्यष्टांशो१७हिनो
हगोधृत्यंशो१८शुचमादिशेत् २१ अतिधृत्यं१९शके
यात्राविंशांशेबन्धनादिकान् अर्कोव्ययहितोयत्रतत्रे-
वपितृजंसुखम् २२ यत्रचन्द्रःस्थितस्तत्रविवाहपरि-
कल्पितम् भ्रातृयोगोभवेत्तत्रयत्रांगारकसंस्थितिः
२३ स्वसायोगोहियत्रज्ञोयत्रवाचस्पतिस्थितः तत्र
पुत्रोपनशुक्रस्तत्रकन्याप्रकीर्तितः २४ यत्रमन्दस्थि-
तस्तत्रमातृजंसुखमादिशेत् एवंग्रहानुसारेणसुखा
दिपरिचिन्तयेत् २५ लग्नाधीशमदाधीशौभागादिवे
द४संगुणौ कृत्वातदंतरमितेवर्षेवाच्यंविवाहकम

भावानांराशिभागादिकायुतिः ३१ तद्योगेद्वादशोत्तमे
जन्ममासे मृतिंवदेत् ३२ त्रिंशत्गुण्यदिनज्ञेयमेवं
नाडीपलादिकम् लग्नचन्द्रान्तरंकार्यतत्कलातत्पला
दिकम् जन्मकालेविहीनेतुजलप्रसवउच्यते ३३
सूर्यचन्द्रांतरंकार्यंतनुयुक्तंतथोत्तरम् तत्तत्समितिके
वर्षेलाभंवैपुष्कलंवदेत् ३४ राशिलग्नपर्यायोर्योगेमृ
त्युयुक्तेविनिन्दिते ऋणंवाऋणमुक्तंवाभवेद्वचन्द्र
योगके ३५ सूर्येन्दुलग्नसंयोगेराशीशस्यषष्ठसंयुते
तद्वर्षेमहतीपीडाहीनेसौख्यंनसंशयः ३६ सुतभाग्या
न्तरंकार्यंतद्वर्षेशीतलादिकम् लग्नस्यान्तरसंयोगेपितुर्मृ
त्युर्नसंशयः ३७ राशीशकर्मसंयोगेतदाकर्मोदयंव
देत् धनव्ययसमायोगेतद्वर्षेव्ययनिश्चयः ३८ म
दनान्तरभावेषुसर्वत्रैवंविलक्षयेत् भाग्यादिमृत्युपर्यंत
ग्रहाणांफलमुच्यते ३९ यत्वयाखलुमेपृष्टंतदिदं
कथितंमया यस्मैकस्मैनदातव्यंस्ववाक्यपरिसिद्धये
४० इतिश्रीबृहत्पाराशरहोरापूर्वखण्डसारांशेजीवा
नांसुखदुःखवर्णनंनामत्रयस्त्रिंशोध्यायः ३३

---

मैत्रेय उवाच

आदित्यादिग्रहाणांचह्यवस्थाचपृथक्पृथक् भेदाः
कतिविधाःसंतिकथयत्वंकृपानिधे १

पराशर उवाच

भास्करादिग्रहाणांचह्यवस्थाविविधापिच पल्लव

स्वामितावस्थासारभूतंवदाम्यहमम् २

## अथ जाग्रनाद्यवस्थामाह.

अंशादंशंत्रिभागंचकल्पयित्वापृथकृपृथक् विषमादिक्रमेणैवसमेवैविपरीतकम् ३ विज्ञायप्रथमंपुंसांजाग्रत्स्वप्नसुषुप्तिकाः विशेषतः परीक्षास्याज्जागरःकार्यसाधकः ४ स्वप्नावस्थामध्यफलउपदंष्टागुरुर्यदि निष्फलाचरमावस्थाज्ञातव्यामुनिसत्तम ५

## अथ दीप्ताद्यवस्थामाह.

दीप्तः स्वस्थः प्रमुदितः शान्तोदीनोतिदुःखितः विकलश्वखलःकोपीनवधाखेचरोभवेत् ६ उच्चस्थः खेचरोदीप्तः स्वस्थः स्वोचातिमित्रभे मुदितोमित्रभेशान्तःसमभेदीनउच्यते ७ शत्रुभेदुःखितोतीवविकलःपापसंयुते खलःखलग्रहेज्ञेयः कोपिस्यादर्कसंयुतः ८ पाकेप्रदीप्तस्यधराधिपत्यमुत्साहशौर्यधनवाहनंच स्त्रीपुत्रलाभंशुभबंधुपूज्यंक्षितीश्वरान्मानमुपेतिविद्याम् ९ स्वस्थस्यखेटस्यदशाविपाकेस्वस्थोनृपाल्लब्धधनादिसौख्यम् विद्यायशःप्रीति महत्वमाराद्दारार्थभूम्यादिजधर्ममेति १० मुदान्वित स्यापिदशाविपाकेवस्त्रादिकंगंधसुतीर्थधैर्यम् पुराणधर्मश्रवणादिलाभंवस्त्रादियानांवरभूषणानिम् ११ दशाविपाकेसुखं निज स्वभूपुत्रकलत्रयानम्

विद्याविनोदान्वितधर्मशास्त्रंवक्त्यर्थदेशाधिपपूज्यतांच १२ स्थानच्युतिर्बन्धुविरोधताचदीनस्यखेटस्यदशाविपाके जीवस्यसोकुत्सितहीनवृत्त्यात्यक्तोजनैरोगप्रपीडितःस्यात् १३ दुःखार्दितस्यापिदशाविपाकेनानाविधंदुःखमुपैतिनित्यम् विदेशगोबन्धुजनैर्विहीनश्चोराग्निभूपैर्भयमातनोति १४ वैकल्यखेटस्यदशाविपाकेवैकल्यमायातिमनोविकारम् मित्रादिकानांमरणंविशेषात्स्त्रीपुत्रयानांवरचोरपीडाम् १५ दशाविपाकेकलहंवियोगंखलस्यखेटस्यापितुर्वियोगम् शत्रोर्जनानांधनभूमिनाशमुपैतिनित्यंस्वजनैश्चनिंदाम् १६ कोपान्वितस्यापिदशाविपाकेपापाःसमायांतिबहुप्रकारैः विद्याधनस्त्रीसुतबन्धुनाशंपुत्रादिकृच्छ्रंत्वथनेत्ररोगम् १७

## अथ बालाद्यवस्थाफलमाह.

बालोरसांशैरसमेप्रदिष्टस्ततःकुमारोहियुवाथवृद्धः मृतःक्रमादुत्क्रमतःसमर्क्षेबालाद्यवस्थाकथिताग्रहाणाम् १८ फलंतुकिंचिद्वितनोतिबालश्चार्द्धकुमारोयतनेनपुंसाम् युवासमग्रंखचरोथवृद्धःफलंचदुष्टंमरणंमृतास्यः १९

## अथ प्रवासाद्यवस्थाफलमाह.

प्रवासनष्टाचमृताजयाहास्यारतिर्मुदा सुप्ताभुक्ता ज्वराकंपासुस्थितिनामसन्निभा २० षष्टिघ्नंगतभं भुक्तघटीयुक्तंसुगाहतम् शराब्धिहृल्लुब्धतोऽर्कान्छे-

षावस्थाद्विजोत्तम ॥ २१ ॥

## अस्यार्थः

षष्टिघ्नमिति तत्राश्विनीमारभ्य गतभानि षष्ट्या गुण्यानि वर्तमाननक्षत्रभुक्तघटीयुक्तानि कार्याणि तानि पुनर्युगैश्चतुर्भि राहतानि शराब्धिहृत् पंचचत्वारिंशता भाज्यानि यल्लब्धं भागमागतावस्थास्ताः शेषं वर्तमानावस्थायाः तत्र लब्धांकस्यापि द्वादशाधिक्ये द्वादशभिर्भागैः प्रवासाद्यवस्था ज्ञेयाः ॥ २१ ॥

प्रवासः प्रवासोपगे जन्मकालेऽर्थनाशस्तु नष्टोपगे मृत्युभीतिः ॥ मृतावस्थिते स्याज्जयायां जयस्तु विलासस्तु हास्योपगे कामिनीभिः ॥ २२ ॥ रतौ स्याद्रतिः क्रीडिता सौख्यदात्री प्रसुप्तापि निद्रां कलिं देहपीडाम् ॥ भयं तापहानी सुखं स्यात्तु भुक्ता ज्वराकंपिता सुस्थिता सुक्रमेण

गुरुणासहितोयश्चमुदितःसमकीर्तितः २९ रविणा
सहितोयश्चपापाःपश्यंतिसर्वथा क्षोभितंतंविजानी-
याच्छत्रुणायदिवीक्षितः ३० येषुयेषुचभावेषुग्रहा
स्तिष्ठंतिसर्वथा क्षुधितःक्षोभितोवापिसनरोदुःखभा
जनः ३१ एवंक्रमेणबोद्धव्यंसर्वभावेषुपंडितैः व-
लाबलविचारेणवक्तव्यंफलनिर्णयः ३२ अन्योन्य
समुदायुक्तंफलंमिश्रंवदेत्पुनः बलहीनेतदाहानिःसब
लेचमहाफलम् ३३ कर्मस्थानेस्थितोयस्यलज्जि
तस्तृषितस्तथा क्षुधितःक्षोभितोवापिसनरोदुःखभाजनः ३४ सुतस्थानेभवेद्यस्यलज्जितोग्रहएव-
च सुतनाशोभवेत्तस्यएकस्तिष्ठतिसर्वदा ३५ क्षो-
भितस्तृषितश्चैवसप्तमेयस्यवाभवेत् म्रियतेतस्य
नारीचसत्यमाहुर्द्विजोत्तम ३६ नवालयारामसु-
खंनृपत्वंकलापटुत्वंविदधातिपुंसाम् सदार्थलाभं
व्यवहारवृद्धिंफलंविशेषादिहगर्वितस्य ३७ भवति
मुदितयोगेवासशालाविशालाविमलवसनभूषाभूमियो-
षासुसौख्यम् स्वजनजनविलासोभूमिपागारवासो
रिपुनिवहविनाशोबुद्धिविद्याविकाशः ३८ दिशति
लज्जितभाववशाद्रतिविगतरामममतिर्विमतिक्षयम् सु-
तगदागमनंगमनंवृथाकलिकथाभिरुचिंनरुचिंशुभे ३९
संक्षोभितस्यापिफलंविशेषाद्दारिद्र्यजातंकुमतीचकष्टम्
करोतिवित्तक्षयमंघ्रिबाधांधनाप्तिबाधामवनीशकोपात्
४० क्षुधितग्रहवशाद्वैशोकमोहादितापःपरिजनप-
रितापादाधिभीत्याकृशत्वम् कलिरपिरिपुलोकैरर्थ-

बाधानराणामखिलबलनिरोधोबुद्धिरोधोविषादात् ४१ तृषितखगभवेच्चादङ्गनासंगमध्येभवतिगदविकारोदुष्टकार्योधिकारः निजजनपरिवादादर्थहानिःकृशत्वंखलकृतपरितापोमानहानिःसदैव ४२

## अथ शयनाद्यवस्थामाह.

शयनंचोपवेशंचनेत्रपाणिःप्रकाशनम् गमनागमनंचाथसभायांवसतिस्तथा ४३ आगमोभोजनंचैव नृत्यंलिप्साचकौतुकम् निद्राग्रहाणांचेष्टाचकथयामितवाग्रतः ४४ यस्मिन्नृक्षेभवेत्खेटस्तेनतंपरिपूरयेत् पुनरंशेनसंपूर्यस्तनक्षत्रंनियोजयेत् ४५ यातदण्डंतथालग्नमेकीकृत्यसदाबुधः रविणाहरतेभागंशेषंकार्येनियोजयेत् ४६ नाक्षत्रिकदशाक्रमेणपुनःपूरणमाचरेत् नामाक्षरेणसंयुक्तंहर्त्तव्यंरविणाततः ४७ रवौपंचतथादेयंचंद्रेदद्याद्द्वयंतथा कुजेद्वयंचसंयुक्तंबुधेत्रीणिनियोजयेत् ४८ गुरोर्बाणाःप्रदेयाश्चत्रयंदद्याच्चभार्गवे शनौत्रयमथोदेयं राहोर्दद्याच्चतुष्टयम् ४९ शेषंहृतंचरामेणग्रहाणांत्रिविधंभवेत् दृष्टिचेष्टाविचेष्टाचकथयामितवाग्रतः ५०

## अस्यार्थः

यस्मिन्नृक्षेति जन्मनिसूर्यादयोग्रहायस्मिन्नक्षत्रे तिष्ठंति तन्नक्षत्रसंख्ययाग्रहसंख्यांगुणयेत् पुनस्तद्राशिभुक्तांशसंख्ययागुणयेत् पुनर्यातस्य नक्षत्रस्यजन्मेष्टजन्मलग्नसंख्यां-

न्योजयेत् ततो द्वादशभिः शेषमिताग्रहचेष्टाज्ञातव्या पुनर्ल-
ब्धसंख्यया लब्धसंख्यांगुणयेत् नाक्षत्रीय दशाक्रम पूरणंनामतन्म-
ध्येयेननाम्नासुसोबुध्यति तस्याद्यक्षरवर्णस्वरसंख्यांसंयोज्यद्वाद
शहृतेयल्लब्धंतत्पुनः पूर्वोक्तावस्था तत्रयस्यग्रहस्य पूर्वोक्तरीत्या
क्रियते तस्यक्षेपकंयोज्य त्रिभिर्हृतातच्छेषस्तेन दृष्ट्यावस्था
ज्ञातव्या ५० ७ ७

## अत्रोदाहरणम्.

अत्र मृगशीर्षनक्षत्रेरविस्थसंख्या ५ रविसंख्यया १ गुणि-
ताः ५ मिथुनद्वितीयांशकेरवित्त्वेनद्विगुणिताजाता १० इष्टं ६ कृत्ति-
काजन्मभं ३ कर्कलग्नं ४ एवांयोगेनयुताः २३ रवितष्टाशेषं ११ ते
नशयनादिगणनया केतुकावस्थायांरविर्ज्ञेयः अत्रशेषम् ११
स्वरांकस्थानंयथात्रप्रसिद्धंनामाद्यक्षरस्यशकारस्य इकाराधः
पंक्तौस्थित्वा तत्स्वरसंख्यांद्वितीयं २ शेषं ११ शेषेण ११ गुणितं
१२१ स्वरांक २ युतं १२३ रवि १२ तष्टंशेषं ३ सूर्यक्षेपकेन ५ युतं ८
त्रिभिस्तष्टं शेषम् २ रवेश्चेष्टावस्था एवंचंद्रादीनामपिज्ञेयम् ५०

| स्वरांशचक्रमिदम्. | | | | |
|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ |
| अ | इ | उ | ए | ओ |
| क | ख | ग | घ | च |
| छ | ज | झ | ट | ठ |
| ड | ढ | त | थ | द |
| ध | न | प | फ | ब |
| भ | म | य | र | ल |
| व | श | ष | स | ह |

| सूर्यादिक्षेपांकचक्रं | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| सू. | चं. | मं. | बु. | बृ. | शु. | श. | रा. | के. |
| ५ | २ | २ | ३ | ५ | ३ | ३ | ४ | ४ |

## दृष्टिभेदमाह.

दृष्टीस्वल्पफलंज्ञेयंचेष्टायांविपुलंफ-
लम् विचेष्टायांफलंनस्याद्दिष्ट-
ष्टिफलंविदुः ५१ शुभाशुभंग्र-

ह्राणांचसमीक्ष्यांथबलाबलम्  तुंगस्थानेविशेषेणबलं ज्ञेयंयथाबुधैः ५२

## अथ प्रत्येकद्वादशावस्थाफलमाह.

मन्दाग्निरोगीबहुधानराणांस्थूलत्वमंघ्रेरपिपित्तकोपः व्रणंगुदेशूलमुरःप्रदेशेयदोष्णभानौशयनंप्रयाते ५३ दरिद्रताभारविहारशालीविवादविद्याभिरतोनरःस्यात् कठोरचित्तःखलुनष्टवित्तःसूर्योयदाचेदुपवेशनस्थः ५४ नरःसदानन्दधरोविवेकीपरोपकारीबलवित्तयुक्तः महासुखीराजकृपाभिमानीदिवाधिनाथोयदिनेत्रपाणौ ५५ उदारचित्तःपरिपूर्णवित्तःसभासुवक्ताबहुपुण्यकर्ता महाबलीसुंदररूपशालीप्रकाशनेजन्मनिपद्मिनीशे ५६ प्रवासशालीकिलदुःखमालीसदालसीधीधनवर्जितश्च भयातुरःकोपपरोविशेषाद्दिवाधिनाथेगमनेमनुष्यः ५७ परदाररतोजनतारहितोबहुधागमनेगमनाभिरुचिः कृपणःखलताकुशलोमलिनोदिवसाधिपतौमनुजःकुमतिः ५८ सभागतेह्निनरःपरोपकारतत्परःसदार्थरत्नपूरितोदिवाकरेगुणाकरः वसुंधरानवाम्बरालयान्वितोमहाबलीविचित्रमित्रवत्सलःकृपाकलाधरःपरः ५९ क्षोभितोरिपुगणैःसदानरश्चंचलःखलमतिःकृशस्तथा धर्मकर्मरहितोमदोद्धतश्चागमेदिनपतौयदा-तदा ६० सदाङ्गसंधिवेदनापराङ्गनाधनक्षयोबलक्षयःपदेपदेयदातदाढिभोजने असत्यथाशिरोव्यथातथावृथान्नभोजनंखावसत्कथारतिःकुमार्गगामिनी

मानी ......... विज्ञलोके सदामण्डितः पंडितः काव्यविद्या नवद्यप्रलापान्वितः राजपूज्यो धरामण्डले सर्वदा नृत्य लिप्सागते पद्मिनीनायके ६२ सर्वदानंदयुतो जनो ज्ञानवान्यज्ञकर्ता धराधीशसद्मस्थितः पद्मबंधावरा तेभ्ये पंचाननः काव्यविद्याप्रलापी सुदाकौतुके ६३ नि द्राभरारक्तनिभे भवेतां निद्रागते लोचनपद्मयुग्मे रवौ विदेशवसतिर्जनस्य कलत्रहानिः कतिधार्थनाशः ६४

## अथ चन्द्रफलम्

जनुःकाले क्षपानाथे शयनं चेदुपागते मानी शीतप्रधा नीचकामी वित्तविनाशकः ६५ रोगार्दितो मन्दमतिर्वि शेषाद्वित्तेन हीनो मनुजः कठोरः अकार्यकारी परवित्त हारी क्षपाकरे चेदुपवेशनस्थे ६६ नेत्रपाणौ क्षपाना थे महारोगी नरो भवेत् अनल्पजल्पको धूर्तः कुकर्मनि रतः सदा ६७ यदा राकानाथे गतवति विकाशं च जनने विकाशः संसारे विमलगुणराशेरवनिपात् नवाशामा लास्यात्करितुरगलक्ष्म्या परिवृता विभूषायोषाभिः सुखम नुदिनं तीर्थगमनम् ६८ सिततरे पापरतो निशाकरे वि शेषतः क्रूरतरो नरो भवेत् सदाक्षिरोगैः परिपीड्यमा नो बलक्षपक्षे गमने भयातुरः ६९ विधवागमने मानी पादरोगी नरो भवेत् शुभपापरतो दीनो मतितोषविवर्जितः ७० सकलजनवदान्यो राजराजेन्द्रमान्यो रतिपतिसमः कांतिः शांतिकृत्कामिनीनाम् सपदि सदसि याते चारु बिम्बे शशांके भवति परमरीतिप्रीतविद्यो गुणज्ञः ७१ व्याधि-

धवागमनेमर्त्योंवाचालोधर्मपूरितः कृष्णपक्षेद्विमार्ये
स्याद्रोगीदुष्टतरोहठी ७२ भाजनेजनुषिपूर्णचन्द्रमामा
नयानजनतासुखंनृणाम् आतनोतिवनितासुतासुखं
सर्वमेवनासितेतरेशुभम् ७३ नृत्यलिप्सागतेचन्द्रेसब-
लेबलवान्नरः गीतज्ञोद्विरसज्ञश्चकृष्णेपापकरोभवेत्
७४ कौतुकभवनंगतवतिचन्द्रेभवतिनृपत्वंबाधनपत्वम्
:कामकलासुसदाकुशलत्वंवारवधूरतिरमणपटुत्वम् ७५
निद्रागतेजन्मनिमानवानांकलाधरेजीवसुतेमहत्वम् य-
दांगनासंचितवित्तनाशःशिवालयेरोतिविचित्रमुच्चैः ७६

## अथकुजफलम्

शयनेवसुधापुत्रेजन्तुरंगेजनोभवेत् बहुनाकंडुना
युक्तोदद्रुणाचविशेषतः ७७ वलीसदापापरतोन-
रःस्यादसत्यवादीनितरांप्रगल्भः धनेनपूर्णोनिजधर्म
हीनोधरासुतश्चेदुपवेशनस्थः ७८ यदाभूमिसुतेल-
ग्नेनेत्रपाणिमुपागते दरिद्रतासदापुंसामन्यभेनगरेश-
ता, ७९ प्रकाशोगुणस्यापिवासःप्रकाशेधराधीशभ
र्तुःसदामानवृद्धिः सुतेभूसुतेपुत्रकांतावियोगोभवे
द्राहुणादारुणावानिपातः ८० गमनागमनेकुरुतेऽनु
दिनंव्रणजालभयंवनिताकलहम् बहुदद्रुककण्डुभयं
वहुधावसुधातनयोवसुहानिकरः ८१ आगमनेगुण
शाली मणिमालीकरालकरवाली गजगंतारिपुहं-
तापरिजनसंतापहारकोभौमे ८२ तुंगेयुद्धकला
कलापकुशलोधर्मध्वजोवित्तपः कोणेभूमिसुतेसभासुप-

गतेविद्याधिहीनःपुमान् अंतेऽपत्यकलत्रमित्ररहितः
प्रोक्तेतरस्थानगेवस्यंराजसभाबुधोवहु धनीमानीचदानीजनः
८३ आगमेभवतिभूमिजेजनोधर्मकर्मरहितोगदातुरः
कर्णमूलगुरुशूलरोगवानेवकातरमतिःकुसंगमी ८४
भोजनेमिष्टभोजीचजननेसवलेकुजे नीचकर्मकरोनि
त्यंमनुजोमानवर्जितः ८५ नृत्यलिप्सागतंभूसुतेज
न्मनामिन्दिराराशिरायातिभूमीपतेः स्वर्णरत्नप्रवालैः
सदामण्डितावासशालानराणांभवेत्सर्वदा ८६ कीर्ति
कीभवतिकौतुकेकुजेमित्रपुत्रपरिपूरितोजनः उच्चगेनृ
पतिगेहमण्डितःपूजितोगुणवरैर्गुणाकरैः ८७ निद्राव
स्थांगतेभौमेक्रोधीधीधनवर्जितः धूर्तोधर्मपरिभ्रष्टो
मनुष्योगदपीडितः ८८

## अथबुधफलम्

क्षुधातुरोभवेदंगेरवंजोगुञ्जानिभेक्षणः अन्यत्रलंप
टोधूर्तोमनुजःशयनेबुधे ८९ शशांकपुत्रेजनुरंगगेह
यदोपवेशेगुणराशिपूर्णः पापेक्षितपापयुतेदरिद्राहि
तेच्छुपेवित्तसुखीमनुष्यः ९० विद्याविवेकरहितोहित
तापहीनोमानीजनोभवतिचन्द्रसुतेऽक्षिपाणौ पुत्रालये
सुतकलत्रसुखेनहीनःकन्याप्रजोनृपतिगेहबुधोवरार्थः
९१ दातादयालुःखलुपुण्यकर्ताधिकागनेचन्द्रसुतेमनु-
ष्यः अनेकविद्यार्णवपारगंताविवेकपूर्णःखलगर्वह-
न्ता ९२ गमनागमनेभवतोगमनेवहुधावसुधाधिपतेः
भवने भवनेचविचित्रमलंरमयाविदितुश्चजनुःसमयेनितराम्९३

सपदिधिदिजनानामुच्चगेजन्मकालेसदसिधनसमृद्धिःस
र्वदापुण्यवृद्धिः धनपतिसमतावाभूपतामंत्रिताचाह-
रिहरपदभक्तिःसात्विकीमुक्तिलब्धिः ९४ आगमेज
नुषिजन्मिनांयदाचंद्रजेभवतिहीनसेवया अर्थसिद्धि
रपिपुत्रयुग्मतावालिकाभवतिमानदायिका ९५ भो
जनेचन्द्रजेजन्मकालेयदाजन्मिनामर्थहानिःसदावादतः
राजभीत्याकृशत्वंचलत्वंमतेरंगसंगोनजायानमायासुख
म् ९६ नृत्यलिप्सागतेचन्द्रजेमानवोमानयानमवाल
व्रजेःसंयुतः मित्रपुत्रप्रतापैःसभामंडितःपापभेवार-
वामारतेलम्पटः ९७ कौतुकेचंद्रजेजन्मकालेनृणा
मंगभेगीतविद्यानवद्याभवेत् सप्तमेनैधनेवारवध्वार-
तिःपुण्यभेपुण्ययुक्तामतिःसद्गतिः ९८ निद्राश्रिते
चंद्रसुतेननिद्रासुखंसदाव्याधिसमाधियोगः सहोत्थवै-
कल्यमनल्पतापोनिजेनवादोधनमाननाशः ९९

## अथगुरुफलमाह.

वचसामधिपेतुजनःसमयेशयनेबलवानपिहीनरवः अ
तिगौरतनुःखलुदीर्घहनुःसुतरामरिभीतियुतोमनुजः १००
उपवेशंगतवतियदिजीवेवाचालोबहुगर्वपरीतः क्षोणी
पतिरिपुजनपरितप्तःपदजंघास्यकरव्रणयुक्तः १०१
नेत्रपाणिंगतेदेवराजार्चितेरोगयुक्तोवियुक्तोवरार्यश्रिया
गीतनृत्यप्रियःकामुकःसर्वदागौरवर्णोविवर्णोद्भवप्रीतियुक्
१०२ गुणानामानंदंविमलसुखकन्दंवितनुतेसदातेजःपुं-
जंव्रजपतिनिकुंजंप्रतिगमम् प्रकाशंचेदुच्चद्रुतमुपगतो

वासवगुरुगुरुत्वंलोकानांधनपतिसमत्वंतनुभृता १०३
साहसीभवतिमानवः सदामित्रसुखपूरितोमुदा पंडि
तोविविधवित्तमंडितोवेदविद्यादिगुरौगमंगते १०४ आ
गमनेजनतावरजायायस्यजन्तुः समयेहरिमाया मुञ्च
तिनालमिहालयमद्धादेवगुरौपरितः परिवद्धा १०५ सु
रगुरुसमवक्ताशुभ्रमुक्ताफलाढ्यः सदसिसपदिपूर्णोवि
त्तमाणिक्ययानैः गजतुरगरथाढ्योदेवताधीशपूज्योज
नुषिविविधविद्यागर्वितोमानवः स्यात् १०६ नानावाह
नमानयानपटलीसौख्यंगुरावागमेभृत्यापत्यकलत्रमित्र
जसुखंविद्यानवद्याभवेत् सोणीपालसमानतानवरत
चार्तीवहृद्यामतिः काव्यानन्दरतिः सदाहितगतिः सर्वत्रमा
नोन्नतिः १०७ भोजनेभवतिदेवगुरौयस्यतस्यसतत
तंसुभोजनम् नैवमुंचतिरमालयंतदावाजिवारणरथैश्च
मण्डितम १०८ नृत्यलिप्सागतेराजमानीधनीदेवता
धीशवंद्यः सदाधर्मवित् तन्त्रविज्ञोबुधैर्मण्डितः पण्डितः
शब्दविद्यानवद्योहिसद्योजनः १०९ कुतूहलीसकौतु
केमहाधनीजनः सदानिजान्वयेच भास्करः कृपाकलाध
रः सुखी निलिंपराजपूजितेसुतेनभूनयेनवाद्भुतामहा
बलीधराधिपेन्द्रसद्मपण्डितः ११० गुरौनिद्रागतेयः
स्यमूर्खतासर्वकर्मणि दरिद्रतापरिक्रान्तंभवनंपुण्य
वर्जितम् १११

## अथ भृगुफलम्

जनोबलीयानपिदन्तरोगीभृगौमहारोपसमन्वितः स्यात्

धनेनहीनः शयनंप्रयातेवरांगनासंगमलम्पटश्च ११२ य
दिभवेदुशनाउपवेशनेनवमणिव्रजकांचनभूषणैः सुख
मजस्रमरिक्षयश्चादरादवनिपादपिमानसमुन्नतिः ११३
नेत्रपाणिंगतेलग्नेगेहेकवौसप्तमेमानमेयस्यतस्यध्रुवम्
नेत्रपातेनिपातो धनानामलंचान्यभेवासशालाविशालाभ
वेत् ११४ स्यालयेतुंगभेमित्रभेभार्गवेतुङ्गमातंगलीला
कलापीजनः भूपतेस्तुल्यएवमकाशंगतेकाव्यविद्या
कलाकौतुकीगीतवित् ११५ गमनेजननेशुक्रेतस्य
मातानजीवति आधियोगोवियोगश्चजनानामरिभीति-
तः ११६ आगमनंभृगुपुत्रेगतवतिवित्तेश्वरोमनुजः
सत्तीर्थस्नमशालीनित्योत्साहीकरांघ्रिरोगीच ११७ अ-
नायासेनालंसपदिमहसायातिसहसाप्रगल्भत्वंराज्ञः सदसि
गुणविज्ञःकिलकवौ सभायामायातेरिपुनिवहहन्ताधन
पतेःसमत्वंवादातावलतुरगगंतानरवरः ११८ आगमे
भार्गवेनागमोजान्मिनामर्थराशेररातेरतीवक्षतिः पुत्रपा
तोनिपातोजनानामपिव्याधिभीतिःप्रियाभोगहानिर्भवेत्
११९ क्षुधातुरोव्याधिनिपीडितःस्यादनेकधारातिभया-
र्दितश्च कवौयदाभोजनगेशुवत्यामहाधनीपण्डितमंडि
तश्च १२० काव्यविद्यानवद्याचहृद्यामतिःसर्वदानृत्य
लिप्सागतेभार्गवे शंखवीणामृदंगादिगानध्वनिव्रातनं
पुण्यमेतस्यवित्तोन्नतिः १२१ कौतुकभवनंगतवति
शुक्रेवाक्रेशत्वंसदसिमहत्त्वम् हृद्याविद्याभवतिचपुंसः
पद्मानिवसतिसद्मादरतः १२२ परसेवारतोनित्यंनि-
द्रामुपगतेकवौ परनिन्दापरोवीरोवाचालोभ्रमतेमहीम् १२३

## अथ शनिफलम्.

क्षुत्पिपासापरिक्रान्तोविश्रान्तः शयनेशनौ वयसःप्रथमेरोगीततोभाग्यवतांनरः १२४. भानोःसुतेचेदुपवेशनस्थे करालकारातिजनानुततः अपायशालीखलु दद्रुमाली नरोऽभिमानीनृपदण्डयुक्तः १२५ नयनपाणिगतेरविनन्दनेपरमयारमयारमयायुतः नृपतितोहिततोमतितोपकृद्बहुकलाकलितोविमलोक्तिकृत् १२६. नानागुणग्रामधनाधिशालीसदानरोबुद्धिविनोदमाली प्रकाशने भानुसुतेसुभानुः कृपानुरक्तोहरपादभक्तः १२७. महाधनीनन्दननंदितःस्यादपायकारीरिपुभूमिहारी गमेशनौ पंडितराजभावंधरापतेरायतनेप्रयाति १२८ आगमने प्रदगदभययुक्तःपुत्रकलत्रसुखेनविमुक्तः भानुसुतेभ्रमतेभुविनित्यंदीनमनाविजनाश्रयभावम् १२९ रत्नावलीकांचनमौक्तिकानांवातेननित्यंव्रजतिप्रमोदम् सभागतेभानुसुतेनितांतंनयेनपूर्णोमनुजोमहौजाः १३० आगमेगदसमागमोनृणामब्जबन्धुतनयेयदातदा मन्दमेव गमनंधरारतेयाचनाविरहितामतिःसदा १३१ संगते जनुषिभानुनंदनेभोजनंभवतिभोजनंरसैः संयुतंनयन मन्दनागतामोहतापपरितापितामतिः १३२ नृत्यलिप्सागतेमन्देधर्मोरमावित्तपूरितः राजपूज्योनरोधीरोमहावीरोरणांगणे १३३ नवतिकौतुकभावमुपागतेरविसुतेवसुधावसुपूरितः अतिसुखीसुमुखीसुखपूरितःकवितयामलयाकलयानरः १३४ निद्रागतेवा-

सरनाथपुत्रेधनीसदाचारुगुणैरुपेतः परक्रमीचण्डवि-
पक्षहंतासुधारकांतारतिरीतिविज्ञः १३५

## अथ राहुफलम्.

यदागमोजन्मनियस्यराहोःकुशाधिकत्वंशयनंमयाते वृ-
षेधयुग्मेपिचकन्यकायामजेसमाजोधनधान्यराशेः १३६
उपवेशनमिहगतवतिराहोदद्रुगणेनजनःपरितप्तः रा-
जसमाजयुतोवहुमानीवित्तसुखेनसदारहितःस्यात् १३७
नेत्रपाणावगोनेत्रेभवतोरोगपीडिते दुष्टव्यालारिचोरा-
णांभयंतस्यधनक्षयः १३८ प्रकाशनेशुभासनेस्थि-
तिःकृतिःशुभानृणांधनोन्नतिर्गुणोन्नतिःसदाविदामगावि-
ह धराधिपाधिकारतायशोलतातताभवेन्नवीननीरदाकृ-
तिर्विदेशतोमहोन्नतिः १३९ गमनेचयदाराहुर्बहुस-
न्तानवान्नरः पंडितोधनवान्दाताराजपूज्योनरोभ-
वेत् १४० राहावागमनेक्रोधीसदाधीधनवर्जितः
कुटिलःकृपणःकामीनरोभवतिसर्वथा १४१ स-
भागतेयदाराहुःपंडितःकृपणोनरः नानागुणपरिक्रां
तोवित्तसौख्यसमन्वितः १४२ नेदगावागमंयस्ययां
तेतदाव्याकुलत्वंसदारातिभीत्या महद्वन्धुवादोजना-
नांनिपातोभवेद्वित्तहानिःशठत्वंकृशत्वम् १४३ भो-
जनेभोजनेनालंविकलोमनुजोभवेत् मन्दबुद्धिःक्रि-
याभीरुःस्त्रीपुत्रसुखवर्जितः १४४ नृत्यलिप्साग
तेराहोमहाव्याधिविवर्द्धनम् नेत्ररोगारिपोर्भीतिर्द्धन
धर्मक्षयोनृणाम् १४५ कौतुकेचयदाराहोःस्थानहीनो

नरोभवेत् परदाररतोनित्यंपरवित्तापहारकः १४६
निद्रावस्थागतेराहौगुणग्रामयुतोनरः कान्तासंतानवा
धीरोगर्वितोबहुवित्तवान् १४७

## अथ केतुफलम्.

मेषेवृषेऽथवायुग्मेकन्यायांशयनंगते केतौधनसमृ-
द्धिः स्यादन्यभेरोगवर्द्धनम् १४८ उपवेशंगतेकेतौ
दद्रुरोगविवर्द्धनम् अरिवातनृपव्यालचौरसंकाशमं
ततः १४९ नेत्रपाणिंगतेकेतौनेत्ररोगः प्रजायते
दुष्टसर्पादिभीतिश्चारिपुराजकुलादपि १५० केतौप्र
काशनेसंज्ञेधनवान्धार्मिकः सदा नित्यंप्रवासीचोत्सा
हीसात्विकोराजसेवकः १५१ गमनेछायांभवेत्केतु
र्बहुपुत्रोमहाधनः पंडितोगुणवान्दाताजायतेचनरो
त्तमः १५२ आगमनेचयदाकेतुर्नानारोगधनक्षयम्
दन्तघातीमहारोगीपिशुनः परनिन्दकः १५३ सभा
वस्थांगतेकेतौवाचालोबहुगर्वितः कृपणोलम्पटश्चैव
धूर्तविद्याविशारदः १५४ यदागमेभवेत्केतुः केतुः
स्यात्पापकर्मणाम् बन्धुवादरतोदुष्टोरिपुरोगनिपीडितः
१५५ भोजनेतुजनोनित्यंक्षुधयापरिपीडितः दरिद्री
रोगसंतप्तः केतौभ्रमतिमेदिनीम् १५६ नृत्यलिप्सा
गतेकेतौव्याधिनाविकलाभवेत् बुद्बुदाक्षोदुराधर्षो
धूर्तोऽनर्थकरोनरः १५७ कौतुकीकौतुकेकेतौनदवा
मारतिप्रियः स्थानभ्रष्टोदुराचारीदरिद्रोभ्रमतेमहीम्
१५८ निद्रावस्थांगतेकेतौधनधान्यसुखंमहत् नाना

गुणविनोदेनकालोगच्छतिजन्मिनाम् १५९

## अथसर्वभावफलम्

शयनाद्येषु भावेषुयस्यतिष्ठंतिसद्ग्रहाः नित्यंतस्य शुभज्ञानंनिर्विशंकंद्विजोत्तम १६० भोजनाद्येकभावेषुपापास्तिष्ठंतिसर्वथा तदासर्वविनाशोपिनात्रकार्याविचारणा १६१ निद्रायांचयदापापोजायास्थाने शुभंवदेत् यदिपापग्रहैर्दृष्टोनशुभंचकदाचन १६२ सुतस्थानेस्थितःपापोनिद्रायांशयनेपिवा तदाशुभंभवेत्तस्यनात्रकार्याविचारणा १६३ मृत्युस्थानास्थितःपापोनिद्रायांशयनेपिवा तदातस्यापमृत्युःस्याद्राजतःपरतस्तथा १६४ शुभग्रहैर्यदायुक्तः ग्रहैर्वायदिवीक्षितः तदाचमरणंतस्यगंगायांचविशेषतः १६५ कर्मस्थानेयदापापःशयनेभोजनेपिवा तदाकर्मविपाकःस्यान्नानादुःखप्रदायकः १६६ दशमस्थोनिशानाथोकौतुकीचप्रकाशने तदैवराजयोगःस्यान्निर्विशंकंद्विजोत्तम १६७ बलाबलविचारेणज्ञायतेचशुभाशुभम् एवंक्रमेण बोद्धव्यंसर्वभावेषुबुद्धिमन् १६८ इतिश्रीबृहत्पाराशरहोरापूर्वखण्डसारांशे ग्रहावस्थाफलकथननामचतुस्त्रिंशोध्यायः ३४

---

## मैत्रेय उवाच.

दशाकतिविधाः संतिह्येतन्मेब्रूहितत्त्वतः महर्षेत्वंस मर्थोसिकृपयाकरुणानिधे १

## पराशरउवाच.

अथातः सम्प्रवक्ष्यामिदशाभेदाननेकशः विंशोत्त रीदशाचोक्तादशातुषोडशोत्तरी २ द्वादशोत्तरिका ज्ञेयातथैवाष्टोत्तरीदशा पंचोत्तरीदशातद्वद्दशासत समाः स्मृताः ३ दशाहिचतुराशीतिःप्राहुचाथद्वि सप्ततिः तथाषष्टिसमाचोक्तादशाषड्विंशतिःसमाः ४ नवमांशानवदशाराश्यंशकदशाःस्मृताः दशा कालाभिधाचक्रदशाचक्रमुनीश्वरैः ५ चरपर्याद्द शाविप्रदशास्थिरद्विजोत्तम अथोत्तरदशाविप्र ब्रह्मताम्परादशा ६ केंद्रादिचदशाज्ञेयाकारका दिग्रहादशा मंडूकंचदशाप्रोक्तातथाशूलदशावि धः ७ योगार्द्धंचदशाविप्रदृग्दशाकथयाम्यहम् दशात्रिकोणनाम्नीवैराशीनांचदशातथा ८ तारादशातथाज्ञेयादशाज्ञेयाचवर्णदा पंचस्वरदशाविप्र योगिनीचदशास्मृताः ९ ततः पैंड्यदशाज्ञेयातथां शश्चदशाद्विज नैसर्गिकदशाविप्रअष्टवर्गदशा स्मृताः १० संध्यादशाचज्ञातव्यापाचकाचदशा द्विज द्विचत्वारिंशद्भेदाः स्युःकथयामितवाग्रतः ११

## अथ विंशोत्तरीं दशामाह.

आनयनंप्रकारंचशृणुष्वद्विजपुंगव नामनक्षत्रपर्यं
तमाधारः कृत्तिकादतः १२ कृष्णेतुरविहोरायांचन्द्रहो
रागतेसिते दहनात्स्वर्क्षपर्यंतंगणयेन्नवभिर्हरेत् १३
सूर्येन्दुक्ष्माजतमसोवाक्पतिर्मन्दचन्द्रजो केतुशु-
क्रौक्रमादेतेविज्ञेयात्रदशाधिपाः १४ रसाशामुनि
धृत्यब्दाभूपतिर्धृतिवत्सरा ससेंदवोनगाव्योमबाहु
वोभास्करादितः १५ अस्याउदाहरणमग्रेवक्ष्यामि

## अथ षोडशोत्तरीदशामाह

एकःपंचयुतोरुद्राद्धृत्यन्तंवत्सराःक्रमात् रविभौ
मोगुरुर्मन्दःकेतुश्चन्द्रोबुधःशनिः १६ अष्टौदशा
धिपाःप्रोक्ताराहुहीनानवग्रहाः पुष्यभाज्जन्मभंचा
वद्गणयेद्वसुभिर्हरेत् १७ सूर्यहोरागतेशुक्रे चन्द्र-
स्यकृष्णपक्षके नदानृणाम्फलार्थायचिन्त्याषोडशो-
त्तरी १८

## अथ षोडशोत्तरीदशाउदाहरणम्

स्फुटतरोहिमगुइत्यादिश्लोकोक्तरीत्या स्पष्टचं ८।२५।२८।३८ अस्यकलापिंड १५८२९।३८ अस्य अष्टशतैर्भक्त ८०० लब्धाः १९ शेषं ७२९।३८ अश्विनीतोगणनया लब्धंमूलगतनक्षत्रम् पूर्वाषाढाजन्मभम् अत्रतुपुष्यभात्गणनीयं संख्या १३ अस्याष्टभक्ते लब्धं१ व्यर्थं शेषं ५ अस्यदशाक्रमः

सू॰११ मं॰१२ बृ॰१३ श॰१४ के॰१५ चं १६ बु॰१७ शु॰१८ शेषं ५ तेन केतुदशामध्ये जन्म तस्यवर्षाणि १५ अत्र पूर्वोक्ताः ७।२८।३८ अस्योपरिविंशोत्तरीरीत्याभुक्तानयनंवर्षादि १३।८।५।१।३० केतुदशायांजन्मवर्ष १५ मध्येहीनंजातं भोग्यवर्ष १।३।२४।५८।३० इतिषोडशोत्तरीदशोदाहरणम्

| अथ षोडशोत्तरीदशाक्रमचक्रम् | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| सू॰ | मं॰ | बृ॰ | श॰ | के | चं | बु | शु॰ | ग्रहाः |
| ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | वर्ष |
| पुष्य | ऽश्ले | म | पू॰फा॰ | उ॰फा॰ | ह॰ | चि॰ | स्वा॰ | नक्ष॰ |
| वि | ऽनु | ज्ये॰ | मूळ | पू॰षा | उ॰षा॰ | श्र॰ | ध॰ | न॰ |
| श॰ | पू॰भा | उ॰भा | रे॰ | अ॰ | भ॰ | कृ॰ | रो॰ | न॰ |
| मृ॰ | ऽऽआ | पुन॰ | ० | ० | ० | ० | ० | ० |

# अथद्वादशोत्तरीदशामाह.

सूर्योगुरुः शिखीज्ञोऽगुः कुजोमन्दोनिशाकरः शुक्रहीनोदशाह्येताद्विचयात्सप्तमात्समाः १९ जन्मभात्पौष्णपर्यंतंगणयेदष्टभिर्भजेत् नवमांशेयदाजाता शुक्रस्यद्वादशोत्तरी २०

## अथ द्वादशोत्तरीदशाउदाहरणम्

भुक्तभोग्यं पूर्ववदानीयं अस्याउदाहरणार्थंचक्रं प्रदर्श्यते अत्रतुपूर्वाषाढाजन्मकालाद्रेवतीपर्यन्तमृक्षसंख्या ११ अष्टभिर्भजेत् शेषं ० अत्रग्रहक्रमदशाक्रमः सू॰७ बृ॰९ के॰११ बु॰१३ रा॰१५ मं॰१७ श॰१९ चं॰२१ अत्रतु चंद्रमहादशायांजन्म

| अथ द्वादशोत्तरीदशाक्रमचक्रम् | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| सू· | बृ· | के· | बु· | रा· | मं· | श· | चं· | ग्रहाः |
| ७ | ९ | ११ | १३ | १५ | १७ | १९ | २१ | |

## अथाष्टोत्तरीदशामाह·

सूर्यश्चन्द्रः कुजःसौम्यः शनिर्जीवस्तमोभृगुः एते दशाधिपाः प्रोक्ताविकेतुश्चनवग्रहाः २१ रसाःपं चेन्दवोनागाः शैलचंद्रानभेन्दवः गोब्जाःसूर्याकुने त्राश्चसमाः मज्ञोद्योतनादयः २२ लग्नेशात्केन्द्र कोणस्थेराहौलग्नेस्थितंविना दशाष्टोत्तरीहिधाप्रो क्ताशिवार्द्रकृत्तिकादिता २३ चतुष्कंत्रितयंतस्मा च्चतुष्कंत्रितयंपुनः यावत्स्वजन्मभंतावद्गणयेच्च यथाक्रमात् २४

## अथाष्टोत्तरीदशाउदाहरणम्

आर्द्रादिर्वाकृत्तिकादिजन्मभंपर्यंतं गणनीयम् अत्रतु आर्द्रादिजन्मभंपर्यंतं संख्या १५ तस्य दशाक्रमः सू· ६ चं·१५। मं·८ बु·१७ श· १० बृ· १९ रा·१२ शु·२१ तन्मध्येशनिदशाआगतवर्ष १०। अस्य भुक्तभोग्येआनयनक्रममाह ॥ अत्रजन्मचन्द्रः ८।२५।२९।३८ अस्यकलापिण्ड १५८२९। ३८० इदमष्टशतेन ८०० भक्तं लब्धं १९ मूलगतनक्षत्रं।पूर्वाषाढनक्षत्रगतिः ३० अनेनशेषांकः ७२९।३८ गुणितम् जातांकाः २१८८९० इदमष्टशतेन ८०० भक्तं लब्धंवर्षादि २।३ १०।५०।१५ पूर्वजन्मभुक्त इदंशानिवर्ष १० मध्येऊनितम् भो·

ग्यवर्षादि ७।८।१९।१९।४५ एवंसर्वत्रज्ञेयम्

अथाऽष्टोत्तरीदशायन्त्रमिदम्

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| बुध २५२ | १७ | अ ६८ | ज्ये. ६८ | मू. ६८ | ० ० | शु २५२ | २१ | कृ. ८४ | रो. ८४ | मृ. ८४ | ० ० |
| मं. ९५ | ८ | ह. २४ | चि. २४ | स्वा. २४ | वि. २४ | रा. १४४ | १२ | उ.भा. ३६ | रे. ३६ | अ. ३६ | म. ३६ |
| चं.भा.मृ. १८० | १५ | मूल ६० | पू. ६० | उ. ६० | ० ० | बृ. २२८ | १९ | ध. ७६ | श. ७६ | पूर्वाभा- | द्रपदा ७६ |
| सू.मं. ७२ | ६ | आ. १८ | पु. १८ | पुष्य १८ | अ. १८ | श. १२० | १० | पु. ३० | उ. ३० | ऽभि. ३० | श्र ३० |

## अथ पंचोत्तरीदशामाह.

पातौविनानुराधादिविज्ञेयंजन्मभावधि गणयेत्सप्तभिर्भक्तेशेषकल्पादशाःशुभाः २५ रविज्ञार्कमितोभौमोभार्गवोरजनीकरः वाचस्पतिश्चकर्कागतस्येवद्वादशांगके २६ पंचोत्तरीदशाचिंत्यानिर्विशंकंद्विजोत्तम बलाबलविवेकेनयथान्यायेनयोजयेत् २७

## अथ पंचोत्तरीदशाउदाहरणम्

जन्मचन्द्र ८।२५।२९।३८ अस्यकलापिण्ड १५९२९। ३८ इदमष्टशतेन ८०० भक्तं लब्धं १९ गतमूलशेषांकवर्षमान पूर्वाषाढानक्षत्रेकेतुदशायांजन्म वर्ष १५ शेषांका ७२९।३८ अमीपंचदशाभिर्गुणितांकाः १०९४४।३० अष्टशते ८०० भक्ते लब्धंपूर्वजन्मनि वर्षादि १३।८।५।१।३० अस्यपंचदशा १५

मध्ये ऊनितमिहजन्मनिभोग्यवर्षादि ११।३।२४।५८।३०। एवं सर्वत्रज्ञेयम्

| अथ पंचोत्तरीदशायंत्रम् | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| सू॰ | बु॰ | श | के | मं॰ | शु॰ | च॰ | बृ | ग्रहाः |
| १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | वर्षाणि |
| अनु | ज्ये | मू | पू॰षा | उ॰षा | श्र | ध | श | न |
| पू॰भा | उ भा॰ | रेवती | अ॰ | भ॰ | कृ॰ | रो॰ | मृ॰ | क्ष |
| आ | पुन | पूष्य | ऽऽश्ले | म॰ | पू॰फा॰ | उ॰फा॰ | ह॰ | त्रा |
| चित्रा | स्वाति | विशा॰ | ० | ० | ० | ० | ० | णि |

## अथ शताब्दिकांदशामाह॰

रविश्चन्द्रोभृगुश्चान्द्रिर्जीवो विश्वंभरात्मजः दैवाकरिः क्रमादेते बाणाबाणादिशोदश २८ नरवानरवाः खरामाश्चवर्षाणिदिनपादितः वर्गोत्तमगतेलग्नेदशा नित्याशताब्दिका २९ पौष्णाज्जन्मर्क्षपर्यंतंगणयेत्सप्तभिर्हरेत् शेषांकेरवितोज्ञेयादशाशतसमास्त्वियम् ३०

## अस्या उदाहरणम्

जन्मचंद्रः ८।२५।२९।३८ अस्यकलापिण्डः १५९२९।३८ अष्टशतै ८०० र्भक्तं लब्धं १९ गतमूलवर्तमानपूर्वापादाशेषांकाः ७२९।३८ रेवती एताः पूषातोगणनीयम् तस्यशानिदशायां जन्मवर्षे ३० शेषांकाः ७२९।३८ गुणितांकाः २१८८६ अस्याष्टशते ८०० र्भक्तंजातं पूर्वेभुक्तवर्षादि २७।४।११।३।०

त्रिंशत् ३० मध्येऊनंजातम् इहजन्मनि भोग्यवर्षादि २। ७।१९।५०।० एवं सर्वत्रज्ञेयम्

| अथ शताब्दिकायंत्रम् | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू. | चं. | शु. | बु. | बृ. | मं. | श. | ग्रहाः |
| ५ | ५ | १० | १० | २० | २० | ३० | वर्षाणि |
| रेवती | अ. | भ. | कृ. | रो | मृ. | आ. | न |
| पुन. | पुष्य | आ. | मघा | पूर्वा | उत्तरा | हस्त | क्ष |
| चित्रा | स्वाति | विशा. | अ. | ज्ये. | मूल | पू. षा. | त्रा |
| उ. षा. | श्र. | ध. | श. | पू. | उत्त. | ० | णि |

## अथ चतुराशीत्यब्दिकांदशामाह.

रविश्चन्द्रःकुजः सौम्योजीवः शुक्रः शनैश्चरः तम ध्वजोविनासर्वैग्रहाद्वादशहायनः ३१ पवनाज्जन्म भंयावत्सततद्दशाभवेत् चतुराशीतिकाज्ञेयाकर्मे शेकर्मसंस्थिते ३२

## अस्याउदाहरणमाह.

जन्मचन्द्रः ८।२५।२९।३८ अस्यकलापिण्ड १५९२९। ३८ अष्टशते८०० भक्तं शेषं ७२९ लब्धम् १९ गतमूलवर्तमानपूर्वाषाढाभुग्दशावर्ष १२ शेषांकाः ७२९।३८ गुणितांकाः ८७५५।३६ अस्याऽष्टशते८०० भक्तं पूर्वजन्मनिवर्षादि १०।११।१०।१।१२ द्वादशमध्येऊनं इहजन्मनिभोग्यवर्षादि १।०।२९।५८।४८ एवंसर्वत्रज्ञेयम्

| अथ चतुराशीत्यब्दिकाचक्रम् | | | | | | | |
|---|---|---|---|---|---|---|---|
| रविः | चन्द्रः | मंगलः | बुधः | बृहस्पति | शुक्रः | शनिः | एतेग्रहाः |
| १२ | १२ | १२ | १२ | १२ | १२ | १२ | वर्षाणि |
| स्वाति | विशाखा | अनुराधा | ज्येष्ठा | मूळ | पूर्वापाढा | उत्तराषा. | न |
| श्रवण | धनिष्ठा | शततार. | पूर्वाभाद्र | उत्तराभा | रेवती. | अश्विनी | क्ष |
| भरणी | कृत्तिका | रोहिणी | मृग | आर्द्रा | पुनर्वसु | पुष्य | त्रा |
| आश्लेषा | मघा | पूर्वा | उत्तरा | हस्त | चित्रा | ० | णि |

## अथ द्विसप्ततिकांदशामाह.

लग्नेशेसप्तमेयत्रलग्नेवैमदनाधिपे चिन्तनीयादशा तत्रअधिकासप्ततिः समा ३३ नववर्षाणिसर्वेषां ग्रहाणांवैविकेतुनाम् मूलाज्जन्मर्क्षपर्यन्तंगणयेदष्टभिर्हरेत् ३४ शेषादशाविचिंत्यान्चवदेत्त्वेव महामुने

## अस्याउदाहरणम्.

जन्मचन्द्रः ८।२५।२९।३८ कलापिण्ड १५९२९।३८० इदमष्टशतेन ८०० भक्तं लब्धं १९ शेषांकाः७२९।३८ पूर्वापाढानक्षत्रेचन्द्रदशायां जन्मवर्षे ९ अस्य शेषांकाः ७२९।३८ गुणितांकाः ६५।६६।४२ अस्याउष्टशतेनभक्तेलब्धम् भुक्त वर्षादि ८।२।१५।०।५४ अस्य ९ मध्येऊनं तदा इहजन्मनि भोग्यवर्षादि ०।९।१४।५९।६ एवंसर्वत्रज्ञेयम्

| द्विसप्ततिका दशायन्त्रम्. | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| र. | चं. | मं. | बु. | बृ. | शु. | श. | रा. | ग्रहाः |
| ९ | ९ | ९ | ९ | ९ | ९ | ९ | ९ | वर्षाणि |
| मूळ | पूर्वाषा. | उत्तराषा | श्रवण | धनिष्ठा | शततार. | पूर्वाभाद्र | उत्तराभा | न |
| रेवती. | अश्विनी | भरणी | कृत्तिका | रोहिणी | मृग | आर्द्रा | पुनर्वसु | क्ष |
| पुष्य | आश्ले. | मघा | पूर्वा | उत्तरा | हस्त | चित्रा | स्वाति | त्रा |
| विशा. | अनुराधा | ज्येष्ठा | ० | ० | ० | ० | ० | णि |

# अथ षष्टिहायनीदशामाह.

गुर्वर्कभूसुतानांचवर्षाणिदशकानिच ततःशशिज्ञ
शुक्रार्कपुत्रागूनांसमाश्चषट् ३५ दस्रात्त्रयंचतुष्क
चत्रयंवेदंपुनःपुनः यदैकोलग्नराशीशश्चित्याषष्टिस
मास्तदा ३६

## अस्याउदाहरणम्

जन्मचन्द्रः ८।२५।२९।३८ अस्यकलापिण्डः १५९२९
।३८ इष्टमष्टशतै८०० र्भक्तं लब्धं १९ शेषांकाः ७२९।३८
अग्रेऽष्टोत्तरीवत्भुक्तभोग्यमानीतम् एवंसर्वत्रज्ञेयम् ३६.

| अथ षष्टीहायनीदशायन्त्रम्. | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| बृ. | र. | म | चं | बु | शु | श | रा. | ग्रहाः |
| १० | १० | १० | ६ | ६ | ६ | ६ | ६ | वर्षाणि |
| अश्विनी भरणी कृत्तिका | रोहिणी मृग आर्द्रा पुनर्वसु | पुष्य आश्लेषा मघा | पूर्वाफा. उ. फा. हस्त चित्रा | स्वाति विशाखा अनुराधा | ज्येष्ठा मूळ पूर्वाषाढ उत्तराषा | अभि. श्रवण धनिष्ठा | शततार. पूर्वाभा. उत्तराभा. रेवती. | नक्षत्राणि |

## अथ षड्त्रिंशतिकांदशामाह॰

श्रवणाज्जन्मभंयावद्गणयेदष्टभिर्भजेत् शशांका
र्कसुरज्यारज्ञाऽर्कजौशुक्रराहवः ३७ एकोयंचय
तश्चैकाद्वर्षाण्येषांक्रमात्स्मृताः दिवसेसूर्यहोरायांचिं
त्यावैषड्गुणाब्दिकाः ३८ रात्रौचान्द्रामष्टतष्टादेका
र्त्सनृपजन्मभात् सूर्येन्दुभूमिजानिशाधीशाःपुत्र
सुरेज्यकाः ३९ भृगुमन्दानुशिखिनोलग्नस्याश्चिं
तितादशा दशातेषांसमाद्यास्सुस्पष्टाश्यादयश्चये
४० खेदक्रमाद्दशाचिंत्यायदालग्नेशानिस्थितः क्व
चिद्ग्रहस्तदानोचनाचिंत्यावहुषुबलात् ४१ अस्याः
दशायाः उदाहरणंविंशोत्तरीवज्ज्ञेयम्

| षट्त्रिंशत्यब्दिकादशाचक्रम्॰ | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| चं॰ | सू॰ | बृ॰ | मं॰ | बु॰ | श॰ | शु॰ | रा॰ | ग्रहाः |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | वर्षाणि |
| अ॰ | ध॰ | श॰ | पू॰भा॰ | उ॰भा॰ | रे॰ | अश्वि॰ | भर॰ | न |
| कृ॰ | रो॰ | मृ॰ | आ॰ | पुनर्व॰ | पुष्य | ऽऽश्ले॰ | म | क्ष |
| पू॰ | उ॰ | ह॰ | चि॰ | स्वा॰ | वि॰ | ऽनु॰ | ज्ये॰ | त्रा |
| मू॰ | पू॰ | उ॰षा॰ | ० | ० | ० | ० | ० | णि |

## अथ नवमांशानवदशामाह॰

अथराशिक्रमंवक्ष्येशृणुष्वद्विजपुंगव ग्रहेराश्यादि
कंप्राप्येदशातस्यादिमाभवेत् ४२ ततस्तदधिक-
स्यैवतुल्येनैसर्गिकाद्बलात् राशीशात्सप्तमङ्गेशा

च्चिंत्याराशिक्रमाद्दशा ४३ यस्मिन्नंशकस्थेके दशातस्यादिमामताः अग्राद्ब्जाद्वयेखेटाः केन्त्वं ताः संस्थिताः क्रमात् ४४ दशामानंप्रवक्ष्यामिय थोक्तंब्रह्मणापुरा लिप्तिकृत्वाग्रहंसोमरवाग्धिपि भाजितेफलम् ४५ पुनःसूर्येहृतेलब्धंसमाद्यांश ककादशा सर्वेषांमानवानांचदशास्त्वेषाविचिन्तये त् ४६ ७ ७

## टीका.

अथ श्रीमदाचार्यः द्विचत्वारिंशद्दशानां मध्येकाश्चिदु- क्तास्तदंतर्गताएवनवविधाआह अथेति अथउक्तदशा नंतरं हे द्विजपुंगव राशिक्रमंवक्ष्ये तंशृणुष्व आकर्णयेति शि ष्यंमति श्रवणाभिमुखीकरणंबोध्यम् ग्रहे जात्येकवचनम् ग्रहेषुमध्ये यस्यग्रहस्य राश्यादिकं राश्यंशकलाविकलाः एत- त्सर्वं सर्वापेक्षयाअल्पंन्यूनं तस्यग्रहस्य आदिमा प्रथमादशा भवेत् आदिमेत्युक्त्याऽग्रस्या एवंक्रमेणबोध्याः एतदुक्तं भवति उक्तापेक्षयाऽधिकाअवशिष्टापेक्षयाचहीनाद्वितीया एवंक्रम- शस्तृतीयादिभेदः नवपर्यन्तंबोध्यः इत्येकःप्रकारः ततः तदनन्तरं तदधिकस्य तेषुग्रहेषु अधिकः सर्वापेक्षया अधि- कः राश्यंशादिनाअधिकः विशिष्टः तस्यप्रथमेति पूर्वोक्तक्र मापेक्षयाव्युत्क्रमशः द्वितीयादिप्रकारोबोध्यः इतिद्वितीयो भेदः तुल्येनैसर्गिकाद्बलादिति उक्तभेदद्वये कदाचित् ग्र हद्वयस्यसमत्वंप्राप्तंचेत्प्रथम भेदे योनैसर्गिकवलहीनस्तस्या- दौ ग्राह्या ततः नैसर्गिकबलाधिकस्येति द्वितीयभेदेतु नै- सर्गिकबलाधिकस्य आदौनैसर्गिकबलहीनस्य पश्चाद्ग्राह्यः

ति समत्वेपिविरोधाभावोभेदद्वयेपिज्ञेयः अथ तृतीयभेदः नैसर्गिकाद्बलादिति नैसर्गिकबलेन न्यूनस्यप्रथमा तदपेक्षया अधिकस्य द्वितीयेत्यादितृतीयः प्रकारः इतितृतीयभेदः अस्मिन्भेदत्रयेऽपि राहुकेत्वंतर्गतत्वं बोध्यम् अन्यथा नवानुपलब्धेः राश्यंशादिमत्वात्तयोः नैसर्गिकबलमत्वाच्चेति ननु नैसर्गिकाद्बलादित्यस्यैव प्रकारद्वयं कथमुक्तमितिचेन्नवभेदप्रपूर्तये नैसर्गिकादित्यस्य पुनरावृत्तिरिति ॥ राशीशात्सप्तमांगेशादिति राशीशात् राशेरीशः राशीशः तस्मात् एतदुक्तंभवति जन्मराशिर्मिथुनः तदीशोबुधस्तस्यप्रथमा ततः कर्केशश्चन्द्रस्तस्यद्वितीयेत्यादि ननु अत्रराशिक्रमो ग्राह्यो ग्रहक्रमोग्राह्य इत्याशंकायां राशिक्रमएव राशिक्रमाद्दशेत्युक्तेः ननु तर्हि मिथुनादिक्रमे प्रथमाबुधस्य चतुर्थ्यपि बुधस्यपुनः प्राप्ता कन्याधिपत्वादितिचेत् नात्रग्रहक्रमः तस्माद्द्वादशराशीशानामेव दशाप्राप्तत्वादेकस्यैव पुनः प्राप्तौ नदोषः अत्र वर्षप्रमाणंतु प्रतिराशौनवसंख्ययैवग्राह्यं अष्टोत्तरसंख्योपलब्धेरिति चतुर्थोभेदः ॥ सप्तमेंगेशादितिसप्तमंच अंगंच तयोरीशः तस्मादेतदुक्तंभवति लग्नात्सप्तमाधिपतेः सकाशाद्राशिक्रमाद्दशेतिपंचमोभेदः एवमेवअंगेशान्नाम लग्नाधिपतेः प्रथमा धनाधिपतेर्द्वितीयेत्यादिराशिक्रमात्प्राग्वदेवदशाज्ञेयाइतिषष्ठोभेदः अत्रचतुर्थभेदमारभ्यषष्ठभेदपर्यन्तंदशान्यंताः सप्तैवग्रहाः राहुकेत्वोर्गृहाभावादिति ॥ यस्मिन्निति यस्मिन्नवांशे अंगंलग्नंविद्यते तस्यनवांशस्ययईशः तस्मादारभ्यनवानां ग्रहाणां दशाः क्रमाज्ज्ञेयाः इतिसप्तमोभेदः अग्रादिति नवांशानांयदग्रं अंतिमंनाम

नवमोग्रहः तदारभ्य प्रथमपर्यन्तं ग्रहाणां क्रमशोदशाज्ञेया इति अष्टमोभेदः ॥ अब्जादिति चंद्रात्सकाशात् रविपर्यन्तं नवानां क्रमाद्दशा ग्राह्याः अस्मिन्त्रिप्रकारके दशाभेदे राहुकेत्वं तर्गतत्वसूचनाय खेटाः केत्वंताः संस्थिताः क्रमादिति स्फुटं लिखितं तेन सप्तमभेदमारभ्यनवमपर्यंतं राहुकेत्वंतर्गतत्वंबोध्यं नतु राशीशांगेशसप्तमेशादिभेदत्रयवत् राहुकेतुरोहित्यमितिदिक् ॥ अग्रे श्लोकद्वयेन दशानयनप्रकारः स्फुटः ॥

## अथनवांशानवदशाउदाहरणमाह

यथाजन्मचन्द्रः ८।२५।२९।३८ अस्यकलापिंडः १५९२९।३८ अस्य विंशता २० भक्ते लब्धांकाः ७६४ इदं द्वादशभिर्भक्ते लब्धं भुक्तवर्षादि ६४।०।१९।०।० अस्यांऽष्टोत्तर १०८ मूनं कार्यम् तदा भोग्यवर्षादि ४३।११।११।०।० एवं सर्वत्रज्ञेयम् परंत्वयत्रयत्रग्रहाणांदशा तत्र प्रत्येक ग्रहाणांद्वादश १२ वर्षाणि ग्राह्याणि यत्रराशी दशा तत्रप्रतिराशिनववर्षाणि ग्राह्याणि सर्वत्राष्टोत्तरशतमानंज्ञातव्यम् ४६

## अथ राद्यंशाकदशामाह

तन्वादिभावाः संस्पष्टाः प्रोक्तमार्गेण चानयेत् लग्नेशांशस्थितो यत्र दशा तस्यादिमा स्मृता ४७ द्वितीयेशादितश्चाग्रे ज्ञेया राद्यंशकादशा चिंत्या लग्नेव लवती लग्नेशो वा बलान्विते ४८ अस्या दशाया उदाहरणं नवमांशवज्ज्ञेयम्

## अथकालदशामाह.

संध्यापंचघटिप्रोक्तादिनषष्ट्यंशनाडिका सूर्यबिंबा-
र्द्धतःपूर्वेपरस्तादुदयादपि ४९ एवंसंध्याद्वयंविंश-
द्घटिकाभिःप्रकीर्तितम् दिनस्यविंशद्घटिकाचपूर्ण
संज्ञाउदाहृताः ५० निशायामुग्धसंज्ञाचघटिका
विंशतिश्चयाः सूर्योदयस्ययासंध्याखण्डाख्याद-
शनाडिकाः ५१ अस्तकालस्ययासंध्यासुधा-
ख्यादशनाडिकाः पूर्णेमुग्धेगतघटीषड्गुणेनव-
धालिखेत् ५२ तथाखण्डसुधासूर्यहतेतुनवधा
लिखेत् विभक्तानीन्द्रियगुणैर्मानाख्यानफलानिच
५३ क्रमात्सूर्यादिकानांवैमानमुक्तंमुनीश्वरैः स्व
स्वमानंस्वसंख्याभिर्गुणितेस्युःसमादयः ५४

## टीका.

दिनस्येति अत्रदिनशब्दोहोरात्रपरः अहोरात्रंषष्टि
घट्यात्मकंतन्मध्ये पंचघटिकासंध्याप्रोक्ताकथिता साचद्वि-
विधा अवांतरितचतुर्विधाभवंति तद्यथा सूर्यबिंबार्द्धादस्ता
दुदयादपि पंचपंच घटिका पूर्वापराज्ञेया एवं द्विविधा संध्या
दशदशघटिकाभिः विंशद्घटिकाकथिता दिनस्यशेषविंश-
द्घटिकापूर्णसंज्ञा रात्रौ शेषविंशद्घटिका मुग्धसंज्ञा सूर्यो-
दयस्य पूर्वापरे पंचपंच घटिका दशनाडिका साखण्डाख्या सं-
ज्ञा एवंचास्तकाले दशनाडिकायाः सुधाख्यासंज्ञा एवं पूर्ण
मुग्धखण्डसुधा चतुर्विधभेदाःसंति एषांमध्येपूर्णमुग्धे यदा

जन्मसमये तदा गतघटीभिः षड्गुणाकार्या तेननवधालिखेत् अथवा खण्डसुधायां जन्म तदागतघटीभिः द्वादशगुणितेन नवधालिखेत् परं इंद्रिययुगे ४५ र्भक्ते र्लब्धम् तत्सूर्यादिग्रहाणां श्रीमदाचार्येणमानमुक्तं नाम कथितम् सूर्यादिग्रहाणांस्वस्वसंख्याभिः स्वस्वमाने गुणितेसति समादयो वर्षादयः स्युः

## अस्याउदाहरणम्

अथ कालचक्रं द्विभेदभिन्नंतन्मध्ये प्रथमभेदोदाहरणमाह यथा दिनस्य विंशद्घटिकायांजन्मेष्टं ८।१६ तन्मध्ये सूर्योदय ५ घटिकाऊनंकार्यं शेषघटिका ३।१६ इदं पूर्णसंज्ञायांजन्म· एतएव षड्गुणाकार्या जातांका १९।३६ इदंच पंचचत्वारिंशत् ४५ भक्तेर्लब्धम् ०।२६।८।०।० एतत् सूर्यादिग्रहाणां मानंपरंच सर्वेषांग्रहाणां स्वस्यसंख्याभिर्गुणितं यथा सूर्यसंख्या १ गुणिताजातांका ०।२६।८।०।० मासस्थाने द्वादश १२ भक्ते र्लब्धं वर्षादि २।२।८।०।० एवं सर्वत्रज्ञेयम्

| अथ कालचक्रमहादशायन्त्रम्. | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| सू. | चं. | मं. | बु. | बृ. | शु. | श. | रा. | के. |
| <br>२<br>२<br>८<br>०<br>१० | <br>४<br>४<br>१५<br>०<br>० | <br>६<br>६<br>२४<br>०<br>० | <br>८<br>९<br>२<br>०<br>० | १०<br>११<br>१०<br>०<br>० | १३<br>१<br>१८<br>०<br>० | १५<br>३<br>२६<br>०<br>० | १७<br>६<br>४<br>०<br>० | १९<br>८<br>१२<br>०<br>० |
| १९<br>०० | १९<br>०३ | १९<br>०७ | १९<br>१३ | १९<br>२२ | १९<br>३२ | १९<br>४५ | १९<br>६१ | १९<br>७८ |
| १७<br>६५ | १७<br>६८ | १७<br>७२ | १७<br>७८ | १७<br>८७ | १७<br>९८ | १८<br>११ | १८<br>२७ | १८<br>४४ |
| १०<br>५<br>१४<br>२२ | ०<br>१२<br>१४<br>२२ | ४<br>२८<br>१४<br>२२ | ११<br>२२<br>१४<br>२२ | ८<br>२४<br>१४<br>२२ | ८<br>४<br>१४<br>२२ | ९<br>२२<br>१४<br>२२ | १<br>१८<br>१४<br>२२ | ७<br>२२<br>१४<br>२२ |

## अथपुनःकालचक्रदशामाह.

कालचक्रंप्रवक्ष्यामिनराणांहितकाम्यया यावद्देहादिजीवांतमितिचक्रस्यनिर्णयम् ५५ सप्तविंशतिऋक्षाणिअनुलोमविलोमतः वक्ष्येहंचैतयोश्चैव अश्विन्यादियथाक्रमम् ५६ द्वेद्वेरेखात्मकेचक्रेचतुःकोणंलिखेत्क्रमात् द्वादशाग्रहनिर्माणंमेषादिद्वादशान्यसेत् ५७ ईशान्यादिक्रमेणैवमीनान्तंद्वादशान्यसेत् एवंक्रमेणचक्रंतल्लिखेद्द्विजनन्दन ५८ द्वादशारंलिखेच्चक्रतिर्यगूर्ध्वसमानकम् गृहाणिद्वादशैवंस्युःसव्येषुचयथाक्रमम् ५९ द्वितीयादिषुकोष्टेषु राशीन्मेषादिकान्न्यसेत् एवंद्वादशराशयाख्यंकालचक्रमुदीरितम् ६० अश्विन्यादित्रयस्तारासव्यमा-

र्गम्प्रतिष्ठितम् अपसव्यत्रयस्ताराारोहिण्यादियथाक्रमम् ६१ अग्रेपुनःकालचक्रदशासव्यापसव्यमार्गमग्रेस्फुटंवक्ष्यति

## अथ चक्रदशामाह.

राशीश्वराद्दशाज्ञेयासूर्यादीनांक्रमात्पुनः दिवारात्रिस्तथासंध्यात्रिकालेत्रिविधादशा ६२ चक्राख्याचदशा प्रोक्तातयाग्रेद्विजनन्दन लग्नस्थस्यदशाचादौततोवित्तस्थितादयः ६३ त्रिधादयोयदैकस्थस्तदाभागाद योधिकात् तत्रापितुल्योनैसर्गाद्बलात्सूर्योधिकस्य च ६४ राशिप्रमितवर्षाणिभागाद्याश्चानुपाततः भावानामपिलग्नाद्यवर्षाणिदिङ्मितानिच ६५

## चक्रदशोदाहरणमाह.

दिवाजन्म तदा राशीश्वराद्दशाज्ञेया अत्रतु राशीश्वरो गुरुः कुंभस्थस्तेनायं कुंभआदिदशा ग्राह्यारात्रौजन्म तदा लग्न स्यदशा ग्राह्या यदा संध्यायांजन्म तदा धनभावाद्दशा ग्राह्या एवं सर्वत्रज्ञेयम् ६५

अथ चक्रदशामाह

| ११ | १२ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | भावः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १० | १० | १० | १० | १० | १० | १० | १० | १० | १० | १० | १० | वर्ष |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | मासा |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | दिन |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | घटी |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | पल |
| १९०० | १० १९ | २० १९ | ३० १९ | ४० १९ | ५० १९ | ६० १९ | ७० १९ | ८० १९ | ९० १९ | २००० | २०१० | संवत् |
| [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | गविः |

यथा मेषराशिस्वामि भौमः द्वादशस्थानस्थिते सति एकादशवर्षाणि स्युः एवं वृषस्य दशवर्षाणि लब्ध्वा तस्यस्वामीउच्चराशि स्थिते वर्षमेकं वृद्धिर्जाता इमान्येकादशवर्षाणिस्युः मकरराशि स्वामीं शनिः स्वराशिस्थे अतएवद्वादशवर्षाणिस्युः एवंसर्वत्रज्ञेयं

| अथ चरदशाचक्रम्. | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | योगा |
| ११<br>०<br>०<br>०<br>० | ११<br>०<br>०<br>०<br>० | ७<br>०<br>०<br>०<br>० | ७<br>०<br>०<br>०<br>० | ६<br>०<br>०<br>०<br>० | ८<br>०<br>०<br>०<br>० | ६<br>०<br>०<br>०<br>० | ६<br>०<br>०<br>०<br>० | २<br>०<br>०<br>०<br>० | १२<br>०<br>०<br>०<br>० | १२<br>०<br>०<br>०<br>० | १<br>०<br>०<br>०<br>० | ८९<br>०<br>०<br>०<br>० |
| १<br>१९०० | ११<br>१९ | २२<br>१९ | २९<br>१९ | ३६<br>१९ | ४२<br>१९ | ५०<br>१९ | ५६<br>१९ | ५२<br>१९ | ६४<br>१९ | ७६<br>१९ | ८८<br>१९ | ८९<br>१९ |
| १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ |

## अथ नवमांशस्थिरदशामाह

अधुनासम्प्रवक्ष्यामिदशास्थिरविशेषतः नवांशार्क दशामानंतवाग्रेकथयाम्यहम् ८८ मनिराशिप्रदिष्टे वंनवनवाब्दादशास्थिरा तन्वादिव्ययभावानांस्पष्टीकृत्वाद्विजोत्तम ८९ ग्रहानवांशायुरीत्यादशा तुल्यानवांशका अस्थिराइतिविज्ञेयापरपक्षमिदं क्रमम् ९० पक्षद्वयंप्रवक्ष्यामिचरस्थिरद्वयंद्विज पूर्वंचरदशावक्ष्येतवाग्रेद्विजनन्दन ९१ ओजलग्ने जनुर्यस्यनवांशकदशाद्विज लग्नादिकसमारभ्य याजन्मातप्रभृतिर्दशा ९२ समराशौजनुर्यस्यन-

वांशकदशाद्विज राश्यादिकेसमारभ्यपुराशंभुमणो-
दितम् ९३ ओजराशिगतेखेटेक्रमात्तद्दशानयेत्
तद्राशिनवांशाद्याःसमेतुविपरीततः ९४ दशाप्रवर्त्त
कः खेटोविषमर्क्षगतोद्विज राशिप्रतिनवाब्दानांसर्वेषां
गणयेत्क्रमात् ९५ अष्टोत्तरशताब्दानांसंख्यापूर्वं
तदाशका ख्याताःस्थिरदशाज्ञेयानिर्विशंकंद्विजोत्त
म ९६ दशाप्रवर्त्तकःखेटोसमराशिगतोद्विज त-
त्तद्राशिसमारभ्यगणयेद्व्युत्क्रमेणच ९७ ततस्त
द्राशिगतानांचनवांशास्तेद्विजोत्तम अष्टोत्तरशतं
संख्याह्यब्दानांचदशास्थिरा ९८ विषमर्क्षदशाप्रा
प्तेमेषेमेषादिकंगणेत् वृषेवृषादिकंगण्यक्रमेणद्विज
सत्तम ९९ समराशिदशाप्राप्तेनवांशकक्रमेणच
सत्संमुखराशिसमारभ्यगणयेद्विजसत्तम १०० ए-
वंतत्तद्दशाकालेविषमेपूर्ववत्क्रमात् समेसम्मुख
मारभ्यनवांशकक्रमेणच १०१ मेषेमेषादिकंगण्यं
वृषेचमकरादिकम् मिथुनेचतुलाद्यांचकर्केकर्कादि
कंद्विज १०२ एवंक्रमेणगणयेद्विषमर्क्षदशान्तरे स
मर्क्षान्तर्दशाप्राप्तेगणनासंमुखेनच १०३ मेषेधनुष
माद्यंचवृषेकन्यामृगंगणेत् मिथुनेचतुलाद्यंचकर्के
मीनादिकंचयत् १०४ एवंक्रमेणगणयेत्समेसंमुख
राशितः द्वयोःक्रममहंवक्ष्येत्रिभूलीज्ञापितयथा १०५

अथनवमांशस्थिरदशाउदाहरणम्

नवांशास्थिरदशाऽत्रओजलग्न ०।६।३।४२ अतएव

यथा मेषराशिस्वामि भौमःद्वादशस्थानस्थितेसति एकादशवर्षाणि स्युः एवं वृषस्य दशवर्षाणि लब्ध्वा तस्यस्वामीउच्चराशिस्थिते वर्षमेकंवृद्धिर्जाता इमान्येकादशवर्षाणिस्युः मकरराशिस्वामीं शनिः स्वराशिस्थे अतएवद्वादशवर्षाणिस्युः एवंसर्वत्रज्ञेयं

**अथ चरदशाचक्रम्.**

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | योग |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ११ | ११ | ७ | ७ | ६ | ८ | ६ | ६ | २ | १२ | १२ | १ | ८९ |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| | ११ | २२ | २९ | ३६ | ४२ | ५० | ५६ | ५२ | ६४ | ७६ | ८८ | ८९ |
| १९०० | १९ | १९ | १९ | १९ | १९ | १९ | १९ | १९ | १९ | १९ | १९ | १९ |
| १० | १० | १० | १० | १० | १० | १० | १० | १० | १० | १० | १० | १० |
| ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ |
| १५ | १४ | १४ | १४ | १५ | १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ |
| २२ | २२ | २२ | २२ | २२ | २२ | २२ | २२ | २२ | २२ | २२ | २२ | २२ |

## अथ नवमांशस्थिरदशामाह

अधुनासम्प्रवक्ष्यामिदशास्थिरविशेषतः नवांशाक दशामानंतवाग्रेकथयाम्यहम् ८८ प्रतिराशिप्रदिष्टेवनवनवाब्दादशास्थिरा तन्वादिव्ययभावानांस्पष्टीकृत्वाद्विजोत्तम ८९ ग्रहानवांशायुरीत्यादशा तुल्यानवांशका आस्थिराइतिविज्ञेयापरपक्षमिदंक्रमम् ९० पक्षद्वयंप्रवक्ष्यामिचरास्थिरद्वयंद्विज पूर्वंचरदशावक्ष्येतवाग्रेद्विजनन्दन ९१ ओजलग्ने जनुर्यस्यनवांशकदशाद्विज लग्नादिकसमारभ्य याजन्मात्प्रभृतिर्दशा ९२ समराशौजनुर्यस्यन-

वांशकदशाद्विज राश्यादिकेसमारभ्यपुराशंभुमणो-
दितम् ९३ ओजराशिगतेखेटेक्रमात्तद्दशानयेत्
तद्राशिनवांशाद्याः समेतुविपरीततः ९४ दशामवर्त्त
कः खेटोविषमर्क्षगतोद्विज राशिमतिनवाब्दानांसर्वेषां
गणयेत्क्रमात् ९५ अष्टोत्तरशताब्दानांसंख्यापूर्व
तदंशका ख्यातास्थिरदशाज्ञेयानिर्विशंकंद्विजोत्त
म ९६ दशामवर्त्तकः खेटो समराशिंगतोद्विज त-
त्तद्राशिसमारभ्यगणयेद्धुक्रमेणच ९७ ततस्त
द्राशिगतानांचनवांशास्तेद्विजोत्तम अष्टोत्तरशतं
संख्याह्यब्दानांचदशास्थिरा ९८ विषमर्क्षदशामा
सेमेषेमेषादिकंगणेत् वृषेवृषादिकंगण्यक्रमेणद्विज
सत्तम ९९ समराशिदशामासेनवांशकक्रमेणच
ससंमुखराशिसमारभ्यगणयेद्विजसत्तम १०० ए-
वंतत्तद्दशाकालेविषमेपूर्ववत्क्रमात् समेसम्मुख
मारभ्यनवांशकक्रमेणच १०१ मेषेमेषादिकंगण्यं
वृषेचमकरादिकम् मिथुनेचतुलाद्यंचकर्केकर्कादि
कंद्विज १०२ एवंक्रमेणगण्येद्विषमर्क्षदशान्तरे स
मर्क्षान्तर्दशामासेगणनासंमुखेनच १०३ मेषेधनुष
माद्यंचवृषेकन्यामृगंगणेत् मिथुनेचतुलाद्यंचकर्के
मीनादिकंचयत् १०४ एवंक्रमेणगणयेत्समेसंमुख
राशितः द्वयोःक्रममहंवक्ष्येत्रिभूलीभाषितंयथा १०५

## अथ नवमांशास्थिरदशाउदाहरणम्

नवांशास्थिरदशाऽत्र ओजलग्न ०।६।३।४२-अतएव

निर्दिशांकंद्विजोत्तम ११५ ततोबलविशेषार्थोनैसर्गिकं मतंपुरा तस्मान्निसर्गकबलंसंग्राह्यंद्विजसत्तम ११६ अग्राह्यःसग्रहोयायाद्गृहेयद्यधिकंग्रहः साम्येचर स्थिरद्विर्द्वाक्रमात्स्युर्बलशालिनः ११७ एवंचरस्थिर प्राणिस्थिरोद्वंद्ववलीद्विज ध्यायाविलंबनिसर्गोचिन्त यित्वानसंशयः ११८ पूर्वोक्तेकारकाध्यायेचिन्तये द्विजसत्तम कारकयोगादिबलंतस्मात्प्राणवतीभ वेत् ११९ राशौकारकयोगेषुनिजनाथेनसंयुते सा राशिर्बलवान्विप्रकारकेयोगकेमते १२० स्वामियु क्ताकारकेषुयत्तद्राशिर्बलीद्विज तत्तद्राशौचिंतनीय मग्रमग्रेविशेषतः १२१ एकराशौबहुग्रहाःसंयुक्ता द्विजसत्तम राशिद्वारावलीज्ञेयायदिग्रग्रायनेधिकः १२२ स्वल्पांशाल्पवलीज्ञेयामध्यंशान्मध्यवीर्यकः अंशाधिकबलीज्ञेयामग्रावनविलक्षणात् १२३ स्वो जराशौवशिकेच पुरतःपार्श्व २।१२संस्थितः पृष्ठतोवा प्राणइतिबलदत्वेनकथ्यते १२४ इतिप्रथमभेदः यस्मिन्राशेःस्वामियोगेगुरुचांद्रीनिरीक्षिते सराशिर्व लवतीचद्वितीयेप्राणिरेवच १२५ राशीनांद्वादशानांच बलमेवंद्वितीयकम् इतिप्रोक्तप्रकारेणद्वितीयंज्ञायते बलम् १२६ इतिद्वितीयप्राणभेदः स्वा मिनातृतीयंप्राणेतवाग्रेगदितंमया स्वात्मकारककुंड ल्यांचिन्तयेद्द्विजसत्तम १२७ केन्द्रेपणफरंप्रोक्तं स्वामिदौर्बल्यमेवहि केन्द्रदौर्बल्यनास्तिचेपणफरेनैक संज्ञकः १२८ आपोक्लिमेद्विगुणितमेवंदौर्बल्यमेवच

तृतीयंप्राणिरित्येवजानीयाद्द्विजनन्दन १२९ इतितृ
तीयप्राणभेदः चतुर्थप्राणविज्ञेयंतवाग्रेचवदाम्यह
म् पापयोगेनरहितापापक्रांतेनपश्यति सराशिर्बल
वान्विप्रप्राणधारेचतुर्थकः १३० चतुर्विधेप्राणसं
ज्ञेएतेषांबलवीर्ययुक् सराशिरत्रभागेनअन्तर्पाकेद्वि
जोत्तम १३१ इतिचतुर्थभेदः

## अस्या उदाहरणमाह

अत्रतु आत्मकारकोभौमः सएवाद्यप्राणः द्वितीयांशनि
प्राणः कुंतमकरस्थेस्यराशिबुधसंयुक्ते अतएवद्वितीयशनिप्रा
णस्थोच्चेभृगुकारककुंडल्यांभृगुउच्चस्थ्येकेंद्रगतेनायंभृगुतृतीयप्रा
णः पापग्रहेरहितेचन्द्रचतुर्थप्राणः १३१

| अथ चतुर्विधप्राणदशायंत्रम्. | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १२ मं. | १ | २ | १० श. | ११ | १२ | १२ शु. | १ | २ | ९ चं. | १० | ११ | भा. |
| १ ० ० ० ० | ११ ० ० ० ० | ११ ० ० ० ० | १२ ० ० ० ० | १२ ० ० ० ० | १ ० ० ० ० | १ ० ० ० ० | ११ ० ० ० ० | ११ ० ० ० ० | २ ० ० ० ० | १२ ० ० ० ० | १२ ० ० ० ० | वर्ष. ० ० ० ० |
| १८०० | १८०१ | १८१२ | १८२३ | १८३ | १८४७ | १८४८ | १८४९ | १८६० | १८७१ | १८७३ | १८८५ | १८९७ |
| १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ |

कारकलग्नमाह.



अस्यादशायावर्षाणि चरदशावदानीतम् ॥

वांशाब्दिसंज्ञेयंभावेबलाद्दितीयकम् ॥ १५९ ॥ स्वस्वाम्या
दिदशायाद्याफलादेशायहेतवे ॥ स्थिरनवांशोवर्षाणि
राशिप्रतिनवैवहि ॥ १६० ॥ चरराशिनवांशाब्देमासान्येचचर
स्थिरा ॥ विधेयेपिफलार्थायबलेग्राह्याद्विजोत्तम ॥ १६१ ॥
यस्मिन्कालेयस्यराशेयदासाचचरस्थिरा ॥ पर्यायस्त
द्दशायांचसाराशिर्द्वारमुच्यते ॥ १६२ ॥ लग्नाद्यावद्दूरं
स्याद्द्वाररराशिद्विजोत्तम ॥ तस्मात्तावद्दूरोहिवाद्याराशिभ
वस्यपि ॥ १६३ ॥ चरानुक्तिलमार्गस्यादष्टाषष्टादिकास्थि
रे ॥ उभयेकंटकाज्ञेया लग्नपंचमभाग्यतः ॥ १६४ ॥ चर
स्थिरद्विस्वभावेष्वोजेषुमाकृक्रमोक्रमः ॥ तेषुत्वन्येषुयु
ग्मेषुग्रास्यंव्युत्क्रमतोखिला ॥ १६५ ॥ एवमुल्लिखि
तोराशिपाकराशिरितिस्मृतः ॥ सएवभोगराशिश्चप
र्यायेप्रथमेस्थिरः ॥ १६६ ॥ लग्नाद्याचतिथमाकःपर्या
येष्वदृश्यते ॥ तमातामतिथिभोगःपर्यायेयत्रगृह्यताम्
॥ १६७ ॥ तदिदंचरपर्यायस्थिरपर्याययोर्द्वयोः ॥ त्रिकोणा
स्व्यदशायांचपापभोगप्रकल्पनम् ॥ १६८ ॥ तयोर्द्वयोः
समालोक्ययोगपापेनवंचनत् ॥ पापग्रहदशायांचवंध्या
दिपरिचिंतयेत् ॥ १६९ ॥ पापयोगेचपापाद्येदेहपीडामनो
व्यथा ॥ नृपाद्भीतिमहाक्लेशंभवतिद्विजसत्तम ॥ १७० ॥
यस्मिन्राशेपापभोगपापाश्रितपापयोगच ॥ स्वर्क्षेगुरु
समीपस्थेपापयोगानबाधते ॥ १७१ ॥ शुभेरवेटाचसर्वेवा
मध्येकोपिगृहोद्विज ॥ समीपेस्वर्क्षतुंगस्थेपापयोगान
बाधते ॥ १७२ ॥ शुभैःशुभफलवाच्यंसादशासर्वशोभ
ना ॥ राज्यलक्ष्मीप्रदाताचप्रतिष्ठागौरवंकरवम् ॥ १७३ ॥

बलिनोशुक्रशशिनोकेन्द्रारव्यानुदशानयेत् पुरुषं
श्चेतसोनेयात्स्त्रियश्चेद्दर्मणंनयेत् १७४ आदौश्च
कादितोनेयाद्द्वितीयंसूर्यतोद्विज कुजादितस्तृतीयं
चप्रकारंसर्वतोनयेत् १७५ क्रमव्युत्क्रमभेदेनभृ
गुभानुकुजानयेत् सर्वेषाम्फलमित्येवयथाशांशुभ
णोदितम् १७६ लग्नसप्तमयोर्मध्येबलीचैकःप्रक
ल्पयेत् केन्द्रपणफरापोक्लुदशार्थेद्विजसत्तम १७७
केन्द्रप्रथमतोनेयात्पंचमात्पणफरेस्थिते नवमाच्चापो
क्लिमेनीयाद्दशारंभमिदंक्रमात् १७८ ओजेसमप्र
भेदेनपुरुषःस्त्रीप्रकल्पयेत् लग्नात्ताद्विसुखाद्विप्रद
शाद्वादशराशिषु १७९ चरेपूर्वप्रकारेणास्थिरेषष्ठादि
केनच यावद्वादशभावानांभेदंचत्वारभाषितम् १८० च
रेप्रकारमेकेवंस्थिरेषष्ठादितोद्विज उभयत्रयप्रकार
श्चचरेतुक्तमिदंत्रयम् १८१ चरपर्यादशाप्रोक्तापू
र्वारव्येयंद्विजोत्तम स्थिरपर्यादितःप्रोक्तासप्ताष्टन
ववर्षतः १८२

## अस्या उदाहरणमाह

अत्रतु बुधोब्रह्मा तस्मात् षष्ठग्रहः केतुः तस्मात्षष्ठो ग्रहोगु
रुः एवंअन्येपिबोद्धव्यम्

अथ ब्रह्मदशायंत्रम्.

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १० बु. | ११ | १२ के | १ | २ बृ | ३ | ४ सू. | ५ | ६ शु. | ७ | ८ चं. | ९ | भाव |
| ६ ० ० ० ० | ६ ० ० ० ० | ६ ० ० ० ० | ६ ० ० ० ० | ६ ० ० ० ० | ६ ० ० ० ० | ६ ० ० ० ० | ६ ० ० ० ० | ६ ० ० ० ० | ६ ० ० ० ० | ६ ० ० ० ० | ६ ० ० ० ० | ७२ वर्ष |
| १९०० | १९०६ | १९१२ | १९१८ | १९२४ | १९३० | १९३६ | १९४२ | १९४८ | १९५४ | १९६० | १९६६ | [illegible] |
| १० ४ १४ २२ | १० ४ १५ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १५ २२ | १० ४ १४ २२ | १० ४ १५ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १५ २२ | १० ४ १४ २२ | १० ४ १४ २२ |

## अथ केन्द्रादिदशामाह.

अथकेन्द्रदशारीत्याभेदानाहद्विजोत्तम १८३ प्रथमेचरराशौचलग्नेवासप्तमेपिवा बलवान्राशिरारभ्य उक्तमार्गेदशाक्रमः १८४ विषमेसमेनभेदात्प्रथमेप्राक्क्रमोत्क्रमः प्रथमादिद्वितीयादि द्वादशानांक्रमेणच १८५ सम्प्राक्क्रमोक्तपदमनुज्झितक्रमोपरि दशाद्वादशराशीनांक्रमव्युत्क्रमभेदतः १८६ स्थिरराशौद्वितीयेपिलग्नेवासप्तमेद्विज षट्पष्ठादित्यरीत्यान्चदशारंभःप्रकाशयेत् १८७ रवितःपूर्वमुक्तेनक्रमव्युत्क्रमभेदतः क्रमाद्वृषेवृश्चिकेचव्युत्क्रमात्कुंभसिंहयोः १८८ पृथक्क्रमेणतृतीयद्विस्वभावदशाद्विज लग्नेवासप्तमेवापिबलवान्विलोकयेत् १८९ चतुष्टकेन्द्रादिदशालग्नपंचमभाग्यतः केन्द्रे

लग्नेततोनेयात्फणफरेपंचमादितः १९० आपोक्लिमे
भाग्यतश्चदशारंभंद्विजोत्तम नवंनवंसमाश्राद्यामैत्रे
यस्पष्टभाषिते १९१

## अथ कारककेन्द्रदशामाह

सूर्यादिनवखेटाश्चआयुर्दातानवांशकान् नवभि
र्नवभिर्वर्षैःकारकेन्द्रादिकादशा १९२ तेषांनवांश-
कानांचह्यब्दानांद्विजसत्तम कारकेन्द्रादिसंस्था
प्यक्रमात्पूर्वसमानयेत् १९३ आदौकेन्द्रस्थराशि
श्चतस्याधिपक्रमेणच नवभिर्नवभिर्वर्षैःकारके-
न्द्रादिसंस्थिता १९४ आदौकेन्द्रस्थराशिश्चतस्या
धिपक्रमेणच बलाधिक्योनप्रथमस्ततोदुर्बलसं-
ज्ञकः १९५ प्रतिभेनववर्षाणिकारकाश्रितराशितः
जन्मसम्पद्विपत्क्षेमप्रत्यरीसाधकोबुधः १९६ मै-
त्रादिमैत्रमित्येवंतदन्तर्दशानयेत् स्वकेन्द्रस्थाधिपा
नांचसूर्यादीनांग्रहाद्विज १९७ कारकलग्नेसमा-
लोक्यलग्नसप्तमयोर्बली तदारभ्यक्रमेणैवंक्रमव्यु
त्क्रमभेदतः १९८ गृहकारकपर्यन्तराशिसंख्या
दशाब्दिका ततःकारककेन्द्रादिविभागेनबलीभवे
त् १९९ आदौकेन्द्रस्थितानांचस्थितानांपणफरे
स्थितः आपोक्लिमेस्थितानांचततोपिवलवद्द्विज
२०० बलादथाप्रथमेविभक्रमेणसर्वदुर्बला केन्द्रा
दिस्थाग्रहाणांचदशाब्दानयनंकृतम् २०१ खेटा
त्कारकपर्यन्तराशीसंख्याप्रमाणतः एवंदूरंमहा

प्राज्ञनवत्यब्दानयेत्क्रमात् २०२ यथाकारकग्रहस्या
ब्दास्तथाकारकयुक्तकाः तत्तद्ग्रहाणामब्दानामानीय
द्विजसत्तम २०३ एवंस्थिरेदशारभ्यस्थानंदर्शयतिद्वि
ज अन्तर्दशाब्दमानीयंह्यार्क१२भानांक्रमेणच २०४
लग्नादिचतुःकेन्द्रेषुवैषम्याधिकवैद्विज तद्राशेःस्थि
तिमारभ्यह्येकाब्देनक्रमेणच २०५ चतुःकेंद्रेषुविमेंद्र
विषमातिबलाधिका दशाप्रदत्वात्साराशिःकारकंप
र्यवस्थितः २०६ अन्तर्दशांतदारभ्यद्वादशराशिषु
द्विज प्रतिराश्येकमब्दंचेरसर्वेस्पष्टाधिपाःक्रमात्
२०७ एवंमहादशाब्दानांद्वादशराशिषुभ्रमेत् त-
दनन्तर्दशाज्ञेयाभानुराश्योपरिभ्रमन् २०८ नवां
शाख्यादशाब्दानामित्यनुवृत्यमेवच आदिराशिन
वाब्दानांसंग्राह्योद्विजसत्तम २०९ एवंकेंद्रबला-
धिक्यमारभ्यप्रथमादशा दुर्बलानांचसर्वेषामब्दाना
मानयेत्क्रमात् २१०

## अथ केन्द्रादिदशाउदाहरणम्.

अथ प्रथमचराश्विनेदमध्येलग्नसप्तमयोर्मध्ये योबलवान्
सप्रथमतोग्राह्यः एवंस्थिरद्विस्वभावादिज्ञेयम् अत्रतुचर
लग्नमध्येसप्तमोबलवान् तएवतुलायांदशाप्रारंभ अग्रे मकरः
अत्रमेषः ४ पुनः पणफरान् वृश्चिकदशा अग्रे कुंभः अग्रे
२ पुनः आपोक्लिमेधनंद्वितीयं १२ तृतीयं ३ एवं सर्वत्रज्ञेयम्
अत्रतु तुलाचरराशिबलवान्सएवग्राह्यः वर्षाणि९ नवनव
ग्राह्याणीतिसर्वत्रज्ञेयम्

## अथ केंद्रादिदशाचक्रम्.

| ७ | १० | १ | ४ | ८ | ११ | २ | ५ | ९ | १२ | ३ | ६ | भाव |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ९ ६ ० ० ० | ९ ० ० ० ० | ९ ० ० ० ० | ९ ० ० ० ० | ९ ० ० ० ० | ९ ० ० ० ० | ९ ० ० ० ० | ९ ० ० ० ० | ९ ० ० ० ० | ९ ० ० ० ० | ९ ० ० ० ० | ९ ० ० ० ० | १०८ ० ० ० ० |
| १९ ० | १९ ९ | १९ १८ | १९ २७ | १९ ३६ | १९ ४५ | १९ ५४ | १९ ६३ | १९ ७२ | १९ ८१ | १९ ९० | १९ ९९ | २० १०८ |
| १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ |

### अथ कारकग्रहदशानयनमाह.

लग्नादीसतमाद्विप्रगणनीयात्क्रमोत्क्रमः कारकपर्यंतराशिश्चसंख्यायत्रात्मिकाःसमाः २११ कारकग्रहदशाविप्रअन्येषांतुव्यतिक्रमः ग्रहाःकारकपर्यन्तंविषमसमविरोधतः २१२ क्रमव्युत्क्रमभेदेनगणनीयाद्विजोत्तम संख्यास्तुतुद्दशाब्दाचपुराशंभुमणोदितम् २१३ कारकयुक्ताग्रहाणांतुकारकतुल्याब्दसंख्यया संग्राह्यचसमाज्ञेयापूर्वोक्तेनदशाक्रमः २१४ लग्नात्कारकपर्यन्तंसंख्यान्यस्यदशाभवेत् गणनीयंप्रयत्नेनसमालब्धादशांनयेत् नद्युक्तानांतुल्याब्दास्स्युःप्रत्येकंतुदशाक्रमात् उभयोरधिकंसंख्याकारकस्यदशासमाः २१६ कारकस्यद्युतश्चादौतत्केन्द्रादिस्थितास्ततः दशाक्रमेणविज्ञेयाः शुभाशुभफलप्रदः २१७ पूर्वम्फल

प्रवक्ष्येऽहं दशाफलं द्विजोत्तम स्वामिना बलवान् विम
तस्याधिकशुभं फलम् २१८

## अथकारकग्रहदशोदाहरणम्

अत्रात्मकारको भौमः मीनस्थो लग्नमारभ्य भौमपर्यन्तम
ब्दानि ११ स्युः परं अमात्यकारकश्चन्द्रः धनराशिस्थो लग्नमार
भ्य चन्द्रपर्यन्तमष्टौ वर्षाणि स्युः एवमग्रेपि बोद्धव्यम्

| अथ कारकचक्रमाह | | | | | | |
|---|---|---|---|---|---|---|
| मङ्गलः | चन्द्रमाः | बृहस्पतिः | बुधः | शनैश्चरः | शुक्रः | सूर्यः |
| आत्मकारक | अमात्यकारक | भ्रातृकारक | मातृकारक | पुत्रकारक | ज्ञातिकारक | दाराकारक |

| अथ कारकग्रहदशाचक्रमिदम् | | | | | | | |
|---|---|---|---|---|---|---|---|
| ११ मं० | ८ चं० | ११ गु० | १० बु० | १० श० | १२ शु० | ११ सू० | योगः |
| ११ ० ० ० ० | ८ ० ० ० ० | १० ० ० ० ० | ९ ० ० ० ० | ९ ० ० ० ० | ११ ० ० ० ० | १० ० ० ० ० | ६८ ० ० ० ० |
| १९०० | १९११ | १९१९ | १९२९ | १९३८ | १९४७ | १९५८ | १९६८ |
| १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १५ २२ | १० ४ १४ २२ |

## अथमण्डूकदशामाह.

मण्डूकइतिविख्याताऽत्रिकूटाख्यां दशां द्विज सप्ताष्टन
वसंख्याचक्रमाब्दास्थिरदशामिति २१९ चरस्थिर

हिस्वभेषुसमास्तनवसंख्यया अब्दानिपूर्वरीत्या
चह्यानीयतदशास्थिरे २२० तद्राशेश्चाब्दकूटश्च
घटितत्वाद्द्विजोत्तम चरस्थिरद्विस्वभानांत्रिकोणसंप्र
वर्तते २२१ क्रमेणमोक्तरीत्याचप्रवर्तत्वात्त्रिकूटका
मण्डूकेतिसमाख्यातापुराशंभुप्रणोदिता २२२ कें
द्रात्पणफराच्चैवापोक्लिमलग्नपंचतः क्रमेणभा-
ग्यादितिचक्रिकोणाख्याचपूर्ववत् २२३ त्रिकूट
घटितत्वाच्चकेन्द्रादितिद्विजोत्तम समुद्राघटितत्वाच्च
धादशास्थूलात्रिकूटका २२४ वैषम्यायदिविप्रेन्द्र
लग्नसप्तमयोस्तथा मध्येबलवतीराशिस्तमारभ्यप्र
वर्तते २२५ पुंसोजातकवान्विप्रलग्नसप्तमयोर्द्वयोः
बलाढ्येनदशाज्ञेयंपूर्वोक्तेनक्रमेणच २२६ स्त्रीजा
तकवतीविप्रबलवत्समाद्दशा यानीयपूर्वरीत्याच
पुनरुक्तंप्रणोदितम् २२७ बलीनरुकराशिनोज्ञे
यामण्डूकादशा पुरुषश्चततोनेयात्स्त्रीचेद्दर्पण
तोनयात् २२८ केन्द्रेपणफराच्चापोक्लिमक्रमेणब-
लवान्द्विज आदौरीत्यादशानेयात्प्रतिराशिनवाब्दि
का २२९ ७

## अथ मण्डूकदशोदाहरणमाह.

अत्रतुमेषलग्नं तस्यादिमादशातदब्दानि ७ परंसिंहरा
शिदशात् अब्दानिस्युः ८ परंधनराशिदशादब्दानि १ स्सुरग्रे
वृषात् २।९।१।१० एवमग्रेपिवोद्धव्यम् केन्द्रादिक्रमेणमण्डूकव
दुत्प्लुत्यपतनान्मण्डूकसंज्ञा एवंज्ञेयम् २२९

| अथ मंडूकदशाचक्रम्. | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | ५ | ९ | २ | ६ | १० | ३ | ७ | ११ | ४ | ८ | १२ | |
| ७ ० ० ० ० | ८ ० ० ० ० | ९ ० ० ० ० | ८ ० ० ० ० | ९ ० ० ० ० | ७ ० ० ० ० | ९ ० ० ० ० | ७ ० ० ० ० | ८ ० ० ० ० | ७ ० ० ० ० | ८ ० ० ० ० | ९ ० ० ० ० | |
| ११ ०० | ११ ०७ | ११ १५ | ११ २४ | ११ ३२ | ११ ४१ | ११ ४८ | ११ ५७ | ११ ६४ | ११ ७२ | ११ ७९ | ११ ८७ | |
| १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | |

## अथ शूलदशामाह.

दशाशूलंप्रवक्तव्यंफलनिर्याणराशितः प्रवक्ति सप्तमाद्विप्रानिर्दशेशूलमात्रतः २३० माहेश्वरार्क्षा-दिदशानिर्याणस्थानशूलभम् बलेनशूलसंज्ञाख्या मृत्युरथद्विजोत्तम २३१ दशानेकविधाविप्रसप्ता ष्टनवभिःसमाः अन्यशास्त्रामहाप्राज्ञशूलेनिर्याण निश्चितम् २३२ सर्वायुपाकमारभ्यराशेचाधिप मेद्विज लग्नात्प्रवृत्तिसंज्ञेयासप्ताष्टनवभिःसमाः २३३ समेतिसप्तमाद्विप्रनग७नाग८नवाब्द९का दशासंज्ञास्यमारभ्यनिर्दिशांकमिदंक्रमात् २३४

## अथ शूलदशोदाहरणमाह

अत्रतुभृगुः रुद्रशूलसंज्ञाशूलदशानिर्याणराशेःसप्तम राशितः प्रवृत्ता भृगोः सकाशात्कन्यासप्तमराशि अतएवकन्या

राशिमारभ्येति ज्ञेयम्

| अथ मूलदशाचक्रम् | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ६ | ७ | ८ | ९ | १० | ११ | १२ | १ | २ | ३ | ४ | ५ | यो. |
| ९ ० ० ० ० | ७ ० ० ० ० | ८ ० ० ० ० | ९ ० ० ० ० | ७ ० ० ० ० | ८ ० ० ० ० | ९ ० ० ० ० | ७ ० ० ० ० | ८ ० ० ० ० | ९ ० ० ० ० | ७ ० ० ० ० | ८ ० ० ० ० | ९६ |
| १९०० | १९०७ | १९१५ | १९२४ | १९३३ | १९४० | १९४८ | १९५७ | १९६४ | १९७२ | १९८१ | १९८८ | १९९६ |
| १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | ११ ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ |

## अथ नक्षत्रदशामाह.

नक्षत्रायुर्महाभाग्नपूर्णमग्रेभभाषित विंशोत्तरीपंच धान्वहिधाचाष्टोत्तरीमता २३५ वशुवर्गोपरिदशा, सर्वेषांचिन्तयेद्द्विज ततोनिर्याणसालेख्यंनिर्विशंकंभ विष्यंति २३६

## अथ योगार्द्धदशामाह

चरस्थिरदशाविमयेचयोगंसमाचरेत् तस्यार्द्धंचस- मायुर्दानाम्नायोगार्द्धसादशा २३७ लग्नसप्तमयोर्म- ध्येबलाश्रयमचिन्तयेत् लग्नेवलवतीलग्नाद्दशारंभम काशयेत् २३८ तस्मात्सप्तमवीर्याढ्यंदशारंभम- कल्पयेत् पुंसांस्त्रीजातकंवक्ष्येक्रमव्युत्क्रमभेदतः २३९ बलिनस्तुदशानेयाराशोर्द्विराशिराक्रयोः स्त्री-

चेद्दर्पणतोनेयात्पुरुषश्चेत्तनोनयेत् २४०

## अथ योगार्द्धदशोदाहरणमाह.

योगार्द्धदशायां प्रतिराशिसमागतचरदशाब्दस्थिरदशाब्दयोर्योगार्द्धकर्तव्यं तदेवयोगार्द्धदशा तद्यथा मेषचरदशायां एकादशवर्षाणि ११ पुनस्थिरदशायां ७ सप्तवर्षाणि उभयोर्योगे १८ अस्यार्द्धं ९ एवंसर्वत्रज्ञेयम् २४०

अथ योगार्द्धदशाचक्रम्.

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | योगाः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ९ ० ० ० ० | ९ ६ ० ० ० | ८ ० ० ० ० | ७ ० ० ० ० | ७ ० ० ० ० | ८ ६ ० ० ० | ६ ६ ० ० ० | ७ ० ० ० ० | ५ ६ ० ० ० | ९ ६ ० ० ० | १० ० ० ० ० | ५ ० ० ० ० | ९३ ६ ० ० ० |
| [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] |
| १० ४ १४ २२ | १० ४ १४ २२ | ४ ४ १४ २२ | ४ ४ १४ २२ | ४ ४ १४ २२ | ४ ४ १४ २२ | १० ४ १४ २२ | ४ ४ १४ २२ | १० ४ १४ २२ | ४ ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ |

## अथ दृग्दशामाह.

कुजादित्रिसविज्ञेयाविलग्ननवमादितः क्रमत्रयेकूट पदंनाम्नावैदृग्दशाद्विज २४१ दृष्टिचक्रेसम्मुखश्च राश्यादौनवमस्यच कुत्रचित्क्रमरीत्याचकुत्रचिद्व्युत्क्रमेणच २४२ ततोपिपंचमस्यैवंक्रमेणकुत्रचिद्विज कुत्रचिद्व्युत्क्रमेणैवंराशयेकादशसमुखम् २४३ नस्याभावप्रमाणोहिनग्राह्यंद्विजसत्तम संग्राह्यंपंचमस्यैवंदृष्टिचक्रेविशेषतः २४४ अभिपश्यन्तिऋक्षा-

णिपार्श्वभं द्विजसत्तम पूर्वोक्तरीत्यातदेवात्रिकूटपद
मुच्यते २४५ त्रिराशयात्मकूटपदंततोपिदशामस्य
च दृग्दशैकादशोज्ञेयानवमस्यापिदृग्दशा २४६
फलार्थंदृग्दशाविप्रसंगृह्यैकादशोपिच तस्याःप्रकारं
वक्ष्येहंपुनरुक्तंविशेषतः २४७ अथौजयुग्मभेदेन
गणनाक्रममिहोच्यते यथासामान्यसंज्ञंययुग्मेषु
मातृधर्मयोः २४८ गणनायांनसामान्यंपंचमैकाद
शेद्विज क्वचिद्द्विरूपात्मकं ज्ञेयंसामान्यत्रयकूटके
२४९ अथौजपदयोर्विप्रसंज्ञेयंविपरीततः युग्मेषु
समपदयोश्चयथासामान्ययोजकम् २५० क्रमोवृष
वृश्चिकेचहीयुक्तेनद्विजोत्तम अत्रापिचौजकूट
स्थेपंचमैकादशोक्रमात् २५१ दृग्योगंनभवेद्विप्रदृ
ग्दशाबलदायका युग्मकूटस्थसामान्यंव्युत्क्रमा
त्सिंहकुंभयोः २५२ पंचमैकादशौविप्रदृग्योग्यौहि
भवत्यपि राशीनांद्विस्वभावानांपंचमैकादशास्थि
ते २५३ दृग्योगस्याप्यभावश्चदृष्टिचक्रेविचिन्तयेत्
यत्रभावेदृष्टितत्रतस्याश्रयाहिकेद्विज २५४ नवमेशा
नंतरंचविज्ञेयागणितागणिः सप्तमस्यनतोज्ञेयानव
मादित्रिकोणगे २५५ द्विधाराशिदृग्दशायांपार्श्वरा
शिद्वयंदशा पुंराशिद्विस्वभावस्यज्ञेयातस्यक्रमेणच
२५६ स्त्रीराशिद्विस्वभावेपिव्युत्क्रमेणद्विजोत्तम
चतुर्थदशमौग्राह्यौपार्श्वभंतुनसंशयः २५७ चररा
शिक्रमेणैवसंस्थितेव्युत्क्रमेणच पंचमैकादशोविप्र
दृग्योगंनभवत्यपि २५८ पार्श्वराशिमहामाज्ञदशा

नेयात्क्रमोत्क्रमः द्विस्वभावस्यनवमादौसंज्ञेयाः स
समस्यच २५९ ओजसंज्ञाद्विस्वभावेक्रमेणतुर्य ४
व्यामके समेव्युत्क्रमतोज्ञेयासाग्राह्यंव्योम १० तुर्य
योः २६० संख्यानवनबाब्देनद्वादशाराशिनांद्विज
संग्राह्यं दृग्दशानांचफलंपूर्वप्रकारतः २६१

## अथ दृग्दशोदाहरणमाह ।

कुजादिर्लग्ननवमादित्रिकूटपदक्रमेण दृग्दशा भवति आदौनवमस्यततो दृष्टिचक्रे सम्मुखराशेस्ततः क्वचित् क्रमरीत्याकुत्रचिद्व्युत्क्रमरीत्या पंचमस्य ततः कुत्रचित्क्रमेण कुत्रचित्व्युत्क्रमेणैकादशस्य सम्मुखराशेरित्युक्तम् तत्रप्रमाणाभावात्पंचमस्य कुतोनउच्यते दृष्टिविषये आदौसम्मुखंपश्यन्ति ततः पार्श्वराशिस्तदेव चित्रकूटपदं त्रिराश्यात्मकं पदं ततो दशम एकादशस्य दृग्दशा भवति नवमदृग्दशा दशमदृग्दशा एकादशदृग्दशेतिफलितार्थः पंचमैकादशयोर्गणनासामान्यशास्त्रमोज पदयोर्विपरीतंज्ञेयम् युग्मपदयोर्यथा सामान्यमतिक्रम्यविज्ञेयं तथाच क्रमाद्वृषवृश्चिकेचेत्यत्र वृषवृश्चिकयोरोजकूटस्थत्वाद्व्युत्क्रमेण पंचमैकादशौदृग्योग्यौ सिंहकुंभयोर्युग्मकूटस्थत्वाद्यथा सामान्यंव्युत्क्रमेणैवपंचमैकादशौदृग्योग्यौभवतः द्विस्वभावेदृग्योग्यपंचमैकादशयोरभावात् दृष्टिचक्रे यत्रयत्रदृष्टिस्तत्रादौनवमराशिद्वयदशायांक्रमस्तुपुराशिश्चेद्द्विस्वभावस्तर्हि क्रमेणत्रिराशिश्चेद्व्युत्क्रमेणचतुर्थदशमौग्राह्यौ अयंभावः चरराशिषुक्रमेण पंचमैकादशौ स्थिरराशिषु व्युत्क्रमेण पंचमैकादशौदृग्योग्यौभवतस्तथैवपार्श्वराशिदशाक्रमोज्ञेयः द्विस्व-

भावराशिष्वादौ नवमस्य ततः सप्तमस्यततोविषमश्चेद्द्विस्वभा वस्तर्हि क्रमेण चतुर्थस्य सप्तमश्चे त्तदाव्युत्क्रमेण चतुर्थस्यतत स्तथैवदशमस्य अत्रनवनवाब्दाग्राह्याः अस्योदाहरणम् मे षलग्नस्य चरसंज्ञक प्रथममेषः पुनः सिंहः पुनः कुंभः एवं १। ५। ११ स्थिरराशिषु यथासिंहः पुनः मेषः पुनः तुला एवं ५।१।७ द्विस्वभावराशिः यथा मिथुनपुंराशिक्रमःमिथुनः पुनः कन्या पुनः मीनः एवं ३।६।१२ स्त्रीराशिद्विस्वभावव्युत्क्रमः मी नधनमिथुनः एवंसर्वत्रज्ञेयम् प्रतिराशि नववर्षाणिस्युः

| अथ दृग्दशाचक्रम् | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | ५ | ११ | ५ | १ | ७ | ३ | ६ | १२ | १२ | ९ | ३ | योगा |
| ९ ० ० ० ० | ९ ० ० ० ० | ९ ० ० ० ० | ९ ० ० ० ० | ९ ० ० ० ० | ९ ० ० ० ० | ९ ० ० ० ० | ९ ० ० ० ० | ९ ० ० ० ० | ९ ० ० ० ० | ९ ० ० ० ० | ९ ० ० ० ० | १०८ ० ० ० ० |
| [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] |
| १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ ४ २२ |

## अथ त्रिकोणदशामाह

दशात्रिकोणनाम्नायायथान्यायप्रकल्पना राशिर्न वांशतुल्याचनववर्षात्मकादशा २६२ चरपर्यायरी त्यादिश्लोकोक्तेनप्रदर्शितः लग्नत्रिकोणयोराशिर्व लवानुक्तहेतुभिः तत्तरभ्योत्रवर्हि मानचरपर्यायव द्दशा २६३ युग्मराशिभुवांपुंसामोजगृहीतसंज्ञुरवः

ओजेराशिभुवांल्श्रीणांयुग्मेचैवसमाश्रयेत् २६४ क्रमोत्क्रमेणगणयेदोजयुग्मेषुराशिषु सम्पन्नचरपर्याय दशामितिप्रकल्पयेत् २६५ ततोपिद्वारबाह्याभ्यांफलमेवविचिन्तयेत् पाकभोगद्वयंविप्रपापायोगेनसौख्यदाम् २६६ तदिदंचरपर्यायस्थिरपर्यायवोद्विज त्रिकोणाख्यादशायांचपाकभोगप्रकल्पनम् २७० पापभोगेचपापाढ्येदेहपीडामनोन्यथा नृपाद्भीतिभयंक्रुरामहारुजप्रपीडितः २७१ अधुनासम्प्रवक्ष्यामिकारकानां फलंद्विज सप्तमस्तृतीयश्चेतिप्रथमोनवमोपिच २७२ नवमात्स्वल्पविज्ञेयापितृसौख्यंविचिन्तयेत् शरीरारोग्यमैश्वर्यंचिन्तयेत्प्रथमाद्विज २७३

## अथ त्रिकोणदशोदाहरणमाह.

लग्नपंचमनवमेषुयो राशिर्बलवान्ततस्त्रिकोणदशारम्भः॥ आरंभराशिमारभ्यक्रमोत्क्रमाभ्यां द्वादशराशीनां दशाज्ञेया॥ अत्रतुमेषस्यप्रारंभोमेषसिंहधनूंषि पुनः वृषकन्यामकराएवंसर्वत्रज्ञेयम् चरपर्यायवद्वर्षाणिस्युः २७३ ७

| अथत्रिकोणदशाचक्रमिदम्. | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | ५ | | २ | ६ | १० | ३ | ७ | ११ | ४ | ८ | १२ | योग. |
| ११<br>०<br>०<br>०<br>० | ६<br>०<br>०<br>०<br>० | २<br>०<br>०<br>०<br>० | ११<br>०<br>०<br>०<br>० | ८<br>०<br>०<br>०<br>० | १२<br>०<br>०<br>०<br>० | ७<br>०<br>०<br>०<br>० | ६<br>०<br>०<br>०<br>० | १२<br>०<br>०<br>०<br>० | ७<br>०<br>०<br>०<br>० | ६<br>०<br>०<br>०<br>० | १<br>०<br>०<br>०<br>० | ८९<br>०<br>०<br>०<br>० |
| १९०० | १९११ | १९१७ | १९१९ | १९३० | १९३८ | १९५० | १९५७ | १९६३ | १९ | १९८२ | १९८८ | १९८९ |
| १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ |

## अथ नक्षत्राद्राशिदशाक्रममाह.

जन्मादौचंद्रनक्षत्रेसर्वत्रघटिकौघके भानुनादीयते भागंशेषनाडीप्रकल्पयेत् २७४ प्रथमंखण्डमारभ्य द्वादशखण्डकेद्विज लग्नाद्द्वादशराशीनांगणनीयात् क्रमेणच २७५ याघटीकर्मयत्खण्डेजन्मखण्डश्च आदितः आरभ्यगणनायांचजन्मलग्नादितेद्विज २७६ लग्नाद्द्वादशराशीशरारभ्यद्विजसत्तम क्रमव्युत्क्रमभेदेनराशिद्वादशानांदशा २७७

## नक्षत्रदशोदाहरणम्

जन्मदिने यच्चन्द्रस्यनक्षत्रं तदीयाः सर्वर्क्षरीत्यायाघटिका स्ताद्वादशधाविभज्य प्रथमखण्डमारभ्य द्वादशसु खण्डेषु लग्नादिद्वादशराशयः क्रमेणगणनीयाः यस्मिन्घटिकामये खण्डे जन्मसखण्डः आदितः आरभ्य गणनया जन्मलग्नादितः यद्राशिविशिष्टस्तंराशिमारभ्य क्रमव्युत्क्रमभेदेनद्वादशराशीनां दशा आनेया प्रतिराशिनवाब्दाश्चास्याः तद्यथा पूर्वापाढज-न्मनक्षत्रसर्वर्क्षघटी ५७।४८ द्वादशभक्तेलब्धम् ४ शेषं९।४८ मेषादिगणनाश्रयंधनंराशिरागता अतएव धनमारभ्य गणनाकार्या एवंसर्वत्रज्ञेयम् ॥ ॥



नक्षत्रराशिदशाचक्रमिदम्.

| ९ | १० | ११ | १२ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | योगाः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ९ | ९ | ९ | ९ | ९ | ९ | ९ | ९ | ९ | ९ | ९ | ९ | १०८ |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| १९०० | १९०९ | १९१८ | १९२७ | १९३६ | १९४५ | १९५४ | १९६३ | १९७२ | १९८१ | १९९० | १९९९ | संवत् |
| १० | १० | १० | १० | १० | १० | १० | १० | १० | १० | १० | १० | १० |
| ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ |
| १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ |
| २२ | २२ | २२ | २२ | २२ | २२ | २२ | २२ | २२ | २२ | २२ | २२ | २२ |

## अथ तारादशामाह.

जन्मसंपद्विपत्क्षेमप्रत्यरीसाधकोवुधः मैत्रातिमैत्र मित्येवंदशाज्ञेयाद्विजोत्तम २७८ विंशोत्तर्याः क्रमेणैव मब्दानीह्विजानतः आदौकेन्द्रग्रहायस्यविज्ञेयातारकादशा २७९

## अथ तारादशोदाहरणम्

केन्द्रस्थशनिवुधौ तन्मध्येशनिवलवान् अतएव साधकदशायांजन्म तस्याब्दानि १९ अयेविंशोत्तरीवत् भुक्तभोग्यमानीतम् साधकदशापूर्वजन्मनि भुक्तवर्षादि १७।३।२८।२१।५४ इहजन्मनिभोग्यवर्षादि १।८।११।३८।६ एवंसर्वत्रज्ञेयम् २७९

| अथ तारादशाचक्रमाह. | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| साधक | बुधः | मैत्रः | अतिमैत्र | जन्म | सम्पत् | विपत् | क्षेम | मत्सरी | इमादशा |
| १<br>८<br>१<br>२८<br>६ | १५<br>०<br>०<br>०<br>० | ७<br>०<br>०<br>०<br>० | २०<br>०<br>०<br>०<br>० | ६<br>०<br>०<br>०<br>० | १०<br>०<br>०<br>०<br>० | ७<br>०<br>०<br>०<br>० | १८<br>०<br>०<br>०<br>० | १६<br>०<br>०<br>०<br>० | १०२<br>८<br>१<br>२८<br>६ |
| १९०० | १९०२ | १९१९ | १९२६ | १९४६ | १९५२ | १९६२ | १९६९ | १९८७ | २००३ |
| १०<br>४<br>१४<br>२२ | ६<br>५<br>५२<br>२६ | ६<br>५<br>५२<br>२६ | ६<br>५<br>५२<br>२६ | ६<br>५<br>५२<br>२६ | ६<br>५<br>५२<br>२६ | ६<br>५<br>५२<br>२६ | ६<br>५<br>५२<br>२६ | ६<br>५<br>५२<br>२६ | ६<br>५<br>५२<br>२६ |

## अथ वर्णददशामाह.

जन्महोरार्क्षलग्नर्क्षसंख्याग्राह्यापृथक्पृथक् ओज लग्नेचयुग्मेतुचक्रशुद्धेकसंयुता २८० युग्मौजसाम्येसंयोज्यवियोज्यान्योन्यमन्यथा मेषादितःक्रमादोजेमीनादेरुत्क्रमात्समे २८१ एवंयल्लग्नमायातं वर्णदंतत्प्रकीर्तितम् एवंद्वादशभावानांवर्णदंतत्प्रकीर्तितम् २८२ एवंद्वादशभावानांवर्णदंलग्नमानयेत् ग्रहाणांवर्णदानैवराशीनांवर्णदादशा २८३ वर्षसंख्याविजानीयाच्चरपर्यायमाणतः २८४

## वर्णददशोदाहरणमाह.

अत्रतु ओजलग्नमेषमध्ये जन्म अतएव मेषादि क्रमगणना संख्यापरंहोरालग्नवृषभंतस्यमीनाद्यपसव्यमार्गेण१० संख्या१ अतुस्वजातिसंज्ञाउभयोर्योग११ मेषादिक्रमगणना११वर्णदकुंभलग्नमेवं सर्वत्रज्ञेयम्.

अथ वर्णदशा चक्रम्

| ११ | ५ | ८ | ६ | ६ | ४ | ४ | २ | २ | ८ | १२ | ९ | योगाः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १२ ० ० ० ० | ६ ० ० ० ० | ६ ० ० ० ० | ८ ० ० ० ० | ८ ० ० ० ० | ७ ० ० ० ० | ७ ० ० ० ० | ११ ० ० ० ० | ११ ० ० ० ० | ० ० ० ० | ० ० ० ० | २ ० ० ० ० | ८५ ० ० ० ० |
| १९०० | १९१२ | १९१८ | १९२४ | १९३२ | १९४० | १९४७ | १९५४ | १९६५ | १९७६ | १९ | | १९८५ |
| १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ | १० ४ १४ २२ |

## अथ पंचस्वरदशामाह.

पंचांकान्प्रथमेदत्वास्वरान्वर्णांश्चविन्यसेत् आदाव कछडाद्याश्च अन्तओचटदवादयः २८५ कादिहांतोल्लिखेद्वर्णान्स्वराधोङञणोज्झितान् तिर्यक्पंक्तिक्रमेणैवपंचपंचविभागतः २८६ नमोक्ताङञणावर्णानामादोसंतितेनहि चेद्भवंतितदाज्ञेयागजडास्तेयथाक्रमम् २८७ यन्नाम्निभवेद्वर्णसंयोगाक्षरलक्षणः ग्राह्यस्तदादिभोवर्णइत्युक्तंब्रह्मणापुरा २८८ अकाराद्याःस्वराःपंचब्रह्माद्याःपंचदेवताः निवृत्याद्याःकलाःपंचइच्छाद्यशक्तिपंचकम् २८९ मायाद्याश्चक्रभेदाश्चधराद्यभूतपञ्चकम् शब्दादिविषयास्तेचकामबाणाइतीरिता ९० मभवादिक्रमेणैषांस्वराणामस्वरादिकः उदयोद्वादशाब्दानांप्रत्येकंद्वादशाब्दिकः २९१ अस्यांतरादयोवर्षामेकोमातोदिनद्वयम् लोकाश्विनाडिकाःप्रोक्ताअष्टत्रिंशत्पलानिच २९२

द्वादशाब्दादिनाड्यन्ताः स्वस्थानाच्च स्वकालतः उदयान्तेपुनस्त्वत्रान्तरेरेकादशोदयेः २९३ जन्मकर्माधानपिंडछिद्राःसंज्ञास्वरादिषु यत्रनामाक्षरंप्रासंतत्रैवउदितःस्वरः २९४ तस्माद्वर्षान्विजानीयाद्वर्षान्मासोभवेत्पुनः मासद्वयंचविज्ञेयंदिनद्वादशकाधिकम् २९५ एवंक्रमेणज्ञातव्योवर्षान्भागश्चपंचसु अमात्यकार्त्यकात्यस्थादिनानांनवकंतथा २९६ मार्गपौषसमाभौतुनाद्यस्यादिदिनत्रयम् एवंविभागश्चान्द्रादिसंप्रदीयानुसारतः २९७ तिथयःप्रतिपत्पूर्वाः कुजादेवारनिर्णयः नन्दाभद्राजयारिक्तापूर्णाचापि यथाक्रमम् २९८ क्रमेणांकाप्रदातव्यामास्याश्चांकासमुच्चयः चंद्राष्टावस्वरेज्ञेयाइस्वरेनागकुंजराः २९९ उस्वरेरामरंकाणिएस्वरेनन्द्रखेचरा ओस्वरे पंचदशाभितिस्तिथयोगसमुद्भवः ३०० अस्वरेकोप्यौसिंहाजइस्वरेज्ञेंदुराशयः उस्वरेचापजलजावेस्वरेतुतुलावृषौ ३०१ ओस्वरेमृगकुंभौचराशीशाद्वारजःस्वराः स्वराधःस्थापयेत्खेटान्राशोर्योयस्यनायकः ३०२

## अथ पंचस्वरदशोदाहरणमाह

अत्रतुइकारस्वरमध्येजन्म तस्यायं इकारस्वरदशामध्येउकारस्वरः पुनएकारस्वरः पुनः ओकारः पुनः अकारस्वरः एवं सर्वत्रज्ञातव्यम् ३०२

| अथपंचस्वरचक्रम् | | | | |
|---|---|---|---|---|
| अ | इ | उ | ए | ओ |
| १२ | १२ | १२ | १२ | १२ |
| क | ख | ग | घ | च |
| छ | ज | झ | ट | ठ |
| ड | ढ | त | थ | द |
| ध | न | प | फ | ब |
| भ | म | य | र | ल |
| व | श | ष | स | ह |

| अथ पंचस्वरदशाचक्रमाह | | | | | |
|---|---|---|---|---|---|
| इ | उ | ए | ओ | अ | योगाः |
| १२ ० ० ० ० | १२ ० ० ० ० | १२ ० ० ० ० | १२ ० ० ० ० | १२ ० ० ० ० | ६० ० ० ० ० |
| [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] |
| १० | १० | १० | १० | १० | १० |
| ४ | ४ | ४ | ४ | ४ | ४ |
| १४ | १४ | १४ | १४ | १४ | १४ |
| २२ | २२ | २२ | २२ | २२ | २२ |

## अथ योगिनीदशामाह.

मंगलापिंगलाधान्याभ्रामरीभद्रिकातथा योगिन्यष्टौसमाख्याताउल्कासिद्धांचसंकटाः ३०३ पिंगलातोभवेत्सूर्योमंगलातोनिशाकरः भ्रामरीतोभवेद्भौमोभद्रिकातोबुधस्तथा ३०४ धान्यकातोगुरुरभूत्सिद्धातःकविसंभवः उल्कातोभानुतनयसंकटातस्तमोभवेत् ३०५ स्वर्क्षपिनाकनयनोएपोज्यवस्कभिर्हरेत् शेषेणयोगिनीज्ञेयाःशून्यपातेनसंकटा ३०६ एकाभिवृद्ध्यावर्षाणिमंगलाप्रमुखासुच प्रथमायांरसैर्वर्षैचयंचगुणयेत्पुनः ३०७ गताभिर्भस्यनाडीभिर्गुणयित्वातुतेर्दिनैः विहीनासाप्रकर्तव्यास्फुटाचैवंभवेद्ध्रुवम् ३०८

६७

## अथ योगिनीदशोदाहरणम्

अत्र तु जन्मनक्षत्रपूर्वाषाढा तस्यसंख्या २० जाता अयं ३युक्ता २३ अनेन वसुभिर्भक्ता लब्धम् २ शेषम् ७ सिद्धादशायां जन्म अग्रे विंशोत्तरीवत् भुक्तभोग्यमानीतम् पूर्वजन्म निभुक्तवर्षादि ६।४।१८।२०।४२ इहजन्मविभोग्यवर्षादि ०।७।११।३९।१८ एवंसर्वत्रज्ञेयम्

| अथ योगिनीदशाचक्रम्. | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| सिं॰ | सं॰ | मं॰ | पिं | धा | भ्रा | भ | उ॰ | योगिन्य. |
| ०<br>७<br>११<br>३९<br>१८ | ८<br>०<br>०<br>०<br>० | ९<br>०<br>०<br>०<br>० | २<br>०<br>०<br>०<br>० | ३<br>०<br>०<br>०<br>० | ४<br>०<br>०<br>०<br>० | ५<br>०<br>०<br>०<br>० | ६<br>०<br>०<br>०<br>० | २९<br>०<br>०<br>०<br>० |
| १९०० | १९०१ | १९०९ | १९१० | १९१२ | १९१५ | १९१९ | १९२४ | १९३० |
| १०<br>४<br>१४<br>२२ | ५<br>१५<br>५३<br>४० | ५<br>१५<br>५३<br>४० | ५<br>१५<br>५३<br>४० | ५<br>१५<br>५३<br>५० | ५<br>१५<br>५३<br>४० | ५<br>१५<br>५३<br>४० | ५<br>१५<br>५३<br>४० | ५<br>१५<br>५३<br>४० |

## अथ पिण्डांशनैसर्गिकाष्टकवर्गचतुर्णा मायुः परिदशामाह.

पैण्ड्यांशनैसर्गिकदशामायुःपरिविचिन्तयेत् तथा अष्टकवर्गेचविजानीहिद्विजोत्तम ३०९ पैण्ड्यादि चतुर्विधदशोदाहरणमग्रेवक्ष्यति

## अथ संध्या दशामाह.

परमायुर्दशांशाचस्फुटंसन्ध्याभवेत्ततः स्वलग्ना-

धिपतेरादौततोन्येषुग्रहेषुच ३१०

## अथ सन्ध्यादशोदाहरणमाह.

परमायुः दशमांशः अत्रतुलग्नाधिपतिः भौमस्तस्यादिमादशा अग्रेबुधादिक्रमेणज्ञेयम् ३१०

अथ संध्यादशाचक्रम्

| मंगळः | बुधः | गुरुः | शुक्रः | शनिः | राहुः | केतुः | सूर्यः | चन्द्रः | ग्रहाः |
|---|---|---|---|---|---|---|---|---|---|
| १० | १० | १० | १० | १० | १० | १० | १० | १० | १० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| ० | १ | ० | ० | ० | ० | ० | ० | ० | ० |
| ११०० | ११९१० | ११२० | ११३० | ११४० | ११५० | ११६० | ११७० | ११८० | ११९० |
| १० | १० | १० | १० | १० | १० | १० | १० | १० | १० |
| ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ |
| १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ |
| २२ | २२ | २२ | २२ | २२ | २२ | २२ | २२ | २२ | २२ |

## अथ पाचकदशामाह.

सन्ध्यारसगुणाकार्याचन्द्रवह्निहृताफलम् प्रथमे कोष्टकेस्थाप्यत्र्यर्द्धमर्द्धत्रिकोष्टके ३११ त्रिभागं वसुकोष्टेषुलिखेद्विद्वन्प्रयत्नतः एवंद्वादशभावेषु पाचकानिप्रकल्पयेत् ३१२

## अथपाचकदशोदाहरणम्

संध्यादशारसगुणाकार्या ७२ चन्द्रवन्हि ३१ भक्तेलब्धम १। ११। ६।४६।२७ प्रथमकोष्टेस्थाप्यपुनः अस्यार्द्धम् ०।११ १८।१२।३।१३ अयंत्रिषुकोष्टेषुस्थाप्यपुनस्त्रितीयांशम् ०।७।११।१५

०।२७ अयं वसुकोष्टके स्थाप्यं एवं सर्वत्र ज्ञेयम् ३१२ ॥

अथ पाचकदशाचक्रम् इदं

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | राशय |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | वर्ष |
| ११ | ११ | ११ | ११ | ७ | ७ | ७ | ७ | ७ | ७ | ७ | ७ | मास |
| ६ | १८ | १८ | १८ | ११ | ११ | ११ | ११ | ११ | ११ | ११ | ११ | दिन |
| ४६ | २३ | २३ | २३ | १५ | १५ | १५ | १५ | १५ | १५ | १५ | १५ | घटी |
| २७ | १३ | १३ | १३ | २७ | २७ | २७ | २७ | २७ | २७ | २७ | २७ | पल |
| [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] |
| १० | ५ | ८ | ८ | ० | ७ | २ | १० | ५ | १ | ८ | ३ | १० |
| ४ | ११ | २९ | १७ | ६ | १७ | २८ | ९ | २१ | २ | १२ | २४ | ४ |
| १४ | ० | २४ | ४७ | १० | २५ | ४१ | ५६ | १२ | २७ | ४३ | ५८ | १४ |
| २२ | ४९ | २ | १५ | २८ | ५५ | २२ | ४९ | १६ | ४३ | १० | ३७ | २२ |

बलाबलविवेकेन फलं ज्ञेयं दशासु च विपरीतम्फलं या च्यं खेटे वक्रगते सदा ३१३ आदिद्रेष्कस्थिते खेटे दशारंभफलं वदेत् दशामध्ये फलं वाच्यं मध्यद्रेष्काणके स्थिते ३१४ अंते फलं तृतीयस्थे व्यस्तं खेटे च वक्रिणि इतिते कथितं विप्र दशाभेदमनेकशः ३१५ यस्मै कस्मै न दातव्यं ज्ञानमेतत्सुदुर्लभम् ३१६ इति श्रीबृहत्पाराशरहोरापूर्वखण्डसारांशे अनेकदशाभेदकथनं नाम पञ्चत्रिंशोऽध्यायः ३५ ६९

## पराशर उवाच-

मार्तण्डंचमंगण्यसर्वजगतामीशंशिवंशंकरंसर्वेषांहृदि संस्थितंपशुपतिंभर्गमृभवानीपतिम् लोकानाम्प्र-लयोदयस्थितिकरंत्रैलोक्यनाथंहरिंवक्ष्यामीहमहेश्वरस्यकृपयादायप्रकाशंशुभम् १

## अथ विंशोत्तरीपंचविधान्तरमाह.

अथवक्ष्येखगेशानांभुक्तिंपंचविधामहम् दशाचान्त र्दशाचैवंतत्तदन्तर्दशातथा २ सूक्ष्मभुक्तिर्याणद-शाप्येवंपंचदशाः स्मृताः ३ मार्तण्डेन्दुकुजाहिजी वंशनिवित्केतुःशितोन्तेक्रमात्षट्शाक्तिर्मुनयोधृति धरणिपाएकोनंताविंशतिः अन्यष्टिर्मुनयोनरवा इतिविदुर्नाथाइमेखेचराः सप्तार्च्वर्यमपित्रवणादिनक्षत्राणांदिनेशादयः ४

| अथ विंशोत्तरीमहादशावर्षनक्षत्राणि ॥ | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| सू | च | भौ | रा- | जी | श | बु | के | शु. | ग्रहा |
| ६, | १० | ७ | १८ | १६ | १९ | १७ | ७ | २० | वर्षाणि |
| कृ | रो | मृ | आ | पु | पुष्य | आश्ले | म | पू. | नक्षत्राणि |
| उ | हस्त | चि | स्वा | वि | ऽनु | ज्य | मूळ | पूर्वाषा | |
| उत्तरा | श्र | ध | श | पू भा | उ भा | रेवती | अश्वि. | भरणी | |

## अथ भुक्तभोग्यानयनमाह.

स्फुटतरोहिमगुः कलिकात्मकः खखवगजैर्विभजेद्गत ऋक्षकम्  तदुडुवर्षगुणंचसमादिकं खखवगजैर्विभजेत्फलमत्रच ५

## अस्योदाहरणमाह.

स्फुटतरइति स्फुटतरः हिमगुश्चन्द्रः १।८।१५।७ तस्यकला २२९५।७ अस्याष्टशतेन ८०० भक्तेर्लब्धम् २ तद्गतनक्षत्रंभरणिर्ज्ञेयम् शेषम् ६९५ ७ पुनः लब्धांकैः रूपहीनेनवभिर्भक्तेशेषादशाज्ञेया तत्राऽत्रलब्धांकौद्वौ २ तन्मध्ये रूप १ हीने शेषं १ रूपः आ १ चं २ भौ ३ रा ४ जी ५ श ६ बु ७ के ८ शु ० क्रमेण सूर्यदशाचागता अथास्याभुक्तभोग्यानयनम् ६९५।७ तदुडुवर्षगुणं तस्यजातस्य उडुजन्मनक्षत्रम् तस्याधिष्ठाता योदशाग्रहः तस्य यावंतिवर्षाणि तेनशेषं गुणनीयम् अत्र सूर्यदशावर्षाणि ६ तेनगुणितंजातम् ४१७०।४२ अष्टशतेनभक्तेर्लब्धम् ५ वर्षाणि शेषम् १७०।४२ द्वादशघ्नंजातम् २०४८।२४ अष्टशतेनभक्ते नलब्धम् २ मासाः शेषम् ४४८।२४ त्रिंशघ्नंजातम् १३४५२।० अष्टशतेनभक्तेनलब्धम् १६ दिनानिशेषम् ६५२।० षष्टिघ्नं जातम् ३९१२०।० अष्टशतेनभक्तेर्लब्धम् ४८ घटिकाशेषम् ७२०।० षष्टिघ्नंजातम् ४३२००।० अष्टशतेनभक्तेर्लब्धम् ५४ पलानिशेषम् ० पूर्णत्वात् गणितांकं सत्यमेवम् ५।२।१६। ४८।५४ वर्षादिकालेपूर्वजन्मनि भुक्तदशा पद्मध्येपातिता

सतिशेषा०।९।१३।११।६ भोग्यदशाइइजन्मन्येवं सर्वत्रज्ञेयम् ४

## अथ सूर्यस्यदशावर्षाणि ६ तस्यफलं

सूर्योत्कृष्टदशाकरोतिसुतधीःप्रज्ञाधिकारोच्छ्रयाज्ज्ञानार्थागमकीर्तिपौरुषसुखप्राप्तीश्वरानुग्रहान् भानोः पापदशाकरोतिविफलोद्योगार्थहान्यामयान्राजक्षोभमहीशकोपजनकारिष्टाग्निबाधोदयान् ५ मूलत्रिकोणेस्वक्षेत्रेस्वोच्चेवापरमोच्चगे केन्द्रत्रिकोणलाभस्थे भाग्यकर्माधिपैर्युते ६ बलंसूर्येसमायुक्तेरवौवर्गैर्बलैर्युते तस्मिन्दायेमहासौख्यंधनलाभादिकंशुभम् ७ अत्यंतंराजसन्मानमश्वंदोल्यादिकंशुभम् सुताधिपसमायुक्तेपुत्रलाभंचविंदति ८ धनेशस्यचसंबन्धेगजांतेश्वर्यमादिशेत् वाहनाधिपसंबंधेवाहनत्रयलाभकृत् ९ नृपालतुष्टिवित्ताढ्यःसेनाधीशःसुखीनरः वस्त्रवाहनलाभश्चइतिदायेरवौवली १० नीचेषडाष्टकेरिष्फे दुर्बलेपापसंयुते राहुकेतुसमायुक्तेदुःस्थानाधिपसंयुते ११ तस्मिन्दायेमहापीडाधनधान्यविनाशकृत् राजकोपंप्रवासंचराजदण्डंधनक्षयम् १२ ज्वरपीडायशोहानिर्बन्धुमित्रविरोधकृत् प्रवासंरोगविद्वेषोपमृत्युभयंभवेत् १३ चौरोहिव्रणभीतिश्चज्वरबाधाभविष्यति पितृक्षयभयंचैवगृहेत्वशुभमेवच १४ पितृवर्गेमनस्तापजनद्वेषंचविंदति शुभदृष्टियुतेसूर्ये मध्येतस्मिन्क्वचित्सुखम् १५ पापग्रहेणसंदृष्टेवदेत्पापफलंनरे १६

## अथचन्द्रस्यमहादशावर्षाणि१० तस्यफलम्

चन्द्रोत्कृष्टदशाकरोतिजननीश्रेयस्तटाकादिकंक्षेत्रारामगृहासनंद्विजवराश्रीशोभनांदोलिका इन्दोःपापदशान्नहीनकृपणानंतार्थनाशोमयाप्रज्ञाहीनजिगुत्समातृमरणक्लेशानिशीतज्वरान् १६ स्वोच्चेस्वक्षेत्रगेचैवकेन्द्रेलाभत्रिकोणगे शुभगृहेणसंयुक्तेवृद्धिचंद्रवलेयुते १७ कर्मभाग्याधिपेचंद्रेवाहनेचोवलेयुते आद्यान्नेश्वरुभाग्येशाधनधान्यादिलाभकृत् १८ गृहेतुशुभकार्याणिवाहनंराजदर्शनम् यत्नकार्यार्थसिद्धिःस्याद्गृहेलक्ष्मीकटाक्षकृत् १९ मित्रप्रभुवशाद्भाग्यंराजलाभंमहत्सुखम् अश्वान्दोल्यादिलाभंचवस्त्रादिलाभकृत् २० पुत्रलाभादिसंतोषंग्रहगोधनसंकुलम् धनस्थानगतेचन्द्रतुंगेस्वक्षेत्रगेपिवा २१ अनेकधनलाभंचभाग्यवृद्धिमहत्सुखम् निक्षेपराजसन्मानंविद्यालाभंचविंदति २२ नीचेवाक्षीणचन्द्रेवाधनहानिर्भविष्यति दुश्चिक्येवलसंयुक्तेक्वचित्सौख्यंक्वचिद्धनम् २३ दुर्वलेपापसंयुक्तेदेहजाड्यंमनोरुजम् भृत्यपीडावित्तहानिर्मातृवर्गजनाद्वधः २४ षष्ठाष्टमव्ययेचन्द्रेदुर्वलेपापसंयुते राजद्वेषमनोदुःखंधनधान्यादिनाशनम् २५ मातृक्लेशमनस्तापंदेहजाड्यंमनोरुजम् दुःस्थेचन्द्रवलेयुक्तेक्वचिल्लाभंक्वचित्सुखम् २६ देहजाड्यंक्वचिच्चैवशांत्यर्थंनादिनाशनम् २७

## अथ कुजदशावर्षाणि ७ तस्यफलमाह

भौमोत्कृष्टदशाकरोतिवसुधाप्राप्तिर्धनस्यागमान्मज्ञात्व
च्छमनःपराक्रमदृध्रत्पारिक्षयान्वानुजान् पापोभौम
रुजार्तिदंचकलहंचोराग्निबन्धव्रणमाक्षिस्त्रीएमहीशपीड
नरुजक्षोभास्तितिदास्यति २७ परमोच्चगतेभौमस्वो
च्चेमूलत्रिकोणगे स्वर्क्षेकेन्द्रत्रिकोणेवालाभेवाधनगे
पिवा २८ संपूर्णबलसंयुक्तेशुभदृष्टेशुभांशके रा
ज्यलाभंभूमिलाभंधनधान्यादिलाभकृत् २९ आ-
धिक्यंराजसन्मानंवाहनांबरभूषणम् विदेशेस्थानला-
भंचसोदराणांसुखंलभेत् ३० केन्द्रंगतेयदाभौमेदु
श्चिक्येबलसंयुते पराक्रमाद्वित्तलाभंयुद्धेशत्रुजयंभ-
वेत् ३१ कलत्रपुत्रविभवंराजसन्मानमेवच द-
शादौसुखमाप्नोतिदशांतेकष्टमादिशेत् ३२ नीचादि
दुःस्थगेभौमेबलाबलविवर्जिते पापयुक्तेपापदृष्टेसा
दशानेष्टदायका ३३

## अथ राहुदशावर्षाणि १८ तस्यफलमाह

राहूत्कृष्टदशांकरोतिसकलश्रेयोमहद्राज्यकृन्द्धर्मार्थाग
मपुण्यतीर्थचलनज्ञानप्रभावोच्छ्रयान् राहोःपाप-
दशाहिभीतिविषभीःसर्वांगरोगार्तिकृच्छ्रत्राधनविरोधवृ
क्षपतनंनारातिमपीडोदयान् ३४ राहोस्तुवृषभंकं-
तोर्वृश्चिकंतुंगसंज्ञितम् मूलत्रिकोणकर्कंचयुग्मचा-
पंतथैवच ३५ कन्याचस्वगृहंप्रोक्तंमीनंचस्वगृहंस्मृ-

तम् तदायेबहुसौख्यंचधनधान्यादिसम्पदाम् ३६ मित्रप्रभुवशादिष्टंवाहनंपुत्रसंभवः नूतनगृहनिर्माणं धर्मचिंतामहोत्सवः ३७ विदेशराजसन्मानवस्त्रालंकारभूषणम् शुभयुक्तेशुभेदृष्टेयोगकारकसंयुते ३८ केन्द्रत्रिकोणलाभेवादुश्चिक्येशुभराशिगे महाराजप्रसादेनसर्वसंपत्सुखावहन् ३९ यवनप्रभुसन्मानंगृहेकल्याणसंभवम् रन्ध्रेवाव्ययगेराहौतदायेकष्टदोभवेत् ४० पापग्रहेणसंबंधेमारकग्रहसंयुते नीचराशिगतेवापिस्थानभ्रंशमनोरुजम् ४१ विनश्येद्दारपुत्राणांकुत्सितानांचभोजनम् दशादौदेहपीडाच धनधान्यपरिच्युतिः ४२ दशामध्येतुसौख्यंस्यात्स्वदेशेधनलाभकृत् दशांतेकष्टमाप्नोतिस्थानभ्रष्टमनोव्यथा ४३

## अथ गुरुमहादशावर्षाणि१६ तस्यफलम्

जीवोत्कृष्टदशाकरोतिविपुलग्रामाधिकारात्मजश्रीसौभाग्यगुणाकराश्रितजनाद्यांदोलिकावैभवान् जैव्यापापदशामहीश्वरभयाद्व्याधिश्चधैर्यच्युतंधान्यानर्थमहीसुतार्तिजनकक्षोभावमानार्तिक्षयान् ४४ स्वोच्चेस्वक्षेत्रगेजीवे केन्द्रेलाभत्रिकोणगे मूलत्रिकोणलाभेवातुंगांशेस्वांशगेपिवा ४५ राजलाभंमहत्सौख्यंराजसन्मानकीर्तनम् गजवाजिसमायुक्तंदेवब्राह्मणपूजनम् ४६ दारापुत्रादिसौख्यंचवाहनांबरलाभगम् यज्ञादिकर्मसिद्धिःस्याद्वेदान्तश्रवणादिकम् ४७ महाराजप्रसादे-

नइष्टसिद्धिसुखावहम् आंदोलिकादिलाभश्चकल्याणंचमहत्सुखम् ४८ पुत्रदारादिलाभंचअन्नदानमहत्प्रियम् नीचास्तपापसंयुक्तेजीवेरिष्फाष्टसंयुते ४९ स्थानभ्रंशंमनस्तापंपुत्रपीडामहद्भयम् पश्चादिष्टंनहानिश्चतीर्थयात्रादिकंलभेत् ५० आदौकष्टफलंदेवचतुष्पाज्जीवलाभकृत् मध्यांतेसुखमाप्नोतिराजसन्मानवैभवम् ५१

## अथ शनिमहादशावर्षाणि १९ तस्यफलम्

मंदोत्कृष्टदशाकरोतिविभवंप्रज्ञानयज्ञादिकक्षेत्रग्रामपुरादिनायकबहुव्यापारदक्षोत्सुकान् मन्दःपापविप्रयोगधनहृद्देहार्तिव्ययोदयान्राजक्रोधविरुद्धकार्यविकलोद्योगादिव्याधोदयात् ५२ स्वोच्चेस्वक्षेत्रगेमन्देमित्रक्षेत्रेथवायदि मूलत्रिकोणभाग्येवातुंगांशेस्वांशगेपिवा ५३ दुश्चिक्ये लाभगेचैवराजसन्मानवैभवम् सत्कीर्तिधनलाभश्चविद्यावादविनोदकृत् ५४ महाराजप्रसादेनगजवाहनभूषणम् राजयोगंप्रकुर्वन्ति सेनाधीशान्महत्सुखम् ५५ लक्ष्मीकटाक्षचिह्नानि राजलाभंकरोतिच ग्रहेकल्याणसंपत्तिदारापुत्रादिलाभकृत् ५६ षष्टाष्टमव्ययेमन्देनीचेवास्तंगतेपिवा विषशस्त्रादिपीडाचस्थानभ्रंशंमहद्भयम् ५७ पितृमातृवियोगंचदारापुत्रादिपीडनम् राजवैपम्यकार्याणिह्यनिष्टंबंधनंतथा ५८ शुभयुक्तेक्षितेमन्देयोगकारकसंयुते केन्द्रत्रिकोणलाभेवामीनगेकार्मुकेऽश-

नो ५९ राज्यलाभंमहोत्साहंगजाश्वांवरसंकुलम् ६०

अथ बुधमहादशावर्षाणि १७ तस्यफलम्

सौम्योत्कृष्टदशाकरोतिवसनानंतादिधान्योच्छ्रयाच्छ्रेयः सौख्यगृहस्वबंधुविजयः प्रामीष्टवस्त्वागमान् बोध्यः पापदशाविदेशगमनः क्षोभस्वबन्धुक्षय प्रज्ञाहीनमतिर्धनार्तिकलहक्षेत्रार्थनाशापदान् ६१ स्वोच्चेस्वक्षेत्रसंयुक्तेकेन्द्रलाभत्रिकोणगे मित्रक्षेत्रसमायुक्तेसौम्यदायेमहत्सुखम् ६२ धनधान्यादिलाभंचसत्कीर्तिधनसंपदाम् ज्ञानाधिक्यंनृपप्रीतिंसत्कर्मगुणवर्द्धनम् ६३ पुत्रदारादिसौख्यंचदेहारोग्यंमहत्सुखम् क्षीरेणभोजनंसौख्यंव्यापारेणधनागमम् ६४ शुभदृष्टियुतेसौम्येभाग्येकर्माधिपेयदा आधिपत्येबलवती संपूर्णफलदायका ६५ पापग्रहयुतेदृष्टिराजद्वेषंमनोरुजम् बंधुजनविरोधंचविदेशगमनंतथा ६६ परप्रेष्यंचकलहम्मूत्रकृच्छ्रंमहद्भयम् षष्ठाष्टमव्ययेसौम्येलाभभोगार्थनाशनम् ६७ वातपीडाधनंचैव पांडुरोगंतथैवच नृपचोराग्निभीतिंचकृषिगोभूमिनाशनम् ६८ दशादौधनधान्यंचविद्यालाभंमहत्सुखम् पुत्रकल्याणसंपत्तिःसन्मार्गेधनलाभकृत् ६९ मध्येनरेंद्रसन्मानंमंतेदुःखंभविष्यति ७०

अथ केतुभुक्तिमहादशावर्षाणि ७ तस्यफलं

केतूत्कृष्टदशाकरोतिविजयक्रूरक्रियार्थागमंम्लेच्छ-

क्ष्मापतिलब्धभाग्यकवनप्रारंभशत्रुक्षयान् केतोः पापदशातिकष्टविफलानर्थक्रियायोगहृत् छूलास्थिज्वरकं पनद्विजजनद्वेषातिमूर्खक्रियान् ७१ केन्द्रलाभत्रिकोणेवाशुभराशौशुभेक्षिते स्वोच्चेवाशुभवर्गेवाराजप्रीतिमनोरुजम् ७२ देशग्रामाधिपत्यंचवाहनंपुत्रसंभवम् देशांतरप्रयाणंचअन्यदेशेसुखावहम् ७३ पुत्रदारसुखंचैवचचतुष्पाज्जीवलाभकृत् दुश्चिक्येषष्ठलाभेवाकेतुर्दायेसुखंभवेत् ७४ राज्यंकरोतिमित्रांशंगजवाजिसमन्वितम् दशादौराजयोगश्चदशामध्येमहद्भयम् ७५ अंतेदूरगटनंचैवदेहविभ्रमणंतथा धनेरन्ध्रेव्ययेकेतोपापदृष्टियुतेक्षिते ७६ निगडंबंधुनाशंचस्थानभ्रंशंमनोरुजम् शूद्रशून्यादिलाभंचनानारोगाकुलंभवेत् ७७

## अथ शुक्रमहादशावर्षाणि २० तस्यफलं

शौक्रीश्रेष्ठदशाकरोतिसुखसौभाग्योच्छ्रयांदोलिकाष्टश्चर्यायुतधर्मबुद्धिकनकारामाम्बगीतोत्सवान् शौक्री पापदशाकलत्रभयकृन्नीचार्थहानिमदासन्तस्तिर्यगूजंतुदोषविपुलस्त्रीवर्गरोगोद्भवान् ७८ परमोच्चगते शुक्रेस्वोच्चस्वक्षेत्रकेन्द्रगे नृपाभिषेकसंप्राप्तिवाहनांबरभूषणम् ७९ गजाश्वपशुलाभंचनित्यंमिष्टान्नभोजनम् अखण्डमंडलाधीशराजसन्मानवैभवम् ८० मृदंगवाद्यघोषंचगृहेलक्ष्मीकृपाक्षकृत् त्रिकोणस्थेमीनशक्रेराज्यार्थगृहसंपदः ८१ विवा-

द्वोत्सवकार्याणिपुत्रकल्याणवैभवम् सेनाधिपत्यं कुरुतेइष्टबंधुसमागमम् ८२ नष्टराजधनप्राप्तिगृहेगोधनसंग्रहम् षष्टाष्टमव्ययेशक्रेनीचेवाव्ययराशिगे ८३ आत्मबन्धुजनद्वेषंदारवर्गादिपीडनम् व्यवसायात्फलंनष्टंगोमहिष्यादिहानिकृत् ८४ दारपुत्रादिपीडाचात्म्यात्मबंधुवियोगकृत् भाग्यकर्माधिपत्येनलग्नवाहनराशिगे ८५ तद्दशायांमहत्सौख्यंदेशग्रामाधिपत्यताम् देवालयतडागादिपुण्यकर्मचसंग्रहम् ८६ अन्नदानंमहत्सौख्यंनित्यंमिष्टान्नभोजनम् उत्साहकीर्तिःसंपत्तिःस्त्रीपुत्रधनसंपदाम् ८७ स्वभुक्तौफलमेवंस्यादहलान्यन्यानिभुक्तिषु द्वितीयद्यूननाथेतुदेहपीडाभविष्यति ८८ तद्दोषपरिहारार्थंरुद्रंवाप्यंवकंजपेत् श्वेतांगांमहिषींदद्यादारोग्यंचभविष्यति ८९

## अथ द्वादशभावाधीशदशाफलमाह

लग्नेशस्यदशाबलंबहुधनंवित्तेशितुःपंचतांकष्टंवैत्रिसहोदरालयपतेःपापंफलंप्रायशः तुर्यस्वामिनआलयंकिलसुताधीशस्यविद्यासुखंरोगागारपतेररातिजभयंजायापतेःशोकताम् ९० मृत्युर्मृत्युपतेःकरोति नियतंधर्मेशितुःसत्क्रियाम्चित्तंराजपतेर्नृपाश्रयमथोलाभंहिलाभेशितुश्रोगंद्रव्यविनाशनंचबहुधाकष्टंव्ययेशास्यैवे पूर्वैरंगभृतामुदीरितमिदंतन्वादिभावेशजम् ९१ भावाधिपोबलयुतोनिजगेहगामीतुंगत्रिकोणशुभवर्गगतोपिपूर्णम् जंतोःफलंखलुकरोतियदारिनीचस्थान

स्थितोऽशुभफलंविबलोविशेषात् ९२ आहुःशु
भाशुभफलंनृणांकालविदोजनाः एतद्वृत्तंविनिर्णीत
मायुषांनिश्चयोनृणाम् ९३ पंचमेशदशायांतु धर्मप
स्यदशातुया अतीवशुभदाप्रोक्ताकालविद्भिर्मुनीश्व
रैः ९४ समंत्रनाथस्यतपोधिपस्यदशाशुभाराज्य
सुतप्रदास्यात् सकीर्तिनाथस्यसुखेश्वरस्य दशात
थाप्राहुरुदारचित्ताः ९५ पंचमेशेनयुक्तस्यग्रह
स्यशुभदादशा नाथेधर्मपयुक्तस्य दशापरमशोभना
९६ पापदृष्टस्यखेटस्यदशाराज्यप्रदायिनी शुभ
युक्तस्यखेटस्यदशाद्रव्यप्रदायिनी ९७ सपंचमे
शलग्नेशादशाराज्यप्रदायिनी सपंचमेशस्यतपोधि
पस्यदशाभवेद्राज्यसुखार्थलाभदा ९८ तथैवमाना
धिपसंयुतस्य सुतेश्वरस्यापि दशाशुभास्यात् पंचमे
शेनयुक्तस्यमानेंद्रस्यदशाशुभा सुखेशसहितस्या
पिधर्मेशस्यदशाशुभा ९९ पंचमस्थानगस्यापि
मानेशस्यदशाशुभा शुभाशुभस्थानगमानयस्यत
थैवमानार्थसुखान्वितास्यात् तदानृणांसौख्यकरीप्र
वेद्मिसुखेशयुक्तस्यचमानवस्य १०० षष्ठस्यस
प्तमस्यैकोनायकोमानराशिगः दशातस्यशुभाज्ञेया
तथातेनयुतस्यच १०१ एकोहिसप्तमस्थाननाय-
कोयदिसौख्यगः तेनयुक्तदशाज्ञेयाशुभदाप्राहुर्म-
नीषिणः १०२ षष्ठाष्टमव्ययाधीशाः पंचमाधिपसंयु
ताः तेषांदशाचशुभदाप्रोच्यतेकालवित्तमैः १०३
सुखेशोमानभावस्थोमानेशःसुखराशिगः तयोर्दशां

शुभांप्राहुर्ज्योतिःशास्त्रविदोजनाः १०४ सुतेशमाने
शसुखेशधर्मपाएकत्रयुक्तायदियत्रकुत्र तेषांदशारा
ज्यफलप्रदातेयुक्तग्रहाणामपिवदेद्वा १०५ वाहन
स्थानसंयुक्तमंत्रनाथदशाशुभा सुखराशिस्थकर्मे
शदशाराज्यप्रदायिनी १०६ ताभ्यांयुक्तस्यखेटस्य
दृष्टियुक्तस्यचैतयोः राज्यप्रदांदशांमाहुर्विद्वांसोदैव
चिंतकाः १०७ कर्मस्थानस्यवुद्धीशदशासंपत्करीभ
वेत् मानस्थिततपोधीशदशाराज्यप्रदायिनी १०८
यस्मिन्भावशुभस्वामिसंवन्धस्तुंगखेचरः स्यात्त
द्भावदशायांतुभ्रत्यैश्वर्यमखंडितम् १०९ यद्भावे
शस्यार्थराशीमधितिष्ठतिपश्यति स्यात्तद्भावदशाका
लेधनलाभोमहत्तरः ११० यस्माद्व्ययगतोयस्तुतद्द
शायांधनक्षयम् यस्मात्त्रिकोणगाःपापास्तत्रात्स
शमनाशनम् १११ पुत्रहानिःपितुःपीडामनस्तापो
महान्भवेत् यस्मात्त्रिकोणगारीफरन्ध्रेशार्केन्दुसूर्य
जाम् ११२ पितृपीडाद्रव्यहानिस्तत्रकेत्वहिसंगमे
विदेशभ्रमणक्लेशंभयंचैवपदेपदे ११३ यस्माच्छष्टा
ष्टमेक्रूरोनीचखेटादयस्थितः रोगशत्रुनृपाद्यास्यान्मु
हुःपीडासुदुःसहा ११४ यस्माच्चतुर्थक्रूरस्याद्भूम्य
हक्षेत्रनाशनम् पशुहानिस्तत्रभौमग्रहदाहममातृ
धृक् ११५ शनौहृदयशूलंस्यात्सूर्येराजप्रकोपनात्
सर्वस्वहरणंराहोविषचोरादिजभयम् ११६ यस्माद्द
शमभेराहुपुण्यतीर्थाटनंभवेत् तस्मात्कर्मायभाग्य
र्क्षगताःशोभनखेचरा ११७ विद्यार्थधर्मसत्कर्म

ख्यातिपौरुषसिद्धयः यतःपंचमकामारिगताःस्योच्चशु
भग्रहाः ११८ पुत्रदारादिसंप्राप्तिर्नृपपूजामहत्तरा
यस्मिन्माज्ञायकर्मौवुनवलग्नाधिपाःस्थिताः ११९
तत्तद्भावार्थसिद्धिःस्याच्छ्रेयोयोगानुसारतः यस्मि
न्गुरुर्वाशुक्रोवाशुभेशोवापिसंस्थितः १२० क
ल्याणोत्सवसंपत्तिर्देवब्राह्मणतर्पणम् यच्चतुर्थीतु
गखेटाशुभस्वामीग्रहस्यवा १२१ वाहनग्रामलाभा
श्चपशुवृद्धिश्चभूयसि तत्रचंद्रेशलाभस्याद्बहुधान्य
रसान्वितम् १२२ पूर्णेनिधौनिधिमाप्तिलभेद्धौमाणि
संचयः तत्रशुक्रेमृदंगादिवाद्यागानपुरस्कृता १२३
आंदोलिकाप्तिर्जीवेतुकनकांदोलिकाध्रुवम् लग्नकर्म
शभाग्येशतुंगस्थःशुभयोगतः १२४ सर्वोत्कर्षम
हैश्वर्यसाम्राज्यादिमहत्फलम् एवंतत्तद्भावदायका
लंयस्याद्विचिंतयेत् १२५ एकैरुडुदशास्थीयागुणैर
ष्टादशात्मना भिन्नाफलविपाकस्तुकुर्याद्वैचित्र्यसंयुत
म् १२६ परमोच्चेतुंगमात्रेतदुर्वाक्तदुपर्यपि मूल
त्रिकोणभेस्वर्क्षेस्वाधिमित्रग्रहस्यभे १२७ तत्काल
सुहृदोगेहेउदासीनस्यभेतथा शत्रोर्भेदरिपोर्भेच
नीचांतादूर्ध्वदेशभे १२८ तस्मादर्वाङनीचमात्रेनीचां
तेपरमांशके नीचारिवर्गेशकलेस्ववर्गेकेंद्रकोणभे
१२९ अवास्थितस्यखेटस्यसमरेपीडितस्यच गाढमू
ढस्यचदशापचातिस्वगुणैःफलम् १३० परमोच्चगतो
यस्तुयातिवीर्यपरत्ववान् संपूर्णाख्यातद्दशातुराज्य
भोग्यशुभमदा १३१ लक्ष्मीकटाक्षचिन्हानांचिदा

वासग्रहप्रदा तुंगमात्रगतस्यापितथावीर्यादिकस्यच
१३२ पूर्णाख्यावहुदैश्वर्यदायित्यपिरुजाप्रदा अ-
तिनीचगतस्यापिदुर्बलस्यग्रहस्यतु १३३ रिक्ताष्टानि
ष्टफलदाव्याध्यनर्थमृतिप्रदा अत्युच्चादतिनीचांचेम
ध्यगस्यवरोहिणी १३४ मित्रोच्चभावाप्तावागत्यस्य
मध्याख्याप्रमर्थदा नीचान्तादुच्चभागान्तंभषट्कमध्यग-
स्यच १३५ दशांचरोहिणींनीचरिपुभांशगतस्यच
अधमाख्याभयक्लेशव्याधिदुःखविवर्द्धनी १३६ ना
मानुरूपफलदापाककालेदशायमा भाग्येशगुरुसंबं
धायोगदृक्केन्द्रभादिभिः १३७ परेषामपिदायेषुभा
ग्योपक्रममुन्नयेत् जातकोयस्तुफलदोभाग्ययोगः
प्रदोपयः १३८ सफलोवक्रमादूर्ध्वंअन्यानपिचखे
चरान् दुर्बलानसमर्थाश्चफलदानेषयोगतः १३९
तारतम्यात्सुसंबंधादशाप्तेतेफलप्रदाम् स्वकेन्द्रादि
जुषांतेषांपूर्णार्द्धांघ्रिव्यवस्यया १४० प्रसह्यकार
इत्येनसंततसंपदंबलात् शीर्षोदयस्थगास्त्वस्वदशादौ
स्वफलप्रदा १४१ उभयोदयराशिस्थदशामध्यफल
प्रदाः प्रष्टोदयक्षगाखेटाःस्वदशांतेफलप्रदाः
१४२ जन्मकालेदशानाथस्त्वेष्टगानांविचारणे निस-
र्गतश्चतत्कालेसुहृदांहरणेशुभम् १४३ संपादयेत्त
दाकष्टंतद्विपर्ययगामिनाम् दशेशाक्रान्तभावानांदा-
रस्यद्वादशाशुभम् १४४ भुक्ताद्द्वादशराशियादशा
भुक्तिप्रकल्पयेत् एकैकराशेर्यातत्रसुहृत्स्वक्षेत्रगामि
नी १४५ तस्याराज्यादिसंपत्तिपूर्वकंशुभमीरयेत्

दुस्थानरिपुनीचस्थनीचक्रूरयुताचया १४६ तस्याम
नर्थकलहरोगमृत्युभयादिकम् विदूभूयात्वशून्यत्वव
शात्स्वीयाष्टवर्गके १४७ वृद्धिह्रानीचतद्राशौभावस्य
स्वग्रहात्क्रमात् भावयोजनयाविद्यात्सुताद्यादिशुभा
शुभम् १४८ धात्वादिराशिभेदाच्चधात्वादिग्रहयोगतः
शुभपापदशाभेदाच्छुभपापयुतेरपि १४९ इष्टानिष्टस्था
नभेदा फलभेदाः संमुन्नयेत् एवंसर्वग्रहाणांचस्वास्वाम
तर्दशामपि १५० स्वराशितोराशिभुक्तिमकल्पफलमी
रयेत् अंतरंतर्दशास्वीयांविभज्यैवंपुनःपुनः १५१
कालसंक्षेपतः सूक्ष्मफलंब्रूयाद्दिनंमति स्वाध्यारंभकृ
तोहोराग्रंथयंत्यपिवामुना १५२ केन्द्रेकोणेकारका
भावनाथाभावप्राप्तिदुस्थिताभावहत्ये अर्थेलाभेविक्र
माबायदाते भावान्सर्वेमातृपित्रादितुल्याः १५३ भावं
पश्यतिभावेशोभावस्थोलग्नगोपिवा बलिनोस्वोच्चगो
वापितद्भावास्विष्टपुष्टया १५४ यद्भावेशोरिनीचस्था
मूढोवातन्नपश्यति तद्भावासत्वमालस्यंवैरित्वंचविनि
र्दिशेत् १५५ भावेशाक्रांतराशीशोयदिरन्ध्रारिरीफगाः
तद्भावनाशनंचैवभावनाथेनदृश्यते १५६ परमोच्चगते
विलग्नाथेतनुभावेशुभखेचरेणदृष्टे उडुपेशुभसंयुते
चदृष्टेशतमायुःप्रवदंतिबुद्धिमंतः १५७ भावैश्चतुर्भि
र्बलिभिर्धनभाग्यायकर्मभिः संपूर्णवित्तंसततंकुबेर
इवजायते १५८ लग्नेवाहेशदेहानांसंबंधश्चान्यवाहना
म् शुक्रेणांदोलिकाप्राप्तिगुरुणागजवाहनम् १५९
केन्द्रायस्वविलग्नकोणसहजस्थोकात्यवाहस्वरोदेहेऽयेन्दु

विलग्ननाथसहितामन्योन्यभावाश्रितौ अन्योन्यामति
भाग्यकंटकगतौदुस्थानगौस्वग्रहपश्यंतौयदिदीनवंशजानि
तोपिस्याच्चतुर्वाहनः १६० इतिश्रीबृहत्पाराशरहोरा
पूर्वखण्डसारांशेविंशोत्तरीमहादशाफलकथनाध्यायः ३६

---

## अथान्तर्दशाकरणमाह.

दशादशाहताकार्यादशाभिर्भागमाहरेत् लब्धांकाश्च
भवेन्मासास्त्रिंशघ्नेचदिनानिच १

## अस्योदाहरणम्

यथा सूर्यमहादशावर्षाणिषट् ६ तन्मध्येसूर्यस्यांतर्दशाकर्तु
म्यपेक्षायां दशावर्षाणि ६ षट्परस्परंगुणितेजातम् ३६ दशभि
र्भक्तेर्लब्धम् ३ मासाः शेषाः ६ षट्त्रिंशद्गुणिताः जाताः १८०
अस्यदशभिर्भक्तेर्लब्धम् १८ दिनानि एवंसूर्यमहादशामध्ये सू
र्यस्यांतर्दशामासा ३ दिनानि १८ एवमग्रेचन्द्रादीनामपिविज्ञेयम् १

| अथ सूर्यविंशोत्तरी वर्षाणि ६ तन्मध्येन्तरमाह. | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| सू. | चं. | मं | रा | बृ | श | बु. | के | शु. | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | १ | [illegible] |
| ३ | ६ | ४ | १० | ९ | ११ | १० | ४ | ० | ० |
| १८ | ० | ६ | २४ | १८ | १२ | ६ | ६ | ० | [illegible] |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |

अथ चन्द्रविंशोत्तरीवर्षाणि १० तन्मध्येन्तरम्.

| चं. | मं | रा. | बृ. | श. | बु. | के. | शु. | सू. | ग्रहाः |
|---|---|---|---|---|---|---|---|---|---|
| ० | ० | १ | १ | १ | १ | ० | १ | ० | ० |
| १० | ७ | ६ | ४ | ७ | ५ | ७ | ८ | ६ | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |

अथ भौमविंशोत्तरीवर्षाणि ७ तन्मध्येन्तरम्.

| मं | रा | बृ | श | बु | के | शु | सू | च | ग्रहाः |
|---|---|---|---|---|---|---|---|---|---|
| ० | १ | ० | १ | ० | ० | १ | ० | ० | ० |
| ४ | ० | ११ | १ | ११ | ४ | २ | ४ | ७ | ० |
| २७ | १८ | ६ | ९ | २७ | २७ | ० | ६ | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |

अथ विंशोत्तरी राहुवर्षाणि १८ तन्मध्येन्तरम्

| रा | बृ | श | बु | के | शु | सू | चं | मं. | ग्रहाः |
|---|---|---|---|---|---|---|---|---|---|
| २ | २ | २ | २ | १ | ३ | ० | १ | १ | ० |
| ८ | ४ | १० | ६ | ० | ० | १० | ६ | ० | ० |
| १२ | २४ | ६ | १८ | १८ | ० | २४ | ० | १८ | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |

अथ विंशोत्तरी गुरुवर्षाणि १६ तन्मध्येन्तरम्

| बृ. | श. | बु. | के | शु | सू | च | मं | रा. | ग्रहाः |
|---|---|---|---|---|---|---|---|---|---|
| २ | २ | २ | ० | २ | ० | १ | ० | २ | ० |
| १ | ६ | ३ | ११ | ८ | ९ | ४ | ११ | ४ | ० |
| १८ | १२ | ६ | ६ | ० | १८ | ० | ६ | २४ | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |

अथ विंशोत्तरी शनिवर्षाणि १९ तन्मध्येन्तरम्

| श. | बु | के | शु | सू. | चं | मं | रा | बृ | ग्रहाः |
|---|---|---|---|---|---|---|---|---|---|
| ३ | २ | १ | ३ | ० | १ | १ | २ | २ | ० |
| ० | ८ | १ | २ | ११ | ७ | १ | १० | ६ | ० |
| ३ | ९ | ९ | ० | १२ | ० | ९ | ६ | १२ | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |

अथ विंशोत्तरी बुधवर्षाणि १७ तन्मध्येन्तरम्

| बु. | के | शु | सू | चं | मं | रा. | बृ | श | ग्रहाः |
|---|---|---|---|---|---|---|---|---|---|
| २ | ० | २ | ० | १ | ० | २ | २ | २ | ० |
| ४ | ११ | १० | १० | ५ | ११ | ६ | ३ | ८ | ० |
| २७ | २७ | ० | ६ | ० | २७ | १८ | ६ | ९ | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |

| अथ विंशोत्तरीकेतुवर्षाणि ७ तन्मध्येन्तरम् | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| के· | शु· | सू· | चं | मं | रा· | गु· | श | बु· |
| ० | १ | ० | ० | ० | १ | ० | १ | ० |
| ४ | २ | ४ | ७ | ४ | ० | ११ | १ | ११ |
| २७ | ० | ६ | ० | २७ | १८ | ६ | ९ | २७ |
| ० | ० | ० | ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० |

| अथ विंशोत्तरीभृगुवर्षाणि २० तन्मध्येन्तरम् | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| शु· | सू· | च· | मं· | रा· | गु· | श· | बु· | के· |
| ३ | १ | १ | १ | ३ | २ | ३ | २ | १ |
| ४ | ० | ८ | २ | ० | ८ | २ | १० | २ |
| ० | ० | ० | ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० |

स्वद्वादशांशकेलग्नेनाथेवास्वदृकाणगे तस्यभुक्तिंशुभामाहुर्मुनीनांकालचिन्तकाः २ स्वत्रिंशांशेथवामित्रत्रिंशांशेवास्थितोयदि तस्यभुक्तिः शुभाप्रोक्ताकालविद्भिर्मनीषिभिः ३ मित्रक्षेत्रेनवांशस्थेमित्रस्यद्विरसांशके तस्यभुक्तिः शुभाप्रोक्ताकालविद्भिर्मनीषिभिः ४ बुद्धिक्षेत्रनवांशस्थेपुत्रस्यद्विरसांशके मित्रद्रेष्काणगेवापितस्यभुक्तिः शुभावहा ५ तयोराशिनवांशस्थे धर्मस्यद्विरसांशके गुरुद्रेष्काणगेवापितस्यभुक्तिः शुभावहा ६ सुखराशिनवांशस्थेवाहनद्विरसांशके सुखद्रेष्काणगेवापितस्यभुक्तिः शुभावहा ७ विलग्ननाथस्थितभांशनाथेमित्रांशगेमित्रगृहेणदृष्टे सुहृद्द्रेकाणस्थनवांशकेवातदास्यभुक्तिंशुभदांवदंति ८ अथचक्ष्येविशेषेणदशाकष्टप्रदान्नृणाम् षष्ठाष्टमव्ययेशानांदशाकष्टप्रदायिनी ९ एषुभुक्तिर्द्विकस्यस्यात् मारकस्यदशायदि मारकेशेनषष्ठेशेयुक्तेलग्नाधिप

यदि १० तस्यभुक्तौज्वरप्राप्तिः प्राहुः कालविदोजनाः
सरोगेशशरीरेशश्चन्द्रषड्वर्गगोयदि ११ जलदोषस्तस्य
भुक्तौस्यादजीर्णोनसंशयः षष्ठेशयुतलग्नेशोबुधषड्व
र्गगोयदि १२ तस्यभुक्तौभवेद्वायुर्वातोवादेहजाड्यकृत्
सारिनाथविलग्नेशोगुरुषड्वर्गगोयदि तस्यभुक्तौभवेद्रो
गः पीडावाब्राह्मणेनतु १३ नक्षत्रेशोविलग्नेशोभृगुष
ड्वर्गगोयदि तस्यभुक्तौभवेत्पीडारोगस्त्रीसंगमेनच १४
सरोगेसविलग्नेशःशनिषड्वर्गगोयदि तस्यभुक्तौभवेद्वातः
सन्निपातोथवानृणाम् १५ लग्नेशरोगेशपयोर्भवेन्मार
कभुक्तिषु मृत्योस्थितैसैंहिकेमन्दकेतुभिर्मनोहिका
स्वासधिक्रायिकाभिः रोगानराणामथतस्यभुक्तौभवे
द्यदामारकसंयुतिश्च १६ एवंत्वाद्यादिभावानांनायको
यत्रसंस्थितः तत्तत्षड्वर्गयोगेनतत्तद्भावफलंवदेत् १७

## अथान्येफलमाह.

केन्द्राधीश्वरकोणनायकदशाश्चान्तर्दशाःशोभनाः सामा
न्याश्चधनत्रिलाभभवनाधीशग्रहाणांदशा षष्ठाष्टव्य
यभावनायकदशाकष्टाभवेयुः सदानेतुर्लग्नमवेक्ष्य तत्तदधि
पात्तत्तद्दशाभुक्तिषु १८

## रविमहादशायांरवेरंतर्दशामास ३ दिवस १८ फलं

उच्चक्षेत्रेगतेसूर्येकेन्द्रलाभत्रिकोणगे रविर्दायेस्यभुक्तौच
धनधान्यादिलाभकृत् १९ देहरोगंवित्तलाभंराजप्रीति
करंशुभम् सर्वकार्यार्थसिद्धिःस्याद्विवाहंराजदर्शनम्

२० द्वितीयद्यूननाथेतु अपमृत्युर्भविष्यति तद्दोषपरिहा
रार्थंमृत्युंजयजपंचरेत् २१ सूर्यप्रीतिकरंशांतिंकुर्यादारो
ग्यमादिशेत् २२

## रविदशायांचंद्रभुक्तिमास ६ दिन० फलमाह

सूर्यस्यांतर्गतेचन्द्रेलग्नात्केन्द्रत्रिकोणगे विवाहंशुभकार्यञ्च
धनधान्यसमृद्धिकृत् २३ गृहक्षेत्राभिवृद्धिंचपशुवाहन
संपदाम् तुंगेवास्वर्क्षगेवापिदारसौख्यंधनागमम् २४
पुत्रलाभसुखंचैवसौख्यराजसमागमम् महाराजप्रसादेन
इष्टसिद्धिसुखावहम् २५ क्षीणेवापापसंयुक्तेदारपुत्रादि
पीडनम् वैषम्यजनसंवादभृत्यवर्गविनाशनम् २६
विरोधंराजकलहंधनधान्यपशुक्षयम् षष्ठाष्टमव्ययेचन्द्रे
जलभीतिमनोरुजम् २७ बन्धनंरोगपीडाचस्थानवि-
च्युतिकारकम् दुःस्थानंचापिचित्तेनदायादिजनविह्वर
म् २८ निर्धनंकुत्सितान्नंचचोरादिनृपपीडनम् मू-
त्रकृच्छ्रादिरोगश्चदेहपीडाक्षयंभवेत् २९ दायेशाल्लाभ
भाग्येचकेन्द्रेवाशुभसंयुते भोगभाग्यादिसंतोषदारपुत्रा-
दिवर्द्धनम् ३० राजमान्यंमहत्सौख्यंस्थानप्राप्तिंच-
शाश्वतीं विवाहंयज्ञदीक्षांचमुख्यानांवरभूषणम् ३१
वाहनंपुत्रपुत्रादिलभतेसुखवर्द्धनम् दायेशाद्रिपुरन्ध्रस्थे
व्ययेवाबलवर्जिते ३२ अकालेभोजनंचैवदेशाद्देशांगमि
ष्यति द्वितीयद्यूननाथेनअपमृत्युर्भविष्यति श्वेतांगां
महिषींदद्याच्छांतिंकुर्यात्सुखंलभेत् ३३

## रविदशायांकुजभुक्तिमास ४ दिन ६ तस्यफलं

सूर्यस्यान्तर्गतेभौमेस्वोच्चेस्वक्षेत्रलाभगे लग्नात्केन्द्रत्रिकोणेवाशुभकार्यशुभादिकम् ३४ भूलाभंकृषिलाभंचधमधान्यादिवृद्धिदम् गृहक्षेत्रादिलाभंचरक्तवस्त्रादिलाभकृत् ३५ लग्नाधिपेनसंयुक्तेसौख्यंराजमियंसुखम् भाग्यलाभाधिपैर्युक्ते लाभंचैवभविष्यति ३६ बहुसेनाधिपत्यंचशत्रुनाशंमनोदृढम् आत्मबन्धुसुखंचैवभ्रातृवर्द्धनकंतथा ३७ दायेशाद्रिपुरन्ध्रस्थेपापयुक्तेचवीक्षिते आधिपत्यबलेहीनेक्रूरबुद्धिमनोरुजम् ३८ कारागृहप्रवेशंचनिर्गलंबन्धुनाशनम् भ्रातृवर्गविरोधंचकर्मनाशमथापिवा ३९ नीचेवाबहुलेभौमेराजमूलाधनक्षयः द्वितीयद्यूननाथेतुदेहेजाड्यंमनोरुजम् ४० सुवत्सजपदानंचअनड्वाहंतथैवच शांतिंकुर्वीतविधिवदायुरारोग्यसिद्धिदाम् ४१

## अथरविदश्यांराहुभुक्तिमास १० दि० २४ फलम्

सूर्यस्यांतर्गतेराहोलग्नात्केन्द्रत्रिकोणगे आदौद्विमासपर्यन्तंधननाशंमहद्भयम् ४२ चौराहिव्रणभीतिश्चदारपुत्रादिपीडनम् नत्फलंसुखमाप्नोतिशुभयुक्तेशुभांशके ४३ देहारोग्यंमनस्तुष्टिराजप्रीतिकरंसुखम् लग्नाद्युपचरेराहौयोगकारकसंयुते ४४ दायेशाच्छुभराशिस्थेराजसन्मानकीर्तिदम् भाग्यवृद्धिंयशोलाभंदारपुत्रादिपीडनम् ४५ पुत्रोत्सवादिसंतोषंगृहेकल्याण

शोभनम् दायेशात्षष्ठरिष्कस्थेरन्ध्रेनाचलवर्जिते ४६
बन्धनंस्थाननाशंचकारागृहनिवेशनम् चौराहिऋणे
भीतिश्चदारपुत्रादिवर्द्धनम् ४७ चतुष्पाज्जीवनाशंच
गृहक्षेत्रादिनाशनम् गुल्मक्षयादिरोगश्चअतीसारादि
पीडनम् ४८ द्विसप्तस्थेतथाराहौतत्स्थानाधिपसंयु-
ते अपमृत्युभयंचैवसर्वभीतिश्चसंभवेत् ४९ दुर्गा
जपंचकुर्वीतछागदानंसमाचरेत् कृष्णांगांमहिषींदद्या
च्छांतिमाप्नोत्यसंशयम् ५०

## अथरविमध्येगुरुभुक्तिमा०११ दि०१८ फलं

सूर्यस्यांतर्गतेजीवेलग्नात्केंद्रत्रिकोणगे स्वोच्चेमित्रस्व
वर्गस्थेविवाहंराजदर्शनम् ५१ धनधान्यादिलाभश्च
पुत्रलाभंमहत्सुखम् महाराजप्रसादेनइष्टकार्यार्थला-
भकृत् ५२ ब्राह्मणप्रियसन्मानंप्रियवस्त्रादिलाभकृत्
भाग्यकर्माधिपवशाद्राजलाभंमहोत्सवं ५३ नरवाह
नयोगाश्च स्थानाधिक्यंमहत्सुखम् दायेशाच्छुभरा-
शिस्थेभाग्यवृद्धिसुखावहम् ५४ दानधर्मक्रियायुक्तो
देवताराधनात्प्रियः गुरुभक्तिमनःसिद्धिःपुण्यकर्मा
दिसंग्रहम् ५५ दायेशाद्रिपुरंध्रस्थेनीचेवापापसंयुते
दारपुत्रादिपीडांचदेहपीडामहद्भयम् ५६ राजकोपं
प्रकुरुतेइष्टवस्तुविनाशनम् पापमूलाधननाशंदेहभृ
त्यमनोरुजम् ५७ स्वर्णदानंप्रकुर्वीतइष्टजाप्यंचका
रयेत् गवांकपिलवर्णानांदानेनारोग्यमादिशेत् ५८

## अथ रविदशायां शनिभुक्तिमा० ११ दि० १२ फलम्

सूर्यस्यान्तर्गते मन्दे लग्नात्केन्द्रत्रिकोणगे शत्रुनाशं
हरसौख्यं स्वल्पधान्यार्थलाभकृत् ५९ विवाहोत्सव
कार्याणि शुभकार्यं शुभावहम् स्वोच्चे स्वक्षेत्रगे मन्दे सु
हृद्ग्रहसमन्विते ६० ग्रहे कल्याणसंपत्तिर्विवाहादिषु
सत्क्रियाम् राजसन्मानकीर्तिश्च नानावस्त्रधनागमः ६१
दायेशाद्रिपुरन्ध्रस्थे व्यये वा पापसंयुते वातशूलमहा
व्याधिज्वरातीसारपीडनम् ६२ बंधनं कार्यहानिश्च
वित्तनाशं महद्भयम् अकस्मात्कलहं चैव दायादिजन
विद्वजम् ६३ भुक्त्यादौ मित्रहानिः स्यान्मध्ये किंचित्सु
खावहम् अंते क्लेशकरं चैव नीचं तेषां तथैव च ६४ पि
तृमातृवियोगं च गमनागमनं तथा द्वितीयद्यूननाथे त्वप
मृत्युभयं भवेत् ६५ कृष्णगां महिषीं दद्यान्मृत्युंजय
जपं चरेत् छागदानं प्रकुर्वीत सर्वसम्पत्प्रदायकम् ६६

## रविदशायां बुधभुक्तिमा० १० दिन ६ तस्य फलं

सूर्यस्यांतर्गते सौम्ये स्वोच्चे वा स्वक्षेगेऽपि वा केन्द्रत्रिकोण
लाभस्थे बुधे वर्गबलैर्युते ६७ राज्यलाभं महोत्साहं दा
रपुत्रादिसौख्यकृत् महाराजप्रसादेन वाहनांबरभूष
णम् ६८ पुण्यतीर्थफलावाप्तिर्गृहे गोधनसंकुलम्
भाग्यलाभाधिपैर्युक्ते लाभवृद्धिकरो भवेत् ६९ भा
ग्यपंचमकर्मस्थे सन्मानं भवति ध्रुवम् स्वकर्मधर्मबुद्धि
श्च गुरुधर्मद्विजार्चनम् ७० धनधान्यादिसंयुक्ताधि

वाहंपुत्रसंभवम् दायेशाच्छुभराशिस्थेसौम्यभुक्तौम
हत्सुखम् ७० वैवाहिकंयज्ञकर्मदानधर्मजपादिकम्
स्वनामांकितपद्यानिनामद्वयमथापिवा ७१ भोजनांबर
भूषाप्तिरमरेशात्वभवेन्नर दायेशाद्रिपुरन्ध्रस्थेरिष्फगे
नीचगेपिवा ७२ देहपीडामनस्तापदारपुत्रादिपीडन
म् भुक्त्यादौदुःखमाप्नोतिमध्येकिंचित्सुखावहम्
७३ अन्तेतुराजभीतिश्चगमनागमनंतथा द्वितीये
द्यूननाथेतु देहजाड्यंज्वरादिकम् ७४ विष्णुनामसह
स्रंचअन्नदानंचकारयेत् रजतःप्रतिमादानंकुर्यादारो
ग्यमादिशेत् ७५

## रविमध्येकेतुभुक्तिमा०४दिन६ तस्यफलं

सूर्यस्यांतर्गतेकेतौदेहपीडामनोव्यथा अर्थव्ययंराज
कोपंस्वजनादेरुपद्रवम् ७६ लग्नाधिपेनसंयुक्ते आदौ
सौख्यंधनागमम् मध्येतत्क्लेशमाप्नोतिमृतवार्तागमं
वदेत् ७७ षष्ठाष्टमव्ययेचैवदायेशात्पापसंयुते क
पोलदन्तरोगश्चमूत्रकृच्छ्रस्यसंभवम् ७८ स्थानवि
च्युतिरर्थस्यमित्रहानिपितुर्मृतिः विदेशगमनंचैव
शत्रुपीडामहद्भयम् ७९ लग्नादुपद्रवेकेतौयोगकारक
संयुते शुभांशेशुभवर्गैश्चशुभकर्मफलप्रदम् ८०
पुत्रदारादिसौख्यंचसंतोषंप्रियवर्द्धनम् विचित्रवस्त्र
लाभंचयशोवृद्धिसुखावहम् ८१ द्वितीयद्यूननाथेवाप्र
पमृत्युभयंवदेत् दुर्गाजपंचकुर्वीत छागदानंतथैवच ८२
महामृत्युंजयंजाप्यंकुर्याच्छांतिमवाप्नुयात् ८३

## अथ रविदशायां शनिभुक्तिमा० ११ दि० १२ फलम्

सूर्यस्यान्तर्गते मन्दे लग्नात्केन्द्रत्रिकोणगे शत्रुनाशं हृत्सौख्यं स्वल्पधान्यार्थलाभकृत् ५९ विवाहोत्सवकार्याणि शुभकार्यं शुभावहम् स्वोच्चे स्वक्षेत्रगे मन्दे सुहृद्ग्रहसमन्विते ६० गृहे कल्याणसंपत्तिर्विवाहादिषु सत्क्रियाम् राजसन्मानकीर्तिश्च नानावस्त्रधनागमः ६१ दायेशाद्रिपुरन्ध्रस्थे व्यये वा पापसंयुते वातशूलमहाव्याधिज्वरातीसारपीडनम् ६२ बंधनं कार्यहानिश्च वित्तनाशं महद्भयम् अकस्मात्कलहं चैव दायादिजनविग्रहम् ६३ भुक्त्यादौ मित्रहानिः स्यान्मध्ये किंचित्सुखावहम् अंते क्लेशकरं चैव नीचं तेषां तथैव च ६४ पितृमातृवियोगं च गमनागमनं तथा द्वितीयद्यूननाथे तु अपमृत्युर्भयं भवेत् ६५ कृष्णगां मां महिषीं दद्यान्मृत्युंजयजपं चरेत् छागदानं प्रकुर्वीत सर्वसम्पत्प्रदायकम् ६६

## रविदशायां बुधभुक्तिमा० १० दिन ६ तस्य फलं

सूर्यस्यांतर्गते सौम्ये स्वोच्चे वा स्वर्क्षगेऽपि वा केन्द्रत्रिकोणलाभस्थे बुधे वर्गबलैर्युते ६७ राज्यलाभं महोत्साहं दारपुत्रादिसौख्यकृत् महाराजप्रसादेन वाहनांवरभूषणम् ६८ पुण्यतीर्थफलावाप्तिर्गृहे गोधनसंकुलम् भाग्यलाभाधिपैर्युक्ते लाभवृद्धिकरो भवेत् ६९ भाग्यपंचमकर्मस्थे सन्मानं भवति ध्रुवम् स्वकर्मधर्मबुद्धिश्च गुरुधर्मद्विजार्चनम् ७० धनधान्यादिसंयुक्तवि

सुखावहम् २ पूर्णचन्द्रेपूर्णबलंसेनाधिपमहत्सुखम् पापयुक्तेथवाचंद्रेनीचेरिष्फषष्टगे ३ तत्कालेधनना शंस्यात्स्थानच्युतिमथापिवा देहालस्यंमनस्तापंरा जमंत्रिविरोधकृत् ४ मातृक्लेशंमनोदुःखंनिगडंवंधु- नाशनम् द्वितीयद्यूननाथेतुरन्ध्रारिष्फसमन्विते ५ देहजाड्यंमहाभंगंअपमृत्युभयंभवेत् श्वेतांगांमहि षींदद्याद्दानेनारोग्यमादिशेत् ६

## अथचंद्रदशायांकुजभुक्तिमा०७तस्यफ०

चंद्रस्यांतर्गतेभौमेलग्नात्केन्द्रत्रिकोणगे सौभाग्यंरा जसन्मानंवस्त्राभरणभूषणम् ७ यत्नकार्यार्थसि- द्धिस्याद्भविष्यतिनसंशयः गृहक्षेत्राभिवृद्धिश्चव्यव हारजयंभवेत् ८ कार्यलाभमहत्सौख्यंस्वोच्चेस्वक्षे त्रगेफलम् षष्टाष्टमव्ययेभौमेपापयुक्तेथवायदि ९ दायेशादशुभस्थानेदेहार्तिपदवीक्ष्यति गृहक्षेत्रादिहा निश्चव्यवहारंतथैवच १० भृत्यवर्गेषुकलहंभूपालस्य विरोधनम् आत्मबंधुवियोगंचनित्यंनिष्ठुरभाषणम् ११ द्वितीयेद्यूननाथस्तुरन्ध्रेरन्ध्राधिपोयदा तद्दोषपरि हारार्थंब्राह्मणस्यार्चनंचरेत् १२

## अथराहुभुक्तिमास१९तस्यफलमाह

चन्द्रस्यांतर्गतेराहौलग्नात्केन्द्रत्रिकोणगे आदौस्वल्प फलंज्ञेयंशत्रुपीडामहद्भयम् १३ चौराहिराजभीतिश्च चतुष्पाज्जीवपीडनम् बन्धुनाशंमित्रहानिंमानहानिंम

## रविदशायांशुक्रांतरमास १२ तस्यफलम्.

सूर्यस्यांतर्गतेशुक्रेत्रिकोणेकेन्द्रगेपिवा स्वोच्चेमित्रस्व
वर्गस्थेइष्टस्त्रीभोग्यसंपदाम् ८४ ग्रामांतरप्रयाणंचब्रा
ह्मणप्रभुदर्शनम् राजलाभंमहोत्साहंछत्रचामरवैभ
वम् ८५ गृहेकल्याणसंपत्तिर्नित्यमिष्टान्नभोजनम्
विद्रुमादिरत्नलाभंमुक्तवस्त्रादिलाभकृत् ८६ चतु-
ष्पाज्जीवलाभस्याद्बहुधान्यधनादिकम् उत्साहंकीर्ति
संपत्तिनरवाहनसंपदाम् ८७ षष्टाष्टमव्ययेशुक्रेदाये
शाद्बलवार्जिते राजकोपंमनक्लेशंपुत्रस्त्रीधननाशकम्
८८ भुक्त्यादौचाहनंमध्येलाभंशुभकरम्भवेत् अंते
चयशनाशंचस्यान्नशंशामयापिवा ८९ बन्धुद्वेषमनं
जायेस्वकुलाद्भोगनाशनम् भार्गवद्यूननाथेतुदेहपी
डाभविष्यति ९० रन्ध्ररिष्फसमायुक्ते अपमृत्युर्भविष्य
ति तद्दोषपरिहारार्थंमृत्युंजयजपंचरेत् ९१ श्वे
तांगांमहिषींदद्याद्रुद्रजाप्यंचकारयेत् ९२ इति
श्रीबृहत्पाराशरहोरापूर्वखण्डसारांशेसूर्यान्तरदशाफल
कथनंनामसप्तत्रिंशोध्यायः ३७

---

## अथ चंद्रदशायांचंद्रभुक्तिमास १० तस्यफ०

स्वोच्चेस्वक्षेत्रगेचन्द्रेत्रिकोणेलाभगेपिवा भाग्यकर्माधि
पैर्युक्तोजाम्बांवर संकुलम् १ देवतागुरुभक्तिश्चपुण्य
श्लोकादिकीर्तितम् राज्यलाभंमहत्सौख्यंयशोवृद्धि

धैर्यवीर्यपराक्रमम् २८ यज्ञवार्यविवाहश्चराज्यश्री धनसंपदा दायेशाद्रिपुरंध्रस्थेव्ययेवाबलवर्जिते २९ करोतिकुत्सितान्नंचविदेशगमनंतथा भुक्त्यादौशोभनं प्रोक्तमन्तेक्लेशकरंभवेत् ३० द्वितीयेद्यूननाथश्चह्यप मृत्युर्भविष्यति तद्दोषपरिहारार्थंशिवसाहस्रकंजपेत् स्वर्णदानमितिप्रोक्तंसर्वसंपत्प्रदायकम् ३१

## अथ शनि भुक्तिमास १९ तस्यफलम्

चन्द्रस्यांतर्गतेमन्देलग्नात्केन्द्रत्रिकोणगे स्वक्षेत्रस्वां शगश्चैवमन्देतुंगांशसंयुते ३२ शुभदृष्टियुतेवापिला भेवाबलसंयुते पुत्रमित्रार्थसंपत्तिःशूद्रप्रभुसमागम म् ३३ व्यवसायात्फलाधिक्यगृहक्षेत्रादिवृद्धिदम् पुत्रलाभंचकल्याणंराजानुग्रहवैभवम् ३४ षष्ठाष्टम- व्ययेमन्देनीचेवाधनगेपिवा तद्भुक्त्यादौपुण्यतीर्थ स्नानंचैवतुदर्शनम् ३५ अनेकजनत्रासस्त्वंशस्त्रपी डाभविष्यति दायेशात्केन्द्रराशिस्थेत्रिकोणेबलगेपि वा ३६ कश्चित्सौख्यधनाप्तिश्चदारपुत्रविरोधकृत् द्वितीयद्यूनरंध्रस्थेदेहबाधाभविष्यति ३७ तद्दोषपरि हारार्थंमृत्युंजयजपंचरेत् कृष्णांगांमहिषींदद्याद्दानेना रोग्यमादिशेत् ३८

## अथबुधभुक्तिमास १७ तस्यफलम्

चन्द्रस्यान्तर्गतेसौम्येकेंद्रलाभत्रिकोणगे स्वर्क्षेनवांश केसौम्येतुंगेवाबलसंयुते ३९ धनागमंराजसन्मानप्रि-

नोव्यथाम् १४ शुभयुक्तेशुभेदृष्टेलग्नादुपचयेपिवा योगकारकसंबन्धेयत्रकार्यार्थसिद्धिकृत् १५ नैर्ऋत्येपश्चिमेभागेकश्चित्प्रभुसमागमम् वाहनांबरलाभंच इष्टकार्यार्थसिद्धिकृत् १६ दायेशाद्रिपुरन्ध्रस्थेव्ययेवाबलवर्जिते स्थानभ्रष्टंमनोदुःखंपुत्रक्लेशंमहद्भयम् १७ राजकार्यकलापंचदारपीडामहद्भयम् वृश्चिकादिवृषभीतिश्चौराहिनृपपीडनम् १८ दायेशात्केन्द्रकोणेवा दुश्चिक्येलाभगेपिवा पुण्यतीर्थफलावाप्तिर्दैवतादर्शनम्महत् १९ परोपकारधर्मादिपुण्यधर्मादिसंग्रहम् द्वितीयद्यूनराशिस्थेदेहबाधाभविष्यति छागदानंप्रकुर्वीतदेहारोग्यंप्रजायते २१

## अथ गुरुभुक्तिमास १६ तस्यफलम्

चन्द्रस्यांतर्गतेजीवेलग्नात्केन्द्रत्रिकोणगे स्वगेहेलाभेस्वोच्चेवाराज्यलाभंमहोत्सवम् २२ वस्त्रालंकारभूप्राप्तिंराजप्रीतिंधनागमम् इष्टदेवप्रसादेनगर्भाधानादिकंफलम् २३ शुभशोभनकार्याणिगृहेलक्ष्मीकटाक्षकृत् राजाश्रयंधनंभूमिगजवाजिसमन्वितम् २४ महाराजप्रसादेनइष्टसिद्धिसुखावहम् षष्ठाष्टमव्ययेजीवेनीचेवास्तंगतेयदि २५ पापयुक्तेसमाकर्मगुरुपुत्रादिनाशनम् स्थानभ्रष्टंमनोदुःखमकस्मात्कलहंध्रुवम् २६ गृहक्षेत्रादिनाशंचवाहनांबरनाशनम् दायेशात्केन्द्रकोणेवादुश्चिक्येलाभगेपिवा २७ भोजनांबरपश्वादिमहोत्साहकरोतिच भ्रात्रादिसुखसंपत्ति

धैर्यवीर्यपराक्रमम् २८ यज्ञवीर्यविवाहश्चराज्यश्री
धनसंपदा दायेशाद्रिपुरंध्रस्थेव्ययेवाबलवर्जिते २९
करोतिकुत्सितानंचविदेशगमनंतथा भुक्त्यादौशोभनं
प्रोक्तमन्तेक्लेशकरंभवेत् ३० द्वितीयेद्यूननाथश्चह्यप
मृत्युर्भविष्यति तद्दोषपरिहारार्थंशिवसाहस्रकंजपेत्
स्वर्णदानमितिप्रोक्तंसर्वसंपत्प्रदायकम् ३१

## अथ शनिभुक्तिमास १९ तस्यफलम्

चन्द्रस्यांतर्गतेमन्देलग्नात्केन्द्रत्रिकोणगे स्वक्षेत्रस्वां
शगश्चैवमंन्देतुंगांशसंयुते ३२ शुभदृष्टियुतेवापिला
भेवाबलसंयुते पुत्रमित्रार्थसंपत्तिःशूद्रप्रभुसमागम
म् ३३ व्यवसायात्फलाधिक्यगृहक्षेत्रादिवृद्धिदम्
पुत्रलाभंचकल्याणंराजानुग्रहवैभवम् ३४ षष्ठाष्टम-
व्ययेमन्देनीचेवाधनगेपिवा तद्भुक्त्यादौपुण्यतीर्थे
स्नानंचैवतुदर्शनम् ३५ अनेकजनत्रासश्चशस्त्रपी
डाभविष्यति दायेशात्केन्द्रराशिस्थेत्रिकोणेबलगेपि
वा ३६ कचित्सौख्यधनातिश्चदारपुत्रविरोधकृत्
द्वितीयद्यूनरंध्रस्थेदेहबाधाभविष्यति ३७ तद्दोषपरि
हारार्थंमृत्युंजयजपंचरेत् कृष्णांगांमहिषींदद्याद्दानेना
रोग्यमादिशेत् ३८

## अथबुधभुक्तिमास १७ तस्यफलम्

चन्द्रस्यान्तर्गतेसौम्येकेंद्रलाभत्रिकोणगे स्वर्क्षेनवांश
केसौम्येतुंगेवाबलसंयुते ३९ धनागमंराजसन्मानंप्रि-

यवस्त्रादिलाभकृत् विद्याविनोदसद्गोष्ठीज्ञानवृद्धिसुखा
वहम् ४० सन्तानप्राप्तिसंतोषंवणिजाधनलाभकृत्
वाहनछत्रसंयुक्तंनानालंकारभूषितम् ४१ दायेशात्कें
द्रकोणेवालाभेवाधनगेपिवा विवाहंयज्ञदीक्षांचदानं
धर्मशुभादिकम् ४२ राजप्रीतिकरंचैवविद्वज्जनस-
मागमम् मुक्तामणिप्रवालानिवाहनांबरभूषणम्
४३ आरोग्यप्रीतिसौख्यंचसोमपानादिकंसुखम् दा-
येशाद्रिपुरंध्रस्थेव्ययेवानीचगेपिवा ४४ तद्भुक्तिदे
हबाधाचकृषिगोभूमिनाशनम् काराग्रहप्रवेशंचदार
पुत्रादिपीडनम् ४५ द्वितीयद्यूननाथेतुज्वरपीडामह-
द्भयम् छागदानंप्रकुर्वीतविष्णुसाहस्रकंजपेत् ४६

## अथशुक्रभुक्तिवर्ष१मास८ तस्यफलम्.

चंद्रस्यांतर्गतेशुक्रेकेन्द्रलाभत्रिकोणगे स्वोच्चेस्वक्षेत्रगेवापि राज्यलाभंकरोतिच ५३ महाराजप्रसादेनवाहनाम्बरभूषण म् चतुष्पाज्जीवलाभंस्याद्दारपुत्रादिवर्धनम् ५४ नूतन ग्रहनिर्माणंनित्यमिष्टान्नभोजनम् सुगन्धपुष्पदायादिरम्य स्त्रारोग्यसम्पदाम् ५५ दशाधिपेनसंयुक्ते देहसौख्यंमहा सुखम् सत्कीर्तिसुखसम्पत्तिगृहक्षेत्रादिवृद्धिकृत् ५६ नीचेवास्तंगतेशुक्रेपापग्रहयुतेक्षिते भूनाशंपुत्रमित्रादिनाश नंपत्निनाशनम् ५७ चतुष्पाज्जीवहानिःस्याद्राजद्वारेविरो धकृत् धनस्थानगतेशुक्रेस्वोच्चेस्वक्षेत्रसंयुते ५८ निधिला भंमहत्सौख्यंभूलाभंपुत्रसंभवम् भाग्यलाभाधिपेयुक्तेभा ग्यवृद्धिकरोभवेत् ५९ महाजप्रसादेनइष्टसिद्धिसुखावहम् देवब्राह्मणभक्तिश्चमुक्ताविद्रुमलाभकृत् ६० दायेशाल्लाभ गेशुक्रेत्रिकोणेकेन्द्रगेपिवा गृहक्षेत्राभिवृद्धिश्चवित्तला भंमहत्सुखम् ६१ दायेशाद्रिपुरन्ध्रस्थेव्ययेवापापसंयुते विदेशवासदुःखार्तिमृत्युचोराहिपीडनम् ६२ द्वितीयद्यूनना थेतुअपमृत्युभयंभवेत् तद्दोषविनिवृत्यर्थंरुद्रजाप्यंचकारयेत् ६३ श्वेतांगांरजतंदद्याच्छान्तिमाप्नोत्यशयः ६४

## अथरविभुक्तिमास ६ तस्यफलम्.

चन्द्रस्यांतर्गतेसूर्येस्वोच्चेस्वक्षेत्रसंयुते केन्द्रत्रिकोणलाभेवा धनेवासोदरेबले ६५ नष्टराज्यंधनप्राप्तिंगृहेकल्याणशोभ नम् मित्रराज्यप्रसादेनग्रामभूम्यादिलाभकृत् ६६ गर्भा-

धानफलप्राप्तिर्गृहे लक्ष्मीकटाक्षकृत् भुक्त्यन्ते देहमालस्यं ज्वरपीडा भविष्यति ६७ दायेशाद्रिपुरन्ध्रस्थे व्यये वा पापसंयुते नृपचोराहिभीतिश्च ज्वररोगादिसंभवम् ६८ विदेशगमनं चापि लभ्यते फलवैभवम् द्वितीयद्यूननाथे तु ज्वरपीडा भविष्यति तद्दोषपरिहारार्थं शिवपूजां च कारयेत् ६९ इति श्रीबृहत्पाराशरहोरापूर्वखण्डसारांशे चन्द्रान्तरदशाफलकथनं नामाष्टत्रिंशतितमोऽध्यायः ३८

---

## अथ कुजदशायां कुजान्तरमास ४ दि०२७ फलम्

कुजस्यान्तर्गते भौमे लग्नात्केन्द्रत्रिकोणगे लाभे वा धनसंयुक्ते तुङ्गे वक्ये बलसंयुते १ लग्नाधिपेन संयुक्ते राजानुग्रहवैभवम् लक्ष्मीकटाक्षचिन्हानि नष्टराज्यार्थलाभकृत् २ पुत्रोत्सवादिसंतोषं गृहे गोक्षीरसंकुलम् स्वोच्चे वा स्वर्क्षगे भौमे स्वांशे वा बलसंयुते ३ गृहक्षेत्राभिवृद्धिश्च गोमहिष्यादिलाभकृत् महाराजप्रसादेन इष्टसिद्धिसुखावहम् ४ षष्ठाष्टमव्यये भौमे पापदृग्योगसंयुते मूत्रकृच्छ्रादिरोगश्च प्रेष्टाधिक्यं व्रणाद्भयम् ५ चौराहिराजपीडा च धनधान्यपशुक्षयम् द्वितीयद्यूननाथे तु देहजाड्यं मनोरुजम् ६ तद्दोषपरिहारार्थं रुद्रजाप्यं च कारयेत् अनड्वाहं प्रदद्याच्च कुजदोषनिवृत्तये ७ आरोग्यं कुरुते यस्य सर्वसम्पत्तिदायकम् ८

## अथ राहुभुक्तिमास १२ दिन १८ तस्य फलम्

कुजस्यान्तर्गते राहौ स्वोच्चमूलत्रिकोणगे कर्मयुक्ते शुभे दृष्टे

केन्द्रलाभत्रिकोणगे. ९ तत्कालेराजसन्मानंगृहभूम्यादिला भकृत् कलत्रपुत्रलाभस्याद्व्यवसायात्फलाधिकम्. १० गंगास्नानफलंवापिविदेशगमनंतथा षष्ठाष्टमव्ययेराहौपाप युक्तेथवीक्षिते ११ चौराहिव्रणभीतिश्चचतुष्पाज्जीवनाशन म् वातपित्तक्षयंचैवकारागृहनिवेशनम् १२ धनस्थानग तेराहौधननाशंमहद्भयम् द्वितीयेसप्तमेवापिह्यपमृत्युभयं महत् १३ नागदानंप्रकुर्वीतदेवब्राह्मणभोजनम् मृत्युंजय जपंकुर्यादायुरारोग्यमादिशेत् १४

अथगुरुभुक्तिमास११दिन६ तस्यफलमाह.

कुजस्यांतर्गतेजीवेत्रिकोणेकेंद्रगेपिवा लाभेवाधनसंयुक्ते तुंगांशेस्वांशगेपिवा १५ सत्कीर्तिराजसन्मानंधनधान्यंच वृद्धिकृत् गृहेकल्याणसंपत्तिदारापुत्रादिलाभकृत् १६ दाये शात्केन्द्रराशिस्थेत्रिकोणेलाभगेपिवा भाग्यकर्माधिपैर्युक्ते वाहनाधिपसंयुते १७ लग्नाधिपसमायुक्तेशुभांशेशुभवर्गगे गृहक्षेत्राभिवृद्धिश्चगृहेकल्याणसम्पदाम् १८ देहारोग्यंमह त्कीर्तिगृहेगोकुलसंग्रहे चतुष्पाज्जीवलाभः स्याद्व्यवसायात्फ लाधिकम् १९ कलत्रपुत्रविभवंराजसन्मानवैभवम् षष्ठाष्ट मव्ययेजीवेनीचेवास्तंगतेयदि २० पापग्रहेणसंयुक्तेदृष्टेवादुर्बले यदि चौराहिनृपभीतिश्चपित्तरोगादिसंभवम् २१ प्रेत बाधाभृत्यनाशंसोदराणांविनाशनम् द्वितीयद्यूननाथेतुअप मृत्युज्वरादिकम् तद्दोषपरिहारार्थंशिवसाहस्रकंजपेत् २२

अथशनिभुक्तिमास१३दिन९ तस्यफलमाह.

कुजस्यांतर्गतेमन्देस्वर्क्षेकेन्द्रत्रिकोणगे मूलत्रिकोणकेन्द्रेवा

तुंगांशेस्यांशगेयदि २३ लग्नाधिपतिनावापिशुभदृष्टियुतेब-
ले राज्यसौख्यंयशोवृद्धिंस्वग्रामेधान्यवृद्धिकृत् २४ पु
त्रपौत्रसमायुक्तेगृहेगोधनसंग्रहः स्ववारेराजसन्मानंस्वमा
सेपुत्रवृद्धिकृत् २५ नीचादिक्षेत्रगेमन्देषष्ठाष्टव्ययराशिगे
म्लेच्छवर्गप्रभुभयंधनधान्यादिनाशनम् २६ निगडंबन्धनं
रोगमंतेक्षेत्रनिवासकृत् द्वितीयद्यूननाथेतुपापयुक्तेमहद्भ
यम् २७ धननाशंचसंचारंराजद्वेषंमनोरुजम् चौराग्नि
नृपपीडाचसहोदरविनाशनम् २८ बन्धुद्वेषकरंचैवजीवहा
निश्चजायते अकस्माच्चमृतिर्भीतिःपुत्रदारादिपीडनम् २९
कारागृहादिभीतिश्चराजदंडोमहद्भयम् दायेशात्केंद्रराशि-
स्थेलाभस्थेचात्रिकोणगे ३० विदेशयानंलभतेदुष्कीर्तिंवि
विधानिच पापकर्मरतोनित्यंवहुजीवादिहिंसकः ३१ वि
क्रयक्षेत्रहानिश्चस्थानभ्रंशंमनोव्यथा वधव्यपजयंचैवमू
त्रकृच्छ्रमहद्भयम् ३२ दायेशात्षष्ठरन्ध्रेवाव्ययेवापापसं
युते तद्भुक्त्यांमरणंज्ञेयंनृपचौरादिपीडनम् ३३ वात
पीडाचशूलादिज्ञातिशत्रुभयंभवेत् द्वितीयद्यूननाथेवाह्यपमृ
त्युभयंभवेत् ३४ तद्दोषपरिहारार्थंमृत्युंजयजपंचरेत् ३५

अथबुधभुक्तिमास १६ दिन २७ तस्यफलम्

कुजस्यांतर्गतेसौम्येलग्नात्केंद्रत्रिकोणगे सत्कथाश्चजपा
दानंधर्मबुद्धिमहद्यशः ३६ नीतिमार्गप्रसंगश्चनित्यमिष्टान्न
भोजनम् वाहनांवरपश्वादिराजकर्मसुखानिच ३७ कृषि
कर्मफलंसिद्धिवारणांवरभूषणम् नीचेवास्तंगतेवापिषष्ठा
ष्टव्ययगेपिवा ३८ हृद्रोगंमानहानिश्चनिगडंबन्धुनाशनम्

दारपुत्रार्थनाशःस्याच्चतुष्पाज्जीवनाशनम् ३९ दशाधिपेन संयुक्ते शत्रुवृद्धिमहद्भयम् विदेशगमनंचैवनानारोगास्तथैवच ४० राजद्वारेविरोधस्यकलहंसौख्यभुक्तिषु दायेशात्केन्द्रकोणेवास्वोच्चेयुक्तार्थलाभकृत् ४१ अनेकधननाथत्वंराजसन्मानमेवच भूपालयोगकुरुतेधनांवरविभूषणम् ४२ भूरिवाद्यमृदंगादिसेनापत्यमहत्सुखम् विप्राविनोदविमलावस्त्रवाहनभूषणम् ४३ दारपुत्रादिविभवंगृहेलक्ष्मीकटाक्षकृत् दायेशात्षष्ठरिःफस्थेरन्ध्रेवापापसंयुते ४४ तद्दाये मानहानिःस्यात्क्रूरबुद्धिस्तुक्रूरवाक् चौराग्निनृपपीडाचमार्गेचौरभयादिकम् ४५ अकस्मात्कलहश्चैवबुधभुक्तौनसंशयः द्वितीयद्यूननाथेतुमहाव्याधिभयंकरा ४६ अम्बदानंप्रकुर्वीतविष्णुनामसहस्त्रकम् सर्वसंपत्प्रदंसौख्यंसर्वारिष्टप्रशांतये ४७

अथकेतुभुक्तिमास ४ दिन २७ तस्यफलम्

कुजस्यान्तर्गतेकेतौत्रिकोणेकेन्द्रगेपिवा दुश्चिक्येलाभगेवापिशुभयुक्तेशुभेक्षिते ४८ राजानुग्रहशान्तिश्चबहुसौख्यंधनागमम् किंचित्फलंदशादौतुभूलाभंपुत्रलाभकृत् ४९ राजसंल्लाभकार्याणिचतुष्पाज्जीवलाभकृत् योगकारकसंस्थानवलवीर्यसमन्विते ५० पुत्रलाभयशोवृद्धिगृहेलक्ष्मीकटाक्षकृत् भृत्यवर्गधनप्राप्तिःसेनापत्यंमहत्सुखम् ५१ भूपालमित्रकुरुतेयानांवरविभूषणम् दायेशात्षष्ठरिष्फस्थेरन्ध्रेवापापसंयुते ५२ कलहंदतरोगश्चचौरव्याघ्रादिपीडनम् ज्वरातिसारकुष्ठादिदारपुत्रादिपीडनम् ५३ द्वितीयसप्तमस्थानेदेहव्याधिर्भविष्यति सन्मानजनसतापंधनधान्यस्यमच्यु-

तम् मृत्युंजयंप्रकुर्वीतसर्वसंपत्प्रदायकम् ५४

## अथशुक्रभुक्तिमास १४ दिन ० तस्यफलम्

कुजस्यान्तर्गतेशुक्रेकेन्द्रलाभत्रिकोणगे स्वोच्चेवास्वर्क्षगे वापिशुभस्थानाधिपोथवा ५५ राज्यलाभंमहत्सौख्यंगजाश्वांबरभूषणम् लग्नाधिपेनसंबंधेपुत्रदारादिवर्द्धनम् ५६ आयुश्चवृद्धिरैश्वर्यंभाग्यवृद्धिसुखंभवेत् दायेशात्केन्द्रलाभस्थेलाभेवाधनगेपिवा ५७ तत्कालेश्रियमाप्नोतिपुत्रलाभंमहत्सुखम् स्वप्रभोश्चमहत्सौख्यंश्वेतवस्त्राश्वलाभकृत् ५८ महाराजप्रसादेनग्रामभूम्यादिलाभदम् भुक्त्यंतेफलमाप्नोतिगीतनृत्यादिलाभकृत् ५९ पुण्यतीर्थस्नानलाभंकर्माधिपसमन्विते पापधर्मदयापुण्यंतडागंकारयिष्यति ६० दायेशाद्रन्ध्ररिष्फस्थेषष्ठेवापापसंयुते करोतिदुःखबाहुल्यंदेहपीडाधनक्षयम् ६१ राजचोरादिभीतिश्चगृहेकलहमेवच दारपुत्रादिपीडाचगोमहिष्यादिनाशकृत् ६२ द्वितीयद्यूननाथेतुदेहबाधाभविष्यति श्वेतांगांमहिषीदद्यादायुरारोग्यमादिशेत् ६३

## अथ रविभुक्तिमास ४ दिन ६ तस्यफलम्

कुजस्यांतर्गतेसूर्येस्वोच्चेस्वक्षेत्रकेन्द्रगे मूलत्रिकोणलाभेवा भाग्यकर्मेशसंयुते ६४ तद्भुक्तौवाहनंकीर्तिःपुत्रलाभंचविंदति धनधान्यसमृद्धिःस्याद्गृहेकल्याणसंपत्तिः ६५ क्षेमारोग्यमहैश्वर्यंराजपूज्यंमहत्सुखम् व्यवसायात्फलाधिक्यंविदेशेराजदर्शनम् ६६ दायेशात्षष्ठरिष्फेवाव्ययेवापापसंयुते

देहपीडामनस्तापकार्यहानिर्महद्भयम् ६७ शिरोरोगज्वरादिश्चअतीसारमथापिवा द्वितीयद्यूननाथेतुसार्पज्वरविषाद्भयम् ६८ सुतपीडाकरंचैवशांतिकुर्याद्यथाविधि देहारोग्यंमकुरुतेधनधान्यसमृद्धिदम् ६९

## अथ चन्द्रभुक्तिमास ७ तस्यफलम्

कुजस्थानगतेचन्द्रेस्वोच्चेस्वक्षेत्रकेन्द्रगे भाग्यवाहनकर्मेशलग्नाधिपसमन्विते ७० करोतिविपुलराज्यंगंधमाल्यांबरादिकम् तडागगोपुरादीनांपुण्यधर्मादिसंग्रहम् ७१ विवाहोत्सवकर्माणिदारपुत्रादिसौख्यकृत् पितृमातृसुखावाप्तिंगृहेलक्ष्मीकटाक्षकृत् ७२ महाराजप्रसादेनइष्टसिद्धिसुखादिकम् पूर्णेचन्द्रेपूर्णफलंक्षीणेस्वल्पफलंभवेत् ७३ नीचारिस्थेष्टमेषष्ठेदायेशाद्रिपुरन्ध्रके मरणदारपुत्राणांकष्टंभूपतिनाशनम् ७४ पशुधान्यंक्षयंचैवचोरादिरणभीतिकृत् द्वितीयद्यूननाथेतुअपमृत्युर्भविष्यति ७५ देहजाड्यामनोदुःखंदुर्गालक्ष्मीजपंचरेत् श्वेतांगांमहिषींदद्याद्दानेनारोग्यमादिशेत् ७६ इतिश्रीबृहत्पाराशरहोरापूर्वखंडसारांशेभौममहादशायान्तरफलकथनंनामएकोनचत्वारिंशोध्यायः ३९

---

## अथराहुभुक्तिमास ३२ दिन १२ तस्यफलम्

कुलीरेवृश्चिकेचैवकन्यायांचापगेपिवा तद्भुक्तौराजसन्मानंवस्त्रवाहनभूषणम् १ व्यवसायात्फलाधिक्यंचतुष्पाज्जीवलाभकृत् प्रयाणंपश्चिमेभागेवाहनांबरलाभकृत् २ ल-

आद्युपचयेराहोशुभदृष्टिसुतेक्षिते मित्रांशेतुंगलाभेशेयोगका
रकसंयुते ३ राजलाभंमहोत्साहंराजप्रीतिशुभावहम् गृ
हेकल्याणसंपत्तिदारपुत्रादिवर्द्धनम् ४ षष्ठाष्टमेव्ययेराहोपाप
युक्तेथवीक्षिते चौरादिव्रणपीडाचसर्वत्रजनपीडनम् ५ रा-
जद्वारेजनद्वेषइष्टबंधुविनाशनम् दारपुत्रादिपीडाचसर्वत्रजन
पीडनम् ६ द्वितीयद्यूननाथेतुसप्तमस्थानमाश्रितः तदारोगं
महाकष्टंशांतिंकुर्याद्यथाविधि आरोग्यंसंपदंचैवभविष्यतिनसंश
यः ७

## अथगुरुभुक्तिमास२८दिन२४तस्यफलमाह.

राहोरंतर्गतेजीवेलग्नात्केंद्रत्रिकोणगे स्वोच्चेस्वक्षेत्रगेवापि
तुंगेस्वांशेवर्गेपिवा ८ स्थानलाभंमनोधैर्यंशत्रुनाशंमहत्सुख
म् राजप्रीतिकरंसौख्यंमहतीवसुमश्नुते ९ दिनेदिनेवृद्धि
मेतेसितपक्षेशशीयथा वाहनादिधनंभूरिगृहेगोधनसंकुलम्
१० नैर्ऋत्याःपश्चिमेभागेप्रयाणंराजदर्शनम् युक्तकार्यार्थ
सिद्धिःस्यात्स्वदेशेपुनरेष्यति ११ उपकार्याब्राह्मणानांतीर्थ
यात्रादिकर्मणाम् वाहनंग्रामलाभंचदेवब्राह्मणपूजनम् १२
पुत्रोत्सवादिसंतोषंनित्यमिष्टान्नभोजनम् नीचेवास्तंगतेवा
पिषष्ठाष्टव्ययराशिगे १३ शत्रुक्षेत्रेपापयुक्तेधनहानिर्भवि
ष्यति कर्मविघ्नोमनोहानिःसपतिघ्नाभविष्यति १४ कलत्र
पुत्रपीडांचहृद्रोगंराजकार्यकृत् दायेशात्केंद्रकोणेवालाभे
वाधनगेपिवा १५ दुश्चिक्येवलसंपूर्णेगृहक्षेत्रादिवृद्धिकृत्
भोजनांबरपश्वादिदानधर्मजपादिकम् १६ भुक्त्यन्तेराजको
पाच्चद्विमासंदेहपीडनम् ज्येष्ठभ्रातृविनाशंचभ्रातृपित्रादिपी-

डनम् १७ दायेशात्षष्ठरन्ध्रेवारिःफेवापापसंयुते तद्भुक्तौ धनहानिःस्याद्देहपीडाभविष्यति १८ द्वितीयद्यूननाथेवाह्यप मृत्युर्भविष्यति स्वर्णस्यप्रतिमादानंशिवपूजांचकारयेत् १९. देहारोग्यंप्रकुरुतेशांतिंकुर्याद्विचक्षणः २०

## अथ शनिभुक्तिमास ३४ दिन ६ तस्यफलम्.

राहोरंतर्गतेमन्देलग्नात्केन्द्रत्रिकोणगे स्वोच्चेमूलत्रिकोणेवा दुश्चिक्येलाभराशिगे २१ तद्भुक्तिवाहनंसेवाराजप्रीतिकरंशुभम् विवाहोत्सवकार्याणिकृत्वापुण्यानिभूरिशः २२ आराम करणेयुक्तंतडागंकारयिष्यति शूद्रप्रभुवशादिष्टंलाभंगोध नसंग्रहम् २३ प्रयाणेपश्चिमेभागेप्रभुमूलाद्धनक्षयः दे-हायासफलास्यंवास्वदेशेपुनरेष्यति २४ नीचारिस्थेत्रगेमंदे रन्ध्रेवाव्ययगेपिवा नीचारोराजभीतिश्चदारपुत्रादिपीडनम् २५ आत्मबन्धुमनस्तापंदायादिजनविद्धवम् व्यवहारंचक लहंमकस्माद्भूषणंभवेत् २६ दायेशात्षष्ठरिःफेवाचंद्रेवापा पसंयुते हृद्रोगंमनहानिश्चविवाहेशत्रुपीडनम् २७ अन्यदे शादिसारंचगुल्मवद्याधिभाग्भवेत् कुभोजनंकोद्रवादिजा निदुःस्वाङ्गयंभवेत् २८ द्वितीयद्यूननाथेतुस्वयंमृत्युर्भविष्यति कृष्णांगांमहिषींदद्याद्दानेनारोग्यमादिशेत् २९

## अथबुधभुक्तिमास ३० दिन १८ तस्यफलम्

राहोरन्तर्गतेसौम्येभाग्येवास्वर्क्षगेपिवा तुंगेवाकेंद्रराशिस्थेपुत्रे वावत्लगेपिवा ३० राजयोगंप्रकुरुतेगृहेकल्याणवर्द्धनम् व्यापारेणधनप्राप्तिर्विद्यावाहनमुत्तमम् ३१ विवाहोत्सव-

कार्याणिचतुष्पाज्जीवलाभकृत् सौम्यमासेमहत्सौख्यंस्व वारेराजदर्शनम् ३१ सुगंधपुष्पशय्यादिस्त्रीसौख्यंचाति शोभनम् महाराजप्रसादेनधनलाभोमहद्यशः ३२ दायेशा त्केंद्रलाभेवाद्युश्चिक्येभाग्यकर्मगे देहारोग्यंमहोत्साहंमि ष्टसिद्धिसुखावहम् ३३ पुण्यश्लोकादिकीर्तिश्चपुराणश्रव णादिकम् विवाहयज्ञदीक्षाचदानधर्मदयादिकम् ३४ षष्ठा ष्टमव्ययेसौम्येमन्देराशियुतेक्षिते दायेशात्षष्ठरिःफेवार- न्ध्रेवापापसंयुते ३५ देवब्राह्मणनिंदाचभोगभाग्यविहीनभाक् सत्यहीनश्चदुर्बुद्धिश्चौरोहिनृपपीडनम् ३६ अकस्मात्कलहं चैवगुरुपुत्रादिनाशनम् अर्थव्ययंराजकोपंदारपुत्रादिपीडनम् ३७ द्वितीयद्यूननाथेवाह्यपमृत्युस्तथाश्रियं तद्दोषपरिहारार्थं विष्णुसाहस्रकंजपेत् स्वगृह्योक्तविधानेनशांतिंकुर्याद्विचक्षणः ३८

## अथ केतुभुक्तिमास १२ दिन १८ तस्यफलम्.

राहोरंतर्गतेकेतौभ्रमणंराजविग्रहनम् वातज्वरादिरोगश्चचतु ष्पाज्जीवहानिकृत् ३९ अष्टमाधिपसंयुक्तेदेहजाड्यंमनोरु जम् शुभयुक्तेशुभेदृष्टेदेहसौख्यंधनागमम् राजसन्मानभू- षाप्तिगृहेशुभकरंभवेत् ४० लग्नाधिपेनसंबंधेइष्टसिद्धिसु- खावहम् लग्नाधिपसमायुक्तेलाभंवाभवतिध्रुवम् ४१ चतु ष्पाज्जीवलाभस्स्यात्केंद्रेवाथत्रिकोणगे रन्ध्रस्थानगतेकेतौ व्ययेवाबलवर्जिते ४२ तद्भुक्तौबहुरोगंस्याच्चौराहिव्रणपीड नम् पितृमातृवियोगश्चभ्रातृद्वेषंमनोरुजम् ४३ स्वप्र- भोश्चमहत्कष्टंचैवपश्यंमनर्हिंसकाम् द्वितीयद्यूननाथेतुदेहबा धाभविष्यति ४४ तद्दोषपरिहारार्थंछागदानंचकारयेत् ४५

## अथ शुक्रभुक्तिमास ३६ तस्यफलं

राहोरंतर्गतेशुक्रेलग्नात्केन्द्रत्रिकोणगे लाभेवाबलसंयुक्ते योगमाबल्यमादिशेत् ४६ विप्रमूलाधनप्राप्तिर्गोमहिष्यादिलाभकृत् पुत्रोत्सवादिसंतोषंगृहेकल्याणसंभ्रमम् ४७ सन्मानंराजसन्मानंराज्यलाभंमहत्सुखम् स्वोच्चेवास्वर्क्षगेवापितुंगांशोस्वांशगेपिवा ४८ नूतनगृहनिर्माणंनित्यमिष्टान्नभोजनम् कलत्रपुत्रविभवंमित्रसंयुक्तभोजनम् ४९ अन्नदानमियंनित्यंदानधर्मादिसंग्रहम् महाराजप्रसादेनवाहनांबरभूषणम् ५० व्यवसायात्फलाधिक्यंविवाहोमौंजिबन्धनम् पष्ठाष्टमव्ययेशुक्रेनीचेशत्रुग्रहेस्थिते ५१ मंदारफणिसंयुक्ते तद्भुक्तौरोगमादिशेत् अकस्मात्कलहंचैवपितृपुत्रवियोगकृत् ५२ स्वबन्धुजनहानिश्चसर्वत्रजनपीडनम् दायादिकलहंचैवस्वप्रभोस्वयमृत्युकृत् ५३ कलत्रपुत्रपीडाचशूलरोगादिसंभवम् दायेशात्केन्द्रराशिस्थेत्रिकोणेवासमन्विते ५४ लाभेवाधर्मराशिस्थेक्षेत्रपालमहत्सुखम् सुगंधवस्त्रशय्यादिगानविद्यापरिश्रमम् ५५ छत्रचामरवाद्यादिगंधपद्मसमन्वितम् दायेशाद्रिपुरन्ध्रस्थेव्ययेवापापसंयुते ५६ विपाहिनृपचौरादिमूत्रकृच्छ्रान्महद्भयम् प्रमेहाद्रुधिरंरोगंकुत्सितान्नशिरोरुजम् ५७ काराग्रहप्रवेशंचराजदंडधनक्षयम् द्वितीयद्यूननाथेवादारपुत्रादिनाशनम् ५८ आत्मपीडाभयंचैवह्यपमृत्युस्तथाभवेत् दुर्गालक्ष्मीजपंकुर्यान्मृत्युनाशंकरोभवेत् ५९

## अथ रविभुक्तिमास १० दिन २४ तस्यफलम्.

राहोरंतर्गतेसूर्येस्वोच्चेस्वक्षेत्रकेंद्रगे त्रिकोणेलाभगेवापितुं गांशेस्वांशगेपिवा ६० शुभगृहेणसंदृष्टेराजप्रीतिकरंशुभ म् धनधान्यसमृद्धिश्चअल्पसौख्यंसुखावहम् ६१ अ ल्पग्रामाधिपत्यंचस्वल्पलाभंभविष्यति भाग्यलग्नेशसंयु क्तेकर्मेशेननिरीक्षिते ६२ राजाश्रयमहत्कीर्तिविदेशेवहनं महत् देशाधिपत्ययोगंचगजाश्वांबरभूषणम् ६३ मनो भीष्टप्रदानंचपुत्रकल्याणसंभवम् दायेशाद्रिष्फरन्ध्रस्थेषष्ठे वानीचगेपिवा ६४ ज्वरातिसाररोगश्चकलहंराजविद्विषम् प्रयाणंशत्रुवृद्धिश्चनृपचोराग्निपीडनम् ६५ दायेशात्केंद्र कोणेवादुश्चिक्येलाभगेपिवा विदेशराजसन्मानंकल्याणं चशुभावहम् ६६ द्वितीयद्यूननाथेतुमहारोगंभविष्यति सूर्यप्रमाणशांतिंचकुर्यादारोग्यसंभवम् ६७

## अथ चंद्रभुक्तिमास १८ तस्यफलं

राहोरंतर्गतेचन्द्रेस्वक्षेत्रेस्वोच्चगेपिवा केन्द्रत्रिकोणलाभेवा मित्रर्क्षेक्रूरसंयुते ६८ राज्यलंराजपूज्यंचधनार्थधनलाभ कृत् आरोग्यभूषणंचैवमित्रस्त्रीपुत्रसंपदा ६९ पूर्णचंद्रे पूर्णफलंराजप्रीतिशुभावहम् अश्ववाहनलाभःस्याद्गृह क्षेत्रादिवृद्धिकृत् ७० दायेशात्सुखभाग्यस्थेकेन्द्रेवालाभगे पिवा लक्ष्मीकटाक्षचिह्नानिगृहेकल्याणसंभवम् ७१ यद्यत्कार्यार्थसिद्धिःस्याद्धनधान्यसुखावहम् सत्कीर्तिला भसन्मानंदेवीराधनमाहरेत् ७२ दायेशात्षष्ठरन्ध्रस्थेव्य

येवाबलसंयुते पिशाचक्षुद्रव्याघ्रादिग्रहक्षेत्रार्थनाशनम् ७३ मार्गेचौरभयंचैवव्रणाधिक्यमहोदरम् द्वितीयद्यूननाथेतुह्यप मृत्युर्यदाभवेत् ७४ श्वेतांगांमहिषींदद्याद्दानमारोग्यमाहरेत् ७५

## अथ कुजभुक्तिमास १२ दिन १८ तस्यफलं.

राहोरंतर्गतेभौमेलग्नाल्लाभत्रिकोणगे केंद्रेवाशुभसंयुक्ते स्वोच्चेस्वक्षेत्रगेपिवा ७६ नष्टराज्यंधनमाप्तिगृहक्षेत्रादिवृद्धिकृत् इष्टदेवप्रसादेनसंतानसुखभोजनम् ७७ क्षिप्रभोज्यमहत्सौख्यंभूषणाम्बरादिकृत् दायेशात्केंद्रकोणेवादुश्चिक्येलाभगेपिवा ७८ रक्तवस्त्रादिलाभः स्यात्प्रयाणंराजदर्शनम् पुत्रवर्गेषुकल्याणंस्वप्रभोश्चमहत्सुखम् ७९ सेनापत्यंमहोत्साहंभ्रातृवर्गधनागमम् दायेशाद्व्ययरिःफेवाषष्ठेपापसमन्विते ८० पुत्रदारादिहानिश्चसोदराणांचपीडनम् स्थानभ्रंशंबंधुवर्गदारापुत्रविरोधनम् ८१ नीराहिव्रणभीतिश्चसोदराणांचपीडनम् आदौक्लेशकरंचैवमध्यान्तेसौख्यमाप्नुयात् ८२ द्वितीयद्यूननाथेतुदेहालस्यंमहद्भयम् अनड्वाहंचगांदद्यादारोग्यंचभविष्यति ८३ इति श्रीबृह० हो० पूर्वखंड सा० राहोरंतर्दशाफलकथननामचत्वारिंशोऽध्यायः समाप्तः ४०

## अथगुरुदशायांगुरुभुक्तिमास २५ दिन १८ फलम्

स्वोच्चेस्वक्षेत्रगेजीवेलग्नात्केन्द्रत्रिकोणगे अनेकराजाधीशश्चसंपन्नोराजपूजितः १ गोमहिष्यादिलाभश्चवस्त्रवाहनभूषणम् नूतनगृहनिर्माणंहर्म्यप्राकारसंयुतम् २ गजांते

भावानांचग्रहाणांचबलान्येवंविदुर्बुधाः अंकाग्न
योंऽगरामाश्चखाग्निःकरजलाकराः ३९ नवाग्न
यःसुराः खाग्निर्दशसंगुणिताःक्रमात् रव्यादयः
सुबलिनोराशीनांस्वामिनोवशात् ४० अधिकं
पूर्णमेवंस्याद्बलंचेद्बलिनोमताः ॥

॥ टीका ॥

आरब्धं बलप्रकरणमुपसंहरति ॥ भावानामित्यर्धेन ॥ भावानां तन्वादिद्वादशानां ग्रहाणां रव्यादिसप्तानांच एवं पूर्वोक्त रीत्या कथितानि बलानि बुधाः विदुरिति ॥ अथ ग्रहाणांभावानांच उक्त षड्बलैक्ये तेषांतु बलख पूर्णबल वत्त्वनियनसंख्यां परिगणयति ॥ अंके स्यादिसार्धचत्वारिंशच्छ्लोकपर्यंतं ॥ तत्रसूर्यस्य अंकाग्नयः ३९ दशसंगुणिताः ३९० षष्टिभाजिताः ६।३० एतावत्संख्यापर्यंतं षड्बलैक्यं सुबली भवति अतोऽधिके रविः पूर्णबलीज्ञेयः अर्थात् अतोऽल्पेकेवलंबलीएव एवमग्रे सर्वत्र तदित्थं चंद्रस्य अंगरामाः ३६ दशसंगुणिताः ३६० षष्टिभाजिताः ६।० एतत्पर्यंतंसुबली अतोऽधिकंचंद्रः पूर्णबली ज्ञेयः तथा भौमस्यअंकाः खाग्नयः ३० दशसंगुणिताः ३०० षष्टिभाजिताः ५।० एतत्पर्यंतंसुबली अतोऽधिकंभौमः पूर्णबली एवं बुधस्य करजलाकराः ४२ गुरोः नवाग्नयः ३९ शुक्रस्यसुराः ३३ शनेः खाग्नयः ३० एतेदशसंगुणिताः प्राग्वत्षष्टिभाजिताः ७।६।०।० एतावंतो बुधादीनामंकाभवंति तत्तदंकसंख्यापर्यंतं बुधादयः ०।३०।३०।० तत्तदधिकं पूर्णबलिनः एवंक्रमाद्रव्यादयः सुबलिनःअर्थादतोन्यूनेबलिनएवपूर्णव-

॥ भाषा ॥

॥ भावानामित्यर्धेन अंकेत्यादिसाढेचत्वारिंशच्छ्लोकपर्यंतत्त ॥ अब ग्रहोका औरभावोंका सुबलत्वादि भेद कहते हैं ॥ सूर्यादि ग्रहोके ध्रुवांकोकूं दश गुणित करके साठ

अथग्रहाणांभावानांचबलसुबलपूर्णबलखज्ञापकनियनाङ्कचक्रमिदम्.

| रवेः | चंद्रस्य | भौमस्य | बुधस्य | गुरोः | शुक्रस्य | शने | ग्रहाणाम् |
|---|---|---|---|---|---|---|---|
| अंकाग्न. | अंगरामा | खाग्नयः | करजलाः | नगाग्नयः | सुराः | खाग्नयः | षड्बलैक्ये |
| ३१ \| ६<br>३९० \| ३० | २६ \| ६<br>३६० \| ० | ३० \| ५<br>३०० \| ० | ४२ \| ७<br>४२० \| ० | ३९ \| ६<br>३९० \| ३० | ३३ \| ५<br>३३० \| ३० | ३० \| ५<br>३०० \| ० | सुबलपूर्ण-<br>बलाङ्काः |
| भू.ष.द. | त्र्यग्निचं. | षण्णव. | भू.ष.द | भू.ष.द. | त्र्यग्निच | षण्णव. | स्थानबले |
| १६६<br>२<br>४५ | १३३<br>२<br>१२ | ९६<br>१<br>३६ | १६६<br>२<br>४५ | १६६<br>२<br>४५ | १३३<br>२<br>१२ | ९६<br>१<br>३६ | सुबलपूर्ण<br>बलांकाः |
| पंचाग्न. | खेषवः | त्रिंशत् | पंचाग्नय | पंचाग्न. | खेषवः | त्रिंशत् | दिग्बले |
| ०<br>३५ | ०<br>५० | ०<br>३० | ०<br>३५ | ०<br>३५ | ०<br>५० | ०<br>३० | सुबलत्वादि<br>द्योतकांकाः |
| खभूता. | खाग्न. | खवेदाः | खभूता. | खभूता. | खाग्नयः | खवेदाः | चेष्टाबले |
| ०<br>५० | ०<br>३० | ०<br>४० | ०<br>५० | ०<br>५० | ०<br>३० | ०<br>४० | सुबलत्वादि<br>द्योतकांकाः |
| क.भू.सु. | शतं | सप्तांगाः | करभूसु | क.भू.सु | शतम्. | सप्तांगाः | कालबले |
| ११२<br>१<br>५२ | १००<br>१<br>४० | ६७<br>१<br>७ | ११२<br>१<br>५२ | ११२<br>१<br>५२ | १००<br>१<br>४० | ६७<br>१<br>७ | सुबलत्वादि<br>द्योतकांकाः |
| खाग्नयः | चत्वारिंशत् | नखाः | खाग्नयः | खाग्नयः | चत्वारिंशत् | नखाः | अयनबले |
| ०<br>३० | ०<br>४० | ०<br>२० | ०<br>३० | ०<br>३० | ०<br>४० | ०<br>२० | सुबलत्वादि<br>द्योतकांकाः |
| ६<br>३२ | ५<br>५३ | ४<br>१३ | ६<br>३२ | ६<br>३२ | ५<br>५३ | ४<br>१३ | पंचबलसंहतिः |

सिनेन्द्वो रूयग्निचन्द्राश्वरवेषवः खाग्नयः शतम्
चत्वारिंशात्क्रमाद्भौममन्दयोः षण्णवक्रमात्
४३ त्रिंशत्खवेदाः सप्तांगानरवाश्वबलिनोविदुः

॥ टीका ॥

कालवले सुवलत्वं अतोऽधिके पूर्णवलत्वं तेषां खाग्नयः ३० अयन वले सुवलत्वं अतो धिके पूर्णवलत्वं एवं सितेन्द्वोः शुक्रचंद्रयोः स्थानवले त्र्यग्निचंद्राः १३३ षष्टिभाजिते २।१३ दिग्वले खेषवः ५० चेष्टावले खाग्नयः ३० कालवले शतं १०० षष्टिभक्ते १।४० अयनवले चत्वारिंशत् ४० क्रमात् सुवलत्वं पूर्णवलत्वंज्ञेयं एवंच भौममंदयोः कुजशन्योः स्थानवले षण्णव ९६ षष्टिभक्त्या १।३६ दिग्वलेत्रिंशत ३० चेष्टावले खवेदाः ४० कालवले सप्तांगाः ६७ षष्टिभक्ते १।७ अयनवले नरवाः २० एतत्संख्यायां सुवलत्वं अधिके पूर्णत्वं अर्थात् उक्त संख्यान्यूनत्वे वलवत्त्वमेवेति ननु अत्र षड्वलेस्वांकनियमे पंचवलानामेव भिन्नतया संख्योक्त षष्ठस्य दृग्वलस्य नियतसंख्याकुतोनोक्तावेतिचेत्तस्य स्थानविशेषोपलब्ध्याऽनियतत्वा दृणधनसाधनीभूतत्वाच्चेतिज्ञातव्यम् ॥ ४१ ॥ ४२ ॥ ४३ ॥
अथास्य सुगमतया परिज्ञानाय नियतांकचक्रमग्रे लिख्यते ॥

॥ भाषा ॥

है. उसकूं साठसें भाग लिया तो फल लब्ध २ शेष ४५ ऐसा २।४५ स्थानवलमें सुवलत्व जानना. इस अंकसें ज्यादा होवे तो पूर्णवल जानना. वैसा दिग्वलमें इनोंका मुख्य अंक ३५ है. साठसे भाग लिया तो लब्ध० शेष ३५ दिग्वलमें सुवलत्व जानना. इससें अधिक होवे तो पूर्ण वली जानना. ऐसा आगे सब वलमें जानना. इसका स्पष्टचक्र आगे लिखाया है. ॥ ४१॥ ४२ ॥ ४३॥

देवविद्देशिकोदेवसंमतोदेशकालवित् ऊहापोहपटुः प्राज्ञः पटुः स्वजनसंमतः ४७ इतिश्रीबृहत्पाराशरहोरायामुत्तरभागे भावषड्बलादिवर्णने द्वितीयोऽध्यायः २ ॥श्रीगणेशार्पणमस्तु ॥ ७॥

॥ टीका ॥

शब्दग्रहेणदुरूढार्थग्रहप्रसंगदोषापाकरणस्यशाब्दिकाशक्त्यादित्यर्थः बुद्धिमान् बुद्धिरस्यास्तीतिसतथा नकेवलं अधीतशास्त्रोपि जडधीरितितत्तात्पर्यम् एतादृशसाहित्यवान्सन् होरास्कंधश्रवणसम्मतः होरास्कन्धः होराशास्त्रसमूहः तस्य श्रवणं तद्विषये संमतः संमान्यः देववित् दैवंवेत्तीतितथा देशिकः शिक्षणसमर्थः देवसंमतः देवाः संमता यस्य देवताराधकइत्यर्थः देशकालवित् देशकालज्ञः होराशास्त्रीयफले देशकालतारतम्येन विचारशीलइत्यर्थःऊहापोहपटुः ऊहः तर्कः अपोहः समाधानं तयोः पटुः कुशलः प्राज्ञः प्रकर्षेण उक्तार्थेष्वपिविशेषतया जानातीति तथा विशेषकल्पकइत्यर्थः पटुः सर्वप्रकारेण कुशलः स्वजनसम्मतः स्वजनाविरोधी एतादृशःपुरुषः एतच्छास्त्रेऽधिकारी भवतीति ॥४६॥४७॥ एवंपराशरोक्तेस्मिन्द्वितीयेऽध्यायकेमया यथामतिकृताटीकागणेशायार्पितास्तुसा ॥ १॥ इतिश्रीमद्बृहत्पराशरहोराशास्त्रेश्रीमद्भ्यङ्कन्वयवेदशास्त्राध्ययनवद्यविद्याविद्योतितदिग्मंडलजटाशंकरसूनुज्योतिर्विच्छ्रीधरेणविरचितायांसुबोधिनीटीकायां द्वितीयोऽध्यायः ॥ २॥ ॥ ७ ॥

॥ भाषा ॥

यामें कुशल व्याकरणमें निपुण न्यायकूं जाननेवाला बुद्धिमान् साहित्यशास्त्रमे कुशल देवताराधननित्यकरनेवाला. देशकालकूं जाननेवाला तर्क समाधान करनेकूं समर्थ स्वजनसे मित्रपी रहनेवाला ऐसा दैवज्ञपुरुष इसशास्त्र पढनेकूं और फलादेश कहनेकूं समर्थ होवेगा ॥४६॥४७॥ इ॰ बृ॰ प॰ होरायां श्रीधरकृतभाषाटीकायां द्वितीयोऽध्यायः ॥ २ ॥ ७ ॥

भावस्थानग्रहैः प्रोक्तयोगेयेयोगहेतवः ४४
तेषांवलीयः कर्तासौसएवास्यफलप्रदः योगेष्वासे-
षुवहुषुन्यायएवंप्रकीर्तितः ४५ गणितेषुप्रवीण
श्चशब्दशास्त्रेकृतश्रमः न्यायविद्बुद्धिमान्होरा
स्कन्धश्रवणसम्मतः ४६

॥ टीका ॥

अथ प्रासेषुबहुषुयोगहेतुषु विशेषयोगकर्तृतया फलप्रदज्ञानमाह ॥ भावस्थानेत्यादिपंचचत्वारिंशच्छ्लोकपर्यन्तम् ॥ भावस्थानग्रहैः भावाः तन्वादयः स्थानानि स्वक्षेत्रोच्चत्रिकोणादीनि तेषुवर्तमानाः ये ग्रहास्तैः साधनीभूतैरित्यर्थः प्रोक्तयोगेकथितफलविषये येग्रहाः योगहेतवः फलहेतुभूताः बहवइत्यध्याहारः तेषांमध्ये यः बली षड्बलाधिक्यवान् सएव असौग्रहः अस्यउक्तयोगस्य कर्तासंपादकः अतः सएवास्य योगस्यफलप्रदोज्ञेयइति इतिषड्बले विशिष्टफलदत्वंध्वनितम् एवंबहुषु योगेषुआसेषुप्रासेषु एवमुक्तप्रकारकन्यायः प्रकीर्तितइत्यन्वयः ॥४४॥ ॥४५॥ अथ एतच्छास्त्राधिकारिलक्षणमाह ॥ गणितेष्वित्यादियावदध्यायसमाप्ति ॥ गणितेषुगणितविषयेषु प्रवीणः कुशलः चपरं शब्दशास्त्रे व्याकरणशास्त्रे कृतश्रमः कृतः श्रमो दृढाभ्यासोयेनसः चपरं न्यायवित् न्यायशास्त्रंवेत्तीति सतथा नकेवलं शाब्दिकएव शब्दव्युत्पत्त्याकेवलं

॥ भाषा॥

॥ भावस्थानेत्यादिपंचचत्वारिंशच्छ्लोकपर्यंतम् ॥ अब अनेक बली ग्रहोंमे मुख्ययोगफल देनेवाला कोनहै उसका लक्षण कहतेहै. पहिले स्वक्षेत्रमूलत्रिकोणआदिकके होयके तनुधनादिक स्थानोंमें बैठे जो ग्रह उसमेंसें जो ग्रह षड्बलमें अधिक बलवान् होवे वो वक्ष्यमाणयोगफलकूं देनेवाला जानना ॥ ४४ ॥ ४५ ॥ गणितेत्यादियावदध्यायसमाप्ति ॥ अब इसका फल कहनेकूं कोन योग्यहै, सो कहतेहै. गणितवि-

सायनांशार्केंदुस्त्र्यसत्रिभोभानुवर्जितः चेष्टाकेन्द्रं कुजादीनांपूर्वाध्यायेसमीरितं २ उच्चरश्मिवदानीय चेष्टारश्मिंद्वयोर्युतेः दलंतुशुभरश्मिः स्यादष्टभ्यो वर्जितोऽशुभः ३

## ॥ टीका ॥

अथ शुभाशुभरश्म्यानयनार्थमादौचेष्टारश्मीन्कथयंस्तत्साधनंचेष्टाकेंद्रमाह ॥ सायनेत्येकश्लोकेन ॥ सायनांशार्कः अयनांशैः सहितः सायनांशः सचासावर्कः रविः इंदुः निरयनएवचंद्रश्च चकारः क्रमद्योतनायज्ञेयः सत्रिभः त्रीणिचतानिभानि राशयश्चत्रिभानि तैःसहितः सत्रिभः भानुवर्जितः भानुना रविणा वर्जितःहीनश्च क्रमात् सूर्यकेन्द्रं चंद्रकेंद्रंच भवति कुजादीनां भौमादिपंचग्रहाणांतु पूर्वाध्याये मध्यमस्फुटरव्यादिभिः समीरितं स्पष्टीकृतंबोध्यमिति ॥२॥ अथचेष्टारश्मींञ्छुभाशुभरश्मींश्चाह ॥ उच्चेति ॥ चेष्टारश्मिंतु उच्चरश्मिवदेव प्रागुक्तरीत्या भार्धाधिके चक्राद्विशोधयेत्

## ॥ भाषा ॥

| अथ शुभरश्मिचक्र | | | | | | | | अथाशुभचक्रमिदम् | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| सू | चं | मं | बु | गु | शु | श | यो | सू | चं | मं | बु | गु | शु | श | यो |
| ३<br>५०<br>२५ | २<br>२१<br>१४ | ४<br>५<br>१६ | २<br>५६<br>२३ | ४<br>२४<br>२८ | ५<br>१४<br>५१ | ५<br>१८<br>५८ | ३८<br>४१<br>३५ | ८<br>९<br>३१ | ५<br>२८<br>४६ | ३<br>५४<br>४४ | ५<br>३<br>३० | ३<br>३५<br>३२ | २<br>२५<br>९ | ०<br>५१<br>२ | २६<br>१८<br>२१ |

| अथचेष्टारश्मिचक्र | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू | चं | मं | बु | गु | शु | श | यो |
| २<br>५३<br>३० | २<br>१०<br>३० | ३<br>८<br>४० | २<br>३२<br>५४ | ६<br>२७<br>२८ | ४<br>४९<br>१४ | ५<br>१४<br>३० | २८<br>२३<br>०६ |

॥ सायनेत्येकश्लोकेन ॥ अब चेष्टारश्मी कहतहे सूर्यकू सायन करके उसमें तीन राशी जोडके जो राश्यादि अंक भये उसकू सूर्यकेंद्र कहना और चंद्रमा सूर्यकू हीन किया तो चंद्रकेंद्र भया भौमादिक पाच ग्रहाका चेष्टाकेंद्र द्वितीयाध्यायमे पहिले स्पष्टगतिमें बनायाहे ॥ २ ॥ उच्चेति ॥ अब चेष्टारश्मि, शुभरश्मि और अशुभरश्मि उसके आणेकी रीति कहतेहे चेष्टारश्मी तो उच्च

नीचोनंतुग्रहंभार्धाधिक्येचक्राद्विशोधयेत् उ-
च्चरश्मिर्भवेद्राशिः सैकोद्विघ्नांशसंयुतः १

॥ टीका ॥

उच्चरश्म्यादीष्टकष्टविचारमुपदिष्टवान् अध्यायेतुतृतीयेऽस्मिन्स्वशि-ष्यायर्षिराण्मुदा ॥१॥ अथ श्रीपराशरमहर्षिर्भगवानस्मिंस्तृतीयाध्याये इष्टकष्टविशदयन्नादौ नीचोनमित्येकेनोच्चरश्म्यानयनमाह ॥ नीचोनं नीचेन ऊनं हीनं तथोक्तं कृतमितिशेषः ग्रहं रव्याद्यन्यतमं भार्धाधिक्ये भानांद्वादशराशीनां अर्धं षण्मितं भार्धं तस्माद्राशिस्थानीयांकषट्संख्यायाः आधिक्यं अधिकस्यभावआधिक्यं विशेषत्वं तस्मिन्सति चक्राद्राशिसमूहात् द्वादशराशिभ्यइत्यर्थः विशोधयेत् अवशेषयेदित्यर्थः ततः राशिः राशिस्थानीयांकः सैकः एकसंख्यया सहितः द्विघ्नांशसंयुतः द्वाभ्यां हन्यंते गुण्यंते तेद्विघ्नाः तेचतेअंशाः लक्षणया अंशकलाविकलाः द्विघ्नांशाः तैः संयुतः राश्यंकइत्यर्थः उच्चरश्मिः भवेदिति अथोदाहरणम् ॥ सूर्यः १०।४।१४।० अस्यनीचं ६।१०।० अनेनहीनः सूर्यः ३।२४।१४ अयंराशौसैकः १ जातो राश्यंकः ४ ततः अवशिष्टाः अंशादयः २४।१४।० एतेद्विगुणिताः ४८।२८।० एतैर्युक्तोराशिः ४ जात उच्चरश्मिः सूर्यः ४।४८।२८।० एवं सर्वेषुग्रहेषु उच्चरश्मिसंस्कारोज्ञेयइति १

॥ भाषा ॥

॥ नीचोनमित्येकेनोच्चरश्म्यानयनमाह ॥ अब उच्च रश्मिका बल कहतेहैं. सूर्यादिक ग्रहमेसें अपना अपनानीच राशि अंशहीन करके शेष अकमे राशि छसे जादा होवे तो बाराने शुद्धकरके पीछे राशीके ठिकाने एक मिलाना अंश कला विकलाकूं दूगनी करके राशसे ऊपर चढाना. सो उच्चरश्मि आया ॥ १॥

| अथोच्चरश्मिचक्रम् | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू | चं | मं | बु | गु | शु | श | रा |
| ४ | २ | ५ | ३ | २ | ६ | ४ | १८ |
| ४८ | ४४ | १ | ८ | २१ | २० | २३ | ४१ |
| २८ | ५८ | ५२ | ५२ | १८ | २८ | २६ | १२ |

॥ ७ ॥

स्वोच्चेमूलत्रिकोणेचस्वर्क्षेऽधिसुहृदिक्रमात् मित्र-
र्क्षेसमर्क्षेचशत्रुभेचातिशत्रुभे ५

॥ टीका ॥

विभजेदित्यर्थः एवंकृते तत्फलमिष्टंस्यात् इष्टसंज्ञकंभवति तदिष्टं षष्टिभ्यो वर्जितं षष्टितोहीनं फलमवशेषरूपं अन्यत् इष्टेतरत् कष्टसंज्ञकमित्यर्थः स्यात् इष्टशब्देनशुभं कष्टशब्देन अशुभंज्ञेयमिति ॥ अथास्योदाहरणं॥ सूर्योच्चरश्मिः ४।४८।२८ व्येकः ३।४८।२८ अयंदशगुणितः ३०।४८०। २८० तथैवसूर्यचेष्टारश्मिः २।५२।३० व्येकः १।५२।३० दिग्घ्नतः १०।५२०। ३०० व्येकदिग्घ्नसूर्योच्चचेष्टारश्म्योर्योगः ४०।१०००।५८० अस्यदलं२० ।५००।२९० तत्षष्ट्यधिकत्वात् षष्ट्यंशोन्हृतंजातं २८।२४।५० एतदिष्टं ॥अथ कष्टोदाहरणं॥ इष्टं २८।२४।५० एतत्षष्टिवर्जितं ३१।३५।१० आ नयेनत्कष्टमिति ॥ ४ ॥ अथेष्टकष्टफलसमवर्गेषु स्वोच्चादिस्थानविशेषवर्त- मानतत्पतिवशाज्ज्ञेयमित्याह ॥ स्वोच्चइत्यादि सप्तमश्लोकपर्यंतं ॥ स्वो- च्चे स्वोच्चादिस्थानविचारो द्वितीयाऽध्यायेनवमश्लोकटीकायांविशदीकृतो बोध्यः स्वस्यउच्चं तस्मिन् ग्रहवर्तमानराशिवर्गपतिश्चेत् तदिष्टंफलंषष्टिः

॥ भाषा ॥

| अथ इष्टचक्रम्. | | | | | | | | अथ कष्टचक्रम्. | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| सू | च | म | बु | गु | शु | श | यो. | सू | च | म | बु | गु | शु | श | यो. |
| २८ | १५ | ३० | १९ | ३४ | ४५ | ४३ | २१६ | ३१ | ४४ | २९ | ४० | २५ | १४ | १६ | २०२ |
| ५४ | १२ | ५२ | २३ | ४ | ४८ | १९ | ५६ | ३५ | ४७ | ७ | ३६ | ५५ | ११ | ४० | ५३ |
| ५० | २० | ५० | ५० | ४० | ३० | ४० | ४० | १० | ४० | १० | ४० | १० | ३० | २० | १० |

जोडिके उसकूं अर्ध करना. सो इष्टबल जानना उसकू साठमें पांडे तो कष्टबल हुवा जानना. ॥ ४ ॥ स्वोच्चइत्यादि सप्तमश्लोक पर्यन्तं ॥ अब ग्रहइष्टकष्टबल कहते हैं. उच्च राशिका ग्रहका बल ६० मूल त्रिकोणका ४५ स्वराशिका ३० अधिमित्रका २२ मित्रक्षेत्रका १५ समराशिका ८ शत्रुराशीका ४ अतिशत्रुका २ नीचका० यह शुभका

उच्चचेष्टाकरौ व्यैकौ दिग्भिर्हत्वा नु योजयेत् दलयेदि-
ष्टमन्यत्स्यात्सप्तभ्यो वर्जितं फलम् ४

॥ टीका ॥

इत्यादिज्ञेयम् नात्रनीचोनमित्युक्तसंस्कारः आनीय संपाद्य तं चेष्टार-
श्मिं जानीयात् अथ शुभाशुभरश्मीनाह द्वयोर्युतेः द्वयोः चेष्टरश्म्युच्च-
रश्म्योः युतेः योगस्य दलमर्धं शुभरश्मिर्भवति सएव शुभरश्मिः अष्टभ्यो
वर्जितः अशुभरश्मिर्भवति ॥ अथ चेष्टारश्म्युदाहरणं॥ सूर्यः १०।४।१४ अ-
यनांशाः २२।१ एभिर्युक्तो जातः १०।२६।१५ अयं राशित्रयेण युक्तो जातः
१।२६।१५ जातमेतद्रविचेष्टाकेन्द्रं एतच्चेष्टाकेन्द्रं सैकं २।२६।१५ एतदंशक-
लाविकलाद्विगुणितं २।५२।३० जातोऽयं चेष्टारश्मिः अथ शुभरश्म्युदा-
हरणं॥ सूर्योच्चरश्मिः ४।४८।२८ सूर्यचेष्टारश्मिः २।५२।३० अनयोर्यो-
गः ७।४०।५८ अस्यार्धम् ३।५०।२९ जातोयं शुभरश्मिः ॥ अथाशुभ-
रश्म्युदाहरणम्॥ सूर्यः शुभरश्मिः ३।५०।२९ अयमष्टवर्जितः जातः ४।९
।३१ जातोयमशुभरश्मिरिति ॥ ३ ॥ अथकेवलं ग्रहाणां इष्टकष्टमाह ॥
उच्चेति ॥ उच्चचेष्टाकरौ उच्चं च चेष्टा च उच्चचेष्टे तेनतेकरौ रश्मीच तथोक्तं
"किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः भानुः करो मरीचिस्त्रीपुंसयोः
द्वंद्वांते श्रूयमाणपदस्य प्रत्येकमभिसंबन्धादेतदर्थलाभः उच्चरश्मिश्चेष्टा-
रश्मिश्चेत्यर्थः व्यैकौ विगतः एको याभ्यां तौ तथा दिग्भिः हत्वा दशभि-
र्गुणयित्वा नु योजयेत् मिश्रयेदित्यर्थः पुनः दलयेत् दलं कुर्यात् द्वाभ्यां

॥ भाषा ॥

रश्मि पहिले कहि है. उसरीतिसे लाना. चेष्टा रश्मी उच्चरश्मि इनदोनोंकूं मिश्रित करके
उसका अर्ध करना. ओ शुभ रश्मी होती है. उसकूं आठमें घटाया तो अशुभरश्मि
भई ॥ ३ ॥ उच्चेति ॥ अब इष्ट कष्ट कहतेहैं. उच्चरश्मीमें एक हीन करके उसकूं दश गु-
णित करना. और चेष्टारश्मीमेंभी एक हीन करके उसकूं दशगुणित करना. पीछे दोनोंकूं

॥ टीका ॥

सर्वैक्यजमिति स्पष्टमुक्तत्वात् अपिच प्रौढमनोरमाकारेण सोपपत्तिकं स्वगृहादिगतानां यद्ग्रहाणामुदितंबलं तदेव सप्तवर्गेपि तदीशस्य वशाद्भवेदिति श्रीधराचार्यादिवचनप्रमाणसहितंच प्रपंचितं तद्बोध्यं अत्रानावश्यकत्वाद्ग्रंथविस्तारभिया नप्रतिपादितं एतत्सर्वं फलं केवलं गृहवर्गजमेव बोध्यं नहोराद्रेष्काणादिवर्गजं होरादिवर्गेषुतु तदर्धमिति अन्यवर्गे होरादिरूपे तु तदर्धं तस्य स्वोच्चादिविहितपूर्वोक्तस्य अर्धं उक्तध्रुवांकार्धं शुभाशुभ इष्टकष्टसंज्ञकं फलं प्रोक्तं कथितमिति ननु अन्यशब्देन होरादिस्थानग्रहणे किंमानमितिचेत् श्रीपतिपद्धतौ तद्दलं भवति शेषवर्गजमिति अत्र शेषशब्देन गृहेतरहोरादिवर्गएवस्वीकृतः इष्टंगेहेतदूनैकमसदयदलं षड्सुकार्येतदैक्ये इति केशवदैवज्ञोक्तेः मनोरमादिटीकाप्रामाण्यात् युक्तियुक्तत्वात् शिष्टानुमतेश्चेदिति दिक् ॥ अथास्योदाहरणमाह ॥ सूर्यः १०।४।१४ शनिक्षेत्रगः गृहवर्गपतिःशनिः ९।८।११ स्वस्थानगः अतः तद्दल स्वक्षेत्रोक्तं ०।३०।० इष्टबलंप्राप्तंतत् षष्टिवर्जितमवशिष्टं ०।३०।० इति क्षेत्रजकष्टोदाहरणं ॥ अथ होरादिषट्कोदाहरणं ॥ सूर्यः १०।४।१४ रविहोरायांवर्तमानः अतो होरापती रविः शत्रुक्षेत्रस्थः तत्रत्यमिष्टं ०।४।० षष्ट्यूनं ०।५६।० एतन्मूलध्रुवांकतः प्राप्तमपि तदर्धंतुफलं प्रोक्तमन्यवर्गे इतिविशेषोक्तेः सामान्योक्तिप्राप्तेष्ट ०।२।० कष्टंतु ०।२८।० एतद्धोराबलोदाहरणम् ॥ अथ द्रेष्काणोदाहरणम् ॥ सूर्यः १०।४।१४ शनिद्रेष्काणस्थः अतस्तत्पतिःशनिः ९।८।११ स्वक्षेत्रगः अतः द्रेष्काणकष्टबलं मूलध्रुवांकतः प्राप्तं स्वक्षेत्रजं ०।३०।०षष्ट्यूनंकष्टंतु ०।३०।० अस्यार्धं ०।१५।० इष्टं षष्ट्यूनंकष्टं ०।१५।० एवंरीत्या होरादित्रिंशांशपर्यंतंध्रुवांकार्धं ज्ञेयम्

॥ भाषा ॥

द्रेष्काण सप्तांश नवमांश द्वादशांश त्रिंशांश इनकी राशियोंमें स्वोच्चादिक होवे तो

नीचेचपष्टिरिष्वब्धिःस्वाग्निः करकरास्तिथिः ना गावेदाः करोशून्यंशुभमेतत्फलंविदुः ६ षष्टिभ्यो वर्जिताश्चैतेशिष्टंस्यादशुभंफलम् तदर्धंतुफलंप्रो-क्तमन्यवर्गैशुभाऽशुभम् ७

॥ टीका ॥

६० कलापरिमितंज्ञेयं अयमुच्चध्रुवांकः ६० एतंपष्टिभ्यो ६० वर्जयित्वाशिष्टं ०।०।० अशुभंकष्टसंज्ञकंज्ञेयमितिसप्तमश्लोकपूर्वार्धेनान्वय इति अग्रिमेऽष्टध्रुवांकेषु कष्टावगमेषष्टिवर्जनावशेषोज्ञेयः यथा मूलत्रिकोणेवर्तमानराशिवर्गपतिश्चेत् तदिष्टं इष्वब्धिः ४५ कलात्मकं अयंध्रुवांकः एतंषष्टिभ्यो ६० वर्जयित्वा शेषं १५ कष्टं एवमेव स्ववर्गेवर्तमानराशिवर्गपतिश्चेत् तदिष्टध्रुवांकः स्वाग्निः ३० अस्मिन्षष्टिवर्जिते शेषं ३० कष्टं तथा अधिसुहृदि अधिमित्रक्षेत्रे ग्रहवर्तमानराशिवर्गपतिश्चेत्तदिष्टध्रुवांकः करकराः २२ एतत् षष्टिवर्जावशेषस्तु ३८ कष्टंज्ञेयं तथा मित्रर्क्षे मित्रक्षेत्रे ग्रहवर्तमानराशिवर्गपतिश्चेत् तदिष्टंतिथिः १५ अयंध्रुवांकः षष्टिवर्जितः कृतः शेषं ४५ कष्टं तथा समर्क्षे उदासीनक्षेत्रे ग्रहवर्तमानराशिपतिश्चेत्तदिष्टध्रुवांकः नागाः८ एतं ६० एषुवर्जयित्वा शेषं ५२ कष्टं तथा शत्रुभे शत्रुक्षेत्रे वर्गपतिश्चेत्तदिष्टध्रुवांकः वेदाः४ एतं ६० एषु वर्जयित्वा शेषं ५६ कष्टं तथा अतिशत्रुभे अतिशत्रुक्षेत्रे वर्गपतिश्चेत्तदा ध्रुवांकः २ षष्टिवर्जनावशेषं ५८ कष्टं नीचे नीचस्थितेवर्गपतौ तदिष्टध्रुवांकः शून्यं० षष्टिवर्जनावशेषः ६० एतत्कष्टं एवं उच्चादिस्थानस्थिततत्तद्वर्गपतिवशात् सप्तवर्गेष्टकष्टंज्ञेयम् ननुवर्गपतिवशादितिमूलेऽनुक्तत्वात् तत्तद्वर्गेष्टकष्टकथंकुतोनग्राह्यमितिचेन्न केशवदैवज्ञैः ग्रहाधिपवशात्स्वेष्टस्य

॥ भाषा ॥

उच्च कहा ग्रह बलके ध्रुवांकोंकू साठमें घटाये तो अशुभकष्टबल होताहै. और शेष

पंचस्विष्टफलंचादौपष्ठंसममुदाहृतम् अशुभास्तु
त्रयःप्रोक्ताइतिशास्त्रेपुनिश्चयः ८ दिग्बलंदिक्
फलंतस्यतथादिनफलंभवेत्

॥ टीका ॥

एवं स्वोच्चादिनीचांतनवस्थानवर्तमानवर्गपतितारतम्येननवविधंसर्ववर्गेष्ट-
फलमुक्तं तन्मध्ये शुभाशुभंविभजते ॥ पंचस्वित्येकेन ॥आदौपंचसु प्र-
थमोक्त स्वोच्चत्रिकोणस्वर्क्षाधिमित्रमित्रसंज्ञकेषु पंचसुस्थानेषु वर्तमानवर्ग-
पतेः प्राप्तमिष्टं इष्टफलं शुभफलकंज्ञेयम् ततउक्तसमसंज्ञकषष्ठस्थानग-
तवर्गपतेः इष्टं सममुदाहृतं तुल्यशुभाऽशुभफलकंज्ञेयम् ततउक्तास्त्रयः
शत्र्वधिशत्रुनीचसंज्ञकस्थानत्रयवर्तमाना इष्टप्रदवर्गपतयः अशुभाः दुष्ट-
फलसूचकाः प्रोक्ताः कथिताः अर्थात् शत्र्वधिशत्रुनीचस्थानत्रयवर्गप-
तिसमुद्भूतं इष्टंकष्टंच हे अपि अशुभफलेएव तेनतेषां ग्रहवर्गेरूपमितं
होरादिवर्गेषु तदर्थं संभावितं अशुभमेवेतितात्पर्यम् इति एवंप्रकारकः शा-
स्त्रेषु ज्योतिःशास्त्रेषु निश्चयः निर्णयइति ॥८॥ अथदिग्बलं दिनफलंच
शुभाशुभफलसहितमाह ॥ दिग्बलमितिद्वाभ्यां ॥ अथ विगसित ग्रहस्य
दिग्बलं उक्तरीत्याप्राप्तं तदेव दिक्फलं तथा ग्रहस्य दिनबलं उक्तरीत्याआ-
नीतं तदेवदिनफलं भवेदिति ॥ नन्वेवंप्राप्तेदिग्दिनफलेशुभेअशुभेवाज्ञेये

॥ भाषा ॥

॥ पंचस्वित्येकेन ॥ अब पहिले जो उच्चादि नवप्रकारका बल कहा है उसका शुभाशुभ
कहते हैं, जो उच्च मूलत्रिकोण स्वगृहमित्र क्षेत्र अधिमित्रक्षेत्र यह पांच स्थानके ग्रहोंका ब-
ल शुभ जानना. और समक्षेत्रगत ग्रहका बल सम जानना. नीच शत्रु अधिशत्रु रा-
शिगत ग्रहका बल अशुभ जानना. ऐसा इसशास्त्रका निश्चय है ॥ ८ ॥ दिग्बलमिति
द्वाभ्याम् ॥ अब दिग्बलादिकके ऊपरसें ग्रहत् इष्टकष्ट लानेकी रीति कहते हैं. दिग्बल
का दससें भागलेके फल लेना. ऐसा दिग्बलका पंधरासें भाग लेके फल लेना.

## ॥ टीका ॥

ननु गृहवर्गवत्सममग्रमिति सर्वत्र बोध्यम् ॥ ५ ॥ ६ ॥ ७ ॥ ॥ ७॥

अथ शुभसप्तकवर्ग इष्टबलचक्रमिदम्.

| ग्रहाः | गृह | होरा | द्रेष्काण. | समांश. | नवांश. | द्वादशांश. | त्रिंशांश. | ऐक्य. |
|---|---|---|---|---|---|---|---|---|
| शा | ० ३० ० | ० ७ ३० | ० १५ ० | ० ५ ० | ० ७ ३० | ० ११ | ० २ ० | १ १७ ० |
| शु | ० १५ ० | ० ७ ३० | ० ७ ३० | ० ३० ० | ० २ ० | ० ३० | ० २ ० | १ ३५ ० |
| गु | ० ३० ० | ० ७ ३० | ० २ ० | ० ३० ० | ० १५ ० | ० ४ | ० ७ ३० | १ ३६ ० |
| बु | ० ३० ० | ० ७ ३० | ० ७ ३० | ० २ ० | ० ११ ० | ० ३० | ० २ ० | १ ३० ० |
| म | ० १५ ० | ० ४ ० | ० ११ ० | ० ७ ३० | ० ७ ३० | ० १५ | ० ११ ० | १ ११ ० |
| चं | ० १५ ० | ० ७ ३० | ० ४ ० | ० ३० ० | ० ११ ० | ० ३० | ० ३० ० | २ ७ ३० |
| सू | ० ३० ० | ० ३ ० | ० १५ ० | ० १५ ० | ० ११ ० | ० ७ | ० ११ ० | १ ३२ ३० |

अथ अशुभसप्तकवर्गकष्टबलचक्र.

| ग्रहा | गृह | होरा | द्रेष्का | सप्तांश. | नवांश | द्वादशांश | त्रिंशांश | ऐक्य. |
|---|---|---|---|---|---|---|---|---|
| शा | ० ३० ० | ० २२ ३० | ० १५ ० | ० २६ ० | ० २२ ३० | ० १९ ० | ० २८ ० | २ ५३ ० |
| शु | ० ४५ ० | ० २२ ३० | ० २२ ३० | ० ० ० | ० २८ ० | ० ० ० | ० २८ ० | २ २६ ० |
| गु | ० ३० ० | ० २२ ३० | ० २८ ० | ० ० ० | ० १५ ० | ० २६ ० | ० २२ ३० | २ २४ ० |
| बु | ० ३० ० | ० २६ ० | ० २२ ३० | ० २८ ० | ० १८ ० | ० ० ० | ० २८ ० | २ २७ ० |
| म | ० ४५ ० | ० २१ ३० | ० १५ ० | ० २२ ३० | ० २२ ३० | ० १५ ० | ० १६ ० | ० ४७ ० |
| चं | ० ४५ ० | २१ ३० | ० २६ ० | ० ० ० | ० १४ ० | ० ० ० | ० ० ० | १ १२ ३० |
| सू | ० ३० ० | ० २८ ० | ० १५ ० | ० १५ ० | ० १५ ० | ० २२ ३० | ० १६ ० | २ २८ ३० |

## ॥ भाषा ॥

सात आदि जो बल कह्या है. उसका अर्धफल लेना देना पापवर्गमें जानना उसका अन्तर्वर्ग नाम है. उसका बलका निर्णय एसा है कि शुभ इष्टमें होंनेसे शुभका अर्थ लेना. पापमें पापका अर्ध लेना. ॥ ५।६।७॥

ततद्बलफलानिस्युरशुभानिशुभानिच शुभपा
पफलाभ्यांचदृष्टिंहन्याद्बलंतथा १२ दृष्टेश्वश
भपापोत्थेबलेस्यातांतथैवच भावानांचफलेप्रो-
क्तेपतीनांचफलेउभे १३

॥ टीका ॥

क्तपृथग्गुणितंपद्स्थानस्थं हरेत् पृथग्भाजयेत् ततः पद्फलानामे-
कीकृतंफलं बलफलंजातं एवंशुभानि अशुभानि बलफलानिनामदिग्
बलफलानि स्त्रिबलफलानिच स्युः अथैवंदृष्टिशुभाशुभफलानि यथा शु
भपापफलाभ्यां पूर्वश्लोकसंपादिताभ्यां दृष्टिंहन्याद्गुणयेत् कथं यथा
बलं प्रागुक्तदिग्दिनबलं सर्वबलपिंडेनापहृत्य तत्तत्फलंकृतं तथैवेतत्
कार्यं एवंसति दृष्टेश्वशुभपापोत्थे शुभपापग्रहोत्पन्ने बलेइष्टानिष्टबलं
स्यातां कथंतदाह तथैवचेति तथैवदिग्दिनबलशुभाशुभफलवत् दृ
ष्टिशुभाशुभबलफले स्यातामिति ॥११॥१२॥ अथोक्तमनूद्य सग्रह
राशिफलसाधनमाह ॥ भावानामितिसार्द्धद्वयेन ॥ भावानां लग्नादीनां
फले इष्टानिष्टसंज्ञके प्रोक्ते तथैवपतीनां भावस्वामिनामपि उभे इष्टानि-
ष्टेद्वेफले प्रोक्ते अथ सः फलविवक्षितोराशिः ग्रहयुक्तः सग्रहश्चेत् भाव-
साधनसंगुणे भावफलसाधनविषये इत्यर्थः शुभे शुभग्रहेभावस्थेस-

॥ भाषा ॥

पूर्वोक्त इष्टकष्ट बलके अंकसें भाग लेना जोफल आवे वो इष्ट् इष्ट इष्टकष्टब-
ल भया जानना. इष्टबलकूं शुभ कष्टबलकूं अशुभ जानना. और शुभपापफ-
लांकसें दृष्टिकूं गुणनकरना. ऐसा बलकूं गुणन करना ॥११॥१२॥ भावानामि-
तिसार्द्धद्वयेन॥ जो फल आवे वो दृष्टीका और बलका शुभाशुभफल जानना.
पहिले जो भावबल कहाहे और ग्रहबल कहा है उसमे जो भाव राशियुक्त
होवे और जो ग्रहका क्षेत्र ग्रहयुक्त होवे तो भावसाधन करके उससेंगुणन करना.

नयोः फलं शुभं प्रोक्तं षष्ट्यावर्ज्यं तथेतरत् ९ शुभा
धिके शुभं ज्ञेयमशुभे चाधिके शुभात् बलैरेवहते
स्यातां दृष्टिं हन्यात्स्फुटैवसा १० बलैः षड्भिः समे-
धित्वा समानीतैः पृथक्पृथक् बलिनश्चोक्तसंज्ञैश्च
बलैरेवहरेत्ततः ११

॥ टीका ॥

इतिचेदाह नयोः प्रागुक्तदिग्दिनफलयोः फलं शुभं कल्याणकरं ज्ञेयम्
तत्षष्ट्यावर्ज्यं वर्जितं कार्यं एवंकृते यच्छेषं तत् दिग्बलं दिनफलं वा इतरत्
शुभादन्यत् अशुभमित्यर्थः एवं संपादितं उभयरूपं फलं अशुभात् शु-
भेऽधिके शुभं ज्ञेयं तथैव शुभात् अशुभेऽधिके नेष्टं अशुभमित्यर्थः अ-
थानयोः दृष्टेश्च स्पष्टीकरणमाह उभे फले बलैः षड्बलैर्हते गुणिते स्फुटे
स्यातां तथैव बलैर्दृष्टिं हन्यात् सापि स्फुटा भवति ॥ ९ ॥ १० ॥ अथशु-
भोक्तं शुभाऽशुभादिग्दिनफलानयनम् दृष्टिशुभाशुभफलानयनं च विलक्ष-
णस्फुटमाह ॥ बलैरितिसार्धद्वयेन ॥ बलिनइति बलमस्यास्तीति बलीतस्य
विवक्षितग्रहस्येत्यर्थः पृथक् पृथक् स्थाने षड्स्थानेइत्यर्थः दिग्बलं दि-
नबलं च संस्थाप्य समानीतैः पूर्वोक्तरीत्या संपादितैः पृथक् षड्बलैः स-
मेधित्वा सम्यग्वर्धयित्वा गुणयित्वेत्यर्थः उक्तसंज्ञैः एकीकृतैः षड्बलैः पूर्वो-

॥ भाषा ॥

ऐसा दिग्बलका पंचगसें आगमेंके फल लेना. ओ दोनोकुं एकठे करके जो अंक होवे वो
फलकुं शुभ जानना. उसकुं साठमें कम किये तो अशुभ फल जानना.॥ शुभ ज्यादा होवे
तो शुभ जानना शुभसें अशुभ ज्यादा होवे तो अशुभ जानना. अब इष्टकष्टदृष्टी क-
रते हैं. पहिले तो चारपांचवे श्लोकमें इष्टकष्टफल कहा है. उनसें दृष्टीकुं गुणन करने-
में स्पष्टइष्टकष्टदृष्टि होती है. ॥ ९॥१०॥ बलैरितिसार्द्धद्वयेन ॥ पहिले जो होरा-
द्रेष्काणादिक ऊपरसे जुदाजुदा आये है. उसकुं एकट्ठा करके जो पिंडांक भया. उनका

राशिद्वयगते भावे तद्राश्यधिपतेः क्रिया ॥ १६ ॥ स्थानाधिकस्तु भावेन लाभभावः प्रकीर्तितः ॥ तत्समानेन तद्भावे तदानीं स्थानदान् ग्रहान् ॥ १७ ॥ संयोज्य स्थानसंख्यायां दलमेतत्समं भवेत् ॥ १८ ॥ इति श्रीबृहत्पाराशरहोरायामुत्तरभागे इष्टकष्टवर्णनं नाम तृतीयोऽध्यायः ॥ ३ ॥ श्रीगणेशो जयतु ॥

॥ टीका ॥

भावे राशिद्वयगते संधिगते इत्यर्थः तद्राश्यधिपतेः भावराशिद्वयस्वामिनः क्रिया पूर्ववत् कर्तव्यं बोध्यम् भावेन सहितः ग्रहः स्थानाधिकश्चेत् स लाभभावः लाभदायको भावः प्रकीर्तितः तत्समाने ग्रहसमाने तद्भावे तस्य ग्रहस्य भावे सति तदानीं स्थानदान् ग्रहान् संयोज्य स्थानसंख्यायां यद्दलमर्धं तत्समं भावफलं ज्ञेयमिति ॥ १६ ॥ १७ ॥ १८ ॥

तृतीयाध्यायकेचास्मिन्कृतयाव्याख्ययामया ॥
गणेशः प्रीयतां देवः सर्वज्ञो बुद्धिपालकः ॥ १ ॥

इति श्रीमद्बृहत्पराशरहोरायामुत्तरभागे श्रीमद्दशास्त्यायनवंशावतंसमिथिलोदितदिग्मंडल ज्योतिर्विज्जटाशंकरात्मजश्रीधरेणविरचितायां सुबोधिनीटीकायामिष्टकष्टवर्णनंनाम तृतीयोऽध्यायः ३ ॥ ५ ॥

॥ भाषा ॥

फल कहा है श्री बिंदुमें विपरीत जानना. और भावमें दोय राशीका स्वामी कहनेहैं. भाव और संधिका स्वामि होवे तो अभदायक जानना. जिस भावका अधिपति होवे वो भावका लाभ करेगा. और जो भावका बल जो है वो भावकी राशी संख्यामें मिलायके उसका आधा करना जो फल आवे वो भावफलजानना ॥ ॥ १६ ॥ १७ ॥ १८ ॥ इति बृहत्पराशरहोरायामुत्तरभागे श्रीधरकृत भाषाटीकायाम् इष्टकष्टवर्णनंनाम तृतीयोऽध्यायः ॥ ३ ॥

सराशिर्यहयुक्तश्चेद्भावसाधनसंगुणे फलेत-
स्यशुभेयुंज्यादशुभेवर्जयेच्छुभे १४ पापश्चेद
न्यथाचैवंबलेदृष्ट्यांचतेऽत्रतु युंज्यादुच्चादिषु
फलममित्रादिषुवर्जयेत् १५ स्थानेचैवंक्रमात्
प्रोक्तंकरणेचान्यथाक्रमः

॥ टीका ॥

ति तस्यभावस्य फले फलमध्ये युंज्यात् शुभग्रहफलंमिश्रयेत् कदा शुभेफलेसति असुभेभावफलेसति वर्जयेत् शुभे ग्रहशुभ फले वर्जयेत् अथ पापश्चेत् पापग्रहोभावस्थो यदिभवति तदा अन्यथा वैपरीत्यं कार्यम् पापस्य अशुभफलंमिश्रयेत् पापस्यशुभफलं वर्जयेदित्यर्थः एवंभावस्थग्रहे भावबलग्रहफलविचारमुक्त्वा भावस्थेग्रहे बलदृग्बलविचारमाह अत्रतु भावस्थग्रहविषये बलेबलफलविचारे दृष्ट्यांदृष्टिफलविचारेतु भावस्थेग्रहे उच्चादिषु उच्चत्रिकोणस्वमित्रस्थानवर्तमाने फलं ग्रहेयुंज्यात् अमित्रादिषुभावस्थेग्रहे अमित्राधिशत्रुनीचस्थानवर्तमानेसति वर्जयेत् भावफलं ग्रहफले वर्जयेदिति ॥ १३ ॥ १४ ॥ १५ ॥ अथस्थानकरणविचारमाह ॥ स्थानइत्याद्यध्यायसमाप्तिपर्यंतं ॥ एवं क्रमात् उक्तक्रमात् स्थाने स्थानविचारेपि कर्तव्यं प्रोक्तं करणे करणविषयेतु कर्तव्यस्य अन्यथाक्रमः स्थानापेक्षया विपरीतः क्रमोज्ञेयः अथ

॥ भाषा ॥

भावसाधनका प्रकार द्वितीयाध्यायके प्रथमश्लोकमें कह्याहै. शुभ होय तो फल जोडना अशुभ होय तो फलहीन करना. और बलका जो फलहै उसकूं अन्यथा जानना जैसा शुभ होवे तो हीन करना पाप होवे तो युक्त करना. दृष्टिमें भी ऐसा जानना. यह फल उच्चादिकका होवेतो युक्त करना. शत्रुआदिका होवे तो हीनकरना॥ १३॥१४॥ १५॥ स्थानइत्याद्यध्यायसमाप्तिपर्यंतम ॥ अब अष्टक वर्गमें रेखाका

तृतीयात्सोदरंबुद्धिंदुःपूर्वांविक्रमंविदुः चतुर्थात् पितरंवेश्मसुखंलालित्यमेवच ३ सौमनस्यमपत्यानिप्रज्ञांमेधांचपंचमात् हानिंव्याधिमरिंषष्ठान्मैथुनंस्त्रींजयंततः ४ मृतिंपराजयंदुःखंह्यानिंव्याधिं तथाऽष्टमात् सौशील्यभाग्यधर्मांश्च नवमाद्दशमात्तथा ५ मानास्पदाज्ञाकर्माणिआयादर्थव्ययाद्व्ययं

॥ टीका ॥

पैतृकं पितृसंबंधिचधनं द्रव्यं तथा भरणीयं पोषणीयं भृत्यादीत्यर्थः ॥ तथा कुटुंबंस्त्र्यादिवश्यमित्यर्थः तथापश्वादि पशव आदयो यस्मिंस्तत् गोऽश्वपक्षिवृक्षादीत्यर्थः वदेत्कथयेत् बुधः ज्योतिर्वित्॥२॥ तृतीयात्सहजभावात् सोदरं समानमुदरंयस्य तत् साक्षात् भ्रात्रादितथा दुःपूर्वांबुद्धिं दुरिति उपसर्गः पूर्वः प्रथमोयस्याः तां दुर्बुद्धिं दुष्टमनीषां तथा विक्रमं पराक्रमंचविदुः बुबुधुः चतुर्थात् सुहृद्भावात् पितरं स्पष्टं तथावेश्मगृहं तथा सुखं स्पष्टं तथा लालित्यं ललितस्य सुंदरस्यभावः तथोक्तं च ॥ ३ ॥ पंचमात् भावात् सौमनस्यं सुष्ठुच तन्मनश्च तस्यभावः मनःप्रसन्नतामित्यर्थः तथा अपत्यानि पुत्रादीनि तथा प्रज्ञां प्रकर्षेण ज्ञायते अनयेति विशेषबुद्धिं तथा मेधां धारणावतींबुद्धिंच विचारयेत् पष्ठात् रिपुभावात् हानिंद्रव्यादिनाशं तथा व्याधिं रोगं अरिंशत्रुंचवदेत् ततः

॥ भाषा ॥

सेवकका स्त्रीआदि कुटुंबका पशुवोंका पक्षीवृक्षादिकोंका विचार देखना ॥ २॥ तीसरे भावसें भाइयोंका दुष्टबुद्धीका पराक्रमका विचार देखना. चौथे भावसें घरका सुखका सुंदरताका पितरका विचार देखना ॥ ३॥ पंचमभावसें मनप्रसन्नताका पुत्रादिकोंका बुद्धीका धारणाशक्तीका विचारदेखना. षष्ठभावसें हानीका द्रव्यादि नाशका व्याधिरोगशत्रु इनोंका विचार देखना. सप्तमभावसें मैथुनका स्त्रीका

विधातृलिखितायासाललाटाक्षरमालिका न-
स्याः शरीरकथनंवक्ष्यामिचपृथक्पृथक् १ ल-
ग्नाच्छरीरचिंताचद्वितीयान्स्वंचपैतृकम् भरणी-
यंकुटुंबंचपश्चादिचवदेद्बुधः २

॥ टीका ॥

श्रीगणेशायनमः॥ द्वादशानांतुभावानांज्ञेयंफलमथोमुनिः॥ चतुर्थेरश्मिसंभूतिंतत्फलंचाब्रवीत्स्फुटम् ॥१॥ अथभगवान्पराशरमहर्षिर्मैत्रेयंप्रति चतुर्थाध्याये भावाऽवलोकनीयविषयंरश्म्यानयनंतत्फलंचविशदयति॥ तत्रादौ पूर्वार्जितकर्मानुरूपविधिलिखितशुभाशुभफलसूचकललाटाक्षरफलंजन्मकालीनभावसाधनेनवक्तुंप्रतिजानीते ॥विधात्रिति॥ सा पूर्वोपार्जितकर्मसमुद्भवा अनिर्वाच्या विधातृलिखिताविधात्राविश्वसृजाब्रह्मणा लिखिताऽङ्किता ललाटेभालेअक्षराणां शुभाशुभज्ञापकवर्णानां मालिकापंक्तिःयाऽस्ति तस्याः शरीरकथनं शरीरस्यस्वरूपस्यकथनंवर्णनप्रकारंपृथक्पृथक् तन्वादिद्वादशभावभेदेनेत्यर्थः वक्ष्यामिकथयिष्यामि॥ ॥१॥ अथद्वादशभावस्थानेषुकिंकिंविचारणीयंतदाह ॥लग्नादित्यादिसार्धपंचश्लोकपर्यंतम् ॥लग्नात् तनुभावात्सकाशात् शरीरस्य देहस्य चिंता विचारः कार्श्यादिगौरत्वादिविवेकइत्यर्थः ॥ द्वितीयात् धनभावात् स्वंस्वीयं

॥ भाषा ॥

॥विधात्रिति॥ अबतनु आदि करके बारा भावका निर्णय कहते हैं. विधाता जो ब्रह्मा उनोंनें संपूर्ण प्राणिमात्रके ललाटमें जो प्रारब्धभोग कर्मकी अक्षरपंक्ति लिखी है.उसमें मनुष्यका विशेष करके फल है वो अक्षरपंक्ति प्रत्यक्ष दिख पडती नहीं है. वास्ते वो अक्षरपंक्तिका देहका वर्णन और पृथक् पृथक् कहते धनादिक बारा भावका फल कहता हूं ॥ १॥ लग्नादित्यादि सार्धपंचश्लोकपर्यंतम् ॥ लग्नसें शरीरसंबंधि सब विचारदेखना धनभावसें स्वउपार्जित द्रव्य और पितृसंबंधी द्रव्यका

नीचेनचांतरेप्रोक्तारश्मयस्त्वनुपातजाः नीचोनं तुग्रहंभाधोधिकेचक्राद्विशोधयेत् ७ स्वीयर-श्मिहतंषड्भिर्भजेत्स्यूरश्मयः स्वकाः

॥ टीका ॥

नीचेतुन ध्रुवांका न संति अंतरे उच्चनीचमध्यवर्त्यारोहाऽवरोह मूल-त्रिकोणादि सर्वस्थलेतु अनुपातजाः अनुपाताद्वक्ष्यमाणाज्जायंते ते तथा रश्मयोबोध्याः ॥ अथानुपातरीतिमाह ॥ ग्रहं रश्मिविकीर्षमाणं रव्याद्यन्यतमं तुनीचोनं नीचेनहीनं कृत्वा भाधाधिके षड्राश्यधिकेऽव-शिष्टेसति चक्राद्राशिसमूहात् द्वादशराशिभ्यइतियावत् विशोधयेत् ॥ ॥ ७ ॥ ततः स्वीयरश्मिहतं स्वस्यविहिताः स्वीयाः अत्रस्वस्यचेतिवा-र्तिकेनकुकाभाव्यंपरमार्थत्वेदोषमसंगाभावइतिवेदितव्यं पूर्वोक्तादिग् भवेत्यादयः येरश्मयः तैः हतंकृत्वा षड्भिः ६ अंकैः भजेत् एवं स्वकाः स्वीयाः रश्मयः स्युः भवेयुः ॥ अथास्योदाहरणम् ॥ रविः १०।४।१४ ।० रविनीचं ६।१०।०।० अनेन हीनो जातः ३।२४।१४।० रव्युच्चध्रु-वांकाः १० एभिर्गुणनेन जाताः ३०।२४०।१४०।० अंशादिपरिमाणा-धिक्यात्सद्युक्त्या जाताः ३४।२।२०।० एते षड्भक्ताः जाताः ५।४० २३।० जातोऽयमनुपातजोरविरश्मिः एवं सर्वत्रज्ञेयम् ॥ ७ ॥

॥ भाषा ॥

नीचके ध्रुवांक नहींहै- उच्चनीचादि स्थलोंमे अनुपातसें रश्मी जानना. स्पष्ट ग्रहकूं नीचमें हीन करके छराशीसें जादा होवे तो बारामें शोधन करके ७ शेषकूं अपनें रश्मि ध्रुवांकजो पहिले कहे हैं उस अंकसें गुणन करना. पीछे छसें भाग लेना. जो लब्ध आवे वो रश्मि जानना ॥ ७ ॥ ॥ ५ ॥

अथ रश्मि-चक्रम्.

| सू | चं | मं | बु | गु | शु | श | पी |
|---|---|---|---|---|---|---|---|
| ५ | २ | ३ | १ | १ | ६ | २ | २८ |
| ४० | ३१ | ४५ | ४३ | २२ | ५३ | २६ | २३ |
| २३ | १३ | ४६ | ४१ | २५ | ३८ | १६ | ३२ |

दिग्भवेष्विषुसप्ताष्टशराः स्वोच्चेकरारवेः ६

॥ टीका ॥

नामसप्तमभावात् मैथुनंमिथुनीभावं तथा स्त्रींभार्यां तथा जयं उत्कर्षंचवदेत् ॥४॥ अष्टमात् मृत्युभावात् मृतिंमरणं तथा पराजयं पराभवं तथा दुःखं व्यसनं तथा हानिं नाशं तथा व्याधिं रोगंचवदेत् नवमात् भाग्यभावात् सौशील्यं सुशीलतांच भाग्यंवैभवं धर्मो विध्युक्ताचरणंचेति द्वंद्वसमासः तान्वदेत् तथा तेनप्रकारेण दशमात् कर्मभावात् ॥ ५ ॥ मानास्पदाज्ञाकर्माणि मानंसत्कारं तथा आस्पदं स्थानं तथा आज्ञां भृत्यादिप्रेरणां तथा कर्माणि शुभाशुभाचरणानिच द्वंद्वः तानिवदेत् आयादेकादशभावात् अर्थं द्रव्याद्यभीष्टलाभंवदेत् व्ययात् द्वादशभावात् व्ययं द्रव्यादिव्ययं चेतिकथयेत् ॥ ५ ॥ एवंभावविचारणीयमुक्त्वा फलविशेषंवक्तुं रश्मीन्साधयति ॥ दिगित्यादिसार्धसप्तमश्लोकपर्यन्तम्॥ तत्रादौ सर्वरश्मिसाधनाय उच्चरश्मिध्रुवांकानाह ॥ स्वोच्चे उच्चस्थे रव्याद्यन्यतमे ग्रहे सति रवेः सूर्यात्सकाशाद्ग्रहाणां क्रमात् दिशः १० भवाः ११ इषवः ५ इषवः ५ सप्त ७ अष्टौ ८ शराः ५ द्वंद्वसमासः एतेक्रमाद्रविचंद्रभौमबुधगुरुशुक्रशनीनां कराः रश्मिध्रुवांका बोध्याः ॥ ६ ॥

॥ भाषा ॥

भार्याका जयका उत्कर्षताका विचार कहेना ॥ ४ ॥ अष्टमभावसें मरण पराजय (हारना) दुःखव्यसन हानि व्याधि रोग कहना. नवमभावसें सुशीलता भाग्य वैभव धर्म इसका विचार करना ॥ ५ ॥ दशमभावसें सत्कार स्थान आज्ञा शुभाशुभकर्म इसका फल कहना. ग्यारवे भावसें इच्छित द्रव्यादिलाभका विचार करणा. बारवे भावसें उत्तमनीचमार्गसें द्रव्यखर्चका विचार देखना. ॥ ॥ दिगित्यादि सार्धसप्तमश्लोकपर्यंत ॥ अब ग्रहोंका उच्चरश्मिसाधन कहतेहैं उसमें पहिले उच्चके ध्रुवांक कहतेहै. सूर्यके १० चंद्रके ११ मंगलके ५ बु०५ गु०७ शु०८ शनीके ५ यह रश्मीके ध्रुवांक कहे॥६

मूलत्रिकोणस्वर्क्षाधिमित्रमित्रनवांशके ९ द्रेष्का-
णेऽपिचहोरायांत्रिंशांशेचक्रमात्तथा अष्टघ्नाद्य-
ब्धिषट्सप्तभक्तायुक्तास्तुरश्मयः १० अरावध्यरिनीचेचवेदघ्नखिलहीनकाः

॥ टीका ॥

अथनवांशादिवस्यमाणांशैर्मूलत्रिकोणादिवक्ष्यमाणस्थानस्थितानांविशेषरश्मिसंस्कारांतरमाह ॥ मूलत्रिकोणेत्यादिसार्धदशश्लोकपर्यंतम् ॥ मूलत्रिकोणस्वर्क्षाधिमित्रमित्राणांमध्येप्रत्येकं मित्रेतिलुप्तविभक्तिकंपदं तेनात्रषष्ठीबहुवचनंबोध्यं नवांशकेवा द्रेष्काणेवा होरायांवा त्रिंशांशेवासति मूलरश्मयः अष्टघ्नाः अष्टाभिर्हन्यंतेगुण्यंते तेतथोक्ताः पश्चात् क्रमात् यथाक्रमं द्व्यब्धिषट्सप्तभिः भक्ताभाजिताः तथोक्ताः पश्चात् अनेनभागेन युक्तामिलितास्तेमूलरश्मयः तुस्पष्टं रश्मयोभवंति एतदुक्तंभवति नवांशद्रेष्काणहोरात्रिंशांशान्यतमवर्गे मूलत्रिकोणस्थितस्य ग्रहस्य उक्तध्रुवांकोत्पन्नमूलरश्मयः अष्टघ्नाः कृत्वा द्वाभ्यांभागमाहृत्य ध्रुवांकोत्पन्नरश्मिषुयोजयेत् एवंक्रमात् नवांशाद्युक्तान्यतमवर्गे स्वर्क्षाधिमित्रमित्रान्यतमस्थानस्थितस्य ग्रहस्य ध्रुवांकोत्पन्नमूलरश्मयश्चाष्टघ्नाः क्रमात् गृहीताब्धिषट्सप्तांशेनयुक्तामूलरश्मयएवस्पष्टाभवेयुरिति ॥ अथ नवांशद्रेष्काणहोरात्रिंशांशान्यतमवर्गे अरौ अरिस्थाने अध्यरि अत्रविभक्त्यर्थे अव्ययंविभक्तीत्यादिना समासस्याव्ययत्वादव्ययादाप्सुपइतिविभक्तिलुक् अध्यरिस्थाने अथवानीचेस्वनीचस्थाने वर्तमानग्रहस्य मूलध्रुवांकोत्पन्नरश्मयः क्रमात् वेदघ्नखिल-

॥ भाषा ॥

॥मूलत्रिकोणेत्यादिसार्धदशश्लोकपर्यंतम्॥ अब नवांश द्रेष्काणहोरात्रिंशांशउ
त्तरश्मीका विशेषसंस्कार कहते हैं. जो कोई स्पष्ट ग्रहका पहिले उच्चरश्मिफल

उच्चस्वर्क्षसुहृत्सूर्यभागेऽगाब्धिद्विसंगुणाः ८ नी-
चारिद्वादशांशेतु नृपांशोनाः कराश्चते

॥ टीका ॥

एवं स्वोच्चादिराशिस्थितानांग्रहाणां रश्म्यानयनमुक्त्वा तेषां स्वोच्चादिराशिवर्तमानानामेतदन्यराशिवर्तमानानामपि द्वादशांशेशवक्ष्यमाणस्वोच्चादिस्थितानां विशेषसंस्कारांतरेण रश्म्यानयनमाह ॥ उच्चस्वेत्यादि सार्धाधमश्लोकपर्यंतम् ॥ अथकस्मिन्नपिराशौ उच्चस्वर्क्षसुहृदां स्वोच्चस्वक्षेत्रस्वमित्राणां सूर्यभागेद्वादशांशे सति क्रमात् अंगानि ६अब्धयः ४ द्वौ २ एभिः सम्यग्गुण्यंते ते संगुणाः गुणिताः कार्या इत्यर्थः अपिच नीचार्योः स्वनीचस्वशत्र्वोः द्वादशांशे सति तु नृपांशोनाः षोडशांशहीनाः कार्याः एवमुच्चाद्युक्तपंचकद्वादशांशवर्तमानानां विशेषसंस्कारेण तेपूर्वोक्ताः कराः रश्मयः स्पष्टाभवेयुः ॥ अथास्योदाहरणं ॥ रविः १०।४।१४।० अयंमीनद्वादशांशेवर्तमानः द्वादशांशपतिर्गुरूरवेः पंचधामैत्र्यांसमः अतोऽस्यस्वोच्चाद्युक्तद्वादशांशाभावात् द्वादशांशोपलक्षितविशेषसंस्काराभावः अथचंद्रः ८।२५।२९।० अयंतुलाद्वादशांशेवर्तमानः द्वादशांशपतिः शुक्रः चंद्रस्य पंचधामैत्र्यां मित्रः अतोऽस्य द्वादशांशोपलक्षितमित्रद्वादशांशसंस्कारे यथामूलरश्मिः २।३१।१३ अयंद्विगुणितः ५।२।२६एवंसर्वत्रद्वादशांशोपलक्षितविशेषसंस्कारोबोध्यइति ॥ ८ ॥ ५॥

॥ भाषा ॥

॥ उच्चस्वेत्यादिसार्धाधमश्लोकपर्यंतं ॥ अथ षड्वर्ग उच्चरश्मीका विशेष संस्कार कहते हैं- जो ग्रह द्वादशांशमें होवे वहां राशिद्वादशांशकी उच्चकी होवे तो ६ सें गुणना. स्वक्षेत्र होवेतो ४से गुणनकरना. स्वमित्रराशीहोवेतो २ से गुणन करना नीच शत्रु राशीका द्वादशांश होवे तो सोलाका अंशहीन

| अथद्वादशांश रश्मिचक्रमिदमाह. | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू | चं | म | बु | गु | शु | श | यो |
| ० | ५ | २२ | ० | ० | २० | २ | ५७ |
| ० | २ | १४ | ० | ० | २४ | १७ | २८ |
| ० | २६ | २६ | ० | ० | १३ | १७ | ४१ |

उच्चेत्रिगुणंप्रोक्तंस्वत्रिकोणेद्विसंगुणम् ११ स्व-
क्षेत्रेत्रिघ्नाद्विसंभक्तास्त्वधिमित्रगृहेऽपिच वेदघ्ना
रामसंभक्तामित्रभेषड्गुणास्ततः १२ पंचभक्ता-
स्तथाशत्रुगृहेद्विघ्नाश्चतुर्हृताः अतिशत्रोः करघ्ना-
श्चपंचभक्तानननीचभे १३

॥ टीका ॥

अथ रश्मीन्प्रकारांतरेण स्पष्टयति ॥ उच्चेत्यादित्रयोदशश्लोकपर्यंतम् ॥ अंशपतावुच्चेसति प्राग्ध्रुवांकोत्पादितरश्मयः त्रिगुणं तत्सर्वं त्रिगुणं प्रोक्तं त्रिगुणिताः स्पष्टास्स्युरित्यर्थः रश्मिपतौ स्वत्रिकोणे मूलत्रिकोणे सति मूलध्रुवांकोत्पादितं सर्वं द्विसंगुणं द्वाभ्यां सम्यग्गुणि-

॥ भाषा ॥

| अथनवमांशमलत्रिकोणरश्मिचक्रमिदमाह. | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू. | चं | मं | बु | गु | शु | श | यो |
| १३ | ० | ८ | ५ | २ | ० | ५ | ३२ |
| १४ | ० | ३ | १० | ५६ | ० | १३ | ३८ |
| १३ | ० | ४७ | ४२ | ३६ | ० | ४७ | ५ |

| अथद्रेष्काणरश्मिचक्रम्. | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू. | चं | मं | बु | गु | शु | श | यो. |
| ० | ५ | ११ | ४ | ० | ० | ० | २१ |
| ० | ५९ | १७ | १० | ० | ० | ० | २१ |
| ० | ३० | १८ | २२ | ० | ० | ० | १० |

| अथ होरारश्मिचक्रम्. | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू | चं | मं | बु | गु | शु | श | यो |
| १७ | ७ | ८ | ० | ० | ० | ० | ३४ |
| १ | ३३ | ५६ | ० | ० | ० | ० | २१ |
| ०. | ३९ | ४७ | ० | ० | ० | ० | ३५ |

| अथत्रिंशांशरश्मिचक्रं | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू. | चं | मं | बु | गु | शु | श | यो |
| ० | ५ | ११ | ० | ६ | ० | ० | २२ |
| ० | २४ | १७ | ० | ५२ | ० | ० | ३२ |
| ० | २ | १८ | ० | ५ | ० | ० | २९ |

स्यातहै. जो कर्ता पूर्वोक्त ग्रहोंमें नवमांशादि वर्गोंमें शत्रु राशि होवे तो चारका भाग लेके मूल रश्मीमें हीन करना. अतिशत्रु राशि होवे तो दोयका अंश हीन करना. नीच राशि होवे तो शून्य मांडना ॥ १३ ॥ उच्चेत्यादित्रयोदशश्लोकपर्यंत ॥ अथ पूर्वोक्त रश्मी चक्रकूं विशेषकरके स्पष्ट करते है. अंशपति उच्चका

## ॥ टीका ॥

हीनकाः यथाक्रमं चतुर्भिः द्वाभ्यां सर्वेणअंशमाहृत्य स्वस्मिन्नेवऊन-येत् तेस्पष्टारश्मयोभवेयुः अत्रेदंतत्त्वं नवांशाद्युक्तान्यतमवर्गे अरि-स्थानस्थितस्य ध्रुवांकोत्पन्नरश्मयः स्वचतुर्थांशहीनाः तथा अध्यरि-स्थानस्थितस्य मूलरश्मयः अर्धावशेषिताः तथानीचस्थानस्थितस्य स्वसर्वेणहीनाः शून्यरूपाः स्पष्टाभवेयुरितितात्पर्यम् ॥ अत्रोदाहरणं॥ रविः १०।४।१४ वृश्चिकनवांशेवर्तमानः तत्पतिर्भौमोरवेः पंचधामैत्र्यां अधिमित्रं अतः रविध्रुवोत्पन्नरश्मयः ५।४०।३३ एते अष्टघ्नाः ४०। ३२०।१८४ षड्भुक्ताः ४५।२३।४ अधिमित्रभाजकांकाः ६ एभिर्भा-जिताः ७।३३।५० एते मूलरश्मियुयोजिताः १२।१४।१२ जातोयं नवां-शेनाधिमित्रस्थानस्थितस्य रवेः विशेषसंस्कारतः स्पष्टरश्मिः एवंमूल-त्रिकोणस्वर्क्षमित्रस्थानेषु सर्वत्रबोध्यं ॥ अथनीचस्योदाहरणम्॥ चंद्रः ८।२५।२९।० अयंवृश्चिकनवांशेवर्तमानः तत्पतिर्भौमः स च पंचधा मैत्र्यांचंद्रस्यमित्रं अत्रमित्रस्थानविहितसंस्कारः मूलरश्मयोऽ-ष्टघ्नाः तत्सप्तांशयोजिताःस्पष्टाभवेयुः तथापि चंद्रस्य स्वनीचनवां-शस्थितत्वात् द्वितीयानीचांशसंस्कारोऽपिभावः तस्मिन्सति रश्म्यभा-वः शून्यफलकत्वादिति एवंअरावध्यरिचबोध्यम् ॥९॥ १०॥

## ॥ भाषा ॥

लाये है उसमे संस्कार करना. वो ग्रहकी राशि अंशकलादिकमें देखके नवमांश द्रेष्काण होरा त्रिंशांशमे देखना कि मूलत्रिकोण राशीहै. या स्वक्षेत्र है. या अधि मित्रकी राशी है मित्रकी राशीहै पीछे पहिलेका उच्चरश्मिफलकू आठगुणाकर-के मूल त्रिकोणका नवमांशादिक वर्ग होवे तो दोयसे भाग लेना स्वक्षेत्रका वर्ग हो वे तो चारसे भाग लेना अधिमित्रका वर्ग होवे तो छसे भाग लेना. मित्रका हो ये तो सातसे भाग लेना. मूलरश्मीमे मिलाना तो अपने अपने वर्गकी उच्चरश्मी

शनिंसितंविनानारायहाअस्तंगतायदि विरश्मयो
भवंत्येवंवक्रादौद्विगुणास्ततः १४ अनुपानोंऽतरे
वक्रंत्यागेऽष्टांशविहीनकाः मंदायांदशभागोनाव-
स्वंशोनाःकराःस्मृताः १५ तथाशीघ्रतरायांचवेदांशो
नाकराःस्मृताः अंगांशोनाश्वशीघ्रायांकेचिदेवं
वदन्तिहि १६

॥ टीका ॥

अथमतांतरेणगतिवशाद्रश्मीनांन्हासवृद्धी आह ॥शनिमित्यादिषोड-
शश्लोकपर्यंतं॥ यदि यर्हि शनिंसितंविना शनिशुक्रव्यतिरेकेण ना-
राग्रहाः भौमादयः अस्तंगताः रविरश्मिलुप्तकिरणाश्चेत् तर्हि भौ-
मबुधगुरवः विरश्मयः रश्मिहीनाः भवेयुः एवंप्रकारेण वक्रादौवक्रार-
भे द्विगुणाः मूलरश्मयः द्विगुणिताःस्पष्टाःस्युः वक्रत्यागेवक्रांते अ-
ष्टांशविहीनकाः अष्टभागोनाः स्पष्टास्स्युः अंतरे वक्रं वक्रत्यागम-
ध्यभागे अनुपानः त्रैराशिकगणितेन वक्राद्यंकवक्रत्यागांकानां मध्यां-
कोत्पादनं तेन मध्यरश्मयः स्पष्टाःस्युः मंदायां रश्मिपतिगतौ दशभा-
गोनाः स्वदशांशहीनाःमूलरश्मयः स्पष्टाः स्युः मंदतरायामित्यध्याहा-

॥ भाषा ॥

का भाग लेके जो लब्ध आवे वो स्पष्ट रश्मी जानना. रश्मीपति अतिशत्रूके
राशीमें होवे तो पूर्वरश्मीकूं दुगनी करके पांचवें भाग लेना. लब्ध जो आवे
वो स्पष्टरश्मि जानना. रश्मीपति नीचका होवे तो विशेष संस्कार नहीं है॥
॥शनिमित्यादिषोडशश्लोकपर्यंतम्॥ अब मतांतरसें रश्मीयोंका हानिवृद्धी-
का लक्षण कहते है. जो कभी शनिशुक्र यह दोनो विना मंगल बुध गुरु यह
तीनो ग्रह अस्तंगत होवे तो उनोंका रश्मिहीन जानना. रश्मीपति वक्रारंभ-
में होवे तो पूर्व रश्मि द्विगुणित करनेसें स्पष्ट होती है. वक्रीके अंतमें रश्मीप-

## ॥ टीका ॥

ताः स्पष्टाः स्युः रश्मिपतौस्वर्क्षे स्वक्षेत्रगेसति मूलध्रुवांकसाधितारश्मः त्रिघ्नाः त्रिभिर्गुणिताः द्विसंभक्ताः द्वाभ्यां भाजिता अर्धावशेषिता इत्यर्थः अपिच अधिमित्रगृहेरश्मिपतौ मूलरश्मयः वेदघ्नाः चतुर्भिर्गुणिताः रामसंभक्ताः त्रिभिर्भाजिताः तृतीयांशावशेषिताइत्यर्थः स्पष्टाःस्युः रश्मिपतौ मित्रभेमित्रक्षेत्रगे मूलरश्मयः आदौषड्गुणाः षड्भिर्गुणिताः ततःपश्चात्पंचभक्ताः पंचभिर्भक्ताः पंचावशेषिताएवस्पष्टाः स्युः तथा तेनप्रकारेण रश्मिपतौ शत्रुगृहे शत्रुक्षेत्रस्थे द्विघ्नाः द्विगुणितामूलरश्मयः चतुर्हृताः चतुर्भिर्भाजिताः चतुर्थांशाऽवशेषिताःस्पष्टाःस्युः अतिशत्रुगृहे अतिशत्रुक्षेत्रस्थे रश्मिपतौसति मूलरश्मयः करघ्नाः द्विगुणिताः चपश्चात् पंचभाजिताः पंचांशावशेषिताः स्पष्टाःस्युरिति ॥ अथास्योदाहरणं ॥ चंद्रः ८।२५।२९ अयंधनूराशिवर्तमानोऽस्यपतिर्गुरुश्चंद्रस्य पंचधामैत्र्यांमित्रं अतोऽस्य मित्रक्षेत्रविहितसंस्कारोयथा मूलध्रुवांकानीतचंद्ररश्मयः २।३१।१३ एतेषड्गुणिताः १२।१८६।७८ पश्चुहृताः १५।७।१८ एतेपंचभक्ताः ३।१।२७ जातोयंविशेषसंस्कृतश्चंद्ररश्मिः स्पष्टइति ॥११॥१२॥१३॥

## ॥ भाषा ॥

होवे तो ध्रुवांकोंसे फरिहुई रश्मीकूं त्रिगुणित करनेसें स्पष्ट होती है. रश्मिपति मूल त्रिकोणमें होवे तो पूर्वरश्मीकूं द्विगुणित करनेसें स्पष्ट होती है. रश्मिपति स्वराशीका होवे तो पूर्वरश्मीकूं त्रिगुणित करके उसका अर्धभाग करना. सो स्पष्टरश्मी होती है. रश्मिपति अधिमित्रघरमें होवे तो पूर्वरश्मीकूं चतुर्गुणित करके तीनने भाग लेना. जो लब्ध आवे वो रश्मीबल स्पष्ट जानना. रश्मीपति मित्र राशीमें होवे तो पूर्वरश्मीकूं छगुणिकरके पांचका भाग लेना. लब्ध जो आवे वो स्पष्टरश्मि जानना. रश्मीपति शत्रुराशीका होवे तो पूर्व रश्मीकूं दुगनी करके चार-

योगेषुयेग्रहाः प्रोक्तास्तेषांयोगेचरश्मयः पापसौ
म्यारिमित्राणांयोगेहानिश्चकीर्तिताः १८

॥ टीका ॥

शीघ्राहीनाकृतासमा तथैव मंदतरया शीघ्रतराहीनाकृतासती समैव एवं हिप्रकारेण समत्वं समासमाइतिद्विरुक्त्योपलभ्यतेइति अष्टमीस-मा संज्ञकाज्ञेयेति अष्टविधागतिरुपदिष्टा एतल्लक्षणानिसूर्यसिद्धां-तादिष्ववगंतव्यानि ॥ १७ ॥ अथप्राप्तरश्मिषु योगविशेषेणह्रासवृद्धी आह ॥योगेष्विति ॥ योगेषु राजयोगदारिद्र्यादिसंज्ञकेषु येयोगकर्तारो ग्रहाः प्रोक्ताः तेषांयोगेसति दुष्टशुभयोगकारकसंबंधतारतम्येन र-श्मयः स्पष्टाः स्युः एतदुक्तंभवति राजयोगकारक ग्रहस्य दारिद्र्ययोग-कारकग्रहेण योगे एकराशिसंबंधेसति दारिद्र्यकारकग्रहप्राप्तरश्मिर्भी रा-जयोगकारकग्रह रश्मीन्संशोध्यावशिष्टा राजयोगकारकग्रहरश्मयोज्ञे-याः एवंराजयोगकारकयोस्त्वहयोस्त्रयाणांवासंयोगे तयोस्तेषांवारश्मि-मीलनेन स्पष्टरश्मयस्तयोस्तेषांवाज्ञेयाइतिदिक् एवमेवशुभाशुभग्र-हयोगेनरश्मीनांह्रासवृद्धीविशदयत्युत्तरार्धेन पापः खलः सौम्यः शुभः अरिः शत्रुः मित्रं सुहृत् एतेषांयोगे एकराशिसंबंधेसति हानिः पापरश्मि-भिः शुभरश्मीनां अरिरश्मिभिः मित्ररश्मीनां हानिः ह्रासः एवमर्थात् सौम्यानांमित्राणांच योगएवरश्मयः कीर्तिताः कथिताइति ॥ १८ ॥

॥ भाषा ॥

गति ३ शीघ्रगति ४ शीघ्रतरागति ५ मंदगति ६ मंदतरगति ७ समासमागति ८ ये वर्णन करने योग्य है. शीघ्रतरगति रहितहीन भई उसकूं मंदगति कहना. वैसी शीघ्रग-ति रहितहीन भई तो अतिमंदतर गति कहना. शेषटीकामें स्पष्ट है.॥१७॥ योगेष्वि-ति ॥ अब राजयोग दरिद्रयोग होवे तब रश्मीका विशेष संस्कार कहते हैं. राजयो-ग करनेवाला ग्रह और दरिद्र योग करनेवाला ग्रह यह दोनोंका एक राशि संबंध

वक्रानुवक्राविकलाशीघ्राशीघ्रतरागतिः वृद्धिही-
नेतुशिष्टेद्वेवर्जनीयेसमासमा १७

॥ टीका ॥

रः गतौतु वस्वंशोनाः स्वाष्टांशहीनामूलरश्मयः स्पष्टाः स्युः तथा तेनैव प्रकारेण शीघ्रायांगतौ अंगांशोनाः स्वषष्ठांशोनाः तथाशीघ्रतरायांतु वेदांशोनाः स्वचतुर्थांशहीनाः स्पष्टरश्मयो भवंति इतिकेचिद्वदंतीति केचिच्छब्देन नैतत्सुरव्यमतमितिध्वनितम् ॥१४॥१५॥१६॥ अथैकविंशतितमश्लोके रश्मीनां ग्रहगतिसंज्ञारूपतः फलानि निर्णयिष्यन्नादौ अष्टविधगतिसंज्ञा आह ॥ वक्रेति ॥ वक्रा १ अनुवक्रा २ विकला ३ शीघ्रा ४ शीघ्रतरा ५ अपिचइमेशीघ्रशीघ्रतरेएव वृद्धिहीनेसत्यौतु वृद्ध्या वर्धनेनहीनेरहिते तथोक्तेतु शिष्टेनाम मंदमंदतरे ६।७ भवतः अथाष्टमी समातु द्वेवर्जनीयेवर्जितुंयोग्ये कृतेतुसमासमा द्विप्रकारकसमा भवति अत्रेत्थंतत्त्वं शीघ्रतरावृद्धिहीना जातासती मंदसंज्ञकाषष्ठीगतिः भवति तथा शीघ्रावृद्धिहीनासती मंदतरासप्तमीगतिर्भवति तथाचमंदया

॥ भाषा ॥

ति होवे तो पूर्वरश्मीकूं आठसे ८ भाग लेना. जो लब्ध आवे वो स्पष्टरश्मी होती हैं. वक्रागतीसें मध्यभागमें होवे तो त्रैराशिकके गणितमार्गसें फल लायके पूर्वरश्मीकूं स्पष्ट करना. रश्मिपतीकी गति मंद होवे तो पूर्वरश्मीका दशांश लेके पूर्वोक्त रश्मीमें हीन करना तो स्पष्ट होती है. रश्मीपतिकी गति वोहीन मंद होवे तो अष्टमांश हीन करना

| अथमतान्तररश्मिचक्रम्. | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू | चं | मं | बु | गु | शु | श | रा |
| ० | ३ | ५ | ० | १ | १० | ३ | ३४ |
| ० | १ | १ | ५१ | ३८ | ४० | ३८ | ५३ |
| ० | २७ | १ | ५१ | ५४ | ५४ | ३९ | ४६ |

शीघ्रगति होवे तो छट्ठाभाग हीन करना. शीघ्रतर गति होवे तो छट्ठाभाग हीना. शीघ्रतर गति होवे तो चतुर्थांशहीन करना. ऐसा कितनेक ऋषि कहते हैं ॥१४॥१५॥१६॥

॥ वक्रेति ॥ अब गतीके आठ भेद कहते हैं. वक्रगति १ अनुवक्रागति २ विकला-

द्विग्रहादिषुयोगेषुग्रहभावफलाहताः गतिसंज्ञा-नुरूपेणफलानांनिर्णयः स्मृतः २१ इष्टकष्टफल-संगुणांस्ततस्तत्करानथचसंयुतांस्तुतान्

॥ टीका ॥

अथद्विग्रहादियोगेरश्मीन्संक्षेपतः फलनिर्णयंचाह ॥ द्विग्रहेति ॥ द्विग्रहादिषु द्वौचतौ ग्रहौच द्विग्रहौ तौ आदिर्येषां तेद्विग्रहचतुर्ग्रहादयः तेषुयोगेषु पंचाष्टेत्यादयउक्तरश्मयः ग्रहभावफलाहताः ग्रहाणांसंयुक्तानां योभावः संयोगवर्तमानभावः तद्रूपंयत्फलंतेनहतागुणिताः तेषां द्वादीनांयुक्तग्रहाणां स्पष्टारश्मयो भवंति ॥ अत्रोदाहरणं ॥ रविः १०।४।१२ गुरुः १० १५।३९ अनयोर्भावः १०।२।५३ रव्युक्तरश्मयः ५ एभिर्गुणितोभावः ५०।२।२६५ षष्ठ्युद्धृताः ५०।१४।२५ ऊर्ध्वांकोंशस्थानापन्नः त्रिंशद्धीनो जातः २०।१४।२५ अयंरविस्पष्टरश्मिः एवंगुरोरपिरश्मयः एवं त्रिग्रहादियोगेषुज्ञेयम् अथैषां रश्मीनांफलानांनिर्णयः निश्चयः गतिसंज्ञानुरूपेण गतीनांयाः संज्ञाः प्रागुक्ताः वक्रानुवक्रेत्यादयः तासां अनुरूपेण सादृश्येनस्मृतः यस्यग्रहस्य यावक्राद्यन्यतमागतिः तत्सादृश्येन वक्राद्यन्यतमंफलंरश्मीनांज्ञेयमित्याशयः ॥२१॥ एवंमिष्टकष्टरश्मींश्चोक्त्वा एषांप्रयोजनमाह ॥ इष्टेति ॥ ततः रश्म्युत्पादनानंतरं इष्टकष्टफल-

॥भाषा॥

रश्मिसंस्कारमें क्षेपक कहतेहैं-सूर्यके ५ चंद्रके ८ मंगलके ६ बुधके ९ गुरुके ८ शुक्रके ९ शनिके ४ यह ध्रुवांकोंसें पूर्वरीतिप्रमाणसें रश्मी लायके चतुर्गुणित करना. अपनी अपनी ग्रहकी रश्मि होवे ॥२०॥ द्विग्रहेति ॥ अब द्विग्रह त्रिग्रह चतुर्ग्रह योग ग्रहोंकी रश्मीके वहां वे ग्रह रश्मीमें ग्रहस्थितभावांक गुणन करके साठसें भाग लेना. लब्धजो दे ओ उच्च रश्मिफल आया. रश्मीका फल गतीके अनुसारसें कहना॥ २१॥ इष्टेति॥ इष्टकष्टफलमें रश्मीकूं गोमूत्रिकान्यायसें गुणनकर-

उच्चादिषुचपूर्वोक्तःपापोबलवशाद्भवेत् १९ च-
तुर्गुणाराजयोगेपूर्वन्यायेनबोधिताः पंचाष्टषण्न
वाष्टांकवेदाः स्यूरश्मयःस्वकाः २०

॥ टीका ॥

अथोच्चादीनांपापानांच रश्मीनाह ॥ उच्चेति ॥ उच्चादिषुनीचांतपूर्वोदित-नवस्थानेषुपापानांच रश्मीनाह उच्चादिषु उच्चत्रिकोणस्वर्क्षादिनीचांतन-वलक्षणेषुपूर्वोक्तोरश्मिः बोध्यः पापः पापग्रहरश्मिस्तु बलवशात् मूल-रश्मिः बलनारतम्येनन्यूनातिरिक्तोभवेत् १९ अथराजयोगकारक-ग्रहाणांध्रुवांकैः प्राग्वत् रश्मीनाह॥ चतुर्गुणाइति ॥ राजयोगे राजयोग-कारकग्रहे पूर्वन्यायेननीचोनमिति सप्तमश्लोकोक्तेन रश्मयोबोधिता ज्ञापिताः तत्रविशेषस्तु दिगित्यादिषष्ठश्लोकोक्त ध्रुवांकस्थानापन्नानन्य-ध्रुवांकान्रव्यादिसप्तग्रहविहितानाहोत्तरार्धेन पंच ५ रवेः अष्टौ ८ चंद्र-स्य षट् ६ भौमस्य नव ९ बुधस्य पुनरष्टौ ८ गुरोः अंकाः ९ शुक्रस्य वेदाः ४ शनेः इतिध्रुवांकैः प्राग्वद्रश्मीनानीय चतुर्गुणाः कार्याः स्वकाः त-त्तद्ग्रहाणांस्वीया रश्मयः स्युः ॥ २० ॥

॥ भाषा ॥

होवे. दरिद्र करनेवाले ग्रहकी रश्मीकूं राजयोग करनेवाले ग्रहके रश्मीमें न्यून करके जो राजयोग ग्रहकी शेषरहै वो स्पष्ट जानना. ऐसा शुभाशुभ शत्रुमित्रादिक ग्रहोंका एक राशिसंबंधसें ऊपर लिखेहुवे प्रकारसें कहना ॥ १८ ॥ चतुर्गुणाइति ॥ अब पहिले जो उच्चादिक नवस्थान कहेहै. उसमें पापग्रहोंकी रश्मीका नि-र्णय कहते है. उच्चादि नवस्थानोंमें रश्मि पहिले सरखि जानना. पापग्रह रश्मी-को बलवान्पना देखके कमजास्त करना ॥ १९ ॥ चतुर्गुणाइति ॥ अब पहिले जो रश्मिबल लायेहै. उसमें जो राजयोगकारक ग्रहकी रश्मि है. यहां विशेष कहतेहै. सोला राजयोग जो है वो पूर्वभागमें कहेहै. सो ये ग्रहोंके अब

परतोदशकंयावत्केवलंजठरायवै निःस्वाः कदाचिद्दासाश्चभारवाहाः कदाचन स्त्रीपुत्रगृहहीनाश्च वंशायोग्यक्रियारताः २४ एकादशेऽल्पपुत्राःस्वल्पधनाःस्त्रीविमानितामनुजाः

॥ टीका ॥

त्यादिपड्विंशतिश्लोकपर्यंतमशुभफलंविवृणोति ॥ एवंमाशुन्करीत्यासंस्कृतरश्मयः एकादि एकमारभ्ययावत्पंचकं पंचांकपर्यंतं भातानश्चेत्तद्रश्मिवंतोनराः दरिद्राः रंकाः अपिचभृशदुःखिताः अतिव्यथिताः संतः कुलोत्तमे सत्कुलेपि जाताः उत्पन्नाः नीचानांहीनानां दास्यतां दासस्यभावस्तां नीचभृत्यत्वमित्यर्थः यांताः यास्यंतीत्यर्थः किंपुनर्नीचजातीयानीचसेवकाः स्युरितिवक्तव्यम् ॥ ततःपरतोयावद्दशकं पंचप्रभृतिदशपर्यंतं भातान्श्चेत्तेपांजन्मजठरायवै केवलमुदरभरणार्थमेवज्ञेयम् तदेवविशदयति तेनिःस्वाः दरिद्राः अतःकदाचिद्दासाः कदाचिदुदरपोषणार्थेभारवाहका भारंवहंतिधरंतीतितथाभूताः स्त्रीपुत्रगृहहीनाः भार्यासुतवेश्मरहिताः चपरं वंशायोग्यक्रियारताः स्ववंशाऽनुचितकर्मसक्ताश्चभवेयुरिति ॥२४॥ एकादशे रश्मीसति मनुजाः अल्पपुत्राः अल्पसंतानाः अल्पधनाः अल्पद्रव्याः अतः स्त्रीविमानिताः अबलावमानयुताःसंतः तदा स्वल्पमपि निजंकुटुंबं कृच्छ्रेणैव कष्टेनैव बिभ्रति पालयंतीति ॥२५॥

॥ भाषा ॥

तक रश्मीका योग होवे तो वो मनुष्य दरिद्री दुःखी होवे. और जो कदी उत्तमकुलमें पैदा हुवा होवे तथापि नीचकी चाकरी करेगा ॥२३॥ उसे दसतक योग होवे तो केवल उदरपोषण करेगा कोइवखत द्रव्यहीन कोइवखत दास्यत्व कोइवखत भारवाहक होवेंगे स्त्रीपुत्रघरसेंहीन रहेंगे वंशाकुल जावे ऐसेकर्ममें रत रहेंगे ॥२४॥ ग्यारा रश्मीका योग होवे तो अल्पपुत्रवान् स्त्रियोंसें अपमानित होवेगा और अपने स्व-

निश्चितार्थमखिलंसमीक्ष्यतत्प्रस्तुतंतुसकलंवदेद्बु-
धः २२ एकादिपंचकंयावद्रश्मिद्राभृशदुःखिताः
नीचानांदास्यतांयाता अपिजाता कुलोत्तमे २३

॥ टीका ॥

संगुणानिष्टफलगुणितान् कष्टफलसंगुणितांश्च कृत्वा तानिष्टसंगुणितान्स-
र्वान्संयुतान्कृत्वा तान्कष्टसंगुणितांश्च सर्वान्पृथक्संयुतांश्च करान्राशीन्कृ-
त्वा अखिलंसर्वं ग्रहजंभावजं राजयोगपरिव्राड्योगादिजं नानाविधंशुभा-
ऽशुभफलं निश्चितार्थं निश्चितः अर्थः इष्टकष्टरश्मिसंयोगसमुद्भवंफलं
यस्मिन्कर्मणियथा तथा प्रस्तुतंतत्कालीनं पूर्णं समीक्ष्यावलोक्यविचार्य
त्यर्थः बुधोविद्वान्वदेत् कथयेदिति ॥ अथेष्टकष्टबलगुणितरश्म्युदाहरणम्॥
यथा सूर्येष्टबलं ०।२८।२५ सूर्यरश्मयः ५।४०।२३ इमेगोमूत्रिकारीत्या
गुणितांकाः ०।०।०।१४०।११२०।६४४।१२५।१०००।५७५। जातं
अस्यांसंख्यायांपष्ट्युद्धृतायां २।४१।१२ अयंसूर्येष्टरश्मिः एवंसूर्यकष्टब-
लं ०।३१।३५ एतेसूर्यरश्मयः ५।४०।२३ इमेगोमूत्रिकारीत्यागुणितां-
काः ।०।०।०।१५५।१२४०।७१३।१७५।१४००।८०५ जातं अस्यांसं-
ख्यायांपष्ट्युद्धृतायां २।५९।१० अयंसूर्यकष्टरश्मिः एवंसर्वत्रानुक्तस्थले-
पुबोध्यम् ॥२२॥ अथफलंवदेदित्युक्तं तदेकादिरश्मिसंख्यानारतम्येन स्फुट-
यति ॥ त्रयोविंशतिश्लोकमारभ्यद्विचत्वारिंशच्छ्लोकपर्यन्तम् ॥ नरस्तुएकादि-

| अथेष्टबलचक्रमाह. | | | | | | | | अथकष्टबलरश्मिचक्रं | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| सू | चं | मं | बु | गु | शु | श | रा | सू | चं | मं | बु | गु | शु | श | रा |
| २ | ० | १ | ० | ० | ५ | १ | ११ | २ | १ | ४ | १ | ० | १ | ० | १० |
| ४१ | २८ | ५६ | ३२ | ४६ | १५ | ४५ | ३० | ५८ | ५२ | ४८ | १० | ३५ | ३५ | ४० | ४५ |
| १२ | १८ | १२ | ३१ | ५० | ४४ | ५३ | २० | १० | ५१ | ३३ | ० | ३६ | ४७ | ४० | ४६ |

॥ भाषा ॥

के जो फल आवे उसकूं इष्टरश्मी कष्टरश्मि होवे पीछे उसउपरसें शुभाशुभ फल कहना
॥२२॥ एकादीत्यादिपद्यविंशतिश्लोकपर्यंतम् ॥ अब रश्मीका फल कहतेहैं. एकसें पांच

आविंशतेः कुलेशानाबहुभृत्याः कुटुंबिनः कीर्ति मंतश्चपूर्णाश्वस्वजनेनचषोडशात् २९ एकविंश-तिविख्यातः पंचाशज्जनपोषकः दानशीलः कृपा युक्तो द्वाविंशेलोभसंयुतः ३० धनवानल्परिपुश्च प्रभुःस्वल्पगुणोभवेत् त्रयोविंशेतुमुख्यश्चविद्या हीनोधनीसुखी ३१

॥ टीका॥

अथषोडशरश्मिमारभ्यविंशतिरश्मिपर्यंतंफलानिकथयति आविंशतेरिति षोडशाद्रश्मेः सकाशात् आविंशतेः विंशतिरश्मिपर्यंतंजनाः कुलेशानाः कु-लपालका बहुभृत्याः मजुरसेवकाः कुटुंबिनः कुटुंबवंतः कीर्तिमंतश्च स्व जनेन पूर्णाश्वभवेयुरिति ॥२९॥ एकेत्यादित्रयस्त्रिंशत्पर्यंतं फलान्याह॥ एकविंशतिविख्यातः एकविंशतिसंख्याप्रसिद्धोरश्मिश्चेत् नरः पंचाश-ज्जनपोषकः शतार्धनरपालकः चपरं दानशीलः वितरणस्वभावः कृ-पायुक्तोदयालुः स्यात् अथद्वाविंशे रश्मौ लोभसंयुतः अतिलुब्धः॥३०॥ धनवान्संपन्नः अल्परिपुः अल्पशत्रुः प्रभुः स्वामी स्वल्पगुणोभवेदिति मध्यमं शुभाशुभमिश्रफलमुक्तं त्रयोविंशेरश्मौतु मुख्यः ज्ञातिश्रे-

॥ भाषा॥

का योग होवे तो सत्तावीसवे श्लोकका फल जो है वो फलसहित होयके और अपने वंशमें मुख्य होवेगा. धनी होवेगा ऐसा पराशर मुनि कहतेहैं ॥ २८॥ सोलासे लेके बीसतक रश्मीयोग होवेतो कुलकूं पालनेकरनेवाले घोहोत सेवक घोहोत कुटुंब जिनका और कीर्तिमान् अपने संबंधि लोकोंसे पूर्ण होवेंगे॥२९॥ एकवीसरश्मीका योग होवे तो पचासमनुष्यका पालन करेगा. दानशील दयावंत होवेगा और बावीस रश्मीका योग होवेतो लोभी होवेगा और धनवान् शत्रुहीन समर्थ अल्पगुणी होवेगा॥३०॥ तेवीसरश्मीका योग होवे तो विद्याहीन होवे

विभ्रनिकृच्छ्रेणनिजंस्वल्पंचकुटुंबमेवतदा २५ द्वादशेनिर्धनामूर्खाधूर्ताः सत्वविनाशकाः त्रयोदशेच चोराःस्युर्निर्धनाः कुलपांसनाः २६ विद्वांश्चतुर्दशेधर्मेरतोमर्षीधनार्जकः कुटुंबभरणेसक्तःकुलयोग्यक्रियोभवेत् २७ रश्मिभिःपंचदशभिरेवंगुणयुनोऽपिसन् स्ववंशमुख्योधनवानित्याहभगवान्मुनिः २८

॥ टीका ॥

अथद्वादशपरिमिते रश्मौजाताः निर्धनादरिद्राः मूर्खाबुद्धिहीनाः धूर्ताः परवंचकाः सत्वविनाशकाः सत्वोभावः सत्वं उत्तमत्वंतस्यनाशकाः गुणाः उत्तमत्वत्यागशीलाइत्यर्थः अथत्रयोदशमितेरश्मौ जनाः चोराः तस्कराः निर्धनाःस्युः कुलपांसनाः कुलाधमाश्चस्युरिति ॥२६॥ अथविद्वानित्यादित्रयस्त्रिंशच्छ्लोकावधि रश्मिफलंकथयति तत्रविद्वानिति ॥ रश्मिभिरितिच ॥ चतुर्दशपरिमितेरश्मौ विद्वाञ्ज्ञाता धर्मे पुण्यकर्मणि रतः तथा मर्षी मर्षःसहनशक्तिः तद्वान् धनार्जकः धनसंपादकः कुटुंबभरणेसक्तः कुटुंबपालनपरः कुलयोग्यक्रियः स्ववंशोचिताचरणशीलश्चभवेत् ॥२७॥ अथपंचदशपरिमितेरश्मिभिस्तु एवंगुणयुतोऽपिसन् पूर्वोक्तफलसंपन्नोऽपिसन् स्ववंशमुख्यः स्वकुलश्रेष्ठः धनवांश्चेति भगवान्पराशरमुनिराहेत्यन्वयः ॥२८॥

॥ भाषा ॥

स्व कुटुंबकाभी पालन बडे कष्टसें करेगा ॥२५॥ बारारश्मीका योग होवे तो मनुष्य निर्धन मूर्ख धूर्त सत्वहीन होवेंगे. तेरा रश्मीका योग होवे तो चोर निर्धन कुलपांसक होवेंगे ॥२६॥ चौदा रश्मीका योग होवे तो वोमनुष्य धर्मी क्रोध रहित रहै. द्रव्योपार्जन कर्मनेमें तत्पर रहै कुटुंबपालनकरे. कुलयोग्यकर्म करे. ॥२७॥ पंधरा रश्मी.

नरवामूर्च्छाजिनास्तत्वं त्रिंशद्द्वात्रिंशदेवच ३४
पंचाशच्चैवषष्टिश्च शतंचैव सुतादयः

॥ टीका ॥

शेवाहिनीपतिरितिद्वात्रिंशद्रश्मिपर्यंतं प्राक्सामान्यफलान्युक्तानि तावत्संख्यारश्मिपर्यंतं नवसंख्याकसंततिर्ध्वन्यते साच एकरश्मितो द्वात्रिंशद्रश्मिपर्यंतं अनुपाततोज्ञेया द्वात्रिंशद्रश्मिषु नवसंततिश्चेत्त न्यूनामुक रश्मिषु कियती संततिरिति ततः परं क्रमप्राप्तद्वात्रिंशद्रश्मीनामग्रेभागे त्रयस्त्रिंशद्रश्मिषु सत्सुपंक्तिः दशसंख्याःसुतादयः चतुस्त्रिंशद्रश्मिषु सूर्याः द्वादशसंततिः पंचत्रिंशद्रश्मिषु तिथयः पंचदशसंततिः षट्त्रिंशद्रश्मिषु नृपाः षोडशएवं ३७ रश्मिषु भूयःपुनः नाम प्रागुक्ताः नृपाएव ३८ रश्मिषु अत्यष्टिः सप्तदश ३९ रश्मिषु धृतिः अष्टादश ४० रश्मिषु धृतिः अष्टादशैव ४१ रश्मिषु नरवाः विंशतिः ४२ मूर्छाः एकविंशतिः ४३ रश्मिषु जिनाः चतुर्विंशतिः ४४ रश्मिषु तत्वं पंचविंशतिः ४५ रश्मिषु त्रिंशत् संततिः ४६ रश्मिषु द्वात्रिंशत् ४७ रश्मिषुपंचाशत् ४८ रश्मिषु षष्टिः ४९ रश्मिषुशतं सुतादयः अग्रे अनुक्तत्वात् शतसंख्यातोऽधिकाऽसंख्यानाज्ञेयेत्याशयः ॥३४॥

॥ भाषा ॥

पुत्रादिक होवे चौतीस रश्मियोग होवे तो बारा संतान होवे पयतीस रश्मीसें पंधरा संतान होवे. छत्तीश रश्मीसें सोला संतान होवे सडतीस रश्मीसें सोला संतान होवे. अडतीस रश्मीसें सतरा संतान होवे ओगनचालीस रश्मीसें अठरा संतान होवे. चालीस रश्मीसें अठरा संतान होवे. एकचालीस रश्मी होवे तो वीस संतान होवे. बियालीस रश्मी होवेतो एकइस संतान होवे. त्रियालीस रश्मि होवेतो चोवीस संतान होवे. चौंवालीस रश्मि होवेतो पचीस सं-

आत्रिंशत्परतःश्रीमान्सर्वसत्वसमन्वितः राजप्रियश्चचंडश्चजनैश्च बहुभिर्वृतः ३२ एकत्रिंशेचसचिवोद्वात्रिंशेवाहिनीपतिः पूर्वभागेसमुद्दिष्टफलानिपरतोविदुः ३३

॥ टीका ॥

ष्टः विद्याविहीनः सामान्यविद्यावान् धनी द्रव्यवान् सुखीसौख्यसंपन्नश्चभवेत् ॥ ३१ ॥ अथ चतुर्विंशति रश्मिमारभ्य परतः अग्रे आत्रिंशत् त्रिंशद्रश्मिपर्यंतं श्रीमान् लक्ष्मीवान् सर्वसत्वसमन्वितः अश्वगोगजादिप्राणियुक्तः राजप्रियः नृपप्रीतिपात्रः चंडः उग्रस्वभावः चपरं बहुभिः असंख्यातैर्जनैर्वेष्टितः ॥ ३२॥ एकत्रिंशेचरश्मौ सचिवः मंत्री प्रधानइत्यर्थः द्वात्रिंशत्परिमिते रश्मौ वाहिनीपतिः सेनारक्षकः अतः परतः त्रयस्त्रिंशद्रश्मिप्रभृतिफलानि पूर्वभागे समुद्दिष्टफलानि विदुः बुबुधुः ज्योतिषिकाइतिशेषः एवं एकरश्मिमारभ्ययावत्पट्पंचाशद्रश्मिसमागमे सामान्यतः शुभाशुभफलानिकथितानि ज्ञेयानि विशेषतस्तु अग्रेवक्ष्यतीति ॥ ३३ ॥ अथारंभतोयावद्रश्मिसमापनंसंततिविचारमाह पंक्तिरित्यादिसार्धश्लोकेन ॥ पंक्तिः दश द्वात्रिं

॥ भाषा ॥

तथापि सब ठिकाने प्राधान्यताकूं पावे धनवान सुखी होवे ॥ ३१॥ चौबीसमें लेके तीस पर्यंत रश्मीका योग होवेतो लक्ष्मीवान सर्व सत्वयुक्त होवे, राजप्रिय प्रतापी और बोहोत लोक उसकेसंग रहा करे ॥ ३२ ॥ एकत्रिंश रश्मीका योग होवे तो प्रधानपदवीकूं पावे. बत्तीस रश्मी होवे तो सेनापति होवे. यहांसे आगे जो रश्मीका फल है सो पूर्वभागमें कहाहै ॥ ३३ ॥ अब रश्मि क्रमसें संतानविचार कहतेहैं. तेहेतीस रश्मीका योग होवे तो दश

अतऊर्ध्वंनृपाः क्षात्रधर्मिणः क्षत्रियोऽथवा भू
हिञ्यर्धीपुषट्सप्तभूभृज्जनपदाधिपाः ३८

॥ टीका ॥

र्ध्वंषट्त्रिंशदंशादारभ्य क्रमादेशानामाधिपत्ये संख्याश्चत्वारिंशद्रश्मिपर्यंतं पंचविंशत्यादयः स्युः एतदुक्तंभवति षट्त्रिंशद्रश्मिषु पंचविंशतिः २५ सप्तत्रिंशद्रश्मिषु षड्विंशतिः २६ अष्टत्रिंशद्रश्मिषु भानि २७ एकोनचत्वारिंशद्रश्मिषु त्रिंशत् ३० चत्वारिंशद्रश्मिषु षट्त्रिंशत् ३६ एवंदेशानामाधिपत्यंज्ञेयमिति ॥ ३७॥ अथरश्मीनां राजफलमाह॥ अतइति ॥ अतऊर्ध्वंचत्वारिंशद्रश्म्यूर्ध्वं क्षत्रियः जात्येकवचनं क्षत्रियजातीयाः नृपाः राजानो भवेयुः अथच अन्यजातीयाश्चत्वारिंशदधिकरश्मिवंतश्चेत् क्षात्रधर्मिणः क्षत्रधर्मवंतः संतः नृपाः स्युः तत्क्रममाह एकचत्वारिंशद्रश्मिमारभ्य सप्तचत्वारिंशद्रश्मिपर्यन्तम् क्रमात् भू१ हि२ त्र्य३ र्धी४ पु५ षट्६ सप्त ७ संख्यानां भूभृतां राज्ञां येजनपदाः देशाः तेषामधिपाः स्वामिनोभवेयुः एतदुक्तंभवति एकचत्वारिंशद्रश्मिषु सत्सु भूपसंख्याक भूभृज्जनपदानां अधिपः स्यात् तथा द्विचत्वारिंशद्रश्मिषु द्वि२संख्याक नृपदेशपालकः एवंक्रमेण त्रिचत्वारिंश४३चतुश्चत्वारिंशत् ४४ पंचचत्वारिंशत् ४५ षट्चत्वारिंशत् ४६ सप्तचत्वारिंशत् ४७ रश्मिषु क्रमात् त्र्य ३

॥ भाषा ॥

होवे तो पच्चीस गावका अधिपति होवे. सइतीस रश्मीका योग होवे तो छबीस गावका अधिपति होवे. अडतीस रश्मीका योग होवे तो सत्ताईस गावका अधिपति होवे. ओगनचालीस रश्मीका योग होवे तो तीस गावका अधिपति होवे. चालीस रश्मीका योग होवे तो छत्तीसगावका अधिपति होवे ॥ ३७॥ अतइति ॥ एकचालीस रश्मीका योग होवे तो एकदेशका राज्य करे. बेयालीस रश्मीका योग होवे तो दोयदेशका राज्य करे. त्रियालीस रश्मीका योग होवे तो तीनदेशका राज्य करे.

आरभ्यविश्वसंख्यायाः क्रमात्स्वजनपोषकः ३५
अतऊर्ध्वंनृपे श्रांत आपंचत्रिंशतः क्रमात् शतपं-
चकमारभ्य सहस्रावधिपोषकाः ३६ अतऊर्ध्वं
तुदेशानांसंख्याः स्युः पंचविंशतिः षड्विंशति-
श्चभानिस्युस्त्रिंशत्षट्त्रिंशदेवच ३७

॥ टीका ॥

अथैश्वर्यविचारो रश्मिषुकथ्यते ॥ आरभ्येत्यर्धेन ॥ तत्रमाक्सर्वसामान्यविचारे त्रयोदशरश्मिपर्यंतमशुभमेवफलमुक्तं तावद्रश्मिपर्यंतं दारिद्र्यदुःखाद्यशुभफलत्वादैश्वर्याभावएव ततः विश्वसंख्यायाः पुरतः चतुर्दशरश्मीनारभ्य सामान्यफलनिर्णीत द्वात्रिंशद्रश्मिसंख्यापर्यन्तं क्रमाद्रश्म्यंकसंख्यापरिमितस्वजनपोषकाः जनाज्ञेयाः॥३५॥ अथद्वात्रिंशद्रश्म्यूर्ध्वं भाग्यद्रश्मिसंख्यांसंत्यज्य बहुपोषकत्वं कथयति ॥ अतऊर्ध्वमिति ॥ अतऊर्ध्वं द्वात्रिंशद्रश्म्यूर्ध्वं आपंचत्रिंशतः पंचत्रिंशद्रश्मिपर्यंतं शतपंचकं पंचशतान्यारभ्य सहस्रावधि सहस्रं अवधिर्यस्मिन्कर्मणि तत्तथा पोषकाः सहस्रपर्यंतं पालका इत्यर्थः कयारीत्यापोषकास्तत्साधनंकथयति नृपेराज्ञि राजकर्मणीत्यर्थः श्रांतः जातश्रमः राजाधिकारश्रमेणेतियावत्क्रमात्त्रयस्त्रिंशच्चतुस्त्रिंशत्पंचत्रिंशद्रश्मिषु फलंज्ञेयमिति३६
अथपंचत्रिंशद्रश्मिभ्यःपरतोदेशाधिपत्यंकथयति॥अतऊर्ध्वमिति॥ अतऊ-

॥ भाषा ॥

तान होवे ४५ रश्मी होवे तो ३० संतान होवे. ४६ रश्मी होवे तो ३२ संतान होवे. ४७ रश्मि होवे तो ५० संतान होवे. ४८ रश्मि होवे तो साठ संतान होवे. आगे पचासरश्मि होवे ता सौ संतान होवे. आगे कहा नहीं है यास्ते इससे अधिकरश्मि होवे तो १०० सें अधिक संतानराद्दि जानना ३४।३५॥ अथरश्मीके मतसें बहुपोषकयोग कहतेहैं. ३२ रश्मीकायोगमें ४५ पर्यंत ५०० सोंसें १००० पर्यंत मनुष्यका पोषण करेगा ॥३६॥ छत्तीश रश्मीका योग

शूद्रादयः कलौराजधर्मिणोम्लेच्छधर्मिणः वि-
प्राश्चेच्छ्रीधनैर्युक्तायज्ञकर्मक्रियारताः ४१

॥ टीका ॥

णिताः कृतगुणाकाराः येप्रकरणप्राप्तारश्मयः तेषष्टिभाजिताः षष्टिभिः भक्ताः कार्याः एवंकृतेयेलब्ध्यांकाः तेएव नरादीनां नरामनुष्या आदयोयेषां ते अश्वगजगोप्रभृतिपोष्याः तेषां स्पष्टाः स्फुटाः संख्याः स्युरिति. एवंप्रकारकनरादिज्ञानं पद्मभूर्ब्रह्माऽऽहउक्तवानिति ॥४०॥ एवमुक्तराजयोगाः कलौशूद्रादीनामेवेत्याह ॥शूद्रादयइति ॥ कलौकलियुगेशूद्रादयोहीनजातीयाः म्लेच्छधर्मिणः म्लेच्छानांधर्मोऽस्त्येषामितितेयवनाश्चराजधर्मिणः राज्यकर्तारः स्युः नब्राह्मणादयः अर्थात् रश्म्युक्तराजयोगः शूद्रादीनां म्लेच्छानांचज्ञातव्यइतिभावः ननु अष्टचत्वारिंशत्प्रभृतिसंख्याकरश्मिसमागमे ब्राह्मणादीनां फलाभावएववेत्याशंकायामाह राजधर्मसूचकसंख्याकरश्मिमंतोविप्राश्चेच्छ्रीधनैर्युक्ताः श्रीमंतः धनवंतश्चस्युः अपिचराजयोगघटकरश्मियोगात् यज्ञकर्मक्रियारताःस्युः तेनकिंराज्यप्रापक क्रियाचरणेन उत्तरजन्मनिस्वर्गराज्यभोक्तारः स्युरिति ध्वनितार्थः ज्योतिष्टोमेनस्वर्गकामोयजेतेतिश्रुतिप्रामाण्यात्स्वर्गराज्यप्राप्तिकामस्य यस्यसाधननिबंधनत्वादितिदिक् ननुक्षत्रियवैश्ययोराजयोगःस्यान्नवेतिचेन्महर्षिणा तत्फलानुक्त्या शुकभागवतोक्त्याद्यतज्जातिद्वयस्य कलौराज्यसत्तानिर्वाहकत्वाभावएवसूचितइतिमंतव्यम् ॥ ४१ ॥

॥ भाषा ॥

अंक है उससें पूर्वयोगकूं गुणना. गोमूत्रिकान्यायसें पीछे साठसें भाग लेना.जो लब्धआवे वोसंख्या नर अश्व गजगौ आदिपोष्यवर्गकी जानना इतनेजीवोंका पालन करेगा. ऐसा जानना.ऐसा ब्रह्माजीनें कह्याहै ॥५०॥ शूद्रादयइति॥ येजो पूर्व राजयोग कहेहैं वेकलियुगमें शूद्रादिक म्लेच्छधर्मियोंके जानना. और जो

पंचाशद्रश्मिसंयोगेसम्राट्स्यादनुपाततः अत
ऊर्ध्वंतुदेवेन्द्रतुल्याः स्युरितिपद्मभूः ३९ उच्चचेष्टो
त्थयोगार्धगुणिताःपष्टिभाजिताः नरादीनांतुसं-
ख्याःस्युः स्पष्टाइत्याहपद्मभूः ४०

॥ टीका ॥

ध्री४पु५पद्६सप्त७ भूभृज्जनपदानामाधिपत्यंज्ञेयमिति ॥३८॥ अथ सप्तचत्वारिंशद्रश्म्यूर्ध्वं सार्वभौमपदाप्तिमाह ॥पंचाशदित्यर्धेन॥ पंचाशत्संख्याकरश्मिषु सम्राट् सम्यक् राजतेऽसौ तथा सार्वभौमइत्यर्थः स्यात् ननुमध्यावशिष्टरश्मिद्वयस्यकागतिस्तत्राह अनुपाततः ५० रश्मिषुपूर्णं साम्राज्यंचेत् एकोनेषु ४९ द्व्यूनेषु ४८ कियत्साम्राज्यमितित्रैराशिकेन तद्गुण्यंज्ञेयमितिविवेकः ॥ अथपंचाशदूर्ध्वंसाक्षादिंद्रतुल्यत्वमेवाह ॥ अतइति ॥ अतऊर्ध्वं पंचाशद्रश्म्यूर्ध्वं रश्मिसमागमेतु देवेंद्रतुल्याः भुविसाक्षादिंद्रतुल्याएव तेनराः स्युरिति पद्मभूर्भगवा आहेति शेषः ॥ ३९ ॥ अथनरादिपोष्यसंख्यामाह ॥ उच्चेति ॥ उच्चचेष्टोत्थयोगार्धगुणिताः रश्मयइत्यनुवृत्तं उच्चं उच्चबलं चेष्टा चेष्टाबलंच उच्चचेष्टे ताभ्यांउत्थः संभूतः योयोगः मिश्रणं तस्ययदर्धं द्विभागोपलब्धिः तेनगु-

॥भाषा॥

सैंतालीस रश्मियोग होवें तो चारदेशका राज्य करे. पैंतालीस रश्मीका योग होवे तो पांचदेशका राज्य करे. छयालीस रश्मीका योग होवेतो छयदेशका राज्य करे. सैंतालीस रश्मीका योग होवेतो सातदेशका राज्य करे.॥३८॥ अतइति ॥ पचास रश्मीका योग होवे तो सार्वभौम राजा होवे. अडतालीस रश्मीका और उणंचास रश्मीका फल वोई जानना. पचासके ऊपर रश्मीका योग होवेतो इंद्रके तुल्य होवे ऐसा ब्रह्माजीने कहाहै.॥३९॥ उच्चेति ॥ अबरश्मीमें विशेषफल कहतेहैं उच्चरश्मी चेष्टरश्मीका योग करके उसका अर्ध करणा पीछे वो अर्ध जो

पूर्वेभागेसमुद्दिष्टभाग्यकर्मफलानितु ४३ अनुपातेनविज्ञाययोजयेद्वर्जयेद्बुधः स्थानवीर्याधिके देशेमुख्यः स्यादनुपाततः ४४ दिग्बलेविजयश्चेष्टावीर्येतुमसुताभवेत् कालवीर्याधिकेकार्येसदोत्साहीतथायने ४५ स्ववंशोत्कर्षतास्वोच्चेनैसर्गे जातिनिर्णयः

॥ टीका ॥

धिनिर्णयेन्निश्चिनुयात् ॥४२॥ अथपूर्वभागोक्तभाग्यादिफलानांव्यवस्थामाह ॥पूर्वेत्यादिना अन्वित्यादिनाच॥ पूर्वभागे समुद्दिष्टभाग्यकर्मफलानि सम्यगुद्दिष्टानिकथितानि यानिभाग्यफलानि कर्मफलानिच तानितु अनुपातेन शुभानि विज्ञाययोजयेत् मेलयेत् अनुपातेनअशुभानिविज्ञाय वर्जयेत् घटयेत् अर्थात् एतत्संस्कारनिर्णीतं सिद्धंफलमितिविजानीयादित्यभिप्रायः ॥४३॥ अथैवमेव अनुपाततः षड्बलव्यवस्थानमाह स्थानेत्यादिश्लोकद्वयेन ॥ अत्रअनुपाततः सप्तबलमध्येऽधिकावशिष्टस्य स्थानादिकस्य पृथक् सप्तविधंफलंविशदयति तदित्थं स्थानबलं दिग्बला चेष्टाबलात्कालबलादयनबलादुच्चबलान्नैसर्गिकबलाच्च अनुपाततः पृथक् संस्कृत्य सर्वेभ्योऽप्यधिके स्थानबले देशे मुख्यः स्यादितिस्थानबलाधि-

॥ भाषा ॥

रश्मियोगका फल मिलानेसें यथार्थ मिलेगा ॥४२॥ पूर्वेत्यादिनाऽन्वित्यादिनाच॥ पहिले भागमें जो भाग्यभाव कर्मभावका फल कहाहै. उसका शुभाशुभ यहांके रश्मि अनुपातसें शुभाशुभ फलकुं जोडना घटाना ॥४३॥ स्थानेत्यादिश्लोकद्वयेन॥ अब सप्तबलमें जो अधिक बल होवे उससें उच्चरश्मीका फल कहतेहै. स्थानबल १ दिग्बल २ चेष्टाबल ३ कालबल ४ अयनबल ५ उच्चबल ६ नैसर्गिकबल ७ यह सातोंका फल कहतेहै. स्थानबल अधिक होवेतो देशमें मुख्य होवे ॥ दिग्बल अधिक

योगरश्मिसमायोगेतदानींतत्फलंविदुः नाभ-
सादिषुयोगेषुराजयोगेस्थितंतुतत् ४२ योगक
र्तारमारभ्यबलिनंचविनिर्णयेत्

॥ टीका ॥

ननु रश्मिभिरेव राज्यफलावगमे भाग्येशात्कारकलग्नेपंचमे सप्तमेपिवा राजयोगप्रदातारोगजवाजिधनैरपीत्यादि ग्रहयोगादिना उक्तराजयोगस्य वैफल्यप्रसंगः स्यादितिचेन्न किंतु उभयमपिकारणतयाज्ञेयमित्याह योगेति ॥ योगरश्मिसमायोगेसति योगाः स्थानकारकादिग्रहसमुद्भवायोगाः अष्टचत्वारिंशदादिसंख्याकराजयोगसूचक रश्मयश्च योगरश्मयः तेषांसमायोगे संप्राप्तौसत्यां तदानीमेव तत्फलं उक्तरश्मिराजयोगफलं विदुः बुबुधुः कथयामासुरित्यर्थः आचार्याइतिशेषः अथात् नकेवलं उक्तग्रहयोगैः नचापिकेवलमुक्तरश्मिभिरेव किंतु राजयोगकारकग्रहयोगरश्मिसमागमेनैव राजयोगफलंज्ञेयमितिभावः ॥ अथनाभसादियोगेषु अनेकग्रहोपलब्धौ आरंभादिक्रमेणयोगकर्तृन्विचिनोति ॥नाभसादिष्वितिश्लोकार्धकाभ्याम ॥ नाभसादिषु नाभसः आदियेषांते आश्रयादयःरज्ज्वादयश्च तेषु राजयोगेचयत्स्थितं उक्तफलंतत्तु योगकारकानेकग्रहेषु बलिनमधिकबलवंतं ग्रहं योगे नाभसादौ राजयोगेच कर्तारंमुख्यं कारकं विज्ञाय तंपुर्णापूर्णहीनाहीनरश्मिमंतं विचार्यतादृशतारतम्येन फलं

॥ भाषा ॥

यह राजयोग और उत्तमरश्मियोग जो ब्राह्मणके होवे तो यज्ञयागकर्म निष्ठ होयके उसपुण्यप्रतापमें स्वर्गराज्यभोगेगे ऐसा जानना॥ ४१॥नाभसादिष्विति श्लोकार्धकाभ्याम् ॥ पूर्वजो राजयोग कहेहैं और रश्मियोगका फल कह्याहै परंतु केवल राजयोगसें राज्यफलप्राप्ति नहीं होनेकी किंतु राजयोग होयके बाद रश्मियोग राज्यफलदायक होवेंगा तब उक्तफल यथार्थ होवेगा और नाभसादिक जो योगहैं उनमें

मूलास्थानाधिके स्थाने सभावः शुभइष्यते न्यू-
नेऽशुभः समेमातृपितृबंधून्वदिष्यते १

॥ टीका ॥

रचिनेश्वरतुष्टये ॥ १ ॥ इतिश्रीमद्वृहत्पाराशरहोराशास्त्रेश्रीमद्ध्यङ्कुन्वयवेदशास्त्रा० विद्या विद्योतिनदिग्दिङ्मंडलजवाशंकरसूनुज्योतिर्विन् श्रीधरेणविरचितायां सुबोधिनीटीकायांचतुर्थोऽध्यायः ॥ ४ ॥ ॥
पंचमेऽत्रपराशास्मिन्नध्याये ग्रहजंफलं तथारेखावर्गणादिफलान्यपि सुविस्तरम् ॥ १ ॥ अथश्रीमत्पराशरमहर्षिर्भगवानस्मिन्पंचमेध्याये भावगत ग्रहविचारेणरेखास्थानादिविचारेण शुभाशुभफलान्युपदिशति तं- त्रादौ रेखाविचारेण भावविचारःक्रियते ॥ मूलेति ॥ यस्मिन्कस्मिंश्चिद्भावे मूलस्थानाधिके मूलस्थानानि द्वादशभावानांप्रथमाध्यायेउक्तानि ननु स्वायुस्त्रिरिष्फेषुपंचकामेसुरवेर्णवाइत्यादीनि तेभ्यः अधिके बहुले स्थाने रेखायांसतिसप्तमी सभावः शुभः शुभफलकइष्यते पूर्वैरित्यध्याहारः अथचन्यूने उक्तमूलस्थानतोऽल्पेस्थानेसति सभावःअशुभः तथा समे उक्तपरिमितेस्थाने सति सभावः समइतिशेषः एवंभावानां शुभाशुभसमत्वंज्ञात्वा तदनुरूपं मातृपितृबंधून् मातृपितृसंबंधादिविषयकमित्यर्थः तत्तद्भावविहितफलं वदिष्यते वद्धातोरात्मनेपदेलृङ्रूपमार्षः प्रयोगश्चांद्रेणचा उभयपदीति ॥ १ ॥

॥ भाषा ॥

कहेना ॥ ४७ ॥ ॥ इतिश्रीमद्वृहत्पाराशरहोराशास्त्रे श्रीमद्ध्यङ्कुन्वयवेदशास्त्राध्यनव० विद्या वि० दिग्दिङ्मंडलजटाशंकरसूनुज्योतिर्विच्छ्रीधरेणविरचितायां भाषाटीकायांचतुर्थोऽध्यायः ॥ ४ ॥ मूलेति ॥ अबइस अध्यायमें अष्टकवर्गका फल कहनेहैं जिसग्रहकी जोभावमें रेखा कही है-उससें रेखा जादा होवे तो शुभफल जानना कम होवेतो अशुभफल जानना समकूं समफल जानना ॥ १ ॥

राशीनांचग्रहाणांचस्वभावाः कथितामया ४६
येचात्रयोजनीयाश्चदैवज्ञेनसुबुद्धिना ४७ इतिश्री
बृहत्पाराशरहोरायामुत्तरार्धेरश्मीष्टकष्टादिशासने
चतुर्थोध्यायः ४ श्रीगणेशार्पणमस्तु

॥ टीका ॥

क्यफलम् ॥ एवं स्थानचेष्टादिग्बलैक्यं प्राग्वदनुपाततः पृथक् संस्कृत्य सर्वेभ्योप्यधिकतयावशिष्टेदिग्बलेसति विजयः फलंज्ञेयं एवमेव सर्वबलेभ्यो ऽनुपाततः चेष्टावीर्ये चेष्टाख्यबलेसति प्रभुनाम भुलं भवेत् एवंप्रागुक्तरीत्या कालवीर्याधिके सर्वबलेभ्यः कालबले अधिके सति कार्ये कर्तव्यकर्मणि सदासर्वदा उत्साही भवेत् तथापूर्वोक्तमेवफलं अयनेअयनबलेऽपि ज्ञेयं नभिन्नं अथस्तोच्चे उच्चबलेऽधिकेसति स्ववंशोत्कर्षता निजकुलोन्नतताज्ञेया तथानैसर्गे निसर्गबलाधिक्ये जातिनिर्णयः स्वजातिविशांपत्वंनिश्चयोबोध्यइति ॥ ४४ ॥ ४५ ॥ एवंबलाधिक्य फलमुक्त्वाकथिताऽर्थमुपसंहारेणाध्यायंसमापयति ॥ राशीनामित्यर्धकद्वयेन ॥ मयासंहिताकारेण अत्रसंहितायां येकेचन राशीनां मेषादीना ग्रहाणां रव्यादीनांच स्वभावाः स्वानांभावाः याथातथ्येनवर्तमानत्वमित्यर्थः कथितावर्णिताः तेदैवज्ञेन ज्योतिर्विदा सुबुद्धिना अतिकुशलप्रज्ञेन योजनीयाः कथनीयाइत्यर्थः ॥ ४६ ॥ ४७ ॥ श्रीमत्पराशरोक्तायांसंहितायापरार्धके टीकाचतुर्थाध्यायस्य

॥ भाषा ॥

होवेतो विजयी होवे चेष्टाबल अधिक होवतो प्रभुनाई भोगवे कालबल अधिक होवेतो सर्वकार्यमें कुशल होवे अयनबल अधिक होवेतो सर्वकाल आनंदमें रहे ॥ ४५ ॥ राशीनामित्यर्धकद्वयेन ॥ उच्चबल अधिक होवेतो अपने वंशमें मुख्यत्व पावे. नैसर्गबल अधिक होवतो अपना स्वजातिधर्मका विशेष प्रतिपादन करे ॥ ४६ ॥ यह संहितोत्तरभागमें राशीका और ग्रहोंका स्वभाव मैंने कहा सो सदा जैसा चाहिये वैसा

सूर्येणवेश्मस्थानेनपितुर्मृतिपदंवदेत् चंद्रेणपंच-
मेनैवमातुर्मृतिपदंवदेत् ५ सूर्यचंद्रेसपापेचत-
योश्चमरणंभवेत् तयोरंतरलिप्ताश्चशतद्वयविभा
जिताः ६ अब्दादयोऽशुभस्यापिदृष्ट्यासंगुणये
त्ततः षष्ट्याविभज्याब्दाद्याश्चतस्मात्पापेचलो-
त्तरे ७

॥ टीका ॥

इष्टानिष्टेवदेदितिशेषः एवमेव अन्येषांमूर्तिसहजादिभावानां सर्वेषामपि स्थानादिविचारेण शुभाशुभंस्वनामसदृशंभावनामानुरूपंफलंवदेत् ए-तदुक्तंभवति मूर्तेरिरयादिविचारेणदेहसौंदर्योच्चत्वपुष्टत्यादिविषयेइ ष्टानिष्टंफलंवदेत् एवमेव सहजादिभावेषु बंध्वादिविषये इष्टानिष्टंरेखा-दिविचारेणवदेदिति ॥४॥ अथपितृमात्ररिष्टविचारमाह ॥ सूर्येणेति सूर्येणतथा वेश्मस्थानेनचतुर्थभावेनच पितुःमृतिपदंमृत्युसमयंचदेत्क-थयेत् तथैव चंद्रेणतथापंचमेन पंचमभावेनच मातुः मृतिपदं मृत्युस्थानं वदेदिति ॥ ५ ॥ ननु कयारीत्या सूर्यवेश्मचंद्रपंचमैः पितृमात्रमरणवि-चारइतिचेत्तत्राह ॥ सूर्यइति त्रिभिः ॥ सूर्येचंद्रेच चकारात् वेश्मस्थाने पं-चमस्थानेच सपापेपापसहितेसति क्रमात् तयोः पितुर्मातुश्चमरणं मृत्यु र्भवेत् ननुकस्मिन्काले इतिचेदब्दादीन्कथयति तयोः सूर्यपापयोः चंद्र-

॥ भाषा ॥

॥ सूर्येणेति ॥ सूर्यसें और चोथे घरसें पिताका मरणयोग कहना ॥ ५ ॥ सूर्यइतित्रि-भिः ॥ कौनसी रीतिसें मरणयोग कहना सो कहतेहैं- सूर्य चंद्र चतुर्थ पंचमभाव यह पापग्रहोंसें युक्त होवे तो दोनोंका मरण कहना- परंतु कब होवेगा सो कहतेहैं- सू-र्यादिक और पापग्रह इनोंका यथाक्रमसें अंतर करके उनकी कला करके दोसो सें भाग लेना- वर्षादिक फल आना- सो मरणकाल जानना- ये नमबन्न होंवें तब

स्ववेश्मधर्मकर्मायलग्नैर्द्युम्नंपतिंवदेत् मृतिव्ययारि
भिस्तेषांव्ययंहानिंपृथग्वदेत् २ येयोगाःपूर्वभागेतु
द्विग्रहाद्यानभादयः राजयोगादयःसर्वे यथान्यायं
प्रयोजयेत् ३ भरणीयकुटुंबस्यद्वितीयेनशुभाशुभे
अन्येषांचैवभावानां स्वनामसदृशंफलम् ४

॥ टीका ॥

अथभावफलानांबलहानि पालननाशानाह ॥ स्वेति ॥ स्ववेश्मधर्मकर्माय-
लग्नैःषड्भावैः स्थानानुरूपंद्युम्नंबलं द्युम्नंवित्तेबलेपिचेतिमेदिनी तत्तद्भाव-
फलस्यबलातिशयमित्यर्थः तथापतिंरक्षकंपालनमित्यर्थः एवंमृतिव्ययारि-
भिः त्रिभावैः स्थानानुरूपंतत्तद्भावफलानां व्ययंनाशंहानिं ह्रासंच वदेत्
अर्थादवशिष्टैस्त्रिपंचसप्तमैः साम्यं स्थानतुल्यंभावफलंबोध्यमिति ॥ २ ॥
अथपूर्वभागोक्तयोगानांव्यवस्थामाह ॥ यइति ॥ पूर्वभागेतुपूर्वार्धेतु द्विग्र-
हाद्याः तथा नभादयइत्यार्षप्रयोगः नाभसादयः तथाराजयोगादयः ये
अनेकप्रकारकाः योगाः प्रयाकथिताइतिशेषः सर्वास्तान यथान्यायं बलेष्ट-
कष्टरश्मिभावस्थानकरणादिविचारन्यायमनतिक्रम्य यथास्यात्तथाप्रयो-
जयेत्कथयेदित्यर्थः ॥ ३ ॥ अथभावविचारमाह ॥ भरणीयइति ॥ तथ-
था द्वितीयेन द्वितीयभावेन कुटुंबस्य कुटुंबवर्तिनामित्यर्थः भरणीयं भर्तुं
योग्यंपोषणीयंतस्मिन्विषये शुभाःशुभेपूर्वोक्तरीत्या स्थानकरणविचारेण

॥ भाषा ॥

स्वेति ॥ दूसरा-चौथा नववा दशवा ग्यारवा लग्न यह छभाव अपने स्थानसें उत्तम
फल देनेवाले है. और आठवा बारवा यहभाव खर्च हानि करनेवाले है ॥ २ ॥ यइ-
ति ॥ पूर्वभागमें जो नाभसादियोग राजयोग कहेहै उनोका इष्ट कष्ट रश्मि अष्टवर्ग
बलाबल देखके फल कहना ॥ ३ ॥ भरणीयइति ॥ दूसरे भावसें स्त्री कुटुंब इत्या-
दिस्यका बल देखके कुटुंबपोषणका शुभाशुभ देखना दूसरे भावोका अपनेनामस-
दृश्या फल जानना ॥ ४ ॥ ७. ॥

तस्याशुभस्यविन्यस्यचाष्टवर्गंततःक्रमात् त्रिको-
णैकाधिपस्यास्वकुर्याच्छोधनकंबुधः ९ त्रिषुद्व-
योर्वायन्न्यूनमितरच्चसमंभवेत् एकस्मिन्भवने
शून्यंतत्त्रिकोणंनशोधयेत् १०

॥ टीका ॥

स्थानकरणतारतम्येन नवमश्लोकमारभ्य पंचदशश्लोकपर्यंतं तस्येत्यादिभिः तत्रादौ त्रिकोणशोधनमाह ॥तस्येतिसार्धद्वयेन॥ तस्यपूर्वोक्तसूर्यचंद्रचतुर्थपंचमभावाष्टमस्थानवर्तिनः अशुभस्यपापस्य अष्टवर्गं विन्यस्य क्रमात् वक्ष्यमाणप्रकारेण अब्दादयोबोध्याः तत्प्रकारमेवाह त्रिकोणैकाधिपत्यस्य त्रिकोणं प्रथमपंचमनवमस्थानरूपं एकाधिपत्यं एकः अधिपतिः ययोस्ते एकाधिपतिनी तयोर्भावः एकाधिपत्यं मेषवृश्चिकवृषतुलादिरूपं तच्चतच्च समाहृत्य त्रिकोणैकाधिपत्यं तस्यकूपात् नवमपंचमात्बुधः विद्वान् शोधनकं कुर्यात् एतत्कूपशोधनंतु त्रिकोणस्यैव संभवति नत्वेकाधिपत्यस्येतिबोध्यम् शोधनप्रकारमाह त्रिषुद्वयोर्वा प्रथमपंचमनवमेषुत्रिषु प्रथमपंचमयोः पंचमनवमयोः नवमप्रथमयोर्वाद्वयोः मध्ये यत्स्थानंकरणंवा रेखांविंदुवेत्यर्थः न्यूनं अल्पंस्यात् तदितरस्थानयोः समंतुल्यं भवेत् एतदुक्तंभवति त्रयाणांमध्ये एकस्मिंस्थाने स्थानद्वयापेक्षया यान्यूनसंख्याकारेखा विंदुर्वा सास्वस्मिञ्छोधितासती नष्टा स्यात् एवमेव अन्यस्थानयोः प्रासरेखासु शोधिताचेत् स्वसंख्यया न्यूनी

॥ भाषा ॥

॥तस्येतिसार्धद्वयेन॥ अब आगे स्पष्ट दिखातेहै सूर्यचंद्रचतुर्भाव पंचमभाव अष्टमभाव यहां सहवर्ति जो पापग्रह है उनोंका अष्टवर्ग स्थापन करके उसका त्रिकोण शोधन करणा और एकाधिपत्यका शोधन करणा ॥ ९॥ त्रिकोण शोधनमें तीन ठिकाने दोय ठिकानेसें जो कम होवे उससें शोधना. और जो त्रिकोणमें एक जगेमे

तदामृतिर्भवेन्न्यूनेतद्बलेनैववर्धयेत् तदामृत्यु
स्तयोर्मृत्युस्थानेपापग्रहेसति ८

॥ टीका॥

पापयोर्वा अंतरलिप्ताः अंतरस्यराश्यादिरूपस्य लिप्ताः कलाः कृत्वा ताः शतद्वयविभाजिताः द्विशतैर्भक्ताः ॥ अब्दादयः वर्षादिसमयोज्ञेयः अरि पापे समबलेएव अथन्यूनातिरिक्त सहचारिपापग्रहतारतम्येन विशेषसंस्कारंकथयन्नादौ सहचारिपापबलाधिक्यसंस्कारमाह तस्मात्सूर्यात् चंद्राद्वा पापेबलोत्तरे सहचारिपापबलाधिक्येसति ये अब्दादयः संप्राप्ताः तेऽशुभस्य सहचारिणः पापस्यदृष्ट्या गुणयेत् ततः षष्ठ्या विभज्य अब्दादयो ज्ञेयाः ॥ चपरंतदामृतिर्ज्ञेया अथ सहचारिपापबलाल्पत्वे विशेषसंस्कारमाह ॥ न्यूने सहचारिपापबलेऽल्पेसति तु येसमबलमासाब्दादयः तान् तद्बलेन सूर्यबलेन चंद्रबलेनवा वर्धयेत् गुणयेत् तदामृतिः तयोः पितुर्वामातुर्वामृतिर्ज्ञेया एवंसपापसूर्यचंद्रसंभूतं तथैवानुवृत्तत्वात् सपापचतुर्थभावपंचमभावाभ्यामपि पितृमात्ररिष्टंवेदितव्यं एवं सपापग्रहभावेभ्यः पितृमात्ररिष्टमुक्त्वा सूर्यचन्द्राभ्यां चतुर्थपंचमभावाभ्यांच अष्टमपापग्रहसूचक पितृमात्ररिष्टकालविचारमाह तयोः सूर्यचंद्रयोश्चतुर्थपंचमभावयोश्च संबंधेन अष्टमस्थानेपापग्रहेसतितु पितृमात्ररिष्टविचारमुत्तरश्लोके विशदयति ॥ ६॥७॥८॥

॥ भाषा॥

जानना. न्यूनाधिक्य बल होवे तो उसका निर्णय कहते हैं सूर्यसे चंद्रसे पापग्रह बलवान् होवेतो उस फलकूं पापग्रहदृष्टीसे गुणन करना. पीछे साठसें भाग लेके वर्षादिक फल लाना । और जो कभी पापग्रह अल्पबली होवे तो सूर्यबलसे चंद्रबलसे पूर्वोक्त वर्षादिकूं गुणनकरके ६०मे भागलेके वर्षादि लायके फल कहना. और अष्टमभावमें पापग्रह होवे तो इसके संबंधसे मातापिताका अरिष्ट कहना॥६।७।

ग्रहयुक्ते फलेहीने ग्रहाभावेफलाधिके अनेनसह
चान्यस्मिञ्छोधयेद्ग्रहवर्जिते १२ फलाधिके ग्रहे
र्युक्तेचान्यस्मिन्सर्वमुत्सृजेत् उभयोर्ग्रहसंयुक्ते
नसंशोध्यः कदाचन १३ उभयोर्ग्रहहीनाभ्यांसम
त्वेसकलंत्यजेत् सग्रहाग्रहतुल्यत्वात्सर्वंसंशोध्य
मग्रहात् १४

॥ टीका ॥

अवशिष्टासु अथएकाधिपत्यविचारः कर्तव्यः सयथा एकाधिपत्यशो-
धनं नाम राशिद्वयस्यमेषवृश्चिकरूपस्य वृषतुलारूपस्य मिथुनकन्या-
रूपस्य धनुर्मीनस्य मकरकुंभरूपस्य अन्योन्यरेखाभिः सग्रहत्वाग्र-
हत्वतया संस्कारः कर्कसिंहयोस्तु चंद्रसूर्ययोः एकक्षेत्रत्वान्नैकाधिप-
त्यसंस्कारभाक्तिः किंतुभौमादि क्षेत्राणामेवेति तत्प्रकाराणां पदशः टी-
कातु विस्तरभयान्नलिखिता किंतु कल्पितोदाहरणैरेव स्पष्टीक्रियते
तत्रादौ सग्रहरेखासाम्यैकाधिपत्यराशिद्वयोदाहरणम् यथा मेषेत्रिको
णभासरेखाः ॥। वृश्चिकेच रेखाः ॥। एतद्राशिद्वयं भासमरेखंसग्रहंच
अतः उभयोर्ग्रहसंयुक्तेनसंशोध्यःकदाचनेतिवचनेन शोधनाभावाद्यथा
स्थितिरेव मेषेरेखाः ॥। वृश्चिके रेखाः ॥। इत्येकः प्रकारः ॥१॥ अथस
ग्रहराशिद्वये रेखावैषम्योदाहरणम् यथामेषे त्रिरेखाः ॥। वृश्चिके त्रिको-
णशोधनभासरेखे ॥ अत्रोभयत्र सग्रहत्वेपि रेखावैषम्यात् न्यूनरेखा
अधिकरेखासुसंशोध्याशिष्टंमेषेवृश्चिके ग्रहयोगेनहानिः स्यादिति
न्यूनेनाधिकस्यहानिः सग्रहत्वान्नसर्वहानिरितिद्वितीयप्रकारः ॥२॥

॥ भाषा ॥

एक राशीमें रेखा कम है- दूसरी राशीमें रेखा ज्यास्त है- ओर दोनो राशीमें ग्रह
नहीं है तो अधीक रेखासंख्या राशीकी रेखामें कम रेखासंख्याकूं न्यून करके

समत्वे सर्वगेहेषु सर्वं संशोधयेद्बुधः क्षीणेन स
ह्यान्यस्मिञ्छोधयेद्ग्रहवर्जितम् ११

॥ टीका ॥

कुर्यात् एवं समत्वं बोध्यम् ननु स्वयमेकाचेत्सर्वत्र एकत्रस्थितिरिति अ
थवा एकस्मिंस्त्रयाणां स्थानानां मध्ये एकस्मिन्भवने स्थले शून्यं चेत् रे-
खाभावश्चेत् तत्त्रिकोणं रेखाशोधनविषये न शोधयेत् न शोध्यं किंतु य
थास्थितमेव स्थाप्यम् तस्य शोधनाभाव इति यावत् एवमेव करणवि
धेबोध्यम् अथच सर्वगेहेषु त्रिष्वपि स्थानेष्वित्यर्थः समत्वं रेखासाम्यं
चेद्बुधः विद्वान् सर्वं स्थानत्रयरूपमपि संशोधयेत् वर्जयेत् तुल्यशोधने
शेषाभावात् सर्वं शून्यरूपमेव स्थापनीयमित्यर्थः एवं त्रिकोणशोधनं बो
ध्यम् ॥ अथोदाहरणम् ॥ सूर्याष्टकवर्गविचारे मेषे रेखे २ सिंहे रेखा ३
धनुषि रेखाः ४ अत्र न्यूनं मेषस्थं रेखाद्वयं तन्मेषसिंहधनुःस्थरेखासु
संशोध्य अवशिष्टं जातं मेषाधः ० सिंहाधः १ धनुरधः २ एवं सर्वत्र बो-
ध्यम् ॥ एकन्यूनत्वोदाहरणम् ॥ अथ त्रिकोणस्यैकभवने रेखाभावोदा-
हरणम् ॥ मेषे रेखा १ सिंहे रेखाः ५ धनुषि रेखाभावः अत्र शोधनाभावात्
यथास्थितमेव स्थाप्यं अथ त्रिकोणस्थानत्रयेऽपि समत्वोदाहरणं यथा
मेषे रेखाः ४ सिंहे रेखाः ४ धनुषि रेखाः ४ अत्र सर्वसमत्वात्सर्वत्र रे-
खाभाव एव एवं सर्वभावत्रिकोणेषु त्रिप्रकारेण शोधनं बोध्यम् ॥ १० ॥
अथैकाधिपत्यशोधनप्रकारमाह ॥ क्षीणेनेत्यादि सपादपंचदशश्लोकपर्य-
न्तम् ॥ अत्रादौ त्रिकोणशोधनेन पूर्वोक्तरीत्या सर्वभावेषु रेखाः संशोध्य

॥ भाषा ॥

शून्य होवे वो त्रिकोणका शोध नहीं करणा ॥ १० ॥ तीन ठिकाने समान होवे तो सर्व
ठिकाने शून्य रखना इसका विस्तार टीकामें है ॥ १० ॥ क्षीणेनेत्यादि सपादपंचदश-
श्लोकपर्यंत ॥ अब एकाधिपत्य शोधन कहते हैं - एक स्वामी दोय राशी है वहां

॥ टीका ॥

यथा मेषेरेषाः ॥। एतत्सग्रहं वृश्चिके रेषे ॥ एतदग्रहं अत्रफलाधिके ग्रहैर्युक्तेचान्यस्मिन्सर्वमुत्सृजेत् इतिफलाधिकं यथापूर्वस्थितं फलहीनं ग्रहराहित्याद्रेषाशून्यमेव मेषेरेषाः॥। वृश्चिके ० इति नवमप्रकारः ॥९॥ अथसग्रहाग्रहफलसाम्योदाहरणम् यथा मेषेरेषाः ॥। सग्रहं वृश्चिके रेषाः ॥। अग्रहं अत्र सग्रहाग्रहतुल्यत्वात्सर्वं संशोध्यमग्रहात् इतितुल्यफलत्वेपि सग्रहाग्रहतयोभयत्रापिफलाभावः मेषे० वृश्चिके ० इतिदशमः प्रकारः ॥१०॥ अथसग्रहन्यूनरेषाकाग्रहाधिकरेषंकोदाहरणम् ॥ यथा मेषेरेषाः ॥। एतत्सग्रहं वृश्चिकेरेषाः ॥॥ एतदग्रहं अत्र ग्रहयुक्ते फलेहीने ग्रहाभावेफलाधिके अनेनसहचान्यस्मिञ्छोधये द्ग्रहवर्जितेइति ग्रहवर्जिताधिकरेषासु सग्रहन्यूनरेषाः संशोध्य शिष्टामग्रहस्थलस्थरेषां सग्रहस्थलमानयेत् मेषेरेषा । वृश्चिके रेषाभावः इत्येकादशःप्रकारः ११ अथसग्रहाग्रहद्वयरेषाभावेतु आर्थिकशून्यत्वान्नात्रोदाहरणं इतिद्वादशतमःप्रकारः ॥ १२ ॥ अथउभयत्रसग्रहत्वे एकत्ररेषा सहितत्वं एकत्ररेषाभाव त्वं अत्रापिएकत्रनास्तिचेत्सर्वहानिरन्यत्र कीर्तितेति त्रयोदशतमः प्रकारः ॥१३॥ अथचकर्कसिंहयोः एकेशस्यानेकत्वात् यथास्थितिरितिशोधनाभावः प्रागेवलिखितः इति एकाधिपत्यशोधनप्रकारः वृषादिसर्वराशिषुज्ञेयः एवमेवकरणशोधनप्रकारः अथप्रकृतमेवंप्रकारेण सूर्यचंद्रचतुर्थभावपंचमभावेभ्यः अष्टमेपापे त्रिकोणैकाधिपत्यशोधनेन रेषाः करणंचसंपाद्याग्रिमसंस्कारःकर्तव्यइति॥

॥ भाषा ॥ ॥११॥१२॥१३॥१४॥१५॥

वृश्चिकके नीचे रेखा दोयहै औरदोनो ग्रह रहितहै तो तीनमेसें दोय तीन कियेतो मेषकेनीचे १ रेखा लिखना. वृश्चिकके नीचेशून्य लिखना ए एकाधिपत्यशोधन भया. इसतरेके चौदा उदाहरण टीकामें दिखाये है इसलिये यहां विस्तारके लिये लिखने नहीं॥११।१२।१३। १४।१५

एकत्रनास्तिचेत्सर्वहानिरन्यत्रकीर्तिता कुली रसिंहयोराश्योः पृथक्क्षेत्रंपृथक्फलम् १५ ग्रहयोगेनहानिः स्यात्

॥ टीका ॥

अथ उभयत्र सग्रहत्वेपि एकत्रत्रिकोणशोधनभासरेषा सहितत्वं एकत्र रेषारहितत्वंचेदुभयत्रशून्योदाहरणं यथा मेषे त्रि रेषाः ।।। वृश्चिके त्रि रेषाः ० मेषेकश्चिद्ग्रहोऽस्ति वृश्चिकेग्रहाभावः अतः एकत्रनास्तिचेत्स र्वहानिरन्यत्र कीर्तितेति वचनात् मेषस्य सग्रहत्वे सरेषात्वेऽपि वृश्चिकेरे- षाभावादुभयत्रापिहानिः इतितृतीयप्रकारः ॥ ३॥ अथउभयोस्सग्रह त्वेऽपि उभयत्र रेषाभावेशून्यमेवेतिनात्रोदाहरणं इतिचतुर्थःप्रकारः४ अथग्रहरहितफलसाम्योदाहरणं ॥ यथा मेषे रेषाः ।।। वृश्चिके ।।। उ भयत्रापिग्रहाभावः अत्र उभयोर्ग्रहहीनाभ्यां समत्वंसकलंत्यजेदिति उभयत्रसमफलशोधनेन फलाभावएव इतिपंचमःप्रकारः ॥ ५॥ अथ ग्रहरहितोभयविषमरेषोदाहरणम् ॥ यथा मेषेरेषाः ।।। वृश्चिके रेषा॥ अत्रोभयत्रापिग्रहरहितत्वंफलवैषम्यंच अतः क्षीणेनसहत्वान्यस्मिञ्छो धयेद्ग्रहवर्जितेइति हीनमधिकात्संशोध्यशेषमधिकस्थले स्थापितं मेषे रेषा। वृश्चिके० इतिषष्ठःप्रकारः ॥ ६॥ अथ अग्रहंसरेषाकं सग्रहं रेषारहितं यथा मेषेरेषाः ।।। अत्रग्रहाभावः वृश्चिके रेषाभावः अत्रा- पि एकत्रनास्तिचेत्सर्वहानिरन्यत्रकीर्तिता इतिउभयत्रापि सर्वहानिः मेषे० वृश्चिके० इतिसप्तमःप्रकारः ॥ ७॥ अथउभयत्र ग्रहराहित्यंरेषा- ऽभावोऽपिचेदार्थिकमेवफलाभावत्वं नात्रोदाहरणप्रयोजनम् ॥इ- त्यष्टमः प्रकारः ८॥ अथरेषाधिकसग्रहे न्यूनरेषाका ग्रहेन उदाहरणम्

॥ भाषा ॥

शेष रचना क्रम जो है वहां शून्य रचना उदाहरण. मेषराशीनीचे रेषा तीनहैं

मुनिभक्तंवसुघ्नंस्यान्नैवंचेन्नैतयोर्मृतिः वक्ष्यमा
णेनविधिनावदेदाहपराशरः १९

॥ टीका॥

कोणेकाधिपत्यशोधनावशिष्टग्रहकरणांकाः रवेः १ शनेः ३ सपापबुधस्य ३ एषांग्रहाणां वर्गणांकाः ५।५।५ एभिर्गुणिताः करणांकाः ५।१५।१५ एतेषांपिंडः ३५ पिंडद्वयैक्यं ७५ एतत्सप्तगुणितं ५२५ सप्तविंशतिभाजनल ब्धाब्दादयः वर्षाणि १९ मासाः ५ दिनानि १० घट्यः ० पलानि ० अयंपित्रिष्टकालोवेदितव्यइति अर्थात् रेपामदे पापिनि बलिनिसति उक्तविधिना प्राप्ताब्दादिकाले आयुर्वेदितव्यमितिभावः अथच करणंबलहीनेतु पूर्वोक्तसकलंपिंडं सप्तभिर्हत्वा पंचभिर्भजेत् नसप्तविंशतिभिरिति पितृमरणकालीनाब्दादयः सद्यः स्युः अथच स्थानस्यमदे रेपामदे अशुभे बलिनीतिपूर्वान्वयेनाध्याहारः सतिप्रागुक्तसर्वपिंडंवसुघ्नं अष्टगुणितं मुनिभक्तं सप्तभाजितंकृत्वा प्राप्ताब्दादयः तयोःपित्रोः आयुःसिद्धंस्यात् एवंस्थानप्रदात् आयुरब्दाधिकेचेदेतयोर्नमृतिः एवंसूर्याच्चतुर्थभावाद्वा अष्टमस्थपापस्यायुः कथितं एतत् वक्ष्यमाणचतुर्थभावसूर्यरंध्यायुःसंपादनेनन्यूनातिरिक्तंपरमायुर्बोध्यमितिमूलकारएवाह वक्ष्यमाणेन विधिना वक्ष्यमाणप्रकारेणवदेदितिपराशर आहेति॥१६॥१७॥१८॥१९॥

॥ भाषा॥

मेषादिक ध्रुवांकोंसें गुणन करके और जहां ग्रह बैठे होवेतो वे एकाधिपत्यके अंकोंकूं वो वो ग्रह ध्रुवांकोंसें गुणन करना-पीछे दोनोंके योग करके दोनोंका एक योग करणा सात अंकसें गुणन करके सत्तावीससें भाग लेना-तो लब्धांक वर्षादिक मातापिताके आयुष्यका मान जानना ए विंदूसें मृत्युकाल कहना-परंतु वो पापग्रह बलवान् होवेतो पूर्वकी बात जो कहीहै ओईरीति जानना- और बलहीन होवेतो योगकूं सातसें गुणनकरके पांचसें भाग लेना- वर्षादिक लब्ध मां वो मातापिताका

वर्गणाघ्नंपृथक्कृत्वा ततः संयोज्यसप्तभिर्हत्वासप्तविं
शतिभाजिताः १६ अब्दादयस्तदादेहनाशःकर-
णदेसति तस्मिन्पापग्रहेतस्माद्बलिन्येवंविधिःस्मृ
तः १७ बलहीनेतुतंहन्यात्सप्तभिःपंचभिर्भजेत्
आयुस्तयोः स्यात्स्थानस्यमदेचेदशुभेसति १८

॥ टीका ॥

अथ त्रिकोणैकाधिपत्यशोधनप्राप्तरेषासु करणेषुच विशेषसंस्कारेण अब्दाद्यानयनं बलाबलतारतम्येनस्थानकरणादिकंचाह ॥ वर्गणाघ्नमित्यादिएकोनविंशतिश्लोकपर्यंतम् ॥ वर्गणाघ्नं वर्गणयाहन्यते तथोक्तं वर्गणातु प्रथमाध्यायावसाने मुनिदिग्वसुवेदादिगिग्ब्धब्ध्यष्टनवेषवः रुद्रार्कवर्गणामेषाद्वियथेष्टवायवः पंक्तिस्वरेषवः सूर्याद्वर्गणा प्रोच्यतेबुधैरित्युक्त ध्रुवांकैः पृथक्पृथक्करणंस्थानंवा गुणयेत ततः राशिफलंग्रहफलंच पृथक् पिंडीकृत्य उभेअपि संयोज्य सकलंपिंडीभूतं सप्तभिर्हत्वा सप्तविंशतिभाजिताः लब्धंफलं अब्दादयः भवेयुः तदातस्मिन्नब्दादिकाले देहनाशः पित्रोर्मरणंज्ञेयम् अयंविधिः तस्मिन्करणे पापग्रहे बलिनिसति स्मृतः ॥ अत्रोदाहरणम् ॥ चतुर्थभावादष्टमस्थोरविः पापः चक्रेद्रष्टव्यः अस्यबलं ९।२१।१४ चतुर्थभावादष्टमभावबलं ८।१४।२१ अस्मात्पापबलमधिकं अतः चतुर्थभावादष्टमस्थबलोत्तरकरणदपापग्रहसंभूतपित्ररिष्टाब्दाद्युदाहरणं ॥ यथा त्रिकोणैकाधिपत्यशोधनावशिष्टराशिकरणांकाः कुंभे १ कर्के १ सिंहे १ मकरे ३ अर्कक्रमाद्राशिवर्गणांकाः ११।४।१०।५ एभिः क्रमात्पृथग्गुणितांकाः ११।४।१०।१५ एतेषांपिंडः ४० अथपापग्रहाणांभि-

॥ भाषा ॥

॥ वर्गणाघ्नमित्यादिएकोनविंशतिश्लोकपर्यंतं ॥ अब एकाधिपत्यके ऊपरसें मातापिता- का स्पष्ट मरणज्ञान बतानेहैं. एकाधिपत्यके जो अंक मेषादिकमें आये हैं उनकूं

एवंशुभाशुभंब्रूयान्मातापित्रोर्द्विजोत्तम २४
करणस्थानदातारःपापपुण्यफलप्रदाः पुनश्चो-
च्चादिषुतथात्रिगुणाद्यास्तुपूर्ववत् २५ शत्रुनीचा-
धिशत्रूणांस्थानेष्वपितुपूर्ववत्

॥ टीका॥

भावः स्फुटीकृतः स्पष्टीकृतः पश्चात्कलीकृतः कलारूपतांमापितः रेखा-
रेखैः२०० तंविभज्यक्रमात्अब्दादयः वर्षमासादयः क्रमेणवर्षमासदिनानीत्य-
र्थः स्युरित्यध्याहारः ॥२३॥ एवमित्युपसंहरति ॥ हे द्विजोत्तम द्विजवर्य
मैत्रेय! एवमुक्तपंचप्रकारकं मातापित्रोः जननीजनकयोः शुभाशुभं स-
माहारः शुभमायुः अशुभं मृत्युः समाहृत्य तद्ब्रूयादिति॥२४॥ अथकर-
णादिविचारेण भावविचारमाह ॥करणइत्यादियावदध्यायसमाप्ति॥
करणस्थानदातारः भावेषु करणानिबिंदवः स्थानानि रेखाः ताः ददति ते
करणस्थानदातारः यथासंख्यं पापपुण्यफलप्रदाः पापंअशुभं पुण्यंशु-
भं तेनतेफलेच प्रददतीति पापपुण्यफलप्रदाः करणदाऽशुभफलप्रदाः
स्थानदाः शुभफलदाइत्यर्थः पुनश्चेतिप्रकारांतरं तथातेनप्रकारेण उच्चा-
दिषु उच्चत्रिकोणस्वमित्रादिराशिषु भावफलानि त्रिगुणादीनीति पूर्ववत् त्रि-
गुणाद्याः त्रिगुणादिफलदातारो भावेषुग्रहाः बोध्याः शत्रुनीचाधिशत्रू-
णांस्थानेषु वर्तमानानांग्रहाणांचापि पूर्ववदेवज्ञातव्यम् तदित्यं पूर्व र-

॥ भाषा॥

अष्टसें गुणन करके छसें भाग लेना-लब्धपरमायुष्य जाननी टीकामें स्पष्टहै॥
२३॥ एवमित्युपसंहरति ॥ चौथे घरमें जो रेखाप्रद ग्रह नहीं होवे तो चतुर्थभावकूं
स्पष्ट करके उसकी कला करके २०० सें भाग लेना-वर्षादि आयुष्य आवे ऐसा
मातापिताका शुभाशुभ योग कहना॥२४॥ करणइत्यादि यावदध्यायसमाप्ति
॥ शून्यके देनेवारे जोग्रह है वे पापफल देनेवाले जानना- और रेखाके देनेवारे

वेश्मनिस्थानदानस्युर्जन्मकालेस्फुटीकृतः २३
फलीकृतश्चरवनरवेर्विभज्याब्दादयः क्रमात्

॥ टीका ॥

कियदायुरित्यनुपातेनमासंचतुर्थभावलग्नभुक्तायुः ०।१।० अथउच्चइत्युक्तत्वात् उच्चत्वाभावत्वात् तत्पतेश्चंद्रस्य उच्चत्वोपलक्षितायुर्गृह्यते तदित्थं चतुर्थभावस्य कर्कास्थस्यपतिश्चंद्रः सच ८।२५।२१ एवंवर्तमानः अस्य उच्चग्रहायुःप्रकरणोक्तध्रुवांका १६ एवंसंख्याकाः परमोच्चे वृषात्रिभिर्भिशेचेत् अनुपातेनधनूराशिपंचविंशतितमांशे वर्तमानस्य चंद्रस्येकियद्वर्षाद्यायुरिति त्रैराशिकेनमासंचंद्रायुर्वर्षादि ४।५।१४ अथरविः १०।४।१४ एवंवर्तमान अस्यग्रहायुःप्रकरणोक्तं परमोच्चायुर्ध्रुवांकाः करौइत्युक्तत्वात् मेषराशिदशमांशेवर्तमानस्य रवेःवर्षद्वयंचेत् अनुपातेन कुंभराशि पंचमांशेवर्तमानस्य कियदिति मासंरव्यायुर्वर्षादि १।३।१९ एवंचतुर्थभावायुः तत्पतिश्चंद्रायुः रव्यायुश्च संयोज्यजातं ५।१०।१ एतत्सामान्यायुः अथरश्म्यायुरित्थ रवेरश्मयः ५।४०।२३ भावस्यरश्म्यभावात् चतुर्थभावपतेश्चंद्रस्य रश्मयः २।३१।१३ अनयोर्योगः ८।११।३६ अष्टसंगुणितः जातं ६५।३२।४८ अयं षड्भिर्भक्तः लब्धफलं १४।७।२८ जातमेतद्रश्म्यायुः एतत्सामान्यायुर्योगेन जातंवर्षादि २०।५।२९ एतत्परमायुर्बोध्यं एतट्टीकाकर्तुरनुभवमिदंपित्रिष्टमिति ॥२२॥ एवंसपापचतुर्थभावस्यायुः तत्तत्स्पृष्टपापानामस्थानायुः केवलंचतुर्थभावस्यायुरश्मिसमुद्भूतपरमायुश्च कथयित्वा अथवेश्मस्थानंरेखाभावेकथमायुर्विचारइत्याह ॥ वेश्मनीत्यनेन ॥ वेश्मनिचतुर्थस्थाने रेखाप्रदाः रेखाप्रदाः ग्रहानस्युः तत्रकेवलंरेखाभावश्चेत् जन्मकाले सचतुर्थ-

॥ भाषा ॥

तो मरण उत्तम रीतिसे होवेगा. पापाधिक्य होवे देहपातादिकभी होवेगा ॥२२॥ वेश्मनीत्यनेन ॥ अबरश्मीउपरसे आयुष्य कहतेहैं- सर्वचतुर्थभावकी रश्मीका गणक

भावरश्मिभिराहन्यात्सप्तभिश्चविभाजयेत् मूल-
रश्मिसमूहेनशिष्टंहन्यात्तथैवतान् २८ इष्टानिष्ट-
फलाभ्यांचहत्वांतरमथद्वयोः सप्तविंशतिभिर्हत्वा
सप्तभिश्चविभाजयेत् २९ भरणीयकुटुंबानांपुं-
स्त्रियस्तत्समाविदुः

॥ टीका ॥

घ्यघनवेपवः रुद्राकीवर्गणामेषादिति द्वितीयभावस्य वर्गणादिक्संख्याका १० तयाहताः गुणिताः तथा तत्स्थखेटानांतस्मिन्द्वितीयेभावेतिष्ठंतितेचतेखेटाः ग्रहाश्चतेषां यावर्गणा तत्रैवोक्ता "विषयेष्वष्टवायवःपंक्तिःस्वरेषवः सूर्यादिवर्गणाप्रोच्यतेबुधै"रिति तयाहताः चहताः गुणिताः तस्मिन्भावेग्रहसत्त्वेइतिभावः ततः भावरश्मिभिः आहन्यात् भावस्य रश्म्यभावात्तदधिपस्य रश्मिभिर्गुणयेत् दुष्टभावविषयेऽधिपस्य शक्रस्यरश्मिभिर्गुणयेदित्यर्थः ततः सप्तभिः ७ विभाजयेत् भागमाहरेदित्यर्थः तत्रलब्धांकसंख्याकाः भरणीयकुटुंबानांपुमांसः बोध्या अथ तथैव तेनप्रकारेणशिष्टं अवशिष्टांकाः तन्मूलरश्मिसमूहेन मूलाः प्रथमोत्पादिताः येसर्वेग्रहाणांरश्मयः तेषांयः समूहः संहतिः मेलनमित्यर्थः तेनहन्यात् गुणयेत् ततः तान् मूलरश्मिगुणितान् इष्टानिष्टफलाभ्यांइष्टंच अनिष्टंचतेएवफले ताभ्यांहत्वा गुणयित्वा एकत्र इष्टेनहत्वा एकत्रकष्टेनहत्वेत्यर्थः अथानंतरं द्वयोः उभयोः अंतरं विवरंकृत्वा सप्तविंशतिभिः गुणयित्वा सप्तभिर्विभाजयेत् एवंरीत्यायेप्राप्तांकाः तत्समाः तत्तुल्याः स्त्र-

॥ भाषा ॥

भावके अंशादिककी लिप्ता करके पीछे द्वितीयभावकी राशिकी लिप्ताकरके उससे भाग लेना. लब्ध जो कलादिक फल उसकूं द्वितीयभावके ध्रुवांकसे गुणनकरणा. द्वितीयघरमें ग्रह होवे तो ग्रह ध्रुवांकसे और गुणन करणा न होवेतो नहि

राशिंहित्वातुभावानांसर्वत्रैवंक्रियाभवेत् २६
द्वितीयभावलिप्ताश्चराशिलिप्ताविभाजिताः स्व
वर्गणाहतास्तत्स्थखेटानांवर्गणाहताः २७

॥ टीका ॥

शिभकरणे उच्चेचत्रिगुणंप्रोक्तं स्वत्रिकोणेद्विसंगुणं स्वर्क्षेत्रिभादिसं-भक्तास्त्वधिमित्रगृहेऽपिच वेदभारामसंभक्तामित्रभेपड्गुणास्ततः पं-चभक्तास्तथाशत्रुगृहेद्विभाश्चतुर्हताः अधिशत्रोःकरभाश्चपंचभक्ता नतीचभे इत्युक्तप्रकारोबोध्यइति ॥ २५ ॥ अथवक्ष्यमाणभावविचारक्रि-या अंशादिग्रहणेनेत्याह ॥ राशिमित्यर्धेन ॥ राशिं राश्यंकं विहाय त्य-क्त्वा क्रियावक्ष्यमाणाभवेदित्येवं सर्वत्र सर्वभावेषुवक्ष्यमाणेषु बोध्यमि-त्यध्याहारः ॥ २६ ॥ अथतन्वादिद्वादशभावेषु भावोक्तफलविचारे संस्का-रविशेषेणविचाररीतिं कथयन् द्वितीयभावमुदाहरति ॥ द्वितीयेत्यादिसा-र्धैकोनत्रिंशच्छ्लोकपर्यन्तम् ॥ द्वितीयभावलिप्ताः द्वितीयश्चासौभावश्च तस्यलिप्ताः कलाः अत्रराशिंहित्वातुभावानांसर्वत्रैवंक्रियाभवेदिति द्वि-तीयभावस्य राश्यंकं विहायशिष्टांशलिप्ताः कृत्वेत्यर्थः राशिलिप्ताविभा-जिताः राश्याः याः लिप्ता एकराश्यंकस्य अंशान्विधाय ३० षष्टिगुणक-संपादिताः १८०० ताभिः विभाजिताः भक्ताः ततः स्ववर्गणाहताः स्वस्य द्वितीयभावस्य या उक्तावर्गणा प्रथमाध्यायाग्रे सुनिदिग्गसुवेदादिगिष्यं-

॥ भाषा ॥

जो ग्रह है. वेशुएणफल देनेवारे है उसमें उच्चनीच मूलत्रिकोणादिकके होवेतो त्रि-गुणादिक फल पूर्वसरीखा जानना ॥ २५ ॥ राशिमित्यर्धेन ॥ जहा भावपरसे व्यापु-ष्यका विचार करना होवे वहां राशीकूं छोडके अंशादिकका जैसा संस्कार कया है वै-सा करना ये क्रिया राशि छोडनेकी सब ठिकाने जानना ॥ २६ ॥ द्वितीयेत्यादि सार्धैको-नत्रिंशच्छ्लोकपर्यंतम् ॥ भावफलमे पहिले द्वितीयभावका उदाहरण बताते है . द्वितीय

राशीन्हित्वातुलग्नादिभावभागादिकान्पृथक् ३०
गुणयेद्रश्मिभिः स्वैश्चभावभागादयोविदुः कली
कृत्यभलिप्ताभिर्विभज्यासंफलंततः ३१ सूर्य-
भक्तावशिष्टंतु भावानांसाधनंविदुः

॥ टीका ॥

एवं भावगतपुंस्त्रीसंख्यानयनरीतिमुक्त्वा अग्रिमाध्याये तेषांकालपरिज्ञानंविवक्षुरादौभावसाधनप्रकारांतरेण संख्यानयनंचाह ॥ राशीन्हित्वेत्यादिश्लोकद्वयेन ॥ लग्नादिभावभागान् राशीन्हित्वा राश्यंकंविहाय भावभागादयएव फलज्ञापकाइतिशेषः इतिविदुः तेभागादयः भावानां स्वैःस्वैः निजैर्निजैः रश्मिभिः तत्तद्भावपतिरश्मिभिरित्यर्थः गुणयेत् ततः कलीकृत्य षष्टिगुणनेन कलास्थाने संयोज्य पृथक् द्विधा स्थापयित्वा एकत्रभलिप्ताभिः १८०० विभज्य यत् आप्तं तत्फलं भावफलसंज्ञकंफलंबोध्यम् ततः अन्यत्रस्थापितंफलं सूर्यभक्तावशिष्टं द्वादशभागेनउर्वरितं तद्भावानां लग्नादीनां साधनं साधनसंज्ञकंविदुरिति अग्रिमाध्यायविषयार्थं साधितंज्ञेयम् ॥ अथात्रोदाहरणम् ॥ तृतीयभावः २।२।५३।५९ राश्यंकं विहायजातः २।५३।५९ अस्यस्वामिनो बुधस्य रश्मयः १।४३।४१ एभिर्गोमूत्रिकागुणितोजातः ५।०।३९ अस्यकलाः ३००।३० एताःपृथक्स्थापिताः एकत्र भलिप्ताभिः १८०० आभिर्विभज्य लब्धंजातंफलं ०।१० एतद्भावफलसंज्ञकं ज्ञेयं अन्यत्र स्थापिताः पूर्वोक्ताः कलाः ३००।३९ आसां द्वादशभक्तावशिष्टंफलं ०।३

॥ भाषा ॥

॥ राशीन्हित्वेत्यादिश्लोकद्वयेन ॥ राशीकूं छोडके लग्नादिकोंके जूदेजूदे भावके अंशादिकोंकूं अपने अपने स्वामीकी रश्मियोंसें गुणन करना उसकूं भाव भागादिक कहते है. कला करके दोय ठिकाने रखना राशीकी लिप्तिकासें भाग लेना जो

॥ टीका॥

रणीयकुटुम्बानां पोषणीयकुटुम्बानां संबंधेषष्ठी स्त्रीः अवलाः विदुः पूर्वाचार्याइत्यध्याहारः इति एवमेव सर्वभावफलानयनरीतिर्बोध्या ॥ ॥ अथास्योदाहरणं ॥ द्वितीयभावः १।४।२८।५० अस्य राश्यंकं विहाय ४।२८।५० अस्यलिप्ताः २६९ राशिलिप्ताः १८०० आभिर्भक्ताःजातंकला रूपंफलं ०।९ द्वितीयभाववर्गणांकाः १० एभिर्हत्वा जातं ०।९० एतत्त्रिकलास्थमधिकृत्वाषष्ट्युद्धृतं १।३० द्वितीयभावेग्रहाभावाद्ग्रहवर्गणागुणनसंस्काराभावः द्वितीयभावेशरश्मिः ६।५३।१८ अनेनगोमूत्रिकयागुणिताजाताः कलाः १०।२० एताः सप्तभाजिताः सत्यः लब्धं ०।१।२८ जातेयंभरणीयकुटुंबपुरुषसंख्या अथशेषांकाः ४ एते मूलरश्मिसमूहेन २४।२३।३२ एवंभूतेन हताः जाताः ९७।१४ कलाधिक्यात्षष्ट्युद्धृताः १।३७।१४ भावस्वामिनः इष्टफलं ०।४५।४८ अनेनगुणिताः ०।७४।१३ कलास्थानाधिक्यात्षष्ट्युद्धृताजाताः १।१४।१३ जातमेतदिष्टगुणितं फलम् तथा तेएवमूलरश्मिसमूहांकाः १।३७।१४ भावस्वामिनः कष्टं ०।१४।११ अनेन हताजाताः ०।२३।० अनयोरिष्टकष्टफलहतयोः प्राप्तफलयोरंतरं ०।५१।१३ एतत्सप्तविंशतिभिर्गुणितं जातं कलादिफलम् ०।१३८२।५१ एतदधिकत्वात्षष्ट्युद्धृतं २३।३।० सप्तभिर्भक्तंजातं ३।९ एतं भरणीयकुटुंबस्त्रीसंख्या इति ॥२७॥२८॥२९॥

॥भाषा॥

करणा पीछे द्वितीयभाव स्वामीकी रश्मीसें गुणन करणा सातसें भाग लेना. लब्ध जो अंक होवे वो भरणीयकुटुंबकी संख्या जानना. शेषकूं मूलरश्मिसमूहसे गुणन करके भावस्वामीके इष्टफलसें गुणन करके उसी प्रकारसें भावस्वामि कष्टबलांकोंसें मूलरश्मिसमूहकुं गुणनकरके दोनोंका अंतरकरके २७ सें गुणित करनेसें जो कलादिक फल आवे उसकूं ७ से भागलेना. जो फल आवे वो स्त्रीयाकी संख्या जाननी॥२७।२८।२९

भाग्योत्कर्षंभाग्यहानिंकुटुंबंदुःखंहानिंशत्रुमायं व्ययंच उद्वाहंस्त्रीपुत्रलाभादिकंचब्रूयादेवंचाब्द चर्याक्रमेण १ अब्दमासदिनचर्यविधानंवक्ष्य तेखलुमयासुमतेते वक्ष्यमाणविधिनापरमायुः सम्यगेवविदधीतमहात्मन् २

॥टीका॥

अथो पराशरमुनिः षष्ठाध्यायेप्रकीर्णकं अब्दचर्यादिकमाहमैत्रेयायसविस्तरम् ॥१॥ अथास्मिन्षष्ठेऽध्यायेभाग्याद्युत्कर्षन्ह्रासादिकं प्रकीर्णकमुपदिदेश तत्रप्रथमे अब्दचर्यया भाग्यादिकं ब्रूयादित्याह ॥ भाग्येति॥ भाग्योत्कर्षं भाग्यवृद्धिं भाग्यहानिं कुटुंबं पोषणीयसमूहं दुःखंकष्टं हानिं ह्रासं शत्रुं रिपुं आयं लाभ व्ययं नाशं उद्वाहं विवाहं स्त्रीपुत्रलाभादिक स्त्रीपुत्रयोः लाभः आदौ यस्मिंस्तत् स्त्रीपुत्रलाभप्रभृतिसर्वमित्यर्थः एवंसर्वत्र अब्दचर्याक्रमेण वक्ष्यमाण वर्षगत्यनुक्रमशः ब्रूयात् गणकइत्यध्याहारः ॥१॥ अथ अब्दादिचर्यावक्तुंमतिजानीते॥ अब्देति ॥ सुमते महात्मन्‌इतिमैत्रेयसंबोधनद्वयं ते अब्दमासदिनचर्यविधानं अब्दानि मासाश्च दिनानिच तेषांचर्यस्यगतेः विधानं मयावक्ष्यते खलु तदर्थमादौ वक्ष्यमाणविधिना परमायुः सम्यगेव सूक्ष्मतया विदधीत संपादयेत् इति॥२॥

॥ भाषा॥

कुटुंबपोषणकी संख्या जानना॥ ३३॥ इतिश्रीबृहत्पाराशरहोरोत्तरभागे ज्योतिर्विच्छ्रीधरेणविरचितसुबोधिनीभाषाटीकायांलोकयात्रावर्णननामपंचमोऽध्यायः ५ ॥भाग्येति॥ अब षष्ठे अध्यायमें वर्षचर्याके क्रमसे भाग्यका उत्कर्ष भाग्यकी हानि कुटुंबका सुखदुःख शत्रुचिंता लाभखर्च विवाह स्त्रीपुत्रादिकोंका फल कहतेहैं ॥१॥ अब्देति॥ हे मैत्रेय!तुमारेकू वर्षचर्या मासचर्या दिनचर्याका विधान निश्चय

राशीन्हित्वाततोलिप्ताः खखनेत्रविभाजिताः ३२
साधनघ्नाविभक्ताश्चवर्गणाभिःफलाहताः उच्चा-
दिवृद्धिहानिंचकुर्यात्तत्संख्यकाभवेत् ३३ इति
श्रीबृहत्पाराशरहोरायामुत्तरभागेलोकयात्रावर्णनं
नामपंचमोऽध्यायः ५

॥ टीका ॥

एतज्ज्ञातं भावसाधनसंज्ञकंज्ञेयम् ॥३०॥३१॥ अथातिसुलभतया प्र-कारांतरेण पूर्वोक्तसंख्यासाधनं स्थूलमानेनाह ॥ राशीनित्याद्यध्यायांतं ॥ राशीन्हित्वा स्पष्टं ततः अवशिष्टस्य लिप्ताः कला कार्याः ततः खख-नेत्रैः २०० विभाजिताः भक्ताः ततः साधनघ्नाः साधनेनपूर्वसंपादित-भावसाधनेन घ्नाः गुणिताः ततः वर्गणाभिः विभक्ताः भाजिताः तेएव फलाहताः पूर्वसंपादितफलेनगुणिताः पश्चादुच्चादिवृद्धिं उच्चत्रिकोणा-दितारतम्येनवर्धनं हानिं नीचादितारतम्येन ह्रासं च कुर्यात् एवं कृते सम्-च्चयेन पुंस्त्रीसंख्यकाभवेदिति अतिस्थूलमानमितिबोध्यम् ॥ ३२॥३३ अध्यायेऽस्मिन्पंचमेतुकृताटीकायथामति ज्योतिर्विद्भिः शोधनीयाकृपया दीनवत्सलैः १ श्रीगणेशप्रेरणयात्वार्षेऽध्यायेतुपंचमे कृतयाव्याख्य यादेवः सएवप्रीयतांमम २ इतिश्रीमद्दू० शास्त्रेश्रीमद्ध्यङ्कन्वयपेटशा० जटाशंकरसूनुज्योतिर्विच्छ्रीधरणवि० सुटी० लोकयात्रावर्णननामपंचमोध्या०५

॥ भाषा ॥

फल आवे उसकूं भावफल कहना और दूसरे सम्प्रदाय वरामें लेना तो फल आवे वो भावसाधन फल जानना ॥ ३०॥३१॥ राशीनित्याद्यध्यायांतं॥ अब पूर्वोक्त कह्या उसकूं सुलभरीतिसें बनाते है. राशिकूं छोडके अंशादिकर्की लिप्तिका कर के दोसोंसे भाग लेना जो लब्ध है उसकूं पूर्वसंपादित भावसाधनसे गुणन करना अपने ध्रुवांकसें भाग लेना. पूर्वसंपादित फलसे गुणन करना तो अंक आवे वो

लग्नषड्वर्गहोराणांभोक्तारःपतयःस्मृताः. त्रिपंच
वेददिक्सप्तमुनिरामांशकेफलं ६ शुभग्रहास्त
द्रष्टारःस्थानदाःसकलग्रहाः युक्ताःसदातुसद्भा-
वाःसंज्ञानुफलदास्तदा ७ पापाहानिकराहित्वा
स्वोच्चंकोणसुहृत्स्थितान् तद्राशिपेस्यशत्रुर्वानी-
चेयोर्वाग्रहोयदि ८ हानिंकुर्यात्तदानस्य दृष्टियोगा-
नुपाततः

॥ टीका ॥

अथ तत्रशुभग्रहपापग्रहभेदेन विशेषमाह ॥ लग्नेत्यादि सार्धत्रयेण लग्नषड्वर्गहोराणां लग्नस्य संबंधिनः येषड्वर्गाःगृहहोरा द्रेष्काणसप्तांशन-वांशद्वादशांशत्रिंशांशाः तेषांयेहोराः राशयः नाम लग्नस्य अमुक राशिः होरायाअमुकराशिः द्रेष्काणास्य अमुकराशिः इत्यादयः येषड्वर्गवर्तमाना राशयः तेषांपतयः अधिपाः क्रमात् भोक्तारः स्वदशायां फलदाइत्यर्थः स्मृताः अत्रहोराशब्देनराशिर्ग्राह्यः नतुराश्यर्धभागः तस्यउक्तषड्वर्ग-गतत्वादितिज्ञेयम् अथतेभोक्तारः स्वस्य सर्वदशायां फलदाता दशा-शविशेषफलदाइतिचेदाह त्रिपंचवेददिक्सप्तमुनिरामांशके लग्नादिव-र्गपतयः स्वदशायांक्रमात् त्रिपंचादिदशाविभागे फलं ददतीतिशेषः, अथद्रष्टारोग्रहाःशुभाएव फलदा नपापाः स्थानदास्तु सकलाः शुभाः पापाश्चफलदाः युक्ताः शुभग्रहयुक्ताः सद्भावाः शुभभावा ज्ञेयाः

॥ भाषा ॥

॥लग्नेत्यादि सार्धत्रयेण ॥ लग्नषड्वर्गका जो फल है वो उसके पतीयोंकि दशामें प्राप्त होता है. सोभी ३।५।४।१०।७।३ यह संख्या अंशमें होवेगी ॥ ग्रह जो है उनोंकी दृष्टि शुभग्रहोंकी फल देनी है पापग्रहकीनहीं औरस्थानमें (देखनेमें) शुभपाप दोनो ग्रहोंका शुभाशुभ फल होता है. और जोजो भावमें जोजो ग्रह पाप या

भावानांसाधनंहत्वा दृष्टिभिश्चबलेनच षड्वर्गा-
दिपतीनांचभावेभावेपृथक्पृथक् ३ तेषांचदृ
ग्बलानांचसंहत्याभाजयेदथ स्वामिदृष्टिस्थि-
तानांतु कालेभावफलंविदुः ४ ज्ञानसंभवका-
लस्तुजन्मकालाद्बलायदा लग्नादिव्ययपर्यंता
भावाः कालेतथाविदुः ५

॥ टीका ॥

अथ भावफलज्ञानेचिंत्योयंविषयः कालमाह ॥ भावानामितित्रिभिः॥ भावानां लग्नादीनां साधनंपूर्वाध्यायाग्रे कथितं दृष्टिभिः तत्तद्भावदृष्टिभिः बलेन तत्तद्भावबलेनच हत्वा गुणयित्वा भावेभावे प्रतिभावमित्यर्थः तेषां तेषां षड्वर्गपतीनां गृहहोराद्रेष्काणनवांशद्वादशांशत्रिंशांशपतीनां दृग्बलानां दृष्टयश्चबलानिच तेषां पृथक्पृथक् संहत्या भाजयेत् तेनयल्लब्धं तत्तत्काले तत्तत्फलंज्ञेयम् अथानंतरं स्वामिदृष्टिस्थितानां स्वाधिपतिपूर्णदृष्टानांतु काले तत्तत्स्वामि दशासमये भावफलं भावोक्तफलं स्यादितिविदुः आचार्याइतिशेषः पूर्वं स्वामिदृष्टानन्वेत् फलस्यजन्मकालात्सकाशाज्ज्ञानसंभवकालस्तु लग्नादिव्ययपर्यन्ताभावाः येविधंते तेषांमध्येयेबलाः बलाधिकास्तेषांपतिदशाकाले क्रमात्तन्न्यूनतन्न्यूनबलानांपतिदशाकाले तथा भावसदृशंफलंविदुरित्यन्वयः ॥ ३ । ४ । ५ ॥

॥ भाषा ॥

करके कहनाहुं और परमायु भी उत्तम रीति से निकालना ॥ २॥ भावानामिति त्रिभिः॥ अब द्वादशभावोक्तफल कब होवेगा उस का कालप्रमाण कहते हैं॥ स्पष्टद्वादश भाव करके उस कूं अपनी अपनी दृष्टिसें गुणन करके पीछे अपने भावबलसे गुणन करना फिर प्रत्येक भावके जो षड्वर्गपति और उनोंका दृष्टि और बलइनोका योग करके भाग लेना. जो लब्ध वर्षादिक आवे वो समयमें स्वाउनपतिदशाकोका फल जानना ॥ ३॥ ४॥ ५॥

मंदश्चायेशुभाः सर्वे स्वोच्चगौ भौमसूर्यजौ भाग्ये
शुभाः शुभाः पापा अशुभाः स्वपतिंविना ११ पूर्वभा-
गेससुद्दिष्टदृग्बलेनफलानितु विरुद्धानिपरित्यज्य
समीचीनानिसंग्रहेत् १२

॥टीका॥

भौमः शुभकरः शत्रुभे षष्ठस्थाने मंदः शनिः शुभकरः शत्रुरोगादिना-
शकइत्यर्थः आये एकादशस्थाने सर्वेशुभाः पूर्णचंद्राः पापबुधगुरुशुक्राः
शुभाः भाग्यकारका इत्यर्थः अथच भाग्येपापाः क्षीणचंद्रसपापबुधर-
विभौमशनिराहुकेतवः अशुभाः भाग्यनाशकाः किंतु स्वपतिंविना स्व-
स्यभाग्यभावस्य अधिपव्यतिरेकेण अशुभाः अर्थात् पापोऽपि भाग्यप-
तिः सन् भाग्येस्थितश्चेत् भाग्यकारकएवज्ञेयः तथा भौमसूर्यजौ कुज-
शनी स्वोच्चगौ मकरतुलावर्तमानौ भाग्येस्थितौसंतौ शुभकराविति ॥
॥१०॥११॥ अथ पूर्वभागोक्तदृग्बलसिद्धफलव्यवस्थामाह ॥ पूर्वभा-
गइति पूर्वभागे पूर्वार्धे ससुद्दिष्टदृग्बलेन कथितदृष्टिबलेन यानि फलानि
संति तन्मध्ये विरुद्धानि अनिष्टानि परित्यज्य त्यक्त्वा समीचीनानि शु-
भानि संग्रहेत् गृण्हीयात् यतः शुभानामेवात्रप्रकरणे उपयोगित्वादिति
भावः ॥१२॥

॥ टीका ॥

शनि ६ शुभ सर्वग्रह ११ शुभहै मंगल शनि उच्चके होवे तो उत्तम जानने
नवम स्थानमे शुभ ग्रहोका फल उत्तम जानना पापग्रहोका फल अशुभ
जानना. परन्तु नवमस्थानमेभाग्यमे जो पापग्रह अपना पती होके बैठा होवे
तो भाग्यवृद्धि करनेवाला जानना ॥ १०॥ ११॥ पूर्वभागइति ॥ पूर्वभागने
दृष्टिबलसे फल कहा है उसमे अनिष्ट फल छोडके शुभफलका संग्रह
करना ॥१२॥ ॥ ७ ॥

उद्वाहकारकौचंद्रभृगुक्षौज्ञोवानपोऽथवा ९ श-
निर्मृतिकरोभौमरवीनीचासतीपती गुरुःशुभ-
करःपुत्रेकुजोभ्रातरिशत्रुभे १०

॥ टीका ॥

सदा सर्वदा संज्ञानुफलदाः तनुधनसहजादिनामानुसारफलदातारः भवंति तद्वत् पापाः पापग्रहयुक्ताः हानिकराः तन्वादिनामानुसारहानिकर्तारो भवंति तथापि स्वोच्चकोणसुहृत्स्थितान्पापान्हित्वा अन्येपापाः अथभावस्थितग्रहस्यवर्तमानराशिर्यदिशत्रुः यदिवायोग्रहोनीचे भवति तदा तत्फलस्य दृष्टियोगानुपाततः दृष्टियोगानुरूपंपूर्णदृष्टेः पूर्णहानिश्चेत् अमुकदृष्टेः कियतीहानिरिति त्रैराशिकेनहानिं फलस्येतिशेषः कुर्यात् विदधीतेति ॥ ६॥ ७॥ ८॥ अथकारकसंज्ञकान्ग्रहानाह ॥ उद्वाहेति ॥ उद्वाहकारकौ उद्वाहंविवाहं कुरुतइति उद्वाहकारकौ विवाहकारकसंज्ञौ चंद्रभृगुक्षौज्ञेयौ वा विकल्पेन ज्ञोबुधः तपोगुरुर्वा ज्ञेयः मृतिकारः मृतिंमरणं करोतीतितथा शनिः ज्ञेयः भौमरवीच नीचासती पती नीचाकुलटा सती पतिव्रता तेपातः इति तथाज्ञेयाविति ॥ ९॥ अथभावेषुशुभाशुभग्रहानाह ॥ गुरुरितिसार्धेन ॥ पुत्रेपंचमस्थाने गुरुः शुभकरः शुभावहः पुत्रकारकइत्यर्थः भ्रातरि तृतीयस्थाने कुजः

॥ भाषा ॥

शुभ उच्चनीच मूलत्रिकोणादिकके होवे शत्रुमित्रादिकके होवे दृष्टियुक्त दृष्टिरहित होवे. उस अपरसे ते भावोंका शुभाशुभ फल कहना ॥ ६॥ ७॥ ८॥ उद्वाहेति ॥ अब कारक ग्रह कहते है. विवाहका करानेवाला चंद्र शुक्र है वास्ते चंद्रशुक्र विवाह कारक जानना. विकल्प मतांतरसे विवाहकारक बुध या गुरु जानना ॥ शनि मरणकारक है. मंगल कुलटाकारक है सूर्य पतिव्रता कारक है ॥ ९॥ गुरुरितिसार्धेन ॥ अब भावगत ग्रहोका शुभाशुभफल कहते है. गुरु ५ शुभ मंगल ३ शुभ

रविस्तुपाचकोज्ञेयश्चंद्रमाबोधकःसदा पाच
कोबाधकश्चैवकारकोवेधकः क्रमात् १५ र
व्यादीनांचविज्ञेयामंदारेज्यासितास्तथा शु-
क्रारमंदरवयोरवीन्दुशनिचंद्रजाः १६

॥ टीका ॥

ह्रीआह॥ तेषामिति॥ तेषांसुस्वभावदुःस्वभावयोरव्यादीनां इष्टफले लग्नवर्तमानग्रहस्य कष्टाधिकेष्टफलेवृद्धिः उत्तरोत्तरं वर्धनं अन्यथा एवंनचेदसुभाख्यफलात् कष्टफलाधिक्यात् असदेव स्वभाववर्णादीनामुत्तरोत्तरंहानिरेवस्यात् एवं तस्मादिष्टकष्टादेव मृतौमृत्युस्थाने फलंस्यात् एतदुक्तं भवति मृत्युस्थानस्थितस्य तदधिपस्यवा कष्टादिष्टफले अधिकेसति वक्ष्यमाणप्रकारेण भातायुषः इष्टफलाधिक्यतारतम्येन वृद्धिः न्यूनत्वतारतम्येन ह्रासः स्यादितिभावः एवंसर्वभावेषुबोध्यम् ॥ १४ ॥ अथशुभाशुभफलविशेषज्ञानार्थं रव्यादीनां पाचकादिसंज्ञाः स्थानविशेषसंबंधेनाह ॥ रविरित्यादित्रयोविंशतिश्लोकपर्यन्तम् ॥ तत्रादौ रविचंद्रयोः पाचकादिसंज्ञा निसर्गतएव ॥ रविरिति॥ रविस्तुपाचकः निसर्गतएवपाचकसंज्ञकः चन्द्रमास्तुबोधकः निसर्गतएवबोधकसंज्ञकः सदेति स्वभावतइत्यर्थः क्रमात्क्रमशः पाचकसंज्ञयोक्तोरविः कारकः कारकसंज्ञः बोधकसंज्ञयोक्तश्चंद्रः वेधकसंज्ञकइतितयोरेवनिसर्गसिद्धसंज्ञांतरमुक्तमिति॥१५॥अथ

॥ भाषा ॥

शुभ फल उत्तरोत्तर ज्यादा होवेगा. कष्टबल अधिक होवे तो अशुभ फल उत्तरोत्तर ज्यादा होवेगा. ॥१४॥ रविरित्यादित्रयोविंशतिश्लोकपर्यन्तम्॥ सूर्यकों पाचक जानना. चंद्रबोधक जानना. और सूर्य जो पाचक है उसकूं कारक भीकहेना चंद्रमा बोधक है उसकूं वेधक जानना॥१५॥रव्या-

ग्रहराशिस्वभावेनपुंस्त्रियोराशिमेवच स्वभावं
चवदेद्बुद्ध्यादेशाकालकुलानुगः १३ तेषामिष्ट-
फलेवृद्धिस्त्वशुभारव्यफलादथ अन्यथात्वसदे-
वस्यात्तस्यतस्मान्मृतोफलम् १४

॥ टीका ॥

अथ स्त्रीपुंस्वभावविचारमाह ॥ ग्रहेतिद्वाभ्याम् ॥ ग्रहराशिस्वभावेन ग्रहाश्चरव्यादयः राशयः मेषादयश्च एतेषां यथास्वभावः तेन तथा पुंस्त्रियोः नृनार्योः राशिलग्नं विचार्य देशकालकुलानुगः देशाश्चका-लाश्चकुलानिच अनुगच्छति अनुसरतीति तथा गणक इत्यध्याहारः पुंस्त्रियोः नरनार्योः स्वभावंनिसर्गं बुद्ध्याऽतिसूक्ष्मविवेकेनेत्यर्थः विचार्यविशे-षः वदेत् कथयेत् एतदुक्तंभवति गुरुर्गौरः कस्यचिल्लग्ने वर्तमानः त-दीयोत्पत्तिदेशः बहुशः कृष्णवर्णनरप्रायः नहिं देशतारतम्येन गौर-त्ववैगुण्यं तथा शनिः कृष्णः कस्यचिल्लग्ने वर्तमानः तदीयोत्पत्तिदेशो बहुशो गौरवर्णनरप्रायः नहिं देशतारतम्येन कार्ष्ण्यवैगुण्यमिति देशा-नुसारवर्णविचारः एवमेवस्वभावादिविचारः ॥ तद्वदेवकालविचारः लग्ने शुभग्रहोपि जन्मकालो व्यतीपात ग्रहणादि दुष्कालेचेत्तारतम्येन सौशील्यदुःशीलत्वमिश्रणंवदेत् एवमेवकुलविचारः शुक्रसौम्यादिशु-भग्रहयुतेऽपिलग्ने म्लेच्छादिक्रूरस्वभावकुलोत्पन्नस्य सौम्यत्वक्रौर्या-दिमत्त्वंमिश्रणेनवक्तव्यमितिदिक् ॥१३॥ अथतत्तत्स्वभावस्यन्हासवृ-

॥ भाषा ॥

॥ ग्रहेतिद्वाभ्याम् ॥ अब मनुष्योंका जो स्वभाव गुण है. सो ग्रहोंके और राशी योंके गुणानुसारसे तथा देशकाल कुल देखके बोहोत सूक्ष्म दृष्टिके विचारसे कहेना ॥ जो जो भावके फल सुख दुःखादिक कहेहैं. उनोंकी उत्तरोत्तर वृद्धि या हानि कैसी जानना सो कहते है जिस भावका इष्टबल अधिक होवे तो

षट्सप्तधर्मकर्मायमृतिष्वेवगताःक्रमात् पाच-
काद्याश्चतुर्थेचबलवंतःसमीरिताः २१ कारकोमं-
दफलदोवेधकोविघ्नकृत्स्मृतः बोधकःशीघ्रफल-
दःपाचकोपिफलप्रदः २२ तदंशकालस्यांतेपाच्या
दावंत्यांशकेऽपिच अंत्यांशकेऽपिफलदाःपाचका-
द्याःक्रमादिह २३

॥ टीका ॥

कबोधककारकवेधकसंज्ञकाश्चत्वारोभवंति ॥२॥ एवंभौमस्य रवी-
न्दुशनिचंद्रजाः भौमस्थानात् द्विषडायव्ययेषु २।६।११।१२ स्थानेषु
स्थिताः क्रमात्पाचकादिसंज्ञकाश्चत्वारोभवंति ॥३॥ एवंबुधस्य चंद्रे-
ज्यसितभौमाः बुधस्थानात् द्विवेदेंद्रियवह्निषु २।४।५।३ स्थानेषु
स्थिताः क्रमात्पाचकादिसंज्ञकाश्चत्वारः ॥४॥ एवंगुरोःमंदारेन्दुदि-
नेश्वराः गुरुस्थानात् षट्पंचसप्तरिःफेषु ६।५।७।१२ स्थानेषुस्थि-
ताः क्रमात्पाचकादिसंज्ञकाः॥५॥ एवंशुक्रस्य भौमज्ञसूर्यमंदाःशु-
क्रस्थानात् द्विषड्व्ययचतुर्षु २।६।१२।४ स्थानेषुस्थिताः क्रमात् पा-
चकादिसंज्ञकाः ॥६॥ एवंशनेः सितेन्दुगुरुभूमिजाः शनिस्थानात्
त्रिरुद्रषट्सप्तमेषु ३।११।६।७ स्थानेषुस्थिताः क्रमात् पाचकबोध-
ककारकवेधकसंज्ञकाश्चत्वारोज्ञेयाः एतेपाचकादयश्चत्वारः लग्नात्
लग्नव्यतिरिक्तकेंद्रराशित्रयेवर्तमानाश्चेद्बलिनः स्युः तथा एतेपाचका-
दिसंज्ञासंज्ञिताः रविचंद्रभौमबुधगुरवः क्रमात् लग्नतः ६।७।९।१०।
११।८।४ स्थानेषुस्थिताश्चेत्तेऽपिबलिनोज्ञेयाइति ॥ अथैषांफला-
न्याह ॥ कारकः कारकसंज्ञकः स्वसंज्ञाप्रापकग्रहस्यमंदफलदः न्यू-

॥ भाषा ॥

जैसा सूर्यसें ग्यारवे घरमें शुक्र होवे तो वेधक जानना उसका फल यह है कि

चंद्रेज्यसितभौमाश्च मन्दारेन्दुदिनेश्वराः भौम-
ज्ञसूर्यमंदाः स्युः सितेन्दुगुरुभूमिजाः १७ षट्
सप्तनवरुद्रेषु सप्तमंदभवत्रिषु द्विषडायव्ययेष्वे-
वंद्विवेदेंद्रियवन्हिषु १८ षट्पंचसप्तरिष्फेषु द्विष-
ड्व्ययचतुर्ष्वपि त्रिरुद्रषट्सप्तमेषु स्थिताः स्था-
नेषु ते ग्रहाः १९ पाचकाद्यास्तु चत्वारः सूर्यादि-
भ्यः क्रमादिह पीडर्क्षे वाप्यपीडर्क्षे केन्द्रे लग्नं वि-
नातथा २०

॥ टीका ॥

रव्यादीनां स्थानसंबंधेन पाचकादिग्रहानाह॥ रव्यादीनामित्यादि त्रयोविंशतिश्लोकां॥
रव्यादीनां सूर्यप्रभृतिसप्तग्रहाणां पीडर्क्षे शत्रुराशौ अपीडर्क्षे मि-
त्रराशौ अपि वर्तमानाः लग्नं विना लग्नव्यतिरेकेण जन्मलग्नात् केंद्रे
चतुर्थसप्तमदशमस्थानेगताः सर्वग्रहाः पाचकाद्याबलवंतः स्युः
अपि च लग्नादेव सकाशात् षट् ६ सप्त ७ धर्म ९ कर्म १० य ११ मृति-
षु ८ चतुर्थेषु स्थानेषु गताः क्रमात् क्रमेण वर्तमानाः पाचकाद्याः सप्त
रव्यादयो बलवंतः स्युः अन्यथा पाचकाद्याः सामान्याः एवस्युः
तत्क्रममाह रवेः मंदारेज्यसिताः रविस्थानात् षट्सप्तनवरुद्रेषु
६।७।९।११ क्रमात् स्थानेषु स्थिताः क्रमात् पाचकबोधककारक-
वेधकसंज्ञकाश्चत्वारो भवन्ति एवंचंद्रस्य शुक्रारमंदरवयः चंद्रस्था-
नात् सप्तमंदभवत्रिषु ७।९।११।३ स्थानेषु स्थिताः क्रमात्पाच.

॥ टीका ॥

दीनामित्यादित्रयोविंशतिश्लोकपर्यंतम॥ अब सूर्यादिकोंका स्थानसंबंधसे पाच-
कादिक भेद कहते हैं. सूर्यसे, छट्ठे सातवें नवमें ग्यारवें यह स्थानोंमें क्रमसें
शनि मंगल गुरु शुक्र बैठे होवे तो पाचक बोधक कारक वेधक जानना.

धनहानिभयानांच व्याधीनांदिवसांस्तथा शु-
भाशुभानिकर्माणियात्रादिविजयादिच १

॥ टीका ॥

भागे स्वदशागोचरादिफलप्रदोभवतः सितार्यकौ शुक्रगुरूमध्ये मध्य-
त्रिभागेफलदौ ज्ञोबुधः सर्वदा समग्रदशादौ फलदः स्यात् शशीचंद्रः
मंदः शनिश्च एतौद्वौ अवसाने अंत्यत्रिभागे फलदौ स्यातामिति ॥ २४
॥ एवंपराशरोक्तेऽस्मिन्षष्ठाध्याये यथामति गणेशमीनयेटीकाकृता
शोध्या मनीषिभिः ॥ १ ॥ इतिश्रीमत्पराशरहोराशास्त्रे श्रीमदृध्यङ्
न्वयवेदशास्त्राद्यनवद्यविद्याविद्योतितदशदिङ्मंडलजटाशंकरसूनु
ज्योतिर्विच्छ्रीधरेणविरचितायांसुबोधिनीटीकायांषष्ठोऽध्यायः ॥ ६
नत्वाश्रीमद्गणेशानं सप्तमेऽध्यायकेमया ॥ क्रियतेविशदाव्याख्यापरोपकृ
तयेमुदा ॥ १ ॥ सप्तमेध्यायकेऽस्मिंस्तु पराशरमहामुनिः ॥ व्याध्यादि-
दिवसानाहरव्यादीनांयथाक्रमं ॥ २ ॥ अथ भगवान्महर्षिः शिष्याय मास-
चर्ययाशुभाशुभदिवसज्ञानमाह ॥ धनेत्यादिचतुःश्लोक्या ॥ धनहा-
निभयानां धन द्रव्यलाभः हानिर्द्रव्यनाशः भयं शत्रुरोगाद्युत्-
पन्नं तेषांव्याधीनां शरीरे प्राप्तरोगाणांच दिवसान् वक्ष्यमाणान् जा-
नीयादित्यध्याहारः अथशुभाशुभानि इष्टानिष्टानि कर्माणि व्यापारा-
न्यात्रादि गमनागमनादि विजयादि उत्कर्षादि सर्वं मासचर्याविधानेन
ब्रूयात् इतरानन्यान् उक्तावशिष्टान्प्रकारान् अन्येन दिनचर्यावर्षेच-

॥ भाषा ॥

गुरु मध्य त्रिभागमें फल देते हैं. बुध सर्व काल फल देता है. चंद्र शनि अंति-
मत्रिभागमें फल देता है. ॥ २४ ॥ इतिबृहत्पाराशरहोराशास्त्रे भाषाटीकायां लोक
यात्रावर्णननामषष्ठोऽध्याय ॥ ६ ॥ धनेत्यादिचतुःश्लोक्या ॥ अब फलादेश क-

धनकी प्राप्ति धनका नाश शत्रुभय रोग इनोंकी प्राप्तीके दिन और

आदौफलप्रदौ भौमरवीमध्येसितार्यकौ सर्वदा ज्ञः शशीमंदस्त्ववसानेफलप्रदौ २४ इतिश्रीमद्बृहत्पाराशरहोरोत्तरभागेलोकयात्रायांषष्ठोऽध्यायः ६

॥टीका॥

नफलदः स्यात् तथा वेधकसंज्ञको ग्रहः स्वसंज्ञाप्रापकस्य विघ्नकृत् तदधिकारानुरूपफलविषये विघ्नकर्ता भवेत् तथा बोधकसंज्ञकः स्वसंज्ञाप्रापकस्य तदधिकारानुरूपफलविषये शीघ्रफलदः स्यात् तथा पाचकसंज्ञकः स्वसंज्ञाप्रापकस्यग्रहस्यविफलप्रदः तदधिकारानुरूपफलविषये वैफल्यकारकइति अथैतत्फलदानकालमाह ॥ तदिति॥ पाचकाद्याः ' पाचकबोधककारकवेधकाः तदंशकालस्य तस्यस्वसंज्ञाप्रापकग्रहस्य क्रमात् अंते अंतिमनवमांशकाले १ आद्ये आद्यनवांशे २ अंत्यांशके अंत्यनवांशके ३ अंत्यनवांशकेच ४ अपिफलदाः फलदातारोज्ञेयाः अपिशब्देनफलदाने सर्वदात्वानियमः सूचितः इति ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ अथ रव्यादीनां दशागोचरादिफलकालमाह ॥ आदाविति ॥ भौमरवी कुजसूर्यौ आदौ आद्यत्रि-

॥ भाषा ॥

| पाचकादिग्रह वर्णनचक्र | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू | चं | मं | बु | गु | शु | श | ग्र |
| शु ६ | बु ७ | सू १ | चं २ | श ८ | भौ २ | बु ३ | पाचक |
| भौ ३ | भौ [illegible] | चं ८ | गु ४ | भौ ५ | बु ८ | चं ११ | बोधक |
| गु ९ | श ११ | श ११ | शु ५ | चं ७ | म १२ | गु ८ | कारक |
| शु ११ | सू ३ | बु १२ | भौ ३ | म १२ | श ४ | भौ ७ | वेधक |

| सूर्यादिपाचकादिचक्र | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू | चं | मं | बु | गु | शु | श | ग्र |
| ० | ० | ० | ० | ० | ० | ० | पाचक |
| ० | ० | ० | ० | ० | ० | ० | बोधक |
| ० | ० | श | ० | ० | सू | ० | कारक |
| बु | सू | ० | मं | ० | ० | ० | वेधक |

जो भावमें बैठा होवेगा वो भावगत कार्यका विघ्न करेगा ऐसा सब ग्रहोंका जानना यह यानेंधिकाम न्यटैपड़ा चक्रसिर्टदिखाया है ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ ॥ २२ ॥ २३ ॥ आदाविति ॥ सूर्य मंगल आद्य प्रथम त्रिभागमें फलदेते हैं शुक्र

तेषांभंगमथोवक्ष्येयथाहकमलासनः ॥ गर्गायभ-
गवान्सोपि ममाहाहंनवद्विज १ तथात्वरिःफष-
ष्ठाष्टस्थानानांकरणाधिपाः ॥ तत्तद्भावस्यभंगस्य
कर्तारः सतिसंभवे २

॥ टीका ॥

ति त्रैराशिकरीत्या ज्ञेयाइति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ एवंमकारतोऽध्याये सप्तमेऽस्मिन्यथामति कृताटीकाज्योतिर्विदैः शोधनीयाप्रयत्नतः इतिश्रीमद्बृहत्पाराशरहो॰ श्रीधरेणविरचितायां सुबोधिनीटीकायां लोकयात्रावर्णनंनाम सप्तमोध्यायः ॥७॥ अथपूर्वोक्तयोगानांभंगमाहपराशरः अध्यायेऽस्मिन्नष्टमेचमैत्रेयायमहामुनिः ॥१॥ एवंवर्षमासदिनचर्याभिर्भावफलान्युक्त्वा अथाष्टमाध्याये पूर्वोक्तयोगानां भंगंकथयति ॥ तत्रपरंपरामाह ॥ तेषामिति ॥ हेद्विज मैत्रेय। तेषांपूर्वोक्तयोगानां भंगंनाशं कमलासनोब्रह्मा गर्गायमुनये आह सोपि गर्गोऽपि मम तंभंगमाह अहंतव तंभंगंवक्ष्येकथयिष्ये ॥ १॥ स्थानविशेषकरणाधिपसंभवेनभंगमाह ॥ तथेति ॥ तथात् रिःफषष्ठाष्टस्थानानां द्वादशषष्ठाष्टसंज्ञकस्थलानां करणाधिपाः करणानां बिंदूनां स्वामिनः करणदातारोग्रहाइत्यर्थः सतिसंभवे उक्तस्थानत्रयकरणसंभवे तथा स्थाः

॥ भाषा ॥

और दूसरे भावमें पूर्वोक्त संख्याकी अर्धसंख्या जाननी. दूसरा और अष्टम यह भाव छोडके जो अन्यभाव रहे वहां त्रैराशिक मतसें कहेना ॥ १॥ २॥ ३॥ ४॥ इतिश्रीमद्बृहत्पाराशरहो॰ भाषाटीकायां लोकयात्रावर्णनंनाम सप्तमोऽध्यायः ॥७॥ ॥तेषामिति॥ अबयोग भंग कहते हैं॥ हे मैत्रेय। पूर्वे जो योगभंग ब्रह्माने गर्गकूं कहे गर्गने मेरेकूं कहे सो मय अब तुमारेकूं कहताहूं सो सुनो ॥ १॥ ॥तथेति॥ लग्नसे १२।६।८ घरोंमे बिंदुदे देने ॥ यह यहां तैसे होवे या वेस्था-

मासचर्याविधानेनब्रूयादन्येनचेनरान् लग्नारिमृ-
तिरिःफेषुवर्गाणांनपतींस्तथा २ करणेशान्समा-
लोच्यकथयेन्मुनिपुंगव रसेपवोमुनिःस्वाष्टौरवि-
भूपादिशस्तथा ३ द्विशतंचक्रमात्सूर्याद्दिवसाश्चा-
ष्टमेस्थिताः द्वितीयेऽर्धत्वंतरेचत्रैराशिकवशेनतु
४ इतिबृहत्पराशरहोरोत्तरभागेमासचर्यादिवशा-
त्फलज्ञानकथनंनाम सप्तमोऽध्यायः ७

॥ टीका ॥

र्याविधानेन ब्रूयात् तथा लग्नारिमृतिरिःफेषु लग्नषष्ठभावमृत्युभाव-
व्ययभावेषु फलविषये वर्गाणांप्रागुक्तांपतीन्स्वामिनः करणेशान् क-
रणपतींश्च कस्मिन्भावे कः कियान्फलदइति सम्यग्विचार्य हेमुनिपुं
गव! कथयेत्फलमिति शेषः अथ रव्यादीनां अष्टमभावाद्विद्वितीयभा-
वांतद्वितीयभावाद्यष्टमभावपर्यन्तं वर्तमानानां रव्यादीनां फलदाने दिवसा-
नाह अष्टमेभावे रसेपवः ५६ रवेः मुनिः ७ विधोः स्वाष्टौ ८० भौ
मस्य रवयः १२ बुधस्य भूपाः १६ गुरोः दिशः १० शुक्रस्य द्विशतं
२००शनेः ॥ एवमष्टमभावे सूर्यात्सकाशात्क्रमाद्दिवसाः द्वितीयभावे
तु अर्धभुक्तदिवसार्धं अंतरे अष्टमद्वितीयभावयोर्मध्यभावेषुतु त्रैराशि-
कवशेन द्वितीयाष्टमयोः अमुकदिवसाश्चेदमुकमध्यभावे कतिदिवसाइ-

॥ भाषा ॥

शुभाशुभ कर्म जयपराजय उत्कर्ष इनोंका निर्णय मासचर्याके अनुसारसें
कहेना. और दूसरे जो कार्य है वे सब दिनचर्या दर्पचर्यानुसारसे वर्णन करना.
उसमें १।६।८।१२ यह भावोंके पति और विंदूके अधिपतियोंकू देखके अच्छा
विचार करके फल कहेना. अब सूर्यादिकोंकेफलदायक दिन कहते है. सू-५६ चं
७ मं-८० बु-१२ गु-१६ शु-१० श-२०० यह संख्या अष्टमभावकी जाननी.

शिष्टमेवंयदितदाशत्रुभंवाथभंगदम् तद्भा
वानिष्टफलकंतच्छत्रुफलसंगुणम् ५ सप्ता-
प्तशिष्टमेवात्रपापरश्मिगुणंततः अर्कशिष्टंयदि
भवेत्षष्ठरिःफाष्टमेऽपिवा ६ शत्रुभंवापिभंग
र्क्षंहानिस्तस्यप्रकीर्तिता यथोत्तरमितीवासंक्ष-
यवृद्धिस्ततोभवेत् ७

॥ टीका॥

द्भंगःस्यात् ॥४॥ नतुएवं मुनिगुणितं रविभागोपलब्ध्यनंतरमपि अवशिष्टंचेत्किंकार्यंतत्राह ॥ शिष्टमित्यादिसप्तश्लोकांतं ॥ एवंनाम पूर्वप्रकारेकृतेऽपि शिष्टंयदि अवशिष्टं अवशिष्टोऽकोयदि राशिरूपः शत्रुभं लग्नेशस्य शत्रुराशिःस्यात् वा अथवा भंगदं सोंऽकोराशिरूपः लग्नात् भंगदषष्ठाष्टरिःफरूपःस्यात् तदा तद्भावानिष्टफलकं यद्भावस्यायंसंस्कारः कृतः तद्भावस्यानिष्टफलकोबोध्यः अथपुन-स्तस्याप्यवशिष्टस्य संस्कारंकथयति तत् यच्छत्रुभंवाभंगदभं वावशिष्टंतत् तच्छत्रुफलसंगुणंसचासौ शत्रुश्च तच्छत्रुः तस्य यत्फलं कष्टफलंतेनसंगुणं सम्यग्गुणितं सप्तातं सप्तभिर्भक्तम-पि अत्रावशिष्टमेवचेत्तदा पापरश्मिगुणं पापस्यशत्रोः येरश्मय-स्तैर्गुणयित्वा अर्कशिष्टं अर्कैर्द्वादशभिः अवशेषितं यद्यपिषष्ठरिः-फाष्टमे लग्नात्षष्ठेवारिःफेवा अष्टमेवास्थाने तच्छत्रुभंवा भंगदभं

॥ भाषा॥

लाये परंतु लब्धांक जो आवे उसकूं सात गुणित करके बारासें भाग लेना. जो शेष रहे वो राशि जानना. वो राशि ६।८।१२ वे घरमें आवे तो वो भावका भंग जानना ॥४॥ शिष्टमित्यादि सप्तश्लोकांत॥ अब दूसरी वखत भाग लेने-सें शेष रहे तो पुनः संगुणन कहते हैं. पूर्वानीतराशि लग्नेशकी शत्रुरा-

तत्तद्भावाष्टवर्गोत्थसंख्यातद्वर्गणाहता रविभ-
क्तावतः शिष्टाराशिर्मेषादिकाभवेत् ३ षष्ठाष्टरिः
फेराशिश्चेद्भंगएष प्रकीर्तितः फलंचमुनिसंवृन्दं
रविभक्तंतथाभवेत् ४

॥ टीका॥

तत्रयकरणसंभवेऽपि स्थानत्रयकरणेशानांसंयोगसंभवे दृष्टिसंभवं सतिवा तद्गुनदृष्टभावस्य भावफलस्येत्यर्थः भंगकर्तारोनाशकर्तारः स्युः ॥२॥ अथराश्यानयनेनभंगांतरमाह ॥ तत्तदिति॥ तत्तद्भावाष्टवर्गोत्थसंख्या तत्तद्यन्यतमविचारणीय भावस्य या अष्टवर्ग समुत्पन्न करणांक संख्या तद्वर्गणाहता तस्यैवभावस्य वर्गणयागुणिता ततः रविभक्ता द्वादशभाजितासती याशिष्टास्यात् योंऽकःशिष्टः स्यादित्यर्थः सामेषादिकाराशिर्भवेत् एकादिशिष्टांकपरिमितेत्यर्थः ॥३॥ अथास्याराशेः प्रयोजनमाह ॥ षष्ठेत्यर्धेन ॥ एषः पूर्वोक्तप्रकारोत्पन्नोराशिः षष्ठाष्टरिःफश्चेत् भंगः पूर्ववत्तद्भावभंगः प्रकीर्तितोऽवगंतव्यइति अथ द्वादशभक्तावशिष्टांको राशिर्जातः लब्धांकस्य किंप्रयोजनंतदाह ॥ फलमित्यर्धेन ॥ फलंप्रागानीतंद्वादशभागलब्धं यत्यत् मुनिसंवृन्दं मुनिभिः सप्तभिः सम्यक्वृन्दं गुणितमित्यर्थः तथा रविभक्तं द्वादशभिर्भक्तं तथाभवेत् राशिरूपंभवेत् तत्रापि षष्ठाष्टरिःफान्यतमत्वं चे-

॥ भाषा॥

तोके अधिपतीके साथ बिंदुदेनेवारे ग्रहोंका संयोगहोवे तो वेभावोंका भंग करनेवाले जानना॥२॥ तत्तदिति ॥ जोजोभावके अष्टवर्गोंसे संख्या और जो कोई अष्टवर्ग समुत्पन्न बिंदु संख्याकूं वर्गणासें गुणकरके बारासें भाग लेना जो शेषांक आवे सो राशि जानना ॥३॥ षष्ठेत्यर्धेन॥ यह पूर्वश्लोकमें कही जो राशि वो ६।८।१२ परमें आवे तो वो भावका भंगकरेगा.॥ अब वो राशि जो शेषांकमें -

अनिष्टारव्यंचरश्मिंचतद्भावफलसंगुणम् द्वाद-
शाप्तावशेषंतत्पूर्ववत्फलमीरितम् ९ यद्यत्फलं
प्रोक्तमथोत्तरत्रतत्सर्वमन्यत्रचयोजनीयम्

॥ टीका ॥

तदेवराश्यादिकं द्वादशराशितः शोधितं यज्जातं तत् पादोदयकालीनंराश्यादिकं ज्ञेयं तथैव तत्पादोदयकालीनराश्यादिकं षड्राशियुक्तं परिध्युदयकालीनंज्ञेयं एवंतत्परिध्युदयकालीनराश्यादिकं द्वादशराशिशोधितं चापोदयकालीनंज्ञेयं तच्चापोदयकालीनं अंशाः १६ कलाः ४० एतद्युक्तं ध्वजोदयकालिकंराश्यादिकं ज्ञेयमिति ॥ अथ राहुकालसमायोगस्तु मेषादुत्क्रमतो राहुर्घटीत्काल: क्रमाच्चरेदित्यादि अष्टादशाध्याये व्यारव्यास्यामि ॥ ८ ॥ अपिचमकारांतरमाह ॥ अनिष्टारव्यमिति ॥ भंगविचारणीयभावेशस्य अनिष्टारव्यंरश्मिं तद्भावफलसंगुणं तस्यैवभावस्य फलेनकष्टारव्येन संगुणितं द्वादशाप्तावशेषं द्वादशभागोर्वरितंफलं पूर्ववत् तद्भावभंगदं समीरितं कथितमिति ॥ ९ ॥ अथास्योक्तभंगस्योत्तरत्र सर्वतोयोजनामाह ॥ यदित्यर्धेन ॥ अत्र यद्यत्फलंप्रोक्तंतत्तत् अथो अनंतरं उत्तरत्रवक्ष्यमाणभावविचारेऽपि अन्यत्र क्वापिभावविचारे योजनीयमिति ॥ अथ स्वोक्तंप्रमाणयति ॥

॥ भाषा ॥

चार करना होवे उसभावके षष्ठ्यंशमें या षोडशांशमें धूम. पात. परिधि. चाप. ध्वज. इन्होंमेसे कोई एकका भीउदय होवेतो वो भावका भंगकारक योग जानना॥ ८॥ अनिष्टारव्यमिति॥ और मकारांतर कहते हैं- जिस भावका भंगविचारणा है उसकी अरिष्टरश्मीकुं ओर भावके इष्टअंकसें गुणन करना बारासें भाग लेना. शेष राशि जानना. राशिसंख्या तुल्यभावका भंग जानना॥ ९ ॥ ॥यदित्यर्धेन॥ एजो मयनें भावभंगादिक फलविचार कह्या है सो उत्तरान्तर आ-

षष्ट्यंशेचकलांशेचत्वप्रकाशग्रहोदये राहुका-
लसमायोगेनद्भावफलभंगदः ८

॥ टीका ॥

वा भवेच्चेत्तर्हि तस्यभावस्य भंगोऽवगंतव्यः ननु एकप्रकारेणभंगे सिद्धेऽपि पुनःपुनः भंगप्रकारकथने किंप्रयोजनंतत्राह ॥ यथेत्यर्धेन ॥ यथोत्तरं उत्तरोत्तरं यथास्यात्तथा उक्तप्रकारेषु एवमेव षष्ठरिःफाष्टमराशिः शत्रुराशिर्वा स्याच्चेत्ततः तदनुरूपं क्षयवृद्धिः क्षयस्यभावनाशस्य वृद्धिः वर्धनं एकद्वित्र्यादिप्राप्तप्रकारसंख्याक भंगवृद्धिरित्यर्थः भवेदिति ॥ ५ ॥ ६ ॥ ७ ॥ अथ प्रकारांतरेणभावभंगमाह ॥ षष्ट्यंशइति ॥ षष्ट्यंशे यस्यभावस्य भंगविचारस्तस्य षष्ट्यंशे वा कलांशे षोडशांशे अप्रकाशग्रहोदये अप्रकाशग्रहाः धूमपातपरिधिचापध्वजाः तदन्यतमग्रहस्य उदयेसति राहुकालसमायोगेच सति तद्भावफलस्य भंगदः भंगकारकयोगोज्ञेयः अप्रकाशग्रहोदयज्ञानं तु पूर्वार्धे ज्ञेयं तद्यथा उदयकालीनस्पष्टरवौ राशयः ४ अंशाः १३ कलाः २० संयोज्य यद्राश्यादिकमुपलभ्यते तद्धूमोदयकालीनमवगंतव्यं यतः रविधूमयोस्तत्परिमितांशाद्यंतरं पूर्वार्धे उक्तमिति ॥ अथच

॥ भाषा ॥

शि होवे अथवा लग्नसे भंगसूचक होवेतो वो भावका अनिष्टफल कहना अब जो शेष है जिस भावका भंग करना है उस भावके कष्टफलसे गुणन करके सातसे ७ सें भाग लेना. यहां अवशेष रहेतो शत्रुकी राशीसें गुणना. बारासें भाग लेना. शेषराशि ६।८।१२ में होवेतो वो भावका भंग जानना. वारंवार भंगकहने है उसका क्या कारण सो कहते है. उक्त रीतीसे जो भंग आते है. उसकी क्षयवृद्धि एक द्वित्र्यादि आये जो प्रकार उस संख्यामें क्षयवृद्धि कहना ॥ ५ ॥ ६ ॥ ७ ॥ षष्ट्यंशइति ॥ अब प्रकारांतरसें भावभंग कहते है. जिस भावका भंगवि-

आत्मांशरीरंहोराचकल्यंलग्नंचमूर्तयः स्वकदुं बंचदुश्चिक्यंविक्रमंसहजंसहः १ पातालंहिबुकंवेश्ममित्रवंधूदकं सुखम् त्रिकोणंमतिभावुद्धिमातृविद्यासुनास्ततः २ व्याधिक्षतारिभंगाश्च क्रोधोलोभोऽथमत्सरः कामोविवाहोयात्रास्त्रीर तिर्द्यूनंमदोऽज्ञता ३

॥ टीका ॥

स्वस्यास्योत्तरार्द्धके अध्यायेत्वष्टमेटीका कृतेयंतु यथामति ॥१॥ गणेशप्रीतये धीराः परोपकृतिहेतुना शोधनीया भवद्भिः सामार्थयेऽहंपुनःपुनः २ मुमुक्षुः कालशास्त्रेस्मिन्दुर्गमत्वान्मनीषिणः ॥ किमहं मंदधीस्तत्रगगनेमशकोयथा ॥३॥ इतिश्रीबृहत्पाराशरहोराशास्त्रे श्रीमद्दध्यड्न्वयजे० विद्याविद्योतितदशदिङ्मंडल जयशंकरसूनुज्योतिर्विच्छ्रीधरणविरचितायां सुबोधिनीटीकायामष्टमोऽध्यायः ॥ ८ ॥ विद्यानिधिंगणेशंच हृदिध्यात्वायथामति ॥ नवमाध्यायकेटीकां कुर्वेऽज्ञोपकृतावय ॥ १ ॥ अध्यायेनवमेऽस्मिंस्तु मुनिः शिष्यंपराशरः विचारे भावखेटानांशशासव्यासतोमुदा ॥२॥ अथास्मिन्नध्याये द्वादशभावविचारसिद्धये तत्तद्भावविचारणीयार्थसूचकान्येव तेषांनामानि कथयित्वा ग्रहस्थानादिविचारः क्रियते ॥ आत्मेत्यादि यावदध्यायसमापनं तत्रादौ आत्मेत्यादिसप्तश्लोकपर्यन्तं द्वादशभावेषु सप्ततिसंख्याकार्था-

॥ भाषा ॥

योग इनोंमेंसें कोइभी एक योग नहोवे और अधिमित्र या मित्र होवे लग्नका तो पूर्वोक्त भंगका परिहार जानना ॥ ११ ॥ इतिबृहत्पाराशरहोराभाषाटीकायांलोकयात्रावर्णनंनामाष्टमोऽध्यायः ॥ ८ ॥ आत्मेत्यादिसप्तश्लोकपर्यन्तम्॥ अब भावगत फलोंका निर्णय कहनेके लिये प्रथमभावके नाम कहते हैंः-

भंगंचभंगंचमुनिश्चगर्गः प्रोवाचयद्वन्मुनिपुंगवा-
हम् १० षष्ठ्यंशेचकलांशेचत्रिष्वेकोऽपियदान
चेत् अधिमित्रंचमित्रंचभंगभंगः प्रकीर्तितः ११
इतिश्रीमद्बृहत्पराशरहोरायामुत्तरभागेलोकया-
त्रायांभावभंगोपदेशोऽष्टमोऽध्यायः ८

॥ टीका ॥

भंगमित्यर्थेन॥ गर्गोमुनिः यंयंभंगंभंगमितिवीप्सायां द्विरुक्तिः मा-मितिशेषः प्रोवाचकथितवान् तंतंभंगं हेमुनिपुंगव मैत्रेय! अहमपि तवोपदिष्टवानित्यन्वयः॥ १०॥ षष्ठ्यंशइति॥ षष्ठ्यंशे स्पष्टकलांशे षोडशांशेच त्रिषु शत्रुराशिमास्यप्रकाशग्रहोदयकालराहुसमायोगेषु त्रिष्वपियोगेषुमध्ये यदा एकोपियोगोनचेत् अथवा तत्राधिमित्रंमित्रंवा लग्नेशस्य अस्तिचेत् भंगभंगः भंगस्य रिपुरिःफषष्ठान्यतमोत्पादितराशिजनितस्यभंगोनाशः अपवादइत्यर्थः प्रकीर्तितः कथितः इति एवमुक्तंभवति पूर्वप्रकारैरुत्पादितराशिः लग्नात् द्वादशाष्टरिपुस्थानापन्नोऽपि लग्नेशस्य शत्रुषोडशषष्ठ्यंशेन तथा तत्रषोडशांशषष्ठ्यंशयोः अप्रकाशग्रहोदयोऽपिन तथा तत्र षोडशांशषष्ठ्यंशयोः राहुकालसमायोगोपिन. तर्हि सभावराशिः लग्नात्षष्ठाष्टमद्वादशतमो भावभंगदोऽपि उक्तयोगत्रयाभावे भावभंगदोनभवेदितिभावः ॥ ११॥ एवंपराशरे होराशा-

॥ भाषा ॥

गे जहां जहां उपयोग होवे वहां देखना.॥· जो जो भंग गर्गमुनिनें कहे सो ई भंगोंका लक्षण मैने कहा ॥ १०॥ षष्ठ्यंशइति॥ अब पहिले जो भंग कहे है उनोंका भंग कहते खंडन कहतेहै. जो अभीष्टभावके षष्ठ्यंशमें या षोडशांशमें शत्रुराशीमें अप्रकाश धूमादिग्रहोंका उदय काल राहु समा-

यात्रायांदशमेनैवनिवृत्तिः सप्तमेनतु वृद्धिश्चतु-
र्थलग्नेनत्रितयंसंप्रकीर्तितं ६ स्वोच्चामित्रस्ववर्ग-
स्थाएवमर्थाश्चसप्ततिः नीचारिवर्गगाश्चान्यत्पु-
ष्टंचापुष्टमेवच ७

॥ टीका ॥

अथदशमभावसंज्ञाः ॥ व्यापारः आस्पदं मेषुरणं मानः आज्ञा कर्म खं इति सप्त ॥ ७ ॥ अथैकादशभावसंज्ञाः ॥ भवः आयः लाभः अयः तपः इतिपंच ॥ अथव्ययसंज्ञाः ॥ रिःफं हानिः व्ययः इति तिस्रः ॥३॥ एवंसप्तपष्टि ६७ संज्ञानुरूपतावत्संख्याकार्याः अपि च दशमेन यात्रायां गमनविषयेविचारः १ सप्तमभावेन निवृत्तिः पुनर्निवर्तनविचारः २ चतुर्थलग्नेन वृद्धिविचारश्च ३ एतत्पुनः संप्रकीर्तितं त्रितयंचसंयोज्य एवं नामानुरूपं सप्ततिः७० अर्थाः विचारणीयाः कथारीत्यानदाह स्वोच्चमित्रस्ववर्गस्थाः स्वानां उच्चानि पूर्वोक्तानि मित्राणि ग्रह मैत्रविचारोक्तानि स्ववर्गाः ग्रहहोराद्रेष्काणादयः तेषु वर्तमानाः संतो यस्मिन्भावे ग्रहाभविष्यंति सभावः पुष्टं उक्तसंज्ञानुरूपं पूर्णफलंदास्यनीत्यध्याहारः अथच येषुभावेषुनीचारिवर्गगाः नीचानि पूर्वोक्तानि अरयः ग्रहमैत्रविचारोक्ताः तेषांवर्गेषु गच्छंतिते स्वनीचवर्गस्थाः स्वशत्रुवर्गस्थाश्च ग्रहाः वर्तंते सभावः अपुष्टं उक्त संज्ञानुरूपंफलवैगुण्यंदास्यतीति ॥१॥२॥३॥४॥५॥६॥७॥

॥ भाषा ॥

विभु. अब दसवें भावके नाम- व्यापार आस्पद मेषुरण मान आज्ञा कर्म ख. अब ग्यारवें भावके नाम- भव आय लाभ अय तप अब व्ययभावके नाम-रिःफ हानिः व्यय ॥५॥ ऐसे सडसठ अर्थ भये. और दशम घरमें गमनविचार सप्तमभावसें पीछे फिरनको चौथे घरसें वृद्धिका ऐसे ७० अ-

पराभवोमृतिर्बंधोरंध्रायुर्निधनंच्युतिः शुभंधर्म स्ततोभाग्यंत्रिकोणंचगुरुर्विभुः ४ व्यापारास्प-दमेषुरणमानाज्ञान्वकर्मरवम् भावायलाभाय नपोरिःफंहानिर्व्ययःस्मृतः ५

॥ टीका॥

विचारभावनामभिःसूचयति॥ अथलग्नसंज्ञाः आत्मा शरीरं होरा कल्पं लग्नं मूर्तयः षट् ६ अत्रमूर्तिशब्दस्यबहुवचनं छंदः साधकम् ॥अथद्वितीयभावसंज्ञे स्वंकुटुंबंचेतिद्वे २ अथतृतीयभावसंज्ञाः ॥ दुश्चिक्यं विक्रमं सहजं सहः इतिचतस्रः॥ ४॥ अथचतुर्थभावसंज्ञाः पातालंहिबुकं वेश्म मित्रं बंधुः उदकं सुखं इतिसप्त ७ ॥ अथपंच-मभावसंज्ञाः ॥ त्रिकोणं मतिभा बुद्धिः मात्राभिधं विद्या सुतः इति षट् ६ ॥ अथषष्ठभावसंज्ञाः ॥ व्याधिःक्षतं अरिः भंगः क्रोधः लो-भः मत्सरः इतिसप्त॥७॥ अथसप्तमभावसंज्ञाः ॥ अत्रभावे का-मः विवाहः स्त्री रतिः द्यूनं मदः अज्ञता ॥ ७॥ अथाष्टमभावसंज्ञाः पराभवः मृतिः बंधः रंध्रः आयुः निधनं च्युतिः इति सप्त ७॥ अथ नवमभावसंज्ञाः ॥ शुभं धर्मः भाग्यं त्रिकोणं गुरुः विभुः इतिषट्॥६॥

॥ भाषा॥

अथ लग्नके नाम- आत्मा शरीर होरा कल्पं लग्न मूर्ति अब दूसरे भावके नाम स्वंकुटुंबं. अब तीसरे भावके नाम- दुश्चिक्य विक्रम सहज सह. अब चौथे भावके नाम- पाताल हिबुक वेश्म मित्र बंधु उदक सुख. अथ पंचम-भावके नाम- त्रिकोण मतिभा बुद्धि मात्राभिध विद्या सुत. अष्टमभावके नाम- व्याधि क्षत अरि भंग क्रोध लोभ मत्सर. सातवेंभावके नाम- काम-विवाह स्त्री रति द्यून मद अज्ञता. अष्टमभावके नाम- पराभव मृति बंध रंध्र आयु निधन च्युति. नवमभावके नाम- शुभधर्म भाग्य त्रिकोण गुरु

कुजःशरीरेह्रोरायांकल्पविक्रमबंधुषु १० सह-
जेचसहेशत्रौक्रोधलोभेचरंध्रके क्रियायामाय-
तौहानौजयेभंगेफलप्रदः ११ बुधोमनसिविद्या
यांबुन्धौहिबुकवेश्मनि लोभेशिल्पेचगानादिप्रि
येस्वेलाभरिःफयोः १२ गुरुधर्मेचतपसित्रित्रि-
कोणेत्रिकोणके आज्ञायांचसुतेहानौ कारागृहनि-
वेशने १३

॥ टीका॥

अथ भौमविचारमाह ॥ कुजइतिसार्धेन॥ कुजो भौमः शरीरे होरा-
यां लग्ने कल्पेशास्त्रविशेषे विक्रमेप्रतापे बंधौ भ्रातरि सहजे
सहोत्पन्ने सहेतृतीयभावे शत्रौ क्रोधे लोभे रंध्रे अष्टमभावे क्रियायां
कर्मणि आयतौ प्रभावे हानौ नाशे जये उत्कर्षे भंगे घाते इत्युक्त
फलविचारे तस्मादुक्तफलभावविचारेच फलप्रदः ॥ ११ ॥ अथबुधवि-
चारमाह ॥ बुधेति॥ मनसिविद्यायां बुन्धौ हिबुके चतुर्थस्थानविचारे
वेश्मनि गृहे लाभेशिल्पे गानादिप्रिये स्वेधने लाभेभावे रिःफेच
फलदः स्यात् ॥ १२ ॥ अथगुरुविचारमाह ॥ गुरुरितिद्वाभ्यां ॥ ध-
र्मेतपसि त्रित्रिकोणे नवमर्क्षे त्रिकोणे पंचमनवमस्थानयोः आज्ञायां

॥ भाषा॥

मृत्यु भाग्य पंचम नवमभावविचार क्रयविक्रयादिविचार लाभ व्यय यह प-
दार्थको फल देताहै.॥९॥ अब मंगल शरीर लग्न शास्त्रविशेष विचार प्रताप
भाई तृतीयभाव शत्रु क्रोध लोभ अष्टमभाव कर्मप्रभाव हानि उत्कर्ष घा-
त यह पदार्थको फल देता है.॥१०॥११॥ बुधेति ॥ ॥ अब बुध मानसि-
कविचार विद्या चतुर्थभाव ग्रह लाभ शिल्प गानादिक विचार धन व्ययघा-
भाव व्यय यह पदार्थोंका फल देता है. ॥१२॥ अब गुरु धर्म तप नवमभाव

रविः शरीरेहोरायांस्वेचभ्रातरिवेश्मनि सुतेव्या-
धौक्षतेशत्रौमृतौतपसिकर्मणि ८ आयेव्ययेफ
लंदद्याच्छीतगुर्विक्रमेसुखे कुटुंबेभ्रातरिक्रोधे
मतिभायांशुभेमृतौ ९ भाग्येत्रिकोणेव्यापारेलाभे
रिःफेफलप्रदः

॥ टीका॥

एवं भावेषुविचारणीयमुक्त्वा सप्तग्रहेष्वेवमेवविचारमाह रविरित्या-
दिदशश्लोकैः ॥तत्ररविरितिसपादेन रविविचारमाह ॥ रविः सूर्यः शरीरे
देहे होरायां लग्नविचारे स्वेद्वितीयभावे भ्रातरिबंधौ वेश्मनिचतुर्थभा-
वे सुते पुत्रे व्याधौ रोगे क्षते क्षतविचारे शत्रौ अरौ मृतौ मृत्यौ तप-
सितपस्यायां कर्मणिकृत्ये आये लाभे व्ययेनाशे एवमर्थकभावेषु
एवमुक्तफलेषुच फलंदद्यादिति॥ ८ ॥ अथचंद्रविचारमाह ॥शीतगु-
रित्यादिसपादेन॥ विक्रमे प्रतापे सुखे कुटुंबे पोष्ये भ्रातरिक्रोधे
कोपे मतिभायां बुद्धिविशेषे शुभे मृतौ भाग्ये त्रिकोणे पंचमनवम-
भावविचारे व्यापारे क्रयविक्रयादिरूपे लाभे रिःफेच इत्युक्तफल-
विचारे चंद्रात् उक्तफलदभावविचारेऽपि शीतगुश्चन्द्रः फलप्रदः ॥९

॥ भाषा॥

थैका विचार करणा॥ ६॥ जो ग्रह मित्र उच्च स्वक्षेत्र गत या स्ववर्गमें
होवे तो पूर्वोक्त फल सर्व उत्तम देता है. शत्रु नीच शत्रुवर्गादिक का होवे तो
अनुभवफल देता है ॥७॥ अब सूर्यका फल विचार कहते हैं. सूर्य शरीरमें
लग्नकें विचारमें फल देता है. दूसरे भावमें भाइके घरमें चौथे घरमें पुत्रके
घरमें रोग होवे क्षयविचार शत्रुका विचार मृत्युका विचार नवम घरमें तप-
स्याका दसवेमे कृत्यका लाभ खर्चका यह सब फल देता है. ॥८॥ शीतगुरि-
त्यादिसपादेन॥ अब चंद्रमा प्रताप कुटुंब पोष्यवर्ग भाई क्रोध बुद्धिविशेष कर्म-

सहजेचसहेभावेबंधनेफलदोभवेत् १७ कालहोरा
दृकाणेशाः क्षेत्रार्कनवभागपाः सप्तांशत्रिंशदं-
शेशाहोरेशश्चाष्टमोभवेत् १८ क्रमादावृत्तिनः
प्रोक्ताबलिष्ठः पूर्वतोयथा

॥ टीका ॥

सहजे बंधौ सहे तृतीयभावे बंधनेच फलदोभवेदिति एवंविचार-
स्तत्तद्ग्रहैः फलविचारे तथा तत्तद्ग्रहेभ्योपि,तत्तद्भावसकाशादवगंत-
व्यः ॥ १७ ॥ अथोक्तफलविचारः ॥ कालहोरेशाद्यष्टभिर्बलिष्ठपूर्वके-
र्ग्रहैः कर्तव्यइत्याह ॥ कालेति सार्धेन ॥ कालहोराहोरे विषमेर्केऽन्द्वोः
समेराशौ चंद्रतीक्ष्णांश्वोरित्युक्ता नदीशाः १ दृकाणेशाः दृकाणाः
द्रेष्काणाः प्रथमपंचमनवमपानामित्युक्ताः नदीशाः २ क्षेत्रेशाः स्थानप-
तयः भेशामंशकवुचंरवुशकमंगुशाः शोगुरित्युक्ताः ३ अनर्कभागपाः
स्वतोद्वादशांशाइत्युक्ताद्वादशांशपतयः ४ नवभागपाः अजमकर-
तुलाकुलीराद्याः इत्युक्तानामधिपाः ५ सप्तांशेशाः सप्तांशपाः
स्त्वोजगृहे गणनीयानिजेशतः युग्मराशौतुविज्ञेयाः सप्तमर्क्षादिना-
यका इत्युक्ताः ६ त्रिंशांशेशाः कुजयमजीवज्ञसिताः पंचेंद्रियवसुमु-
नींद्रियांशानां विषमेषु समर्क्षेषूत्क्रमेण त्रिंशांशका ज्ञेयाइत्युक्ताः ७
होरेशाः होरालग्नं तस्याधिपाः प्रागुक्ताः ८ एतेषु योबलिष्ठः फलदः
पूर्वं यथाकालहोरादिष्टपतीनांमध्ये बलिष्ठस्य प्रथमावृत्त्याफलंज्ञेयम्
ततस्तदल्पबलस्य तृतीयावृत्त्याफलंज्ञेयमित्याद्यष्टावृत्तिभिरष्टानांक्र-
मात्फलकालोज्ञेयइतिदिक् ॥ १८ ॥

॥ भाषा ॥

धु बंधन यह पदार्थोंका फल देता है ॥ १७ ॥ कालेतिसार्धेन ॥ अब यह पूर्वोक्त
फलोंका विचार कहते हैं. काल होरेश द्रेष्काणेश क्षेत्राधीश द्वादशांशेश नव-

अभिशापेतथाव्याधौरवेकल्येमूर्तिवेश्मसु वि-
द्यावुद्धिसुखेभावेशांत्यादिषुफलप्रदः १४ कामा-
न्यस्त्रीविवाहेषुगीतनृत्यप्रियादिषु सुखेवेश्मनि
दुश्चिक्येस्वेकुटुंबेचवेश्मनि १५ आज्ञाक्रिया-
तपोभाग्येलाभायव्ययहानिषु वदान्यत्वेदयायां
चभार्गवःफलदःसदा १६ शनिर्मृतौव्ययेरिःफे
दुश्चिक्येक्षतचेतसि

॥ टीका ॥

सुते हानौ कारागृहनिवेशने अभिशापे मणादे व्याधौ स्वे कल्ये मूर्तौ वेश्मनि गृहे विद्यायांवुद्धौ सुखे भावे चतुर्थभावे शांत्यादिषु शांतिपुष्ट्यादिषुच फलप्रदः ॥१४॥ अथशुक्रविचारमाह ॥ कामेत्यादिद्वाभ्यां ॥ कामे अन्यस्त्रियांतरसंगइत्यर्थः विवाहे गीते नृत्ये प्रिये सुखे वेश्मनिगृहे दुश्चिक्ये ३ भावे स्वेधने कुटुंबे २ भावे वेश्मनि ४ भावे आज्ञायां क्रियायां तपसितपस्यायां भाग्ये लाभे आये ११ भावे व्यये हानौ नाशे वदान्यत्वे दातृत्वे दयायां भार्गवः शुक्रः सदाफलदइत्यन्वयः १५ ॥ १६ ॥ अथशनिफलमाह ॥ शनिरिति ॥ शनिः मृतौ व्ययेनाशे रिःफेभावे दुश्चिक्ये ३ भावे क्षते चेतसि चित्ते एकवचनं समाहारद्योतकं

॥ भाषा ॥

पंचमभाव आज्ञा पुत्र हानि कारागृहप्रवेश अभिशाप व्याधि स्वकल्य मूर्ति गृह विद्या चतुर्थभाव शांति पुष्ट्यादिकर्म यहपदार्थोंका फल देना है ॥१४॥ कामेत्यादिद्वाभ्यां॥ अब शुक्र काम अन्यस्त्री समागम विवाह गायन नृत्य प्रिय सुख गृह तृतीयभाव धन द्वितीयभाव चतुर्थभाव आज्ञा क्रिया तपभाग्य लाभ ग्यारवांभाव व्यय हानि दातृत्व दया यहपदार्थोंका फल देना है ॥ १५॥ १६ ॥
॥ शनिरिति ॥ मृत्यु नाश व्यय भाव तृतीय भाव क्षत चित्त सहज भाव बं-

अंशकाष्टकवर्गोत्थोप्रत्येकंतुचतुर्विधम् वि
षयोक्तोद्विधाप्रोक्तोनक्षत्रांशकसंभवो २ द्वा-
त्रिंशद्भेदभिन्नंस्यात्परमायुर्नृणामिह अति
धृतिरर्कस्येन्दोस्तत्वानिभूमिसुतस्यपंचदश ३

॥ टीका॥

ध्रुवादिना ग्रहेभ्य उक्तरीत्या यद्धरणंसदायः दायः सोल्लुंठभाषणे "वि-भक्तव्यपितृद्रव्येतथा हरणदानयोरितिमेदिनी" दायादुत्थं उत्पन्नंदायो-त्थं नृणांमनुष्याणां परमायुः परमत्यंतमायुः अथानंतरमहंवक्ष्ये तदेति शेषः तमेवदायंविभजति पैंड्यो द्वादशधा पिंडायुः द्वादशप्रकारकः१२ प्रोक्तः ध्रुवरश्मिसमुद्भवो अंशकाष्टकवर्गोत्थोच प्रत्येकंतुचतुर्विधो ना म ध्रुवोद्भवः ४ रश्म्युद्भवः ४ अंशोद्भवः ४ अष्टवर्गोद्भवश्च ४ एतेचत्वा-रश्चतुर्विधाइत्यर्थः विषयोक्तो विषयशब्देनकथितो नक्षत्रांशकसंभ-वौ प्रत्येकंद्विधाप्रोक्तो नक्षत्रसमुद्भवोद्विप्रकारकः२ अंशसमुद्भवो द्विप्रकारक इत्यर्थः एवंप्रकारेण नृणामिह परमायुः द्वात्रिंशद्भेदभिन्नं द्वात्रिंशत्संख्याकैर्भेदैः भिन्नं विभक्तं स्यादिति ॥१॥२॥ अथपिंडायु-र्ध्रुवांकानाह ॥ अतिधृतिरित्यादि पंचमश्लोकपर्यंतम् ॥ अर्कस्यरवेः अतिधृतिः १९ इंदोश्चंद्रस्य तत्वानि २५ भूमिसुतस्य भौमस्य पंचदश१५ बुधस्यच द्वादश१२ गुरोः तिथिः१५ कवेः शुक्रस्य मूर्च्छनाः २१ आर्केः

॥ भाषा॥

अेय अब तुमारेकूं आयुष्यका निर्णय कहताहूं. उसमें प्रथम पैंड्यायुर्दाय क-हतेहैं १ पैंडायुर्दाय बाराप्रकारका है. और ध्रुवायु इसको नामांतर निसर्गायु कहतेहै. रश्म्यायु१ इसकों नामांतर स्वरांश आयु कहतेहै. अंशायु १ अष्ट-कवर्गायु१ एसे चार भेद है.चारोंके चारचार भेद है.नक्षत्रायु अंशायु १इसकों ना-मांतर कालचक्रायु कहतेहैं. इनोके दोदो भेदहै. यहसब मिलायके ३२ भेद होतेहैं॥१॥२

॥ अतिधृतिरित्यादिपंचमश्लोकपर्यंत॥

सूर्यादयोग्रहालग्नपतिश्चाष्टमितः क्रमात् १९
इतिश्रीमद्बृहत्पाराशरहोरायामुत्तरभागेलोकयात्रा-
यांग्रहभावफलविचारेनवमोऽध्यायः ९ ७
वक्ष्येऽहमथदायोत्थंनृणामायुः परंमुने, पैंड्योह्य-
दशधाप्रोक्तोध्रुवरश्मिसमुद्भवो १

॥ टीका ॥

अथ प्रकारांतरेणोक्तग्रहफलविचारमाह ॥ सूर्यादयइति ॥ अथवा अन्यरीतिः यथा सूर्यादयः सप्तग्रहाः लग्नपतिश्चाष्टमः तेषांमध्येयो बलिष्ठः सपूर्वोक्तरीत्या फलदइति क्रमादष्टाष्टितः फलविचारइति ॥१९ एवंगणेशंसंस्तुत्यैनवमाध्यायकेकृता टीकाशिष्यप्रकृतयेशोधनीया मनीषिभिः ॥ १ ॥ इतिबृहत्पाराशरहोराशास्त्रे श्रीमद्ध्यङ्कन्वयये ज्योतिर्विच्छ्रीधरेणविरचितायांसुबोधिनीटीकायां नवमोऽध्यायः ॥९॥ श्रीगणेशपदेध्यात्वादशमाध्यायकेमया विरच्यतेऽथटीकेयंयथामतिसुबोधिनी ॥ १ ॥ अथास्मिन्दशमेऽध्यायेत्वायुर्दायंविचार्यते ॥ ग्रहाष्टकाधनेकैस्तुप्रकारैः श्रीपराशरः ॥ २ ॥ अथश्रीमहर्षिः पराशरःभगवान् शिष्यायपरमायुः कथयन्पिंडांशकादिद्वात्रिंशद्भेदविचारेणास्मिन्दशमाध्याये उपदेष्टुंप्रतिजानीते तत्रतावदादौतद्भेदान्प्रकाशयति वक्ष्यइत्यादिसार्धद्वयेन ॥ हे मुने मैत्रेय! दायोत्थंदायः हरणं रश्मि-

॥ भाषा ॥

मांशेश सप्तांशेश त्रिंशांशेश होरेश यह क्रमसें गणनाक्रम कह्या. एकेकसें आगे आगे बलवान् है ॥ १८ ॥ सूर्यादयइति ॥ सूर्यादि सात ग्रह अष्टम लग्नपति यह आठमें जो बलिष्ट वो प्रथम फल देनेवाला जानना. आठ बरस पुनः पुनः वारंवार फलविचार कहेना ॥ १९ ॥ इतिबृ० भाषाटीकायां नवमोऽध्यायः ९ ॥ वक्ष्यइत्यादिसार्द्धद्वयेन ॥ अब आयुर्दायविभागका निर्णय कहते हैं.- हेमै-

षोडशविंशतिरेकोनवाष्टनवपंचविंशतिः क्रमशः
षड्विंशतिस्तथोच्चेनीचेचार्धंत्विमेऽथइतरेवा ७ क
लीकृतंग्रहंव्योमखवाब्धिनेत्रावशेषितं शतद्वयेना-
भिभजेदब्दमासादयःक्रमात् ८ सूर्यादिगुणि-
ताच्छेषाद्बृद्धिंकुर्याद्यथोत्तरम्

॥टीका॥

अथ रश्म्यायुर्दायध्रुवांकानाह॥ षोडशेति ॥ रवेः षोडश१६इंदोः २०विं-
शतिः भौमस्य एकः १ बुधस्यनव९ गुरोः ८अष्ट शुक्रस्य नव९ शनेःपंच-
विंशतिः २५ षड्विंशतिर्वा२६ इमेतु उच्चेज्ञेयाः नीचेतु अर्धं उक्तांकार्धाः
इतरे नीचोच्चमध्येतु अनुपातः कर्तव्यइत्यार्थिकं ज्ञेयम्॥७ ॥ एवंध्रुवांका-
नुक्त्वा पिंडध्रुवरश्मिसंज्ञकानां तेषां वर्षमासाद्यायुरुत्पादनप्रकारमाह॥
कलीकृतमितिसार्धेन॥ ग्रहं रव्यादिं राश्यादिवर्तमानं कलीकृतं कलारू-
पंकृत्वा खखवाब्धिनेत्राऽवशेषितं चतुःशताधिकसहस्रद्वयेन २४००
चतुर्विंशतिसंख्याकांकेनेत्यर्थः अवशेषितं तद्वं शतद्वयेन २०० अभि
भजेत् भागंगृहीत्वा शेषादवशिष्टात् सूर्यादिगुणितात् सूर्यादीनां उक्त-
त्रिप्रकारान्यतमध्रुवांकविवदितायुर्विहितसूर्यादिध्रुवांकैः गुणितात् पुनः
शतद्वयेन भागं गृहीत्वा प्राग्लब्धभागंवर्धयेत् युंज्यादित्यर्थः तानि
अब्दानिभवेयुः पुनः शेषंद्वादशगुणितं द्विशतभक्तं मासाः स्युः पुनः शेषं

॥ भाषा॥

॥षोडशेति॥ अब रश्म्यायुर्दायके ध्रुवांक कहते हैं- सू १६ च २० मं १ बु ९
गु ८ शु ९ श २५ अथवा २६ यह ध्रुवांक उच्च ग्रहोंके जानना नीचराशिके
ग्रह होवेतो अर्ध कहे हैं दूसरे जो है उनोंका अनुपात करना ॥ ७॥ कलीकृ-
तमितिसार्धेन॥ अब ऊपर लिखि हुई तीनो आयुर्दायका वर्षादिक लावनेकी
रीत कहते हैं- सूर्यको कलात्मक करके उसमे यह अंकका २४०० भाग लेके

द्वादशबुधस्यन्नगुरोस्तिथिः कवेर्मूर्च्छनानरवाश्चार्केः परमोच्चेनीचेऽर्धपरेषुभावेषुवातथामोक्ताः ४ अनुपातः कर्तव्यस्त्वंतः संस्थेषु खेटेषु खखभूमेः खयुग्मेंद्वोः स्वांशाः पूर्ववत्कृतौचविज्ञेयौ ५ कृतिरेकोयमौ रत्नमष्टादशनखाः क्रमात् सैकतान मिनादीनांदायेनैसर्गिकेस्मृतम् ६

॥ टीका॥

शनेः नखाः २० एते ध्रुवांकाः रव्यादीनां परमोच्चे ज्ञेयाः नीचे परमनीचेतु अर्धं उक्तध्रुवांकदलं चाइति निश्चयेन परेषु अन्येषु अंतरसंस्थेषुखेटेषु नीचोच्चमध्यस्थेषु ग्रहेषु अनुपातः कर्तव्यः उक्तांकाः त्रैराशिकेन ग्राह्याइत्यर्थः एते पूर्ववत्कृतौ पूर्वोक्तावित्यर्थः खखभूमेः १०० शतवर्षायुर्मानप्रकारस्य खयुग्मेंद्वोः १२० विंशत्यधिकशतवर्षायुर्मानप्रकारस्यच विज्ञेयौ सप्तग्रहाणामपि पूर्वोक्तायुर्ध्रुवांकाः द्विप्रकारस्याप्यायुर्मानस्यज्ञेयाइत्यर्थः ॥ ३॥ ४॥ ५॥ अथ ध्रुवायुर्दायध्रुवांकानाह ॥ कृतिरिति॥ रवेः कृतिः २० चंद्रस्यएकः १ भौमस्य यमौ २ बुधस्य रत्नं ९ गुरोः अष्टादश १८ शुक्रस्य नखाः २० शनेः सैकतानं ५० एवं इनादीनां रव्यादीनां नैसर्गिके स्वाभाविकायुर्दाये स्मृतं उक्तं अनुक्रमसंबन्धत्वादिदमेव ध्रुवायुर्दाये ग्राह्यमिति ध्वनितोऽर्थः ॥ ६॥

॥ भाषा॥

अब पिंडायुके ध्रुवांक कहते हैं. सूर्यके १९ चं २५ म १५ बु १२ गु १५ शु २१ शनिके २० यह ध्रुवांक परमोच्चके जानना नीचके अर्ध लेना और त्रैराशिकके भेदमें लेना. यह भेद शतायुका और एकसौ विसवर्षका आयुष्यका प्रमाण जानना ॥ ३।४।५॥ कृतिरिति॥ अब ध्रुवायुर्दायके ध्रुवांक कहते हैं. सूर्यके २० च० १ मं० २ बु० ९ गु० १८ शु० २० शनिके ५० यह सूर्यादिकोंका निसर्गायुर्दायका स्वाभाविकायुर्दाय कह्या ॥ ६॥

स्वोच्चहीनंग्रहंज्ञात्वाकर्कादिंचमृगादिंच ९ गृही
त्वातुभुजंकोटिंकृत्वालिप्तीकृतंतुतम् हत्वानवां-
शदायेनभजेद्भत्रयलिप्तिभिः १० वत्सराद्याभवं
त्येतेवर्जयेन्मकरादिके केन्द्रेनवांशदाये स्वेत्रिघ्ने
कर्कटकादिके ११ युंज्यादर्धीकृतेतस्मिन्

॥ टीका ॥

लब्धं २० जाताघटिकाः पुनः शेषं ८० षष्टिघ्नं ४८०० शतद्वयभागेनल-
ब्धं २४ पलानि एवंपिंडायुर्दाये जातः सूर्यायुर्दायः १२।१।२९।२०।२४ ए-
वंचंद्रादीनांज्ञातव्यः एवंप्रकारेणैव ध्रुवान् रश्म्यायुर्दाययोः बोध्यम् ॥८
अथनवांशायुर्दायोत्पादनप्रकारमाह ॥ स्वोच्चेत्यादिसपादैकादशश्लोक
पर्यंतम् ॥ ग्रहं रव्यादिं विवक्षितं स्वोच्चहीनं स्वकीयोच्चेन हीनंवर्जितंकृत्वा
तत्केन्द्रं भवति तत् कर्कादि कर्कसिंहकन्यातुलावृश्चिकधनुरन्यतमराशि
वर्तमानं मृगादि मकरकुंभमीनमेषवृषमिथुनान्यतमराशिवर्तमानंचाज्ञा
त्वा तस्यभुजंगृहीत्वा नामत्रिभोनंकृत्वेत्यर्थः तस्यकोटिंकृत्वा प्राप्तभु-
जो राशित्रये वर्जयित्वेत्यर्थः तथाभूतंतंकोटिं लिप्तीकृतं गणितरीत्या
कलास्थानेसंपादितंतं नवांशदायेन नवांशदायस्तु पंचमूर्च्छेत्यादिना
वक्ष्यमाणः तेनहत्वा गुणयित्वा भत्रयलिप्तिभिः टावंतलिप्ताशब्दस्य इ-
कारांतत्वमार्षं छंदोभंगभियावेति ज्ञेयम् राशित्रयलिप्ताभिः ५४०० आ-
भिः भजेत् तेन लब्धांका वत्सराद्याभवंति एतेवत्सराद्याः मासादीनत-

॥ भाषा ॥

॥ स्वोच्चेत्यादिसपादैकादशश्लोकपर्यन्तम् ॥ अबनवांशायुर्दाय कहते हैं. स्पष्ट
ग्रहकूं नीचमें हीन करके उसका भुज करके पीछे कोटी करके कला करना.पीछे
नवांशके ध्रुवांकसें गुणन करके इसका ५४०० सें भाग लेना. लब्ध आवे सो
वर्ष जानना. बाकी जो शेष है उसकूं बारासें गुणन करके इस ५४०० सें

## ॥ टीका ॥

त्रिंशद्गुणितं द्विशतभक्तं दिनानि स्युः पुनः शेषं षष्टिगुणितं द्विशतभ-क्तं घटिकाः पुनः शेषं तथाकृतं पलानि स्युरिति ॥ अथास्योदाहरणं ॥ रविः १०।४।१४।२२ अयं राश्यादिः अस्यकलाः १८२५४ । २२ इमाः चतुर्विंशतिशतैः २४०० नष्टाः १४५४ । २२ अवशिष्टाः इमाः शतद्वय २०० विभाजिताः तल्लब्धांकः ७ शेषांकः ५४।२२ अयं पिंडायुरुक्त रविध्रुवांकैः १९ गुणितः १०३२।५८ अयं शतद्वयविभाजितः लब्धं ५ एतत् पूर्वलब्धांके नियुक्तं जातं १२ अब्दानि जातानि अवशिष्टांकः ३२।५८ द्वादशांके गुणितो जातः ३९५ । ३६ शतद्वयविभाजितः लब्धं १ जातोऽयं मासांकः पुनः शेषं १९५। ३६ त्रिंशद्गुणिताः ५८६८ शतद्वयविभाजनेन लब्धं २९ जाता दिवसाः पुनः शेषं ६८ षष्टिघ्नं ४०८० शतद्वयभाग-

## ॥ भाषा ॥

| मध्यमपिंडायुश्चक्रमाह् | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू | चं | म | बु | गु | शु | श | योग |
| १२ | १८ | १२ | ० | १७ | ८ | २० | ९२ |
| १ | ३ | ९ | ० | ८ | ७ | ९ | ४ |
| २९ | १७ | १९ | १० | ६ | २२ | ० | २३ |
| २० | ४४ | ४८ | ३८ | २ | ५५ | ० | ३१ |
| २४ | ३६ | ० | २४ | ३६ | १२ | ६ | २ |

| मध्यम ध्रुवायुर्नाम निसर्गायुश्चक्रम् | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू | चं | म | बु | गु | शु | श | यो |
| १२ | ७ | ११ | १ | २२ | ८ | ३५ | ९९ |
| ५ | ७ | २ | ६ | ६ | ५ | ४ | ३ |
| ७ | २३ | २६ | १३ | २६ | २० | १५ | ११ |
| १२ | २ | ३८ | १३ | ९ | २४ | ० | १९ |
| ० | २४ | २४ | ५८ | १८ | ० | ० | ५४ |

| मध्यम मन्वायुर्नाम स्वरांशायुश्चक्रम् | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू | चं | मं | बु | गु | शु | श | यो |
| ११ | १८ | १२ | १ | १५ | ६ | २३ | ९१ |
| ४ | ११ | ५ | ६ | ७ | ६ | ८ | १ |
| ५ | १० | ९ | १३ | १ | २२ | ३ | ६ |
| ४९ | ४८ | ५० | १३ | ५० | ४० | ० | ५९ |
| ३६ | ० | २४ | ४८ | ४८ | ४८ | ० | १४ |

दोसोंसें भाग लेना. लब्ध जो वर्ष आवे उसकूं जुदा मांडके शेषांककुं आपने ध्रुवांकसें गुणन करके दोसोंसे भाग लेके वर्षादिक फल लेना. पूर्व वर्षमें जोड देना सो मध्यमायु होवे. इनका उदाहरण टीकामें है. और चक्र भी दिखाया है. ये क्रमसें पिंडायु-ध्रुवायु-स्वरांशायु जाना ॥ ८ ॥

प्रक्रमानुगतोमतः द्विघ्नेत्वपनये तस्मिन्युंज्यादे-
वदलीकृते १२ निक्षिप्याष्टकवर्गंतु राशिचक्रेतु
पूर्ववत् त्रिकोणैकपशुद्धिंच कृत्वातु गुणयेद्गुणैः १३
खवह्निभक्तमब्दाद्याः क्रमाद्भिन्नाष्टवर्गजाः एवं
कृत्वातु संयोज्य भावमब्दादयः स्मृताः १४

॥ टीका ॥

अथ प्रक्रमानुगतायुर्दायमुत्पादयति ॥ प्रक्रमेत्यादि सपादार्धेन ॥ प्रक्र-मानुगतोमतः प्रागुक्तनवांशायुर्दायएव प्रक्रमानुगतसंज्ञकः तत्रविशे-षस्तु मकराद्यन्यतमषड्राशिस्थे केन्द्रेसति मूलध्रुवांको द्विघ्नः कार्यः न त्रिघ्नः कर्कादिकेंद्रेसति दलीकृतेयुंज्यादिति प्राग्वत् अन्यत्सर्वंस-मानमिति ॥ १२॥ अथाष्टकवर्गायुर्दायोत्पादनरीतिमाह ॥ निक्षिप्ये-त्यादि पंचदशश्लोकपर्यंतम् ॥ पूर्ववत् पूर्वं पंचमाध्याये उक्तवत् राशि-चक्रे राशिकुंडलिन्यां अष्टकवर्गं स्थानकरणरूपं निक्षिप्य उद्धृत्य त्रिकोणैकपशुद्धिं त्रिकोणशोधनं एकाधिपत्यशोधनंच पूर्वोक्तरी-त्याकृत्वा तेषांभावानांगुणैः प्रथमाध्यायोक्तवर्गणारूपैः पृथक् गु-णयेत् तथा प्रागुक्त सप्तांक गुणकेनच गुणयेत् ततः खवह्निभक्तं खवह्निभिः ३० एभिर्भक्तं यत्फलं तत् अब्दरूपं शेषं द्वादशादि गुणितं

॥ भाषा ॥

तो ध्रुवांककूं अर्ध करके जोड देना सो नवमांश मध्यायु भया ॥ ९॥१०॥११॥
॥प्रक्रमेत्यादिसपादार्धेन॥ अब प्रक्रमानुगतायुर्दाय कहतेहैं. पूर्वे जो नवांशायुर्दा-यका प्रकार बनाया उसमें केंद्र मकरादि छ राशीमें होवे तो मूल ध्रुवांकको दुगनाक-रके हीनकरना. कर्कादि छ राशीमें होवे तो मूल ध्रुवांकको अर्ध करके जोडदेना आयुर्दाय भया ॥१२॥ निक्षिप्येत्यादिपंचदशश्लोकपर्यन्तम ॥ अब अष्टक-वर्गायु कहते हैं. प्रथम अष्टकवर्ग सिद्ध करके उसका त्रिकोण शोधन करके एकाधिप-

## ॥टीका॥

केंद्रे मकरादिके मकराद्यन्यतमषड्राशिस्थेसति त्रिघ्रेत्रिगुणिते स्वेस्वकीये नवांशदाये वक्ष्यमाणनवांशध्रुवांके वर्जयेदूनयेत् अथतस्मिन्केंद्रे कर्कटकादिके कर्काद्यन्यतमराशिस्थेसति तस्मिन्ध्रुवांके अर्धाङ्के अर्धावशेषिते युंज्यात् मेलयेत् तेनस्पष्टनवांशायुर्दायोभवतीति ॥ अथास्योदाहरणम् ॥ रविः १०।४।१४।२२ अस्योच्चं ०।१० अनेन हीनः ९।२४।१४।२२ जातमेतद्रविकेन्द्रं मकरादि अस्यभुजः २।५।४५।३८ अस्यकोटिः ०।२४।१४।२२ अस्यकलाः १४५४।२२ एता नवांशध्रुवांकेन ५ अनेन गुणिताः ७२७१।५० एताः भत्रयलिप्ताभिः ५४०० आभिः भाजिताः लब्धं १ एतन्नवांशायुर्वर्षं अवशिष्टं १७७१।५० द्वादशगुणितं २१२६२ एतत् ५४०० आभिर्भाजितं लब्धं ३ एतेमासाः अवशिष्टं ५०६२ एतत्त्रिंशद्घ्नं १५१८६० एतत् उपरिष्टभाजककलाभिर्भक्तं लब्धं २८ एते दिवसाः शेषं ६६० षष्टिघ्नं ३९६०० उपरिष्टभाजकेनभक्तं लब्धं ७ एता घटिकाः शेषं १८०० एतत्षष्टिघ्नं १०८००० भाजकेन भक्तं लब्धं २० एतानि पलानि एवंसंपादितोवर्षादिसमूहांकः १।३।२८।७।२० अयं मकरादि केंद्रत्वात् मूलध्रुवांकः ५ त्रिगुणितः १५ अस्मिन्वर्जयित्वा १३।८।१।५२।४० जातोऽयं स्पष्टरविनवांशायुर्दायः एवंचंद्रादिनवांशायुर्दायो बोध्यः इति॥९॥१०॥११॥११॥

## ॥भाषा॥

भाग लेना लब्धमास जानना.ऐसा दिन घटी पल लाना इसकू मकरादि कर्कादिकेंद्र देखके ऋण धन करना ध्रुवांकोंमें कैसा जो मकरादि केंद्रहोवे तो ध्रुवांककूं तीनगुणा करके पूर्व जो लाये वर्षादिक लब्ध उसकू घटादेना औरकर्कादि केंद्रहोवे

| मध्यम अंशायुश्चक्रम् | | | | | | | |
|---|---|---|---|---|---|---|---|
| र | चं | मं | बु | गु | शु | श | ला |
| १३ | १९ | १८ | ७ | १० | २५ | ११ | ११६ |
| ८ | ३ | ७ | ० | ५ | ६ | ५ | ० |
| १ | ० | १ | २९ | २३ | ४ | २३ | १५ |
| ५२ | ४४ | ५३ | १ | ३२ | ७ | २० | ६ |
| ४० | ४५ | ५२ | २४ | ० | ६ | ० | ८ |

पंचमूर्च्छासप्तरत्नंदशषोडशवारिधिः नवांशा
विधितःप्रोक्ता अंत्यात्प्रोक्तास्तुभादितः १६ र-
वींद्वाराहिजीवार्किबुधसेतुसिताःक्रमात् आग्ने-
याद्भगणेशाःस्युः स्वामिनोवत्सराःक्रमात् १७
षडाशाःसप्तधृतयोनृपाएकोनविंशतिः अत्यष्टिः
सप्तनखाउच्चेनीचेऽर्धमुच्यते १८

॥ टीका ॥

अथनवांशायुर्दायं ध्रुवांककथनसहितमाह ॥ पंचेति ॥ अथ नवांशायुर्दा-
ये ध्रुवांकाः रवेः पंच ५ इंदोः मूर्च्छा २१ भौमस्य सप्त ७ बुधस्य रत्नं ९
गुरोः दश १० शुक्रस्यषोडश १६ शनेः वारिधिः ४ एतेध्रुवांकाः नवां-
शगणनाप्रकारमाह अंत्यात् प्राप्तनवांशतो नवमनवांशमारभ्य विलो-
मतः आदितः प्राप्तनवांशमारभ्य नवमनवांशांतं अनुलोमतः नवांश-
विधितः पूर्वोधोक्तविधिना नरस्य जन्मकाले वा प्रश्न काले यदंशकइत्या-
दिएकोनपंचाशदध्याये क्रमो ज्ञेयः ॥ १६ ॥ अथनक्षत्रायुर्दायमाह ॥ रवी-
त्यादिएकोनविंशति श्लोकपर्यन्तम् ॥ आग्नेयात् अग्नेः इदमाग्नेयं अग्नि-
देवताकं "अग्निकलिभ्यांढग्वक्तव्यः" इतिढक् कृत्तिकाख्यंतस्मात्स-
काशात् भगणेशाः भानांनक्षत्राणां गणः सप्तविंशतिसंख्याकसमुदायः
तस्यईशाः क्रमात्पतयःस्युः केते रवींद्वाराहिजीवार्किबुधकेतुसिताः ए-
तदुक्तं भवति रविः कृत्तिकापतिः इंदुः रोहिणीपतिः आरो भौमो मृगपति

॥ भाषा ॥

॥ पंचेति ॥ अब नवांशायुर्दायके ध्रुवांक कहतेहैं. इसकूं कालचक्रभी कहते हैं.
सूर्यका ध्रुवांक ५ चंद्रका २१ मं. ७ बु. ९ गु. १० शु. १६ श. ४ यह सूर्यादिग्रहोंके
ध्रुवांक हैं. ॥ १६ ॥ रवीत्यादिएकोनविंशतिश्लोकपर्यन्तम् ॥ अब नक्षत्रायुर्दाय
कहते हैं. उसमें ग्रहका क्रम नक्षत्रक्रम वर्षक्रम कहते हैः- कृत्तिका नक्षत्रआ-

कृत्वाकरणदैरेवंस्वोत्पन्नौदायसंज्ञितौ प्रत्ये-
कंभिन्नदायोत्थाएवंत्रिंशद्भिदामताः १५

॥ टीका ॥

त्रिंशद्भक्तंमासादिस्यात् एवंक्रमात् भिन्नाष्टकवर्गजाः भिन्नाष्टव-
र्गसमुद्भूताः अब्दाद्याभवंति एवंप्रकारेण तान्भिन्नान्कृत्वा विधाय
ततः संयोज्यएकीकृत्य भासं सप्तविंशतिभागलब्धं फलं अब्दादयः
सामुदायिकाष्टकवर्गीयवर्षादयः स्मृताः उक्ताइत्यर्थः एवं रेपाशोध-
नायुर्दायवत् करणदैरपि करणात्रिकोणैकाधिपत्यशोधनाद्यायुर्दायं
संपादयेदित्यर्थः एवंस्वोत्पन्नौ स्वयोर्दायसंज्ञितौ भवतः नाम रे-
खोत्पन्नो रेखाष्टवर्गायुर्दायसंज्ञकः करणोत्पन्नः करणायुर्दायसं-
ज्ञक इत्यर्थः प्रत्येकं प्रतिग्रहं भिन्नदायेन उत्पन्नाः त्रिंशद्भिदाः त्रिं-
शत्प्रकारका मताः तदित्थं पिंडायुर्दायः भिन्नसप्तग्रहोत्पन्नः स-
प्तकारकः ७ ध्रुवायुर्दायः भिन्नसप्तग्रहोत्पन्नः सप्तप्रकारकः ७
रश्म्यायुर्दायः भिन्नसप्तग्रहोत्पन्नःसप्त प्रकारकः ७ अंशायुर्दायःभि-
न्नसप्तग्रहोत्पन्नः सप्तप्रकारकः ७ रेखाष्टकवर्गोत्थः १ करणाष्टकव-
र्गोत्थश्चे १ त्येवंत्रिंशद्भेदभिन्नइतितात्पर्यम् ॥ १३ ॥ १४ ॥ १५ ॥

॥ भाषा ॥

त्यशोधन करके वो संख्याकू राशिगुणकसें और ग्रहगुणकसें गुणन कर-
के उसका पिंड लाना. पिंडकूं ३० तीससें भाग लेना. वर्षादिक भिन्नाष्टकव-
र्गायु भया. अब सामुदायाष्टकायुर्दाय कहतेहैं. इस आयुर्दायकी रीति ऊपर
बताईहै. या रीतसुं लाना. परंतु विशेष इतना है कि भागके तीसके ठिकाने २७
का देना. इसीतरहसें करणायुर्बी जाणना. इस गीतिमें यह दशामें तीस
३० भेद बताये हैं. सो टीकामें स्पष्ट है ॥ १३ ॥ १४ ॥ १५ ॥

द्वात्रिंशद्भेदभिन्नोयमायुषोनिर्णयःकृतः लोक-
यात्रापरिज्ञानहेतवेदायनिर्णयः २० भावानांसं-
प्रवक्ष्यामिशृणुष्वमुनिपुंगव आयुश्चपरमंहत्वा
स्वेनस्वेनबलेनच २१ विभजेद्बलयोगेनभावानां
दायएवसः अथवांशर्क्षदायेनवर्गेशानांबलेनतु २२

॥टीका॥

अस्यायुर्दायकथनस्यहेतुमाह ॥द्वात्रिंशदिति॥ अयंद्वात्रिंशद्भेदभिन्नः आयुषो निर्णयः मयाकृतः कुतः यतः अयमितिशेषः दायनिर्णयः लोकयात्रापरिज्ञानहेतवे लोकयात्रायाः परिज्ञानस्यहेतवे हेत्वर्थ भवतीति ॥२०॥ एवंसप्तविधमायुर्दायमुक्त्वा अष्टमंभावायुर्दायमाह ॥भावानामिति सार्धेन॥ हे मुनिपुंगव! मैत्रेय! भावानामायुर्दायं संप्रवक्ष्यामिकथयिष्यामि तंशृणुष्व परमं आयुः प्रागुक्तसप्तान्यतममविवक्षितं आयुर्गृहीत्वा स्वेनस्वेनविवक्षितभावबलेन हत्वा बलयोगेन सर्वभावबल समूहेन विभजेत् तेनयल्लब्धंवर्षादि सएवभावानांदायोज्ञेयइति ॥२१॥ अथप्रकारांतरेण भावायुर्दायमाह ॥ अथवेत्यर्धेन ॥ अथवेतिप्रकारांतरसूचनं ॥ नवांशऋक्षदायेन परमायुर्दायंहत्वा वर्गेशानां षड्वर्गपतीनां

॥भाषा॥

॥द्वात्रिंशदिति॥ अब आयुर्दाय कहनेका हेतु कहते हैं मेंने लोकके सुखदुःख जाननेके हेतुसें यह बत्तीस भेदसे आयुष्यका निर्णय कहा ॥ २०॥ भावानामिति सार्धेन॥ ऐसा बत्तीसभेदयुक्त जो सात प्रकारका आयुर्दाय सो कहके आगे आठवा भावायुर्दाय कहतेहैं - हे मैत्रेय। भावोंका आयुर्दाय कहताहूं पूर्वोक्त सात आयुष्यमेंसे कोइ भीएक आयुर्दाय लेके अपने अपने भावबलसे गुणन करके सर्व भावबल समूहसें भाग लेना. लब्ध जो वर्षादि आवे वो आयुर्दाय जानना ॥ अथवेत्यर्धेन॥ अब प्रकारान्तरसें भावायुर्दाय कहते हैं-

अस्मिंस्तुहरणंतस्मात्पूर्वस्मिंस्तुद्वयंहितम् अन-
योः पापदायादावंतेस्युरपमृत्यवः १९

॥ टीका ॥

रितिक्रमेण पूर्वापर्यन्तं क्रमात् पतयः तेएव रव्यादयः पुनर्द्वितीयपर्याये उत्तरादिनवनक्षत्रेषु पतयोगणनीयाः तएवपुनरुत्तराषाढादिभरण्यंतं नवनक्षत्रपतयो भवंति स्वामिनः जात्येकवचनं तेषां स्वामिनां क्रमादायुषोवत्सराः वर्षाणि षट्रवेः १ आशा दश चंद्रस्य २ सप्त भौमस्य ३ धृतयोऽष्टादश राहोः ४ नृपाः षोडशगुरोः ५ एकोनविंशतिः शनेः ६ अत्यष्टिः सप्तदश बुधस्य ७ सप्त केतोः ८ नखाविंशतिः शुक्रस्य ९ ति वर्षाणि अस्मिन्नक्षत्रेशसमूहउच्चेसतिज्ञेयानिअस्मिन्नक्षत्रेशसमूहे नीचेसतितु तस्मात्पूर्वोक्तांकजातात् अर्धं हरणं नाशउच्यते नाशः कार्यइत्यर्थः अथोक्तेषु सप्तस्वप्यायुर्दायेषु शुभाशुभत्वंविभजते पूर्वस्मिन् पैंडयंशकवरश्म्यंशाष्टकवर्गणामायुर्दाये द्वयं शुभाशुभग्रहजनितफलद्वयंहितं शुभंज्ञेयम् अनयोः नवांशनक्षत्रायुर्दाययोस्तु पापदायादावंते पापानां रविक्षीणेन्दुभौमसपापबुधशनिराहुकेतूनां योदायः आयुर्दायः तस्य आदौ आयुर्दायारंभे अंते आयुर्दायावसाने अपमृत्यवोज्ञेयाः अर्थात पूर्णचंद्रबुधगुरुशुक्रायुर्दायः शुभइति विशेषोज्ञेयः इति ॥१७॥१८॥१९॥

॥ भाषा॥

दिलेके तीनवरवनक्षत्रगणमें ग्रहोंदिवर्षसहित ग्रह जानना. सू० ६ चं० १० मंगल ७ राहु १८ गुरु १६ श० १९ बुध १७ केतु ७ शुक्र २० यह ध्रुव उच्चके कहे. नीचका ग्रह होवेतो पूर्वोक्त ध्रुवोंका अर्ध लेना. बाकीकी राशीमें होवे तो अनुपातमें लेना. उसमें पापग्रहोंका जो दायहै उसके आदि अंतमें अपमृत्यु देनेवाले है. और शुभग्रहोंका दाय शुभफल देता है. ॥१७॥१८॥१९॥

अष्टमस्थाग्रहाःसर्वेपापदृष्टियुतास्तुवा भौम-
मंदर्क्षगाश्चेत्तुशुभदृष्टिविवर्जिताः २ केन्द्रत्रिको-
णेत्वशुभाश्चपापाःषष्ठेतृतीयेनचमृत्युसंस्थाः अ-
ष्टोत्तरंजीवतिवर्षमायुर्नरोगुणाढ्योनवतिःसुशीलः
३

॥टीका॥

न्योन्यभवनस्थिताः अन्योन्ययोः परस्परयोः भवनवर्तमानौचेन्मृत्कः मृत्युकारकयोगोज्ञेयः १ क्षीणेन्दूत्पत्तिपाष्टपाः क्षीणेन्दुः कृष्णदशम्यादिशुक्लपंचम्यंतं वर्तमानश्चंद्रः उत्पत्तिपः उत्पत्तेर्जन्मलग्नस्याधिपतिः अष्टपोलग्नादष्टमभावेशश्च एतेत्रयः वेश्मपण्मृत्युरिष्फस्थाः लग्नाच्चतुर्थपष्ठाष्टमद्वादशस्थानगता मृत्ककारकाः २ वा अथवा अष्टमस्थाः सर्वेऽपि मृत्युकारकाः ३ वा सर्वे ग्रहास्तु भौममंदर्क्षगामेषवृश्चिकमकरकुंभसंस्थाः शुभदृष्टिविवर्जिताः शुभग्रहदृष्टिरहिताः संतः पापदृष्टियुताः स्युस्तदाऽपि मारकयोगोज्ञेयः ४ इति ॥१॥२॥ अथायुर्योगमाह ॥ केंद्रेति ॥ शुभाः शुभग्रहाः केंद्रत्रिकोणे ४।७।१०।५।९ स्थानेवर्तमानाः अथवा पापाः पापग्रहाः षष्ठेतृतीयेभावे स्थिताः तदा मृत्युसंस्थाः अष्टमस्थाः केपि ग्रहानचेत् नरः सः सुशीलः सुस्वभावः गुणाढ्यः सुगुणसंपन्नः सन्क्रमेण अष्टोत्तरंवर्षं जात्येकवचनं

॥भाषा॥

होवे परस्पर स्थानमें बैठे होवे तो मृत्ककारक योग जानना ॥ १॥ क्षीणचंद्र जन्मलग्नपति अष्टमभावेश यह तीनों ग्रह लग्नसें ४।६।८।१२ स्थानमें होवे तो मृत्ककारक योग जानना. अथवा अष्टम घरमें सब मृत्युकारक जानना. अथवा सब ग्रह मेष वृश्चिक मकर कुंभराशियोंमें बैठे होवे और शुभग्रहकी दृष्टि न होवे तो पापदृष्टि होवे तो मारक योग जानना.॥ १॥२॥ केंद्रेति ॥ अब-आयुर्दाययोग कहते हैं. शुभ ग्रह केंद्र त्रिकोणमें होवे तो १०८ वर्षका आयुष्य

स्थानाद्यैश्चसमुद्भूतः षड्विधोदायउच्यते २३ इति श्रीमद्बृहत्पाराशरहोराशास्त्रेआयुर्दायकथनेदशमोऽध्यायः १० ७ आरार्कीवक्रिणौमृत्युश्चान्योन्यभवनस्थितौ वेश्मषण्मृत्युरिःफस्थाः क्षीणेन्दूत्पत्तिपाष्टपाः १

॥ टीका ॥

बलेन भजेत् लब्धंवर्षादि भावायुर्दायइति ॥२२॥ एवमयांतरभेदेन द्वात्रिंशद्विधोपि मुख्यतया षड्विधएवेत्याह ॥ स्थानाद्यैरित्यर्धेन॥ स्थानाद्यैः स्थानशब्देनभावो गृह्यते भावदायः १ नक्षत्रदायः १ नवांशदाय ३ अष्टकवर्गदायः ४ अंशदाय ५ पैंडयदायश्चेति षट्प्रकारैः समुद्भूत दायः अनेकविधोपि षड्विधएव षट्प्रकारांतर्गतएवेति उच्यते कथ्यतइति ॥२३॥ एवंदशमकेऽध्यायेकृतादीकायथामति॥ श्रीकृष्णमीतयेसाधुसंशोध्येयमनीषिभिः॥१॥ इतिश्रीमद्बृ० शास्त्रेश्रीदध्यङ्ङन्वयवेदशास्त्राद्यनवद्यविद्याविद्योतितदशदिङ्मंडलजटाशंकरसूनुज्योतिर्विच्छ्रीधरणविरचितसु०टी० आयुर्दायकथनेदशमोऽध्यायः ॥१०॥ ७ ॥

अथैकादशकेऽध्यायेन्द्रासराद्विविधिंमुनिः ॥ उक्तायुर्दायविषयंतद्यांगांव्याह्नविस्तरात् ॥१॥ अथभगवान्पराशरः एकादशाध्यायंमायुःकायुर्होनित्तहृद्विमारकयोगायुर्दायादिविषयानुपदिशति तत्रादौमारकयोगमाह ॥ आरेत्यादिश्लोकद्वयेन॥ आरार्कौभौमशनी वक्रिणौसन्तौ अ-

॥ भाषा ॥

नवांशायुर्दायसे परमायुष्यकू गुणनकरके षड्वर्गपतीयोंके बलसें भागलेना लब्धवर्षादि भावायु जानना.॥२२॥ स्थानाद्यैरित्यर्धेन॥ ऐसास्थानादिक क्रमसे छ प्रकारका आयुर्दायभेद कहा ॥ २३ ॥ इतिद० भाषाधे० याटशमः ॥० ॥आरेत्यादिश्लोकद्वयेन॥ अब मृत्युकारक योग कहते हैं भगवान मुनी कर्ता

केंद्रादिस्थाः शतंदद्युर्नवाष्टादींश्चदिग्गुणान् मिश्रंसंयुज्यदलिता अनुपातेनवत्सराः ६ शत्रुनीचसमांशेषुद्विधेषुनचेत्स्थिताः शतायुर्योगहीनास्तु सर्वेप्रोक्ताः कलौयुगे ७

॥ टीका ॥

अशीतिः ८८ आयुर्मानं तथा दशमकेंद्रस्थगुरोः उक्तस्थानस्थ बुधशुक्रयोगं एकोत्तरतः अशीतिः एकाशीति ८१ रित्यर्थः आयुर्माने संख्यामदिदेति ॥५॥ केंद्रादीतिश्लोकद्वयेन॥पुनर्योगांतरमाह ॥ केंद्रादिस्थाः सर्वग्रहाः केंद्रादिस्थाः केंद्राणि आदीनियेषां तानि पणफराणि आपोक्लीमानिच तेषुस्थिताश्चेत् क्रमात् शतं १०० नवदिग्गुणान् ९० अष्टौ दिग्गुणान् ८० आयुर्ददति ननु स्थानत्रये स्थानद्वयेचग्रहाणां मिश्रीभावे कियत्परिमाणकमायुरितिचेदाह मिश्रंसंयुज्य योगद्वयमिश्रणेदलं अनुपातेन अर्थात् योगत्रयमिश्रणं त्रयंसंयुज्य अनुपातेन तृतीयांशात्तुर्दायमानं बोध्यं ॥एवंदशयोगजन्यमायुर्मानंकथितं तत्र विशेषविचारमाह॥ शत्र्विति द्वाभ्यां ॥ दिग्विधेषु दशप्रकारेषु तं दश प्रकारास्तु तृतीयश्लोके १०८। ९० द्विविधाः चतुर्थश्लोके ९०।९६ द्विविधाः पंचमश्लोके त्रिविधाः ७६। ८८।८१ षष्ठश्लोके केंद्रपणफरापोक्ली-

॥भाषा॥

बुध छठे घरमें शुक्र होवे तो ७६ वर्षका आयुष्य जानना अथवा लग्नसे सातवें घरमें गुरु होवे गुरुसें ५ बुध ६ शुक्र होवे तो ८८ वर्षका आयुष्य जानना. अथवा लग्नसें दसवे गुरु होवे गुरु होवे गुरुसें ५ बुध ६ शुक्र होवेतो ८१ वर्षका आयुष्य जानना॥५॥ केंद्रादीतिश्लोकद्वयेन॥ अब केंद्रादि आयुष्य कहते हैं ॥ सब ग्रह केंद्रस्थानमें होवेतो सोवर्ष,१०० का आयुष्य. सब ग्रह पणफरमें होवेतो ९० वर्षका आयुष्य. सबग्रह. आपोक्लीममें होवे तो ८० वर्षका

लग्नेगुरौदैत्यगुरौचतुर्थेबुधेसुतेपष्ठगतेचसूर्ये स्या-
न्नंचशत्रोश्चमृतिंचहित्वात्वन्येस्थिताश्चेन्नवतिश्चप
ट्च ४ सुखादिकेंद्रेषुगुरुस्थितश्चेत्तत्पंचमेज्ञेतु
भृगोतुषष्ठे षडुत्तरासप्ततिरष्टयुक्तात्वशीतिरे-
कोत्तरतःप्रदिष्टा ५

॥ टीका॥

क्रियाविशेषणंवा प्रथमयोगे नवतिः ९० द्वितीययोगेक्रमाज्जीवानि इति ॥३॥ अथ पुनर्योगांतरमाह॥ लग्नेति ॥ लग्ने गुरौसति चतुर्थे दैत्यगुरौ सति सुते पंचमभावे बुधेसति षष्ठगतेसूर्येचसति नवतिःनवति ९० वर्षाणि आयुः स्यात् अन्ये गुरुशुक्रबुधरविरहिताः चंद्रभौमशनयइत्यर्थः शत्रोः स्थानं स्वशत्रुक्षेत्रं मृतिमष्टमभावंच हित्वा अन्यस्थानवर्तिनश्चेत् तत् ९६ आयुर्मानं बोध्यम्॥४॥ अथगुरुबुधशुक्रयोगायुर्मानमाह॥ सुखादीति॥ सुखादिकेंद्रेषु चतुर्थसप्तमदशमभावेषु लग्नव्यतिरिक्तेष्वित्यर्थः लग्नस्थगुरुयोगफलस्य पूर्वश्लोके कथितत्वादितिभावः गुरुः स्थितश्चेत्तर्हि तस्मात्पंचमगोबुधः तस्माद्गुरोःषष्ठोभृगुश्चयदिस्यात्तर्हि क्रमात् चतुर्थकेंद्रस्थगुरोः षडुत्तरासप्ततिः षट्सप्ततिः ७६ आयुर्मानं तथा सप्तमकेंद्रस्थगुरोः उक्तस्थानगतयोर्बुधशुक्रयोः सतोः अष्टयुक्ता

॥ भाषा॥

पापग्रह छटे तीसरे होवे आठवेमें कोई न होवेतो ९० वर्षका आयुष्य जानना. और सुशील सुस्वभाव गुणसंपन्न होवे.॥३॥ लग्नेति॥ और लग्नमें गुरु चौथेघरमें शुक्र पांचवें घरमें बुध छट्टे घरमें सूर्य होवेतो ९० वर्षका आयुर्मान जानना. और चंद्र मंगल शनि यह तीनग्रह अपनी शत्रुराशिकुं और अष्टम भावकुं छोडके बाकीके कोईभीस्थानोंमें होवेतो ९६ वर्षका आयुष्य जानना. ॥४॥ सुखादीति॥ अथवा लग्नसे चौथे घरमें गुरु होवे. गुरुसें पांचवें घरमें

पापोव्ययस्थोहरतिसर्वदायंद्विजोत्तम अथद्वि-
त्रिचतुःपंचषडंशोनंक्रमादमी १० लाभादिसं
स्थिताः खेटावामतः प्रक्रियांशृणु हरन्तिसौम्याः
प्रोक्तार्धं

॥ टीका ॥

द्विधंभवति ॥ ८ ॥ ९॥ अथप्रथमप्रकारोक्तव्ययादिहरणप्रकारमाह॥ पापोव्ययस्थइत्यादिपादोनैकादशश्लोकपर्यन्तम् ॥ पापः पापग्रहः व्ययस्थः द्वादशस्थः सर्वदायं हेद्विजोत्तम! हरति नाशयति अथेतिये ऽव शिष्टा लाभादयः पंच तत्र कर्तव्यविशेषसूचना तदेवाह लाभादिसंस्थिताः एकादशभावादि पंचभावपर्यंतंवर्तमानाः ग्रहाः वामतः विलोमतः क्रमेण द्वित्रिचतुःपंचषडंशोनं आयुः कुर्वन्ति॥ एतदुक्तंभवति लाभस्थो ग्रहः द्व्यंशोनमायुर्हरति अर्थात् अर्धमवशेषयतीत्यर्थः तथादशमस्थोग्रहः तृतीयांशोनमायुः करोति तथानवमस्थो ग्रहः चतुर्थांशोनमवशेषयति तथाष्टमभावस्थः पंचमांशोनमवशेषयति तथा सप्तमभावस्थः षडंशोनमवशेषयति इति बोध्यम् एवंवामतः विलोमतः लाभभावात् उक्तांप्रक्रियांश्रृणु जानीहीत्यर्थः इयंप्रक्रिया पापग्रहविषयएव शुभग्रहविषयेतु सौम्याः शुभग्रहास्तु प्रोक्तार्धं उक्तार्धमितसंख्यांश-

॥ भाषा ॥

भेदहै॥ उसमे पहिला हानीका पहिला भेद बारवे घरसें सातवे घरतक वाममार्गसें १ अस्तंगत ग्रहका हरण २ शत्रुक्षेत्रगतग्रहका हरण ३ क्रूरोदयस्थ ग्रहका हरण ४ चंद्रसहित राहुका हरण ५ बारवे घरका पापग्रहका हरण ६ ऐसे छ भेद है ॥ ८॥ ९॥ पापोव्ययस्थइत्यादिपादोनैकादशश्लोकपर्यन्तम् ॥ अब आयुष्य कितना हरण करता है सो कहते है. बारवे घरमें पापग्रह होवे तो संपूर्ण आयुष्यका हरण करता है. ग्यारवे घरमे ग्रह होवे तो अर्ध आयुष्य हरण करता है.

दायानांहरणंवक्ष्येशृणुष्वमुनिपुंगव आयुर्दाये तुहरणंषड्विधंसंप्रकीर्त्यते ८ व्ययादिहरणंपूर्वमस्तारिहरणेतथा क्रूरोदयस्थहरणंचंद्रयुक्तनमस्तथा ९

॥ टीका ॥

मयोगोद्भवाः १०० । ९० । ८० एतेषुदशविधेषुग्रहाः शत्रुनीचसमांशेषु शत्रुक्षेत्रनीचस्थानोदासीनक्षेत्राणां ये अंशानवमांशास्तेषु नस्थिता नवर्तमानाश्चेदुक्तदशविधायुर्मानं उक्तत्रयनवांशेवर्तमानाः चेद्भंगो ज्ञातव्यइति ॥ अथ कलौ आयुरवधिमाह ॥ सर्वेनराः कलौयुगे शतायुर्योगहीनाः शतवर्षपरिमितायुर्योगादल्पायुषोज्ञेयाइति ॥ ६॥ ७॥ अथोक्तदायहरणंवक्तुंप्रतिजानीते ॥ दायानामित्यर्धेन ॥ हेमुनिपुंगव मैत्रेय। दायानां पूर्वकथितानांपड्विधानामपि हरणं न्हासंवक्ष्ये तच्छृणुष्वेत्यन्वयः तदेवाह ॥ आयुरित्यादिसार्धनवमश्लोकपर्यंतं॥ अस्मिन्नायुर्दाये हरणं न्हासस्तु षड्विधं वक्ष्यमाण षट्प्रकारकं संप्रकीर्त्यते कथ्यते व्ययादिहरण व्ययादिससमांतं नामचारेण वक्ष्यमाणरीत्याहरणंपूर्वंप्रथमं १ अस्तारिहरणे अस्तगतग्रहहरणं २ अरिक्षेत्रस्थग्रहहरणं३ क्रूरोदयस्थहरणं लग्नगतपापहरणमित्यर्थः४ चंद्रयुक्तनमोग्रहहरण सचंद्रराहुहरण ५ व्ययस्थः पापस्तु हेद्विजोत्तम ! सर्वदायहरति६ एवंप

॥ भाषा ॥

आयुष्य जानना और दोनों स्थानोंमे ग्रह होवे ना दोनोंका योग करके अर्ध आय लेना तीनों स्थानमे ग्रह होव तो तीनोंका योग करके तृतीयांश आयुर्मान जानना और शत्रु नीच तथा नवांशादि वर्गमेंरहेंमे दशविध ज्यो कह्या योगायु नहिं बणें नव गणितायु जानना ॥ ६॥ ७॥ आयुरित्यादि सार्धनवमश्लोकात ॥ अथ उक्तों जो आयुष्य दिखाया है उसमे हानि कितनी करना सो कहते हैं- उनकू छ

लग्नाद्द्वादशसंधोचग्रहान्पापान्विवर्जयेत् १२
राश्यभावेतुभागादीन्दायघ्नान्षष्टिभाजितान् दा
येद्विघ्नेतुसौम्यस्यराशिरेकोदलंयदि १३ अधिकेना
पहृत्त्वक्रमाद्राशिंविनाकृतं दायद्विगुणयासौम्यो
लब्धावाऽपचयंसमाः १४

॥ टीका ॥

अथास्यप्रक्रियामाह ॥ लग्नादित्यादिचतुर्दशश्लोकपर्यंतं ॥ लग्नादारभ्य द्वादशसंधौ जात्येकवचनं संधिषु पापान्वर्तमानपापग्रहान् विवर्जये-त् त्यजेत् सौम्यग्रहेष्वप्येवमेवकुर्यात् शेषान्षष्टिभाजितान्कृत्वालब्धं ०हरसंज्ञंफलंज्ञेयं अयंविचारोराशिसत्वएव राश्यभावेतु पापशुभ-योः कृतिभेदः तदित्थं पापस्यराश्यभावे भागान् अंशादीन् दायघ्नांस्त-नद्ग्रहोक्त दायगुणितान्कृत्वा षष्टिभाजितांश्चकृत्वा लब्धमंशादि यत् तत्संधौविवर्जयेत् ततोऽवशिष्टं आयुर्हरणफलंस्यात् शुभग्रहस्यरा-श्यभावेतुदायेद्विनिघ्ने दायं द्विगुणितंकृत्वा तेन दायान्भागान् भागक-लाविकलाः संगुण्य षष्ट्याविभज्य लब्धमंशादि संधौविवर्जयेत् शि-ष्टं आयुर्हरणफलंस्यात् तत्रैकत्र राशिर्वा एकत्रदलंवा संधौ आनीत फलेवास्याद्यदि तर्हि अधिकेन्यूनमपहृत्य वर्जितंकृतं आयुर्हरणफलं

॥ भाषा ॥

रीति कही. शुभग्रह होवे तो उक्तसंख्या आयुष्यका अर्धभाग हरण करतेहैं. और लग्नका आयुष्य ल्यानेकी रीत आगु अठारवे श्लोकमें कहेंगे ॥१०॥ अथसंधिगत ग्रहोंका आयुर्हरण भेद कहते हैं. पापग्रह होवे तो जो भाग गिरा है उतना हरण करतेहैं. शुभग्रह होवेतो अर्धहानि करते हैं. ॥११॥ लग्नादित्यादिचतुर्दशश्लोक पर्यंतम्॥ लग्नसें लेके बारासंधीतक पापग्रह या, शुभग्रह होवे उनोंके अंशा-दिकोंकूं अपने अपने दायवर्षसे गुणन करके साठसे भाग लेके जो लब्ध अंशा-

लग्नद्वादशसंधिषु ११ पापश्चेत्सकलंहंतिशु-
भोदलमथोत्तरे

## ॥ टीका ॥

आयुर्हरन्ति ॥ अथायुर्दायहान्युदाहरणम् ॥ अंशायुश्चक्रार्धहानिः रविः एकादशस्थानेवर्तमानः अतएव मासमायुः १३।८।१।५०।४० अर्धहानिः ६।१०।०।५६।२० पुनः भौमोव्ययस्थाने स्थितः अतः ससर्वायुर्हानिकरः अतएवभौमस्यायुः १८।७।१।५३।५२ अत्रच भौमस्यायुरभावः ०।०।०।०।० शनिर्दशमस्थानस्थः अतस्तस्यायुः ११।५।२३।२१ तस्यतृतीयांशश्च ३।१।२७।४७। अयं यथागतायुषऊनीकृतश्चेत् ७।१।२५।३३ एवंजातम् परं गुरुबुधभृग्वादीनां अशुभग्रहाः संयुक्ताः अतोऽर्धहानिसंस्कारः चंद्रोनवमस्थः अतस्तस्यमासमायुः १९।३।०।४।४८ अस्याष्टमांशः २।४।२६।२०।३६ अयं यथागतायुषोहीनः कृतश्चेत्तदुर्वरितं १६।१०।४।२४।१२ इदं चंद्रायुःस्पष्टं एवंपिंडाद्यायुर्हानिसंस्कारोबोद्धव्यः ॥१०॥ अथभावसंधिगतग्रहायुर्हरणमाह ॥ लग्नेति सपादार्धेन ॥ अथेतिविपर्यांतरं उत्तरे अनंतरोक्तायुर्विपर्ययेऽपि पापः पापग्रहश्चेत्सकलं वक्ष्यमाणपरिमितं हरति शुभश्चेद्दलमर्धहरतीतितं ११

## ॥ भाषा ॥

दशवें घरमें ग्रह होवे तो आयुष्यका तृतीयभागहरण करना है. नवम घरमें ग्रह होवे तो आयुष्यका चतुर्थांश हरण करना है. आठवें घरमें ग्रह होवे तो आयुष्यका पांचवा भाग हरण करना है. ७वें घरमें ग्रह होवे तो आयुष्यका छट्टा अंश हरण करना है. यह पापग्रहकी

| स्पष्टांशायुश्चक्रम्. | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| सू | चं | मं | बु | गु | शु | श | रा | ल |
| ८ | १६ | ० | ३ | ५ | १७ | ७ | १ | ५८ |
| १० | १० | ० | ६ | २ | ९ | ७ | ८ | ८ |
| ० | ४ | ० | १८ | २६ | २ | २५ | २४ | ८ |
| ५६ | २४ | ० | ३४ | ४६ | ३ | ३३ | १८ | ३२ |
| २० | १२ | ० | ४२ | ० | ३२ | ८ | ३६ | २२ |

त्रिषुभावगतानांचपापानांकरणंस्मृतम् १६ कुटुम्बभरणंचापिदुश्चिन्तंलाभमेवच मेधांचमति भांशांतिंमंदक्रोधंतथाभवेत् १७ अस्तंगतानां सर्वेषांदलंदायः स्मृतस्तदा

॥ टीका ॥

तश्चेत् रिःफादिषट्सु व्ययादिषट्स्थानेषु आयुर्हारकोभवति एवं भावगतानां व्ययादिषड्भाववर्तमानानां पापानां रविक्षीणेन्दुभौमसपापबुधशनीनांपंचानां मध्ये त्रिषु रविभौमशनिष्वेव हरणं स्मृतं उक्तं सर्वेष्विति भावः अथात्रव्ययादिषड्भावेषु पापानां करणं वक्ष्यमाणफलानां उत्पादनमपिस्मृतमिति॥१६॥ तदेवाह॥ कुटुंबेति॥ नयानामव्ययादिवर्तमानः पापोभवेच्चेत् यथा आयुर्हरणमुक्तं तथैव कुटुंबभरणादीनां षण्णां करणं स्यात् तदित्थं पापोव्ययस्थश्चेत् कुटुंबभरणं करणं नाम कुटुंबभरणकर्तास्यादित्यर्थः एवमग्रे सर्वत्र पापो लाभस्थश्चेद्दुश्चित्तं तथा सः दशमस्थश्चेत् लाभं करिष्यति तथानवमस्थः मेधां धारणवतीं बुद्धिं मतिभां प्रत्यक्षज्ञानजनकबुद्धिं करिष्यति तथा सः अष्टमस्थः शांतिं तथा ससप्तमस्थः मंदक्रोधं अल्पक्रोधं करिष्यतीति करणं बोध्यम् ॥१७॥अथास्तंगतग्रहाणांदायहरणमाह॥ अस्तमि-

॥ भाषा ॥

ष्यका हारक होता है. और पूर्वोक्त १२।११।१०।९।८।७ घरमें रवि मंगल शनिका हरण कहा है.॥१६॥ कुटुंबेति॥ अब पूर्वजैसी आयुष्यहरणकी बात कही वैसी करणकी बात कहते हैं. पापग्रह १२ घरमें होवे तो कुटुंबका पोषणकर्ता होवे. पापग्रह ११ घरमें होवे तो दुश्चित्त करे. पापग्रह १० वे घरमें होवे तो लाभ करेगा पापग्रह ९ वे घरमें होवे तो धारणावती बुद्धि ज्ञानबुद्धीकूं देवे. पापग्रह ८ वे घ. होवे तो शांति देवे. ७ वे घरमें होवे तो थोडा क्रोध करे॥१७॥ अस्तमित्यर्थेन॥ अब लग्नायुर्दाय कहते हैं

बहवश्चेद्बलीहंति समाश्चेत्प्रथमोमतः अंशकंग्र-
हयोगेचद्वयोः पापोहरत्युत १५ सौम्योपिपा-
पवर्गेचस्थितोरिःफादिषट्सुचेत्

॥ टीका ॥

भवति एवंक्रमात् राशिंविना कृतं राशिन्यानिरिक्तविषयेकृतं केवल दायगुणनेन पापस्य दायद्विगुणयासौम्यस्यच येलब्धांकाः ते अ-पचये आयुर्हरणे समाः वर्षाणि बोध्यानि ॥१२॥१३॥१४॥ अथा-त्रानेक ग्रहयोगे किंकार्यमित्यत्राह॥ बहवइत्यर्धेन॥ एतदुक्तभावसं-धिषु एकग्रहयोगेउक्तं अथात्र बहवो ग्रहाश्चेत्तर्हि बली अधिकबलवान् ग्रहः हंति आयुर्हारकोभवति अथात्रसमाः सर्वे समबलिनश्चेत्तत्र प्र-थमो रव्याद्यन्यतमः क्रमप्राप्तः प्रथमगणनीयो ग्रहो हरति हारकः स्यादिति॥ अथग्रहद्वययोगेविशेषमाह॥ अंशकमित्यर्धेन॥ अंशकं ए-तत् उक्तायुर्हरणं अंशकायुर्दायविषयकं अथप्राग्बहुयोगेव्यवस्थामुक्त्वा अत्रद्विग्रहयोगे सत्याह द्वयोः शुभाशुभयोः योगे समागमे तत्रस्य: पापएव आयुर्हरति नशुभइतिज्ञेयं उतअपि इतिशुभहरणं क्वचिद्दृश्य-माणस्थलेस्यादितिध्वनिः ॥१५॥ अथशुभद्वययोगेविशेषमाह ॥ सौम्य इति॥ सौम्योऽपि शुभग्रहद्वययोगे सौम्यः शुभः सन्नपि पापवर्गेस्थि-

॥ भाषा॥

दिक आवे वो संधीमें कमीकरके जो शेष रहे सो आयुष्यका हरणफल भया इसमें जो और विशेष कृति है सो टीकामें स्पष्ट है. ॥१२॥१३॥१४॥ बहवइ-त्यर्धेन॥ यह सर्वागत ग्रह एकका विधि पहिले कहा अब जो संधिमें बोहोत ग्र-होंका समागम होवे तो जो बलवान् होवे वो हरण करे॥ और दोय ग्रह होवे तो पापग्रह आयुष्य हरण करे शुभ ग्रह नहि करे.॥१५॥ सौम्यइति॥ शुभग्रहदे-यका योग होवे तो जो पापवर्गमें होवे बारवे घर आदि छ घरमें होवे तो आयु

क्रूरेक्रूरोदयभंतमष्टोत्तरशतैर्हृतम् लब्धंचापनयेद्दायेस्वेनथापरमायुषि २० स्वोच्चेमूलत्रिकोणे चलब्धस्यार्थंविवर्जयेत् मित्रेऽतिसुहृदिमोक्तंपादोनेनापनायनम् २१

॥ टीका ॥

जातं तच्छतद्वयविभाजितं विधाय लब्धं ३९ एताघवः शेषं १०० इदं षष्टि६०भंक्त्वा जातं ७२०० एतच्छतद्वय२००विभाजितं कृत्वालब्धं ३६ एतानिपलानिस्युः एवंचलमायुर्वर्षादि १।९।२४।१९।३६ एतद्वर्षादिमध्येलग्नराश्यंकसंख्यांयोजयेत् अत्रतुलग्नराश्यंक०संख्यां योज्यजातं १।९।२४।१९।३६ एवंजातमितिसुधीभिरधिगंतव्यम् ॥१८॥१९॥ अथलग्ने क्रूरग्रहसमागमे उक्तायुर्हानि संस्कारमाह ॥ क्रूरे इत्यादि द्वाविंशतिश्लोकपर्यंतम् ॥ क्रूरे पापग्रहे लग्नस्थेसति लग्नांशादिरूपंभावं क्रूरोदयभं क्रूरोदयेन क्रूरोदयवर्तमाननवांशराशिपरिमितेनांकेन भंगुणितंकृत्वा अष्टोत्तरशतैः हृतं १०८एतैः विभाजितं तेनयल्लब्धं वर्षादि तत् स्वेदाये लग्नदाये तथा परमायुषि परमायुर्दायेच अपनयेत् वर्जयेत् एवंकृते स्पष्टदायः स्यात् ॥ अथच स्वोच्चे क्रूरे स्वोच्चभूतलग्नेवर्तमानेसति स्वमूलत्रिकोणभूतलग्नेच वर्तमानेसति तु लब्ध-

॥ भाषा ॥

न होवे या चद्र नहोवे तो लग्नके अंशांकू षष्टि गुणित करके दोयसो २०० सें भागलेके लब्ध वर्षादिक जानना ॥ १८ ॥ १९ ॥ क्रूरेइत्यादि द्वाविंशतिश्लोकपर्यंतम्॥ लग्नमें पापग्रह होवे तो लग्नके अंशादि रुपभावकूं पापग्रहके वर्तमान नवांशराशितुल्य अंकसें गुणन करके १०८ सें भाग लेना- जो वर्षादि लब्ध आवे वो लग्नदायमेंसें निकालना. सो स्पष्ट आयुर्दाय होवे ॥ लग्नमें पापग्रह अपने उच्च राशीका होवे तो या मूलत्रिकोणका होवे तो पूर्वोक्तरीतिसें जो लब्धांक है उसका

राशिसंख्यासमाश्चाब्दाल्लग्नेऽब्जेबलवत्तरे १८ अं-
शान्लिप्ताहतान्कृत्वाखखवाक्षिभ्यांसमाहृताः
शेषामासादयःप्रोक्तावर्तमानाब्दयोजने १९

॥ टीका ॥

त्यर्धेन॥ सर्वेषां चंद्रादिशुभपापानां अस्तंगतानां सतां तदा दय मासायुर्भोगः दलं अर्धं अवशिष्टः स्मृतउक्त इति ॥ अथलग्नायुर्दायमाह ॥ राशीत्यादिसार्धेन॥ लग्नायुर्दायेऽस्मिन् लग्ने लग्नस्थाने अब्जे चंद्रे बलवत्तरे सति राशिसंख्या समाः राश्यंकपरिमितवर्षाणि ग्राह्याणि यदिच लग्ने बलहीनचंद्रः स्यात् वा लग्ने चंद्रोनस्याचेत्तदा तु अंशान् लग्नराश्यंकंत्यक्त्वा अंशांकान् लिप्ताहतान् लिप्ताभिः षष्टिपरिमितांकैः हतान्गुणितान्कृत्वा खखवाक्षिभ्यां शतद्वयेन समाहृता भाजिताः संतः लब्धाः वर्तमानाब्दयोजने राश्यंकमेलने सति समाः स्युः एवंबलवत्तरचंद्रयुतलग्ने निर्बलचंद्रयुतलग्ने चंद्ररहितलग्नेच सति लग्नायुर्वर्षाणिकथयित्वा प्रकारत्रयेपि मासाद्यानयनमाह शेषा अब्दानयनानंतरमवशिष्टांकान्द्वादशगुणितान्द्विशतभक्तान् कृत्वा लब्धफलं मासाः एवं शेषं त्रिंशद्गुणनेन षष्टिगुणनेनच द्विशतभागलब्धं क्रमाद्दिनघटीपलादिरूपंस्यात् ॥ अथलग्नायुरुदाहरणं॥ लग्नम् ० । ६ । ३ । ४२ अत्रराशिंविहायांशान्कलीकृत्य जातं ३६३। ४२ इदं शतद्वय २०० विभाजितं सल्लब्धं वर्षं १ शेषं १६३ । ४२ इदंद्वादशभिर्गुणितंसज्जातं १९६४ । २४ इदं शतद्वय२०० विभाजितं सल्लब्धं ९ मासाः शेषं १६४ । २४ इदंत्रिंशद्भिर्गुणितं सल्लब्धं ४९३२ इदंशतद्वय२०० विभाजितंसल्लब्धं २४ दिवसाः शेषं १३२ इदं षष्टि६० घ्नंसत ७९२०

॥ भाषा ॥

लग्नस्थचंद्र बलवान् होवे तो वो राशिसमान वर्ष लेना अथवा लग्नमें चंद्रबली

लग्नाधिपेनराष्टांशंपापोहरतिमृत्युगः २३ वहु-
वश्चेद्बली सौम्यपापेष्वेवंविधिः स्मृतः तयोर्दाया-
तरंदायः केंद्रस्यचविधीयते २४ सेंदोराहोर्दशा
राहोरानीतामूलदायवत् चंद्रायुः पिंडतः शोध्या
त ग्राहुकरणंस्मृतम् २५ अंशदायक्रमेणैवतमसोऽ-
ब्दाः समीरिताः

॥ टीका ॥

शायुर्दायव्यतिरिक्तायुर्दायाष्टमांशं हरतीति ॥ २३ ॥ तत्र बहवः पापा-
श्चेद्बली बलाधिकोऽहंति अथच तत्र सौम्यपापेषु सत्सु तयोर्दायांतरं
सौम्यपापयोः शयद्वयस्यांतरं विवरंकृत्वा दायः स्यात् एवंविधिः स्मृतः
एवमेव केंद्रस्य पापसहितस्य पापसौम्ययुतस्य च प्रकारो विधीयते सं-
पाद्यतइति ॥२४॥ अथ सचंद्रराह्वायुर्दायमाह ॥ सेंदोरित्यादि सार्धेन
॥ सेंदौ चंद्रयुते राहौ सति मूलदायवत् प्रागुक्तायुर्दायवत् दशा आनी-
तासा पिंडीकृता चंद्रायुः पिंडतः चंद्रायुषः पिंडं गृहीत्वा तस्माच्छोध्या
वर्जनीया अवशिष्टं राहुकरणंस्मृतं तेनकरणेन अंशदायक्रमेणैव प्रागु-
क्तांशायुर्दायरीत्या एव तमसो राहोरब्दाः आयुर्वर्षाणि समीरिताः क-
थिताः ॥ २५ ॥

॥ भाषा ॥

होवे तो लग्नपतिविना दूसरेका आयुष्यका अष्टमांश हरण करताहै ॥ २३ ॥ वहां
बोहोत पापी होवे तो भी बलवान् पापी होवे वो आयुष्य हरण करणे अथवा पा-
पसुभ दोनों होवे तो दोनो ग्रहोंका आयुष्यका अंतर करके जोरदे वो आयुष्य
जानना. ऐसा केंद्र स्थानमेंभी शुभ पापादिक ग्रहोंका पूर्वोक्तवत् फल जानना ॥ २४ ॥
सेंदावित्यादि सार्धेन ॥ अब सचंद्र राहुका आयुर्दाय विचार कहते हैं. चंद्रयुक्त राहु
होवे तो पहिले मरिख्ये दशा लायके चंद्रायुष्यका पिंड करके उसमें शोधन करके

भावेष्वेवंविधिःप्रोक्तोवर्गणामधिपेषुच तिष्ठ-
तौशुभपापौचेत्पापोदयविधिःस्मृतः २२ क्रूरेऽ-
ष्टमेष्टमांशेनभावस्याप्यनुपाततः

॥ टीका ॥

स्यार्धं प्रागुक्तरीत्यानयनेन यल्लब्धं तस्यार्धं सेनतया परमायुषि च वर्जयेत् तथा क्रूरे मित्रे मित्रक्षेत्र भूतलग्ने वा अति सुहृदि अधि-सुहृत्क्षेत्र भूतलग्ने वर्तमाने सति तु पादोनेन प्रागुक्तरीत्या लब्धं च तुर्थांशन्यूनं कृत्वा शेषेण अपनायनं वर्जनं कुर्यादिति प्रोक्तं आचार्ये-रितिशेषः एवंविधिः हरणप्रकारः भावेषु लग्नेषु वर्तमानक्रूरहरण-प्रकारः तथा वर्गाणां षण्णामपि क्रूरेषु अधिपेषु सत्सु लग्ने क्रूराभा-वेऽपि अयंहरणसंस्कारः कथितः ननु शुभपापग्रहद्वययुतलग्ने किं-मित्यिदाह शुभपापौचल्लग्ने तिष्ठंतौ वर्तमानौचेत् पापोदयविधिरेव कर्तव्यः न शुभस्येति ननुलग्नस्थक्रूराधिक्यं सति चेद्बहवश्चेद्दर्लाद्दंतां ति अनुपन्नोन्यायोग्राह्यइति ॥२०॥२१॥२२॥ अथाष्टमभावे कें-द्रभावेषु वा पापयोगे तथा शुभपापमिश्रयोगेन हरणविधिमाह॥ क्रू-रइत्यादि चतुर्विंशतिश्लोकपर्यंतं॥ अष्टमेऽष्टमभावे नाप्यलब्धस्या-भावस्य भावायुषोऽनुपाततः त्रैराशिकेनसंपादितात् अष्टमांशेन हरणं कु-र्यात तत्रविशेषस्तु मृत्युगोऽष्टमस्थः पापः लग्नाधिपेनराष्टांशं त्यज्य-

॥भाषा॥

अर्धकरके परमायुष्यमें कमी करना और जो शेपापग्रह मित्रराशिका स्वधिमि-त्रका होवे तो पूर्वोक्तरीतिसमागमें चतुर्थ चतुर्थांश न्यूनकरके शेषस्यायुष्य ता-ना यह पापग्रहोंका हरणप्रकार कहा स्वपापग्रह शुभग्रह युक्त लग्नदेव तो पापग्रहका विधि करणा पापग्रह होतीन होवे तो बलवान ग्रहसे हरणविधि करना ॥२०॥२१॥२२॥ क्रूरइत्यादि चतुर्विंशतिश्लोकपर्यंतं॥ स्थानके भावमें भावा

अस्तंगतानामर्धंस्याद्विनाभृगुसुतंशनिम् २८, त-
योर्वेदांशहीनंस्यात्त्र्यंशोनंशत्रुगस्यतु अंगारकं
वर्जयित्वा शत्रुक्षेत्रगतैर्ग्रहैः २९ सुहृद्वर्गगतानां
तुतद्दलंहरतिस्वकम् एवंभावेषुसर्वेषु षड्विधंहरणं
नहि ३०

## ॥ टीका ॥

अथास्तंगतग्रहायुर्दायहानिमाह ॥ अस्तमिति सपादार्धेन ॥ अस्तंगतानां ग्रहाणां मागानीतायुर्दायस्य अर्धं स्यादर्धग्राह्यम् तत्रविशेषस्तु विना भृगुसुतं शनिं शुक्रशनिव्यतिरेकेण अथतयोरस्तंगतयोः सतोः वेदांशहीनं चतुर्थांशोनं स्यादिति ॥ २८॥ अथशत्रुक्षेत्रगतग्रहायुर्हानिमाह ॥ त्र्यंशेति पादद्वयेन ॥ शत्रुगस्य शत्रुक्षेत्रवर्तिनः अंगारकं भौमं वर्जयित्वा भौमव्यतिरेकेणेत्यर्थः अन्योग्रहः स्वायुर्दायं त्र्यंशोनं कुर्यात् ॥ अथशत्रुक्षेत्रगतानामपि सुहृद्वर्गगतानां सतां विशेषमाह ॥ शत्र्विति सपादार्धेन ॥ शत्रुक्षेत्रगतैर्ग्रहैः यस्मागुक्तं त्र्यंशोनमिति स्वकमायुः तद्दलं त्र्यंशार्द्धमित्यर्थः तेषां सुहृद्वर्गगतानां शत्रुक्षेत्रगतत्वेऽपि मित्रवर्गसंबंधेनेत्यर्थः त्र्यंशार्धं हरतिनश्यतीत्यर्थः नत्र्यंशमिति ॥ एवंषड्प्रकारकं ग्रहायुर्हरणमुक्त्वैतद्भावेषु नेत्याह ॥ एवमित्यर्धेन ॥ एवमुक्तषड्प्रकारकं हरणं भावेषु

## ॥ भाषा ॥

फलकी रद्दि माननी-भिन्नहोवे तो क्षय जानना. ॥ अस्तमितिसपादार्धेन ॥ अस्तंगत ग्रहांका जो आयुर्दाय होवे उसका अर्ध लेना-परंतु शुक्र शनिजो अस्तंगत होवे तो चतुर्थांश न्यून करना ॥ २८ ॥ त्र्यंशेतिपादद्वयेन ॥ शत्रुक्षेत्रगत जो ग्रह हैं उसमें मंगल बिना दूसरे ग्रहांका आयुर्दायका तीसरा अंश न्यून करना है. ॥ शत्र्विति सपादार्धेन ॥ शत्रुक्षेत्रगत ग्रहांका तृतीयांश कमी करनाऐसा कह्या है-परंतु मित्रवर्गका ग्रह होवे तो तृतीयांशका अर्ध कमी करना ॥ २९ ॥ एवमित्यर्धेन ॥ ऐसा छ प्रकारसे आयुष्यका

तस्मिन्सचंद्रेतल्लग्नभावसाधनतस्ततः २६ तत्त-
दृष्टिहतंकृत्वाषष्ठ्याप्तंधनशोधने सोदयेचसराह्विं-
दावेवंन्यायः समीरितः २७ स्थानवृद्धिः क्षयः
कार्योद्रेष्काणर्क्षसराशिकम्

॥टीका॥

अथलग्नगत सचंद्रराह्वायुर्दायमाह॥ तस्मिन्नितिसार्धेन ॥ तस्मिँल्लग्ने सचंद्रे चंद्रयुते राहौ सति तल्लग्नभावसाधनतः तद्वत्लग्नस्य तस्य भावायुर्दायवत साधनंकृत्वा तत्तदृष्टिहतं तस्यतस्य राहोश्चंद्रस्यच दृष्ट्या गुणयित्वा षष्ट्याप्तं षष्टि६० भाग लब्धं धनशोधने धनऋणे प्रागुक्तवत् मकरादौ कर्कादौ कल्पनीयमिति॥ एवंकरणं कदा सराह्विंदौ राहुयुतचंद्रे सोदये जन्मलग्नसहितेसति न्यायोरीतिः समीरितः कथित इति ॥२६॥२७॥अथद्रेष्काणवशात्स्थान वृद्धिक्षयावाह ॥ स्थानेतिअर्धेन ॥ द्रेष्काणर्क्षं सराशिकं राशिनासमानं सराशिकं एकराशिकमित्यर्थः एवंभूतंद्रेष्काणर्क्षं द्रेष्काणराशिश्चेदेतदुक्तं भवति लग्नं स्वद्रेष्काणे वर्तमानंचेत् भाव स्थानफलस्यवृद्धिः स्थानवृद्धिः कार्या अर्थात् लग्नं स्वातिरिक्तान्यद्रेष्काणवर्तिचेत् स्थानस्यक्षयः कार्यः अत्रस्थानवृद्धिक्षयौ आयुर्विषयकौ ज्ञेयौ ॥ २८॥

॥भाषा॥

जो शेष सो राहुका करण कह्या वो करणमें अंशायु क्रमसें राहुके वर्षादि कह्या॥२५ ॥ तस्मिन्निति सार्धेन॥ अब लग्नगत सचंद्र राहुका आयुर्दाय कहतेहैं. लग्नमें सचंद्र राहु होवे तो लग्नभावसरीखा आयुर्दायसाधन करके राहुदृष्टिसें और चंद्रदृष्टिसें गुणन करके साठसें भाग लेना. लब्ध आवे सो मकरादि होवे तो धन करणा. कर्कादि होवे तो ऋण करणा ॥२६॥२७॥ स्थानेतिअर्धेन॥ अब द्रेष्काणयोगमें वृद्धिक्षय कहतेहैं. स्थानकी औरद्रेष्काणकी राशी एक होवे तो भावस्थान

दायगस्यतु सर्वस्यसहगस्यदलंभवेत् सुतधर्मगयोस्त्र्यंशं पादंमृतिसुरवस्थयोः ३४ सप्तांशंसप्तमस्थस्य प्रक्रियाप्रोच्यतेधुना अंशान्परस्परहतांच्छेदेनैवविभाजितम् ३५

॥ टीका ॥

अथयुक्तदायएवदशासंज्ञकोज्ञेयस्तत्रांतर्दशाभागमाह ॥ दायगस्येत्यादिसपादचतुस्त्रिंशच्छ्लोकपर्यन्तम् ॥ सर्वस्यदायगस्य दायंगमयतीति तस्य दायपतेरित्यर्थः सर्वदायसंबंधिदलं अर्धं सहगस्य सहवर्तमानस्यभवेत् सहगोऽर्धविभागीभवतीत्यर्थः तथा दायपतेः सुतधर्मगयोः पंचमनवमस्थयोः ग्रहयोः सर्वदायसंबंधकं त्र्यंशं तृतीयांशमितोभागोभवति एवंमृतिसुरवस्थयोः अष्टमचतुर्थस्थयोः सर्वदायसंबंधिपादं चतुर्थांशदशाभागोभवति तथा सप्तमस्थस्यसर्वदायसंबंधिसप्तांशं सप्तमांशोऽन्तर्दशा भवतीति ॥ ३४ ॥ अथोक्तांतर्दशानयनप्रकारमाह ॥ प्रक्रियेत्यादिषट्त्रिंशच्छ्लोकपर्यन्तम् ॥ अधुना प्रागुक्तांतर्दायस्य प्रक्रियासाधनरीतिः प्रोच्यते कथ्यते अंशान् तत्तत्स्थानोक्तान् परस्परहतान्कृत्वा वामतोगुणनेन अग्रिमांकः सर्वांशभागग्रहणे सामुदायिकः

॥ भाषा ॥

होवे तो तृतीयांशयुक्त करना. शत्रुक्षेत्रका होवे या अधिशत्रुका होवे तो तृतीयांश कमी करना. यह विधि अष्टकवर्गोत्पन्न आयुर्दायमें जानना और सर्वभावायुर्दायमें भी जानना ॥३१॥३२॥३३॥ दायगस्येत्यादिसपादचतुस्त्रिंशत्पर्यंत ॥ अब अंतर्दशाभाव कहते हैं. आयुर्दायका जो अधिपति है उसका जो दाय है उसका अर्धभाग दायपतीके साथ जो रहनेवाला ग्रह है वो लेता है. और दायपतीसे पांचवें, नवमें जो ग्रह है वे सर्वदायका तृतीयांश लेते हैं. और सप्तमस्थ ग्रह जो है वो सर्वदायका सातवा अंश लेता है. ॥३४॥ ॥प्रक्रियेत्यादिषट्त्रिंशच्छ्लोकपर्यन्तम् ॥ अब अंतर्दशा लानेका प्रकार कहते हैं. यहां

हरणंनैवकर्तव्यमंशदायेऽष्टवर्गजे स्वोच्चेचत्रिगुणंप्रोक्तंस्ववर्गेद्विगुणंतथा ३१ अधिमित्रगृहेसार्धंत्र्यंशंमित्रगृहेयुतम् अरावध्यरिभावेचत्र्यंशखंडविवर्जितम् ३२ अष्टवर्गोत्थदायेषुप्रोक्तोऽयंविधिरंजसा भावदायेषुसर्वेषुप्रोक्तोयंविधिरुत्तमः ३३

॥ टीका ॥

लग्नादिषु नहि नास्तीत्यर्थः किंतु ग्रहाणांमेवेति भावः ॥ ३० ॥ एवमेव अष्टवर्गजेंऽशायुषि मित्रादीनांवृद्धिः शत्र्वादीनांहरणंचाह ॥ हरणमित्यादित्रयस्त्रिंशच्छ्लोकपर्यंतं ॥ अष्टवर्गजे अष्टवर्गसमुद्भवे अंशदाये हरणं ह्रासोनकर्तव्यं नकार्यं नत्रतुयोगएवकार्यः तदेवाह ॥ स्वोच्चे उच्चस्थे ग्रहे त्रिगुणंप्रोक्तं प्राप्तदायः त्रिगुणः कर्तव्यः स्ववर्गे स्वकीयवर्गस्थेसति स्वराशिस्थे सति द्विगुणंकार्यं तथा अधिमित्रगृहे वर्तमानस्य ग्रहस्यायुः सार्धं अर्धेनसहितं कार्यं तथा मित्रगृहेस्थितस्य त्र्यंशयुतं प्राप्तदाये त्र्यंशयुक्तं कार्यम् एवंयोगमुक्त्वाऽत्रापि हरणमाह अरौ अरिक्षेत्रगे अध्यरिभावे अधिशत्रुगृहेच स्थितस्य प्राप्तायुस्त्र्यंशखंडविवर्जितं स्वतृतीयांशोनं कर्तव्यं अयंविधिः अंजसा उत्तमप्रकारेणेत्यर्थः अष्टवर्गोत्थदायेषु अष्टवर्गसमुद्भवायुर्दायेषु प्रोक्तः अयमेवविधिः सर्वेष्वपि भावदायेषु उत्तमः प्रोक्तः इति ॥ ३१ ॥ ३२ ॥ ३३ ॥

॥ भाषा ॥

हरणविधि कहा सो ग्रहोंका जानना भावोंको नहि ॥ ३० ॥ हरणमित्यादित्रयस्त्रिंशच्छ्लोकपर्यंतम ॥ अष्टकवर्गोत्पन्न जो अंश दायहै उसका हरण नहि करना योग करणा उच्चका ग्रह होवे तो प्राप्त आयुष्यकूं त्रिगुणित करणा स्वगर्गोका होवे तो द्विगुणित करणा अधिमित्रका होवे तो अर्ध अधिक करना मित्रक्षेत्रका

## ॥ टीका ॥

संख्यांकेन विभाजिता सती जातं २।३।१६।५७।५४ इदं चंद्रमध्ये भृगोरंतरम् ॥ भौमस्यचांतरंजातम् एवंसर्वेषामन्तरंबोद्धव्यम् ॥३५॥३६

अथ दशाक्रमचक्रमाह.

| शु | श | गु | म | ल | सू | बु | चं | योग. |
|---|---|---|---|---|---|---|---|---|
| १७<br>९<br>२<br>३<br>३२ | ७<br>७<br>२५<br>३३<br>० | ५<br>२<br>२६<br>४६<br>० | ०<br>०<br>०<br>०<br>० | १<br>९<br>२४<br>१९<br>३६ | ६<br>१०<br>०<br>५६<br>२० | ३<br>६<br>१४<br>३४<br>४२ | १६<br>१०<br>४<br>२४<br>१२ | ५९<br>८<br>७<br>३४<br>२२ |
| १९०० | १९१८ | १९२६ | १९३१ | १९३१ | १९३३ | १९४० | १९४३ | १९६० |
| १०<br>४<br>१४<br>२२ | ७<br>६<br>१७<br>५४ | ३<br>१<br>५०<br>५४ | ५<br>२८<br>३६<br>५४ | ५<br>२८<br>३६<br>५४ | ३<br>२२<br>५६<br>३० | १<br>३३<br>५२<br>५० | ८<br>८<br>२७<br>३२ | ६<br>१२<br>५१<br>४४ |

अंशाच्छेद चक्रम्

| च | उ | शु | भौ |
|---|---|---|---|
| १ | १ | १ | १ |
| १ | ३ | ५ | ५ |

समच्छेदचक्रमाह.

| चं | उ | शु | भौ |
|---|---|---|---|
| ४८ | १६ | १२ | १२ |
| ४८ | ४८ | ४८ | ४८ |

चन्द्रान्तरदशाचक्रम्.

| चं | उ | शु | भौ | योग. |
|---|---|---|---|---|
| १<br>२<br>७<br>५१<br>२३ | ३<br>०<br>२२<br>३७<br>१ | २<br>३<br>१६<br>५७<br>५४ | २<br>३<br>१६<br>५७<br>५४ | १६<br>१०<br>४<br>२४<br>१२ |
| १९४३ | १९५२ | १९५५ | १९५८ | १९६० |
| ८<br>८<br>२७<br>३२ | १०<br>१६<br>१८<br>५५ | ११<br>८<br>५५<br>५६ | २<br>२५<br>५३<br>५० | ६<br>१२<br>५१<br>४४ |

## ॥ भाषा ॥

उसको इकट्ठापिंड करके भाग देना तो अंतर्दशा आवेगी. इसका उदाहरण टीकामें बनायाहै और यहां चक्रभी दिखाया है॥ ३५॥३६॥ ॥ ५ ॥

नत्तदंशविभक्तंचस्वस्यस्वस्यसमंभवेत् नीचार्धपक्षेसर्वत्रविधिरेषविधीयते ३९

॥ टीका ॥

सिध्यति तं तेनतेनांशांकेन विभज्यासं तत्तदंशस्य पृथग्गुणकच्छेदा भवति समांशभागहरणे मूलदायस्य गुणकः तथा सर्वांशच्छेदसमूहे सर्वेषामप्यंशानां भाजको ज्ञेयः एवं तत्तदंशगुणकेन संगुण्य सर्वांशगुणकसमुदायेन विभज्यासं तदंशदायफलमुत्पद्यतइतितात्पर्यम् एषएवविधिः सर्वत्र नीचार्धपक्षे नीचाद्यर्धानयनविषये विधीयतइति ॥ अथांतरदशोदाहरणम् ॥ अथ दशापतिश्चंद्रः ततः सकाशाल्लग्नस्य त्रिकोणस्थितत्वात्पंचमस्थानस्थितत्वेन तृतीयांशभोक्तृत्वं लग्नस्य सुस्पष्टतरं जातं शुक्रभौमयोश्चंद्रात्सुखस्थानस्थितत्वाच्चतुर्थांशभोक्तृत्वं अथोपरिष्टादुक्तग्रहाणां स्थितिप्रकारं तावद्दिशदयामः एतेग्रहाः परस्परं छेदहता कृताश्चेज्जायमाना अंशसंख्या ४८।१६।१२।१२ इति एते मूलदायस्य गुणकाः संजाताः एतेएकीकृताः संतः जायमानसंख्या ८८ इति एषासंख्या मूलदशाकभागहराभवति मूलदशांकाश्च १६।१०।४।२४।१२ स्वांशसंख्यया ४८ इत्यनेन गुणयित्वा समुदितासंख्याच ८०८।७।१।२१।३६ इयसंख्या भागहरेण ८८ इत्यनेन विभाज्य जाता ९।२।७।५१।२३ इदंचद्रमध्येचंद्रान्तरम्॥ मूलदशा१६।१०।४।२४।१२ लग्नांशेन १६ गुणिता जायमानसंख्या २६९।६।१०।२७।१२ इमांसंख्यां भागहरेण ८८ संख्यांकेन विभज्य लब्धं ३।०।२२।३७।१ इद चंद्रमध्ये लग्नांतर॥ मूलदशा१६।१०।४।२४।१२ इयंभृग्वंशेन १२ इत्येतेन भौमांशेन १२ इत्येतेनच गुणितासती जातसंख्या २०२।१।२२।५०।२४ इयंभागहरेण ८८

॥ भाषा ॥

अंशच्छेद और समच्छेद करके अंशादिक सम्मूलदशाकू गुणन करणा और

स्वर्क्षे होराद्दकाणेशास्त्रिंशांशेशाद्रिभागपाः ३९
नवार्ककालहोरेशाः षष्ट्यंशेशकलांशपौ भुंजते
चक्रमात्सर्वेत्वंतर्दायविधौ तथा ४० ग्रहाद्भावा-
त्ततस्तस्मात्स्थितानांद्वादशस्वपि

॥ टीका॥

नेमानः सर्वं मासांतर्दायं भुंक्ते सचहोरेशश्चेद्वितीयांशं मासांतर्दशा-र्धं भुंक्ते एवं सदृकाणेशः द्रेष्काणपतिश्चेत्तृतीयभागं त्रिंशांशश्चेदपि तृतीयांशं अद्रिभागपः सप्तांशपतिश्चेद्वेदांशं मासांतर्दायचतुर्थांशं नवांशेशश्चेत्र्यंशं अर्कांशेशो द्वादशांशपतिश्चेत्षष्ठांशं कालहोरेशश्चे-त्मासांतर्दाय सप्तमांशं षष्ट्यंशश्चेदष्टमांशं कलांशपः षोडशांशपतिश्चे-त्पाणौ द्वितीयांशमित्यर्थः एवंक्रमात् सर्वे अंतर्दायपतयो ग्रहाः अंतर्दा-यविधौ अन्तर्दशाविधाने स्वस्वांशं भुंजते इति अंतर्दशापाचकक्रमः मासांतर्दशाहरणक्रमंचोपदिदेशेति ॥ ३९॥ ४०॥ अथ ग्रहेभ्यो भावे-भ्यश्च द्वादशस्थानेषु भागांशानाह॥ ग्रहादिति द्वाभ्यां॥ ततः अंतर्दा-यानयनानंतरं तस्माद्ग्रहात् तस्माद्भावाद्वा स्थितानां भावानां उत्तरश्लो-कस्था भागांशाः क्रमाद्द्वादशस्वपिस्थानेषु स्वयंभुवा ब्रह्मणा मो-

॥ भाषा॥

भोगता है. त्रिंशांशस्वामि होवेतो तीसरा भाग भोगता है. सप्तांशका स्वामि होवे तो चतुर्थांश भोगवे. नवमांशेश होवे तो तृतीयांश भोगता है. द्वादशांशेश होवे तो छठा अंश भोगता है. काल होराधिपति होवे तो सातवा भाग भोगता है. षष्ट्यंशका स्वामी होवे तो आठवा भाग भोगता है. षोडशांशका स्वामी होवे तो दूसरा भाग भोगता है. यह रीतिसें सब ग्रह अपने अपने अंतर्दशामें अपना अपना अंश भुक्तमान करते हैं. ऐसा अंतर्दशाका पाचक क्रम कहा॥ ३९॥ ४०॥ ग्रहादि-ति द्वाभ्यां॥ अब ग्रहोंमें और भावोंसें बारा स्थानोंके भागांश तो ब्रह्मदेवने

नीचाभावेऽष्टवर्गोत्थभावदायेंऽशकक्रमे नायं विधिः स्मृतस्तत्र बहवश्चेत्तुतेऽखिलम् ३७ केंद्रादिगाग्रहाः सर्वेददत्येवापहृत्यच अर्धत्र्यंशंचपादंचहरणाभावसम्मतो ३८ सर्वेद्विश्चित्रिवेदाश्च त्रिघट्सप्ताष्टपाणयः

॥ टीका॥

एवमुक्तसमच्छेदाभावस्थानान्याह॥ नीचेत्यादिअष्टत्रिंशच्छ्लोकपर्यंतम्॥ अयं पूर्वोक्तः हरणविधिः नीचाभावे नीचरहिते तथा अष्टवर्गोत्थदायभावे अष्टवर्गायुर्दायप्रक्रियां तथा अंशकक्रमे अंशायुर्दायविषयेचनस्मृतः नोक्तः अतः तत्रविषयत्रये बहवोऽनेकाग्रहाश्चेत्तर्हि ते तु अखिलं सर्वमायुर्ददति॥ ३७॥ अथकेंद्रादिस्थानेषुविशेषमाह॥ सर्वेऽपिग्रहाः केंद्रादिगाः केंद्रपणफरापोक्लिमस्थाः क्रमादर्धं त्र्यंशं पादंचापहृत्य अत्रहरणाभावसंमतौ हरणराहित्यस्य संमतिः प्रमाणं यस्य तस्मिन्नुक्तविषयत्रयेऽपि शेषंददतीति तावत्यायुर्दायएवांनराणिभवंतीत्यर्थः॥ ३८॥ अथोक्तांनर्दायेंऽनर्दायोपभोक्तृक्रममाह॥ सर्वेत्यादिचत्वारिंशच्छ्लोकपर्यंतम्॥ अंतर्दायेशः स्वर्क्षे स्वराशौ व-

॥ भाषा॥

॥नीचेत्यादि अष्टत्रिंशच्छ्लोकपर्यंतम्॥ अब समछेद जहां नहिं होना वो स्थान कहते हैं. यह हरणविधि नीचस्थानका जहां न होवे अष्टवर्गायुर्दायविषयमें अंशायुर्दायविषयमें नहिं कहा वास्ते यह तीन ठिकानेपर बोहोत ग्रह होवे तो संपूर्ण आयुष्य देते हैं॥ ३७॥ सब ग्रह केंद्रपणफर आपोक्लीम होवे वहां क्रमसें अर्ध तृतीयांश चतुर्थांश कमी करके शेष आयुष्य देते हैं.॥ ३८॥ सर्वेत्यादि चत्वारिंशच्छ्लोकपर्यंतम्॥ अंतर्दशाका अधिपति स्वगृहमें होवे तो सर्वायुर्दाय भोगनाई. सम-द्र होगपति होवे तो दूसरा भाग भोगनाई. द्रेष्काणपति होवे तो तीसराभाग

सर्वत्रिसप्तरामेषुषट्त्र्यग्निद्वियमाः क्रमात् कालांशाअर्धहोरांशाःपतयोऽथहरान्यथा ४५ इति श्रीमद्बृहत्पाराशरहोरोत्तरभागे दायवर्णनेएकादशोऽध्यायः ११ श्रीगणेशः प्रीयताम्

॥ टीका ॥

आयव्ययस्यांतर्दशास्वरूपंज्ञेयम् तथा विपदादिषु तृतीयादिदशमपर्यंतेष्वष्टसु सर्वः सर्वांशः द्विः द्वितीयांशः त्रिःतृतीयांशः इषुः पंचमांशः केदश्चतुर्थांशः त्रिः तृतीयांशः पंच पंचमांशः सप्तसप्तमांऽशः एतान्संयोजयेदितिध्वनिः स्थानांतरेऽवशेषस्थानद्वये प्रथमेद्वितीयेच भागांशाः येप्रथमं भागांशाः कथिताः तएवांऽतर्दशारूपाज्ञेयाः एवं सर्वभावेषुकीर्तिताइति ॥ ४३ ॥ ४४ ॥ अथकालांशपत्यर्धहोरांशपतिहरानाह ॥ सर्वेति ॥ अथानंतरं कालांशाः कालाख्या अंशा येषांते अर्धहोरांशाः अर्धहोराख्या अंशा येषां तेच येपतयः अधिपाः तेषामितिशेषः हरान् यथाक्रमाज्ज्ञेयाइति अन्वयः तेच सर्वः१ तृतीयांशः २ सप्तांशः ३ रामः त्रयः ४ इषवः पंच५ षट् ६ त्र्यंशः ७ अग्नयः त्र्यंशः ८ द्वौ ९ यमौ द्वौ १० इति ॥ ४५॥ एवमेकादशेऽध्यायेगणेशर्माततेमुदा ॥ यथामति

॥ भाषा ॥

करके सर्वबलयोगसे भाग लेना- नष्ट जो है सो ग्यारवे, बारवे भावका अंतर्दशा स्वरूप जानना.२ तीसरे भावका सप्तांश३ - चौथे भावका दूसरा अंश ४. पांचवे भावका तीसरा भाग ५. छट्टे भावका पांचवा भाग ६. सातवे भावका चतुर्थांश७. आठवे भावका तीसराभाग ८. नववे भावका पंचमांश९. दशवे भावका सप्तमांशः १० प्रथमभावका सर्वदाय ११. दूसरे भावका अर्धदाय १२. यह भावके भागांश कहे. ॥४३॥४४॥ सर्वेति ॥ अब कालांशपति अर्धहोरांशपति कहते हैं— सर्वः१ तृतीयांशः २ सप्तांश३ तृतीयांश४ पंचमांश ५ षष्ठांश ६ तृतीयांश७ तृतीयांश८

भावानांचक्रमात्प्रोक्ताभागांशाश्चस्वयंभुवा ४१
सर्वद्विवेदसप्ताष्टषट्त्रिरत्नादिशोऽद्रयः वेदांगा
हारकाएवग्रहाणांसमुदीरिताः ४२ हृत्वादायंबलैः
स्वैस्तुबलंयोगेनभाजयेत् आयव्ययेतुभावानांग्रहा-
णांविपदादिषु ४३ सर्वद्वित्रीषुवेदत्रिपंचसप्ततः
क्रमात् स्थानांतरेतुभागांशाः सर्वभावेषुकीर्तिताः ४४

॥टीका॥

क्ताः ॥४१॥ तानेवभागांशानाह प्राप्तसर्वः १प्रथमभावे द्वितीयांशः प्राप्तार्धमित्यर्थः द्वितीयभावे २॥ वेदश्चतुर्थांशस्तृतीयभावे३ ॥ सप्तां-शश्चतुर्थभावे ४ ॥ अष्टांशः पंचमभावे ५॥ षष्ठांशः षष्ठभावे ६ ॥ त्रिः तृतीयांशः सप्तमभावे ७॥ रत्नंनवांशोष्टमभावे ८ ॥ दिशोदशां-शो नवमभावे ९॥ अद्रयः सप्तमांशो दशमभावे १०॥ वेदश्चतुर्थांशएका-दशतमस्थाने ११ अंगः षष्ठांशो द्वादशतमस्थाने १२ एतेभागांशाः ग्रहा-णांहारकाः एव समुदीरिताइति एतैर्हरणंकार्यमितिभावः ॥४२॥ अथा-वशिष्टस्य व्यवस्थामाह ॥हृत्वेतिद्वयेन॥ तत्र आयव्यये स्थानद्वये तु हरणावशिष्टदायं स्वैः स्वैर्बलैर्हृत्वा सर्वबलयोगेन भाजयेत् लब्धम्

॥भाषा॥

कहेहै. सो आगेके श्लोकमे कहते हैं ॥४१॥ प्रथमभावका सर्व दाय१.दूसरेभाव-का अर्ध दाय२. तीसरेभावका चतुर्थांश३. चौथेभावका सप्तांश ४. पंचमभावका अष्टमांश ५. छट्ठे भावका षष्ठांश ६. सातवेभावका तृतीयांश ७. आठवें भावका नव-श.८ नवमभावका दशांश ९. दशमभावका सप्तांश १०. ग्यारवे भावका चतुर्थांश ११ और बारवे भावका षष्ठांश १२. यह ग्रहोंके हारक भागांश जानना ॥४२॥ ॥हृत्वेतिद्वयेन॥ अब भावके भागांश कहते हैं. आग्ये, व्यय्ये भावका निर्णय ऐसा हैकि हरण करके बाकी रहा जो दाय उनकू अपने अपने बलने गुणन

सलग्नानांबलैः सर्वैरधिकानांक्रमाद्विज अंशोद्भवस्तथापैंड्योनिसर्गोत्थाभिधःपरः ४ शतस्वरांशोभौमाच्चनक्षत्रांशकसंज्ञको स्वरांशश्चेतरोदायः करदायस्तथेतरः ५

॥ टीका ॥

संस्कृताः स्वकीयोच्चादिभिः सुसंस्कृताः सत्यः द्विघ्ना द्विगुणितसंख्याका७६ भवंति अथ लग्नादिभावगानां लग्नादिद्वादशभाववर्त्तिनां ग्रहाणां स्थितिभेदतः स्थितिभेदेन चतुरशीतिभेदा ८४ भवंति हे द्विज! स्वोच्चादिस्थितिभेदेन स्वकीयोच्चमूलत्रिकोणादिस्थितिवशाद्भिन्नाः सर्वेषु भूमयः १५१२ द्वादशाधिकपंचदशशतभेदाभवंतिइति ॥ १ ॥ २ ॥ ३ ॥ अथलग्नग्रहबलतारतम्येन अंशायन्यतमायुर्दायग्रहणमाह ॥ सलग्नानामित्यादिपंचश्लोकपर्यंतम् ॥ सलग्नानां लग्नसहितानां रव्यादिग्रहाणामित्यर्थः एतेषामष्टानांमध्ये बलैरधिकानां बलाधिक्यानां अधिकबलतारतम्येनइत्यर्थः हे द्विज हे मैत्रेय! क्रमात् क्रमशः आयुर्दायो ग्राह्यइतिभावः कोऽसौक्रमस्तदाह लग्नेबलवति अंशोद्भवः अंशोत्पन्नः तथा रवौबलवति पैंड्यः चंद्रेबलवति निसर्गोत्थाभिधः निसर्गोत्थः निसर्गोत्पन्न इत्यभिधा नामयस्यसः तथा भौमाच्च नाम भौमेबलवति शतःस्वरांशः शतस्वरांशसंज्ञकः तथा बुधेबलवति

॥ भाषा ॥

करनेसें ३८ भेद हैं. अब यह ३८ भेदमें अपने उच्चादिक संस्कृत होवे तो द्विगुणित ७६ भेद होतेहैं. बाराभावके अनुवर्ति ग्रहोंके स्थितिके योगसें चौर्‍याशी भेद होतेहैं और हे मैत्रेय! अपने स्वराशि उच्च मूलत्रिकोणादि स्थानस्थिति भिन्नसें १५१२ भेद होतेहैं. ॥ १ ॥ २ ॥ ३ ॥ सलग्नानामित्यादिपंचश्लोकपर्यंतं॥ अब कोनके बलसें कोनसा आयुर्दाय लेना सो कहतेहैं. हे मैत्रेय! लग्न बल-

ग्रहेषु सर्वेषु बलोत्तरेषु स्वोच्चांशगेषु प्रबलस्य वर्गे दिग्वीर्यचेष्टाबलपूर्तियुक्ते पैंड्येषु नीचार्धकृतापहाराः १ अष्टत्रिंशद्भिदाः संति ताः स्वोच्चादिसु संस्कृताः लग्नादिभावगानांच ग्रहाणां स्थितिभेदतः २ द्विसाष्ट चतुरशीतिश्च भिदाः संति द्विजोत्तम स्वोच्चादिस्थितिभेदेन भिन्नाः सर्वेषु भूमयः ३

॥ टीका ॥

कृता टीका संशोध्येयं मनीषिभिः ॥१॥ इतिश्रीमद्बृ० भागे श्रीमद्धय्यङ्न्यपवेदशास्त्राध्ययनवद्यविद्याविद्योतितदशदिङ्मंडलजटाशंकरतनुज्योतिर्विच्छ्रीधरेणावि० सु० टी० एकादशोऽध्यायः ११ ॥ ७ ॥ द्वादशेऽस्मिन्नथाऽध्याये टीकायां धिषणा मदः ॥ सिद्धिबुद्धिपतिः श्रीमान्गणेशः पातु सर्वदा ॥ १ ॥ पूर्वोक्तदायग्रहणं रवेदरश्मिबलादिना ॥ विचार्यतेऽथ मुनिना द्वादशेऽत्र सविस्तरम् ॥ २ ॥ अथ श्रीमत्पराशरो द्वादशाध्याये रश्मिबलादितारतम्येनायुर्दायमुपदिशति तत्रादौ पैंड्यायुषि भेदान्गणयति ॥ ग्रहेष्वित्यादित्रिभिः ॥ पैंड्येषु पैंड्यो द्वादशधा प्रोक्त इति प्रागुक्तेषु पिंडायुर्दायेषु नीचार्धकृतापहाराः नीचार्धेन कृतः अपहारो यासां ताः अष्टत्रिंशत् ३८ संख्याका भिदा भेदाः संति कस्य ग्रहस्य तदाह सर्वेषु ग्रहेषु बलोत्तरेषु सत्सु अथवा सर्वेषु स्वोच्चांशगेषु सत्सु प्रबलस्याधिकबलस्य दिग्वीर्यचेष्टाबलपूर्तियुक्ते पूर्णदिग्बलपूर्णचेष्टाबलसहिते वर्गे वर्तमानस्य ग्रहस्येति अथ ताः अष्टत्रिंशद्भिदाः स्वोच्चादिसु

॥ भाषा ॥

द्वितीयाश १ द्वितीयाश१० ग्रहअधिपति और हारक जानना ॥ ४५ ॥ इतिबृ० भाषाटीकायां एकादशोऽध्याय ॥ ११ ॥ ग्रहेष्वित्यादित्रिभि. ॥ अब पिंडायुर्दायके भेद कहतेहैं- पहिले पिंडायुर्दायके बारा भेद कहे हैं. पीछे नीचमें अर्धहानि

तथासमारिवर्गेचनवृद्धिहरणेतथा सूर्योदयः क्रमाल्लग्नगताश्चेद्बलवत्तराः ८ पैंड्योभ्रुवोऽष्टवर्गोत्थःपक्वमानुगतोऽशकः करदायःक्रमाल्लग्ने र-व्यादौतुस्थितेसति ९

॥ टीका ॥

कोणे मित्रवर्गेच वर्तमानस्य ग्रहस्य वृद्धिकृत् प्रागुक्तरीत्या वृद्धिः कार्येत्यर्थः अर्थात् नीचारिशत्रुवर्गे प्रागुक्ताहानिरितिभावः तथातेनप्रकारेण समारिवर्गे उदासीनशत्रुवर्गेवर्तमानस्य नवृद्धिहरणे प्रागुक्तवृद्धिहरणेनस्तइति ॥ ७ ॥ अथलग्नगतबलवद्ग्रहतारतम्येन आयुराह ॥ सूर्योदयइतिसपदार्धकद्वयेन ॥ सूर्योदयः क्रमात्सप्तग्रहाः बलवत्तराः बलानिसंति येषां ते बलवंतः अतिशयेनबलवंतोबलवत्तराः अतिबलिनइत्यर्थः एवंभूताः लग्नगताः लग्नेवर्तमानाश्चेत्पैंड्यः ध्रुवः समुदायाष्टवर्गः भिन्नाष्टवर्गः पक्वमानुगतः अंशकः करदायः आयुर्भवंति ॥ ८ ॥ अथउच्चाद्यधिकारवशाल्लग्नगतानामायुः क्रममाह ॥ क्रमादित्याद्यर्धसहितदशमश्लोकेन ॥ लग्ने जन्मलग्नेक्रमात् क्रमशः रव्यादौ सूर्यप्रभृतिग्रहे उच्चादिषु उच्चमूलत्रिकोणादि संबंधेनस्थिते वर्तमानेए-

॥ भाषा ॥

जो ग्रह मूलत्रिकोणमें मित्रवर्गमें होवे तो पूर्वोक्त रीतिसे वृद्धि करना. नीचशत्रुवर्गमें होवे तो हानि करणा. समशत्रुवर्गके ग्रहका आयुष्यमें वृद्धिहानि नहि करणा. ॥ ७ ॥ सूर्योदयइतिसपदार्धकद्वयेन ॥ और विशेष कहते हैं. सूर्यादिग्रह बलवान् होयके लग्नमे बैठे होवे तो क्रमसें आयुर्दाय लेना. सूर्यसे पैंड्य १ चंद्रसें ध्रुव २ मंगलसें समुदायाष्टवर्ग ३ बुधसें भिन्नाष्टवर्ग ४ गुरुसें पक्वमानुगत ५ शुक्रसें अंशकायु ६ शनिसें करदाय ७ यह क्रमसें लेना ॥ ८ ॥ क्रमादित्याद्यर्धसहितदशमश्लोकेन ॥ जन्मलग्नमें उच्चादिस्थित सूर्यादि ग्रहोंसें आयुष्यका भेद कहते हैं- लग्नमें

स्वोच्चनीचसुहृच्छत्रुवर्गगेश्वचतुर्विधः अतिनी-
चातिशत्रोश्चभागराशिगतस्यच ६ समुदायाष्ट-
वर्गश्चभिन्नाष्टकउदीरितः तत्रमूलत्रिकोणेचभि-
न्नवर्गेचवृद्धिकृत् ७

॥टीका॥

नक्षत्रसंज्ञकः तथा गुरौ बलवति त्र्यंशसंज्ञकः नवांशनामकइत्यर्थः तथा शुक्रेबलवति स्वरांशसंज्ञकः तथा शनौ बलवति करदायः एतत्संज्ञकः दायोग्राह्यइति ॥ ४ ॥ ५ ॥ अथस्वोच्चाद्यधिकारतारतम्येनआयुर्ग्रहणेविशेषमाह ॥ स्वोच्चेतिसार्धेन ॥ स्वोच्चनीच सुहृच्छत्रुवर्गगैः चतुर्विधोया ह्यः तथा षड्वर्गांतर्गतस्वोच्चवर्गवर्तमानस्य पैंड्योग्राह्यः तथा स्वनीचवर्गवर्तमानस्य निसर्गः एतत्संज्ञकः दायः तथा सुहृद्वर्गवर्तमानस्य शतस्वरांशः तथाशत्रुवर्गगतस्य नक्षत्रसंज्ञकः तथा अतिनीचनवांशराशिवर्तमानस्य ससुदायाष्टवर्गसंज्ञकः तथाऽतिशत्रुनवांशराशिवर्तमानस्य भिन्नाष्टकसंज्ञकः उदीरितः कथितइति ॥ ६ ॥ तत्रहानिवृद्धी आह ॥ तत्रेति अर्द्धद्वयेन ॥ तत्र तस्मिन्नायुर्दाये मूलत्रि-

॥भाषा॥

वान होवे तो त्र्यंशायुर्दाय लेना सूर्य बलवान् होवे तो पैंड्यायुष्य लेना. चंद्र बलवान् होवे तो निसर्गायु लेना मंगल बलवान् होवे तो शतस्वरांशायुर्दाय लेना. बुध बलवान् होवे तो नक्षत्रायुष्य लेना गुरु बलवान् होवे तो नवांशायुर्दाय लेना शुक्र बलवान होवे तो स्वरांशायुर्दाय लेना. शनि बलवान् होवे तो करदायनामक आयुष्य लेना ॥ ४ ॥ ५ ॥ स्वोच्चेति सार्धेन ॥ उच्चादिकके बलसे विशेष कहते हैं, स्वोच्चवर्गमें होवे तो पैंड्यायुष्य लेना. स्वनीचवर्गमें होवे तो निसर्गायुष्य लेना. मित्रवर्गमें होवे तो स्वरांशायु लेना. शत्रुवर्गमें होवे तो नक्षत्रायु लेना अतिनीचनवांशमें होवे तो सामुदायाष्टकवर्गायुष्य लेना. अतिशत्रुनवांशराशीमें होवे तो भिन्नाष्टकवर्गायु लेना ॥ ६ ॥ तत्रेतिअर्धद्वयेन ॥

लाभेरविंद्वारबुधेज्यशक्रमंदाःस्थिताःप्रक्रमदायएव लग्नायेभौमज्ञरवीन्दुमन्दशुक्रास्तृतीये सुतभेचधर्मे १३ स्वेशक्रमंदार्यबुधार्कभौमचंद्राःसुरखेऽस्तेनिधनेऽपिनैव बुधात्क्रमाच्चुत्क्रमतश्चचंद्राद्भौमार्कमंदार्यसितज्ञचंद्राः १४

॥ टीका ॥

आयुर्दायो ग्राह्यः सप्तमस्थस्य पैंड्यः तथा कर्मगस्य दशमस्थस्य द्वितीयसंस्थस्यच स्वरांशोग्राह्यः तथा तृतीयधीधर्मगतस्य लग्नात् तृतीयपंचमनवमस्थस्य पैंड्यो ग्राह्यः षष्ठस्थस्यतु भिन्नाष्टवर्गायुः तथा मृत्युगतस्य अष्टमस्थस्य तयेनरः समुदायाष्टवर्गायुर्ग्राह्यः आयेवर्तमानस्य पैंड्यस्वरांशध्रुवदायान्यतमः तथा आद्यगतस्य लग्नस्थस्य पैंड्यउक्तइति ॥११॥१२॥ अथद्वादशभावेषु ग्रहाणां मिश्रायुर्दायग्रहणक्रममाह॥ लाभेइत्यादिपंचदशश्लोकपर्यंतम्॥लाभेएकादशस्थाने मिश्रायुर्विषये प्रक्रमदायएव ग्राह्यः तत्र क्रमः रवींद्वारबुधेज्यशक्रमंदाः क्रमेणायुर्दाये स्थिताज्ञेयाः लग्ने अत्र सप्तमीविभक्तलोप आर्षः लग्नस्थाने तथातृतीये सुतभे पंचमे धर्मेनव-

॥ भाषा ॥

दूसरे घरमें होवे तो स्वरांशायु लेना. तीसरे पांचवे नवम घरमे होवे तो पैंड्य लेना. छट्टे घरमें होवे तो भिन्नाष्टक वर्ग लेना. आठवे घरमे होवेतो समुदायाष्टक वर्ग लेना. ग्यारवे घरमें होवे तो पैंड्य स्वरांशध्रुव यह तीनमें सें एक लेना. लग्नमे होवे तो पैंड्य लेना. ॥ ११ ॥ १२॥ लाभेइत्यादिपंचदशश्लोकपर्यंतम् ॥ द्वादशभावोमे ग्रहोका मिश्रायुर्दाय लेनेका क्रम कहते हैंः- ग्यारवे घरमें मिश्रायु लेनेकेवास्ते सू. चं. मं. बु. गु. शु. शनि यह आयुर्दायस्थित जानना. लग्नमें ३, ५, ९, में घरोमें क्रम करके गु. मं. बु. सू. चं. श. शुक्र यह आयुर्दाय देनेवारे जानना. दूसरे

पैंड्यः स्वरांशोध्रुवदायएवतन्मक्रमांशश्चतथा-
शकोत्थः भिन्नाष्टवर्गः समुदायसंज्ञः करोत्यउ-
च्चादिषुयोजनीयाः १०  ध्रुवः सुखस्थस्यतु सप्त-
मस्यपैंड्यः स्वरांशः खलुकर्मगस्य द्वितीयसं-
स्थस्यचपैंड्यउक्तस्तृतीयधीधर्मगतस्यचैव ११
षष्ठव्ययस्थस्यतुभिन्नसंज्ञस्तथेतरोमृत्युगतस्य
चैवम् पैंड्यः स्वरांशोध्रुव आयउक्तः पैंड्योभ-
वेदाद्यगतस्यचैव १२

॥ टीका ॥

ते आयुर्दायाः योजनीयाः इत्यन्वयः तानेवाह पैंड्यः पिंडायुर्दायः लग्नस्थाने रव्यादौ उच्चस्थे सति ग्राह्यः एवंत्रिकोणस्थे सति स्वरांशोग्रा-ह्यः तथा स्वर्क्षस्थेसति ध्रुवो ग्राह्यः अधिमित्रस्थानस्थे मक्रमांशः तथा मित्रक्षेत्रस्थेंऽशायुर्दायः तथा शत्रुक्षेत्रस्थेसति भिन्नाष्टवर्गः तथा अधिशत्रुक्षेत्रस्थेसति समुदायाष्टवर्गः स्वनीचस्थेसति करः अंशायुर्दायः ननु समक्षेत्रलग्नगश्चेत् किमित्याकांक्षायां तत्राभावएवबोध्यः एवंयवनाचार्यादीनामपि मतमिति ॥ १० ॥ अथ प्रकारांतरेणायुर्दाय-ग्रहणमाह॥ ध्रुवइतिद्वयेन॥ सुखस्थस्य लग्नाच्चतुर्थभावगतस्य ध्रुवः

॥ भाषा ॥

उच्चराशिका सूर्यादिक ग्रह होवे तो पिंडायुर्दाय लेना. त्रिकोणका होवेतो स्वरांशायु लेना. स्वराशीका होवे तो ध्रुवायुष्य लेना. अधिमित्रका होवे तो मक्रमांश लेना. मित्रक्षे-त्रका होवेतो अंशायुर्दाय लेना. शत्रुक्षेत्रका होवे तो भिन्नाष्टकवर्ग लेना. अधिशत्रु-क्षेत्रका होवे तो समुदायाष्टवर्ग लेना. स्वनीचका होवेतो अंशायुर्दाय लेना. समक्ष होवे तो अभाव जानना. ॥ १० ॥ ध्रुवइतिद्वयेन॥ मतांतर कहते हैं- लग्नसें चौ-थे घरमें ग्रह होवे तो ध्रुवायुष्य लेना. सातवे होवे तो पैंड्य लेना. दशवे घरमें और

नक्षत्रदायोंऽशकपिंडदायो भिन्नाष्टवर्गः समुदायसंज्ञः स्वरांशदायौ क्रमशः प्रदिष्टौ विशेषतस्तत्र वदामि यस्मात् १६ अष्टत्रिंशदमित्रे तु अंकसूर्यकलांशकैः मूर्च्छाक्षिणी भिदाः संति रश्मिजास्त्रिंशदेव हि १७ एकस्य विषये द्वौ चे-

॥ टीका ॥

अथोक्तायुर्दायान् गणयति ॥ नक्षत्रेति ॥ नक्षत्रदायः अंशदायः पिंडदायः भिन्नाष्टवर्गायुर्दायः समुदायसंज्ञकाष्टवर्गायुर्दायः शतस्वरांशः स्वरांशायुर्दायः नवमांशायुर्दायश्चेति मिश्रायुषि उक्ताः तत्र यस्मादायुर्दायात् यावंतो भेदाः उत्पद्यंते तद्विशेषतो वदामि कथयामि ॥ १६ ॥ अथ मिश्रायुर्दायभेदानाह ॥ अष्टत्रिंशदिति ॥ अमित्रे आयुर्दायेऽष्टत्रिंशद्भेदाः मुख्याः तत्रापि अंशसूर्यकलांशकैः नवांशद्वादशांशषोडशांशैः मूर्च्छाक्षिणीभिदाः २२१ एकविंशत्यधिकद्विशतभेदाः अवांतराः संति तथा तत्रैव रश्मिजाः रश्मिसमुद्भवाः त्रिंशदेव ३० हीति प्रसिद्धम् ॥ १७ ॥ अथ मिश्रायुर्दायदशाग्रहणरीतिमाह ॥ एकस्येति ॥ एकस्य ग्रहस्य विषये सह वर्तमानौ द्वौ आयुर्दानौ मासौ चेत्

॥ भाषा ॥

क्रमसें लेना ग्यारवे घरमें श्रु. श. मं. गु. बु. सू. च. यह क्रमसे आयुर्दाय देनेवाले कहे हैं ॥ १३ ॥ १४ ॥ १५ ॥ नक्षत्रेति ॥ अब आयुर्दायकी गणना कहते हैं - नक्षत्रायु. अंशायु. पिंडायु. भिन्नाष्टकवर्गायु. समुदायाष्टकवर्गायु. शतस्वरांशायु. स्वरांशायु. नवमांशायु. यह आयुष्योंसें आगे जो भेद उत्पन्न होते हैं सो कहते हैं. ॥ १६ ॥ ॥ अष्टत्रिंशदिति ॥ अब मिश्रायुर्दायके भेद कहते हैं - मिश्रायुष्यके ३८ भेद हैं. उसमें भी नवांश. द्वादशांश. षोडशांशके भेदसें २२१ भेद होते हैं और रश्मी आयुष्यके तीस भेद हैं ॥ १७ ॥ एकस्येति ॥ एक घरमें दोय आयुष्य देनेवाले होवे तो

षष्ठेव्ययेकर्मणिलाभगावारवीन्दुशुक्रार्किकु-
जार्यसौम्याः सौम्यात्कुजाद्भार्गवतःक्रमात्
स्युर्मिश्रेतुदायेक्रमशः प्रदिष्टम् ॥१५॥

॥टीका॥

मेव एतेषु भावेषु आर्यभौमज्ञरवींदुमंदभृक्राः क्रमेणायुर्दायस्थिता ज्ञेयाः स्वे द्वितीयभावे क्रमेण शुक्र६मंदा७र्य५बुधा४र्क१भौम३ चंद्राः२ आयुर्दातारः तथा सुखे चतुर्थभावे बुधात् पूर्वोक्तक्रमे बुध-सकाशाद्ग्रहक्रमो ग्राह्यः ४।१।३।२।६।७।५एते ग्राह्याइत्यर्थः अ-स्ते चंद्राद्युत्क्रमतः नाम प्रथमोक्तः क्रमः विलोमतो ग्राह्यः २।३। १।४।५।७।६ एवंक्रमादित्यर्थः निधनेऽष्टमभावे भौमा३र्क१मंदा-७र्य५सिते६ज्ञ४चंद्राः२ क्रमादायुर्दातारो ग्राह्याः षष्ठे रवी१दु२शु-क्रा६र्कि७कुजा३र्य५सौम्याः४ क्रमाद्ग्राह्याः व्यये द्वादशतमभा-वे सौम्यात् बुधात् प्रथमोक्तक्रमो ग्राह्यः ४।१।३।६।७।३।५ए-तेइत्यर्थः कर्मणि दशमभावे कुजात् प्रथमोक्तप्रकारो ग्राह्यः ३।५ ।४।१।२।६।७ एवमित्यर्थः लाभेवा प्रथमतः अन्यः क्रमउक्तएव तत्रविकल्पेन भार्गवतः पूर्वक्रमे शुक्रादितः क्रमो ग्राह्यः ६।७।३ ।५।४।१।२एवंमिश्रायुर्दाये क्रमशः सर्वभावेषु ग्रहणं प्रदिष्टं कथि-तमिति ॥ १३॥१४॥१५ ॥

॥भाषा॥

घरमें क्रमसे शुक्र शनि गु॰ बु॰ सू॰ म॰ चं॰ आयुर्दाय देनेवाले जानना॰ चौथे घरमें क्रमसे बु॰ सू॰म चं॰ शु॰ श॰ गु॰ आयुर्दाय देनेवाले जानना॰ ७ वे घरमें चं॰ मं॰ सू॰ बु॰ गु॰ श शु॰ यह आयुर्दाय देनेवाले जानना. ८ वे घरमें मं॰ सू॰ श॰ गु॰ शु॰ बु॰ चं॰ यह क्रमसे आयुर्दायक जानना ६ घरमें सू॰ चं॰ शु॰ श॰ म॰ गु॰ बु॰ क्रमसे लेना. ११ वें घरमें बु॰ सू॰ चं॰ शु॰ शनि मं॰ गु॰ यह क्रमसे लेना १० वे घरमें मं॰ गु॰ बु॰ सू॰ चं॰ शु॰ श यह

लग्ने गुरौ कर्मगते च भानौ चंद्रे सुखे वास्तगते बलिष्ठे
पूर्णे त्रिकोणोपचयेशुभेषु पापेष्वथात्रोक्तमसं-
स्थितेषु २१ शुभाश्च केंद्रत्रिषडायभेऽन्ये विपर्य
ये पैंड्यमतः प्रदिष्टम् रिःफाष्टषष्ठेषु सहस्ररश्मौ
भौमेक्रमाच्छीतकरे तु पैंड्यः २२ पापा लग्ने वा-
ष्टमे सप्तमे वा सौम्याः षष्ठे कर्मभे रिःफभे वा नी-
चाभावे पैंड्यदायः प्रदिष्टो

॥ टीका ॥

अथ प्रकारांतरेण पैंड्यायुर्ग्रहणमाह ॥ लग्ने इत्यादिपादोनत्रयोविंशतिपर्यंतं ॥ लग्ने गुरौ सति कर्मगते दशमस्थे भानौ सति सुखे चतुर्थस्थाने वाऽथवाऽस्तगते सप्तमभावस्थे बलिष्ठे बलवति पूर्णे चंद्रे सति तथा त्रिकोणोपचये त्रिकोणं च उपचयं चानयोः समाहारस्तस्मिन् समाहारैकवचनं सनपुंसकमिति नपुंसकत्वम् पंचमनवमतृतीयषष्ठदशमैकादशभावेष्वित्यर्थः शुभे शुभग्रहे सति तथाऽत्रोक्तं स्थानं प्रति असंस्थितेषु अवर्तमानेषु पूर्वोक्तान्यस्थानस्थितेषु द्वादशभावलग्नधनसप्तमाष्टमभावेस्थितेष्वित्यर्थः पापेषु सत्सु तथा केंद्रत्रिषडायभेषु शुभाश्चेत् लग्नचतुर्थसप्तमदशमतृतीयषष्ठैकादशेषु शुभेष्वित्यर्थः तथाऽन्ये नाम पापाः विपर्यये उक्तान्यस्थाने वर्तमानाश्चेत् पैण्ड्यं

॥ भाषा ॥

सुनफा अनफा दुरुधरायोग चंद्रयोग और राजयोग यह योग होवे चंद्रबलवान् होवेतो पिंडायुर्दाय ग्रहण करणा ऐसा पराशर कहते हैं ॥१९॥२०॥ लग्नेइत्यादि पादोनत्रयोविंशतिपर्यंतम् ॥ अब प्रकारांतरसे पिंडायुष्यका ग्रहण कहते हैं- गुरु लग्नमें १ सूर्य १० वा ४ चंद्र ७ शुभग्रह ५।९।३।६।११। पापग्रह १२।१।२।७।८ शुभग्रह १।४।७।१०।३।६।११ सूर्य १२ मंगल ८ चंद्र ६ ऐसे ग्रह पूर्वोक्त योग होवे

दाययोगदलंभवेत् त्र्यादयश्चेद्ग्रहास्त्र्यादिसं-
ख्यानाश्चदशाभवेत् १८ रवावुच्चगतेचान्ये ब-
लिष्ठामूलकोणगाः स्वोच्चस्थेषु बलिष्ठेषु सर्वेषु श-
शहंसके १९ एवंचिरायुषांयोगेष्वन्येषुगणितेषु
च चंद्रयोगेषुत्रिषुच चंद्रेतुबलवत्तरे २० राज-
योगेषु सर्वेषु पैंड्यमाह पराशरः

॥ टीका ॥

दाययोगदलंभवेत् दायद्वयस्य योगंकृत्वाऽर्धावशेषेण दशा भवति त-
था एकस्यग्रहस्यविषये त्र्यादयः त्रिप्रभृतयः ग्रहाः सहवर्तमानाश्चे-
त्तदा त्र्यादिसंख्याता ग्रहास्त्र्याद्यायुर्दाययोगं कृत्वा त्र्यादिमिश्रण-
संख्याकांकैः भागंगृहीत्वा तत्तद्दशाज्ञेयेति ॥ १८ ॥ अथोक्तेषुनक्ष-
त्राद्यायुर्दायेषु पिंडायुर्दायग्रहणस्थलान्याह ॥ रवावित्यादिसार्धवि-
ंशतिश्लोकपर्यंतं ॥ रवौ सूर्ये उच्चगते उच्चस्थिते सति अन्ये ग्रहा बलि-
ष्ठाः मूलत्रिकोणगावास्युः तथा सर्वेषु ग्रहेषु बलिष्ठेषु उच्चस्थेषु स-
त्सु वा तथा शशयोगे हंसयोगे वा एवंप्रकारेण अन्येषु गणितेषु उ-
क्तान्यचिरायुर्दायकारकगणनांतर्गतेषु योगेषु सुनफा अनफा दुर्धरा
संज्ञकेषु त्रिषु चंद्रयोगेषु चंद्रसमुद्भवेषु योगेषु चंद्रे बलवत्तरे सति तथा
सर्वेषु पूर्वोक्तेषु राजयोगेषु सत्सु पराशरः पैंड्यं पिंडायुर्दायग्रहणमा-
हेति ॥ १९ ॥ २० ॥

॥ भाषा ॥

दोनोंका योग करके उसका अर्ध लेना. तीन आदि लेके ग्रहोंका योग होवे तो तिन-
ने होवे उनोंका आयुर्योग करके जो संख्यासें भाग लेना सो आयुष्यदशा जान-
ना ॥ १८ ॥ रवावित्यादिसार्धविंशतिश्लोकपर्यंतम् ॥ पिंडायुर्दाय लेनेका भेद कहतेहैं-
सूर्य उच्चका होवे. दूसरे ग्रह बलिष्ठ होवे. शशयोग हंसयोग औरदीर्घायुयोग

वाप्यांपाशेशरेपद्मेसमुद्रार्कादिषुक्रमात् २६
बलिष्ठेषुनवांशोत्थोध्रुवःपैंड्यःस्वरांशकः भि-
न्नाष्टवर्गअंशोत्थोनक्षत्रांशकईरितः २७ रज्जौ
विहंगेमालायांनलेचमुसलेक्रमात् पैंड्योध्रुवःक्र-
मात्प्रोक्तोरव्यादौतुबलोत्तरे २८

॥ टीका ॥

गुरौ नक्षत्रदायः सितेबलवति भक्रमानुगतः मंदेबलवत्तरेतुसमुदायाः ष्टवर्गः आयुर्दायोग्राह्यइति ॥ २४ ॥ २५ ॥ पुनः प्रकारांतरमाह ॥ वाप्यामित्यादिसप्तविंशतिश्लोकपर्यंतम् ॥ वापी पाश शर पद्म समुद्राख्यपंचयोगेषुसत्सु उक्तान्यतमेके इत्यर्थः अर्कादिषुसप्तसु बलिष्ठेसुसत्सु क्रमात् अर्केनवांशः चंद्रेध्रुवः भौमे पैंड्यः बुधेस्वरांशः गुरौभिन्नाष्टवर्गः शुक्रेंऽशोत्थः शनौ नक्षत्रांशकश्च ईरितः कथितः ॥ २६ ॥ २७ ॥ पुनः प्रकारांतरमाह ॥ रज्जाविति ॥ रज्जुविहंगमालानलमुसलेषुपूर्वोक्तेषु

॥ भाषा ॥

योग गदायोग अर्धचंद्रयोग होवे, सूर्य बलवान् होवे तो पिंडायुष्य लेना. लग्न बलवान् होवे तो पिंडायुष्य लेना. लग्न बलवान् होवे तो अंशकायु लेना. चंद्र बलवान होवे तो ध्रुवायु लेना. मंगल बलवान होवे तो भिन्नाष्टक वर्गायु लेना. बुध बलवान होवे तो नक्षत्रांशायु लेना. गुरु बलवान होवे तो नक्षत्रायु लेना. शुक्र बलवान् होवे तो भक्रमानुगतायु लेना. शनि बलवान् होवे तो समुदायाष्टकवर्गायु लेना. ॥ २४ ॥ ॥ २५ ॥ वाप्यामित्यादिसप्तविंशतिश्लोकपर्यंतं ॥ और प्रकारांतर कहते हैं - वापी पाश शर पद्म समुद्र यह पांच योगमेसें कोइभी एक आदियोग होवे सूर्यादि सात ग्रहोमेंसें जो बलवान होवे तो क्रमसें आयुष्य लेना. सूर्य बलवान् होवे तो, नवांशायु चंद्र ध्रुवायु. मं. पैंड्यायु. बु. स्वरांशकायु. गु. भिन्नाष्टकवर्गायु. शु. अंशायु. श. नक्षत्रांशायु कहा है. ॥ २६ ॥ २७ ॥ रज्जाविति ॥ प्रकारांतर कहते हैं - जन्मकुंड

मंदेलग्नेस्वोच्चगेचध्रुवारव्यः २३ वीणायांकार्मुकेचक्रे गदायामर्धचंद्रके । रवौपैंड्योंऽशकोलग्ने ध्रुवश्चंद्रेचभूमिजे २४ भिन्नाष्टवर्गः सौम्येतुनक्षत्रांशासमुद्भवः गुरौनक्षत्रदायः स्यात्क्रमात्तुंगतःसिते २५ समुदायाष्टवर्गस्तु मंदेतुवलवत्तरे

॥ टीका ॥

पिंडायुः प्रदिष्टंकथितं तथा रिःफाष्टपष्ठेषु १२।८।६ सहस्त्ररश्मौरवौ भौमे शनैश्चरेच क्रमात्स्थितेषु सत्सु पैंड्यः ग्राह्यः तथा लग्नेऽष्टमे सप्तमेवा पापाः अथवा पष्ठेकर्मभे दशमे रिःफभे द्वादशभावेच सौम्याश्चेत् नीचाभावे नीचराशिरहिते सति पैंड्यदायः प्रदिष्टइति॥२१॥२२॥ अथ ध्रुवायन्यायुर्दायग्रहणंवक्तुं मंदेत्यादिनश्लोको ध्रुवायुर्ग्रहणमाह ॥ मंदइतिपादेन ॥ लग्ने स्वोच्चेतुलाम्यइत्यर्थः मंदेशनैश्चरे सति ध्रुवारव्यः आयुर्दायो ग्राह्यइति ॥ २३ ॥ अथयोगविशेषेण वलवत्तरलग्नसप्तमग्रहेषुपृथक् दायविशेष ग्रहणमाह॥ वीणायामित्यादि सार्धपंचविंशतिश्लोकपर्यंतम् ॥ वीणायां पूर्वोक्तवीणायोगे कार्मुकयोगे चक्रयोगे गदारव्ययोगेऽर्धचंद्रके योगे वा सति रवौ वलवत्तरे सतिपैंड्यो ग्राह्यः लग्ने वलवत्तरेंऽशकः चंद्रेवलवत्तरे ध्रुवः भूमिजे भौमे वलवत्तरे भिन्नाष्टवर्गः सौम्ये बुधे वलवत्तरे नक्षत्रांशसमुद्भव

॥ भाषा ॥

तो पिंडायुष्य लेना अथवा पापग्रह १।८।७ शुभग्रह ६।१०।१२ नीच नहिं होवे तो पिंडायुष्य लेना. ॥ २१ ॥ २२ ॥ ध्रुवायुष्य ग्रहणमें मंद इत्यादि ॥ लग्नमें ध्रुवायुष्य ग्रहण करनेका नियम कहते है- जन्मलग्नमें तुलाराशीका शनि होवे तो ध्रुवायुष्य लेना. २३ ॥ वीणायामित्यादि सार्धपंचविंशति श्लोक पर्यंत ॥ अब योगविशेषसे आयुर्दायका ग्रहण करते है- वीणायोग, कार्मुकयोग, चक्र-

पैंड्याख्यो ध्रुवाख्यांशदायाश्चाष्टकवर्गको ॥ द्रेष्काणेषु नवांशेषु द्वादशांशेषु च क्रमात् ॥ ३२ ॥ कलांशेषु नवप्रोक्ता दायाश्चैव पुनः पुनः ॥ त्रिंशत्सवेदाः स्वरपाचकाश्च सुराश्च दंताः क्षितिपावकाश्च ॥ षट्त्रिंशदिष्वग्नयएव भानि छंदांसि मूर्च्छाश्च जिनाः क्रमाश्चेत् ३३

॥टीका॥

रश्म्याख्याः सप्तैव ग्राह्याः हे द्विज मैत्रेयेति ॥ ३१ ॥ पुनः प्रकारांतरमाह ॥ पैंड्या इति सार्धेन ॥ द्रेष्काणेषु त्रिषु पैंडकाद्यास्त्रयः पैंड्य ध्रुव स्वांशाः क्रमाद् ग्राह्याः नवांशेषु ध्रुवाख्या नव ग्राह्याः द्वादशांशेषु अंशाद्यायाः द्वादशभेदभिन्नाः क्रमाद् ग्राह्याः कलांशेषु उच्चादि नवस्थानगतेषु ग्रहेषु अष्टकवर्गसंज्ञकौ द्विविधौ पुनः पुनर्ग्राह्याः तद्यथा कलांशेन उच्चे वर्तमानस्य ग्रहस्य भिन्नाष्टवर्ग समुदायाष्टवर्ग संज्ञकाः षोडश क्रमाद् ग्राह्याः एवं त्रिकोणादिषु वर्तमानेषु ग्रहेषु त एव समुदायाष्टक भिन्नाष्टकायुर्दायाः षोडशैव पुनः पुनः प्रोक्ता इति ॥ ३२ ॥ अथ रश्मिवशादायुर्ग्रहणमाह ॥ त्रिंशदित्याद्येकोनचत्वारिंशच्छ्लोकपर्यंतं ॥ त्रिंशत् ३० सवेदाः

॥भाषा॥

स होवे तो अंशायु: प्रणादक होवे तो स्वरांशायु. कालकूट होवे तो रश्म्यायु लेना ॥ ३१ ॥ पैंड्या इति सार्धेन ॥ प्रकारांतर कहते है- प्रथम द्रेष्काणमें जन्म होवे तो पैंड्य लेना, दूसरे द्रेष्काणमे ध्रुव लेना- तीसरे द्रेष्काणमे स्वरांश लेना- नवांशोमें ध्रुवादि नव आयुष्य क्रमसे लेना. द्वादशांशमें अंशादि लेना- उच्चादिक नवस्थानोंमें जो ग्रह होवे तो भिन्नाष्टक समुदायाष्टकवर्गायुष्य क्रमसे लेना. वारंवार संख्या पूर्तिपर्यंत गिनना ॥ ३२ ॥ त्रिंशदित्याद्येकोनचत्वारिंशच्छ्लोकपर्यंतम् ॥ अब रश्मिके मतसें आयुष्य लेनेका भेद बतावे है- जन्मकालमें रश्मि ३०।३४।३०।३३।३२

गंडेशक्तौनशकटेयूपे केदारमूलयोः भक्रमानु-
गतश्चाथ रश्मिजोध्रुवसंज्ञितो २९ अष्टवर्गसमु-
द्भूतोक्रमादेवंबलोत्तरे नौछत्रवज्रदामाख्ये
स्वरदायोतिनीचगे ३० कूटेगंडेशरेनागेगोलेशृं-
गाटकेपुनः कालकूटेक्रमात्प्रोक्ताः पैंड्याद्याः
सप्तवैद्विज ३१

## ॥ टीका ॥

पंचसु पंचान्यतमेएकस्मिन्रव्यादौबलोत्तरे सति क्रमात् पैंड्योध्रुवश्चग्राह्यः
यथा रज्जौ पैंड्यः विहंगे ध्रुवः मालायां पैंड्यः नलेध्रुवः मुसले पैंड्य इति॥
॥२८॥ पुनःप्रकारांतरमाह॥ गंडेइति सार्धेन॥ गंडशक्तिशकटयूपकेदार-
मूलाख्यषड्योगान्यतमेयोगेसति क्रमाद्रव्यादौ बलवत्तरे भक्रमानुगत
रश्मिजः ध्रुवसंज्ञितः अष्टवर्गसमुद्भूत आयुर्वीर्यश्च क्रमाद्ग्राह्याइति॥
२९॥ पुनर्योगांतरमाह॥ नावित्यर्धेन॥ नौयोगे छत्रयोगे वज्रयोगे दामा-
ख्ययोगेच अतिनीचगे रव्यादौ सति स्वरदायः स्वरांशायुर्दायो ग्राह्यः॥३०
॥ पुनर्योगांतरमाह॥ कूटेति॥ कूटे गंडे शरे नागे गोले शृंगाटके काल
कूटेच क्रमात्पैंड्याद्याः पैंड्यध्रुवाष्टवर्गोत्थभक्रमानुगतांशायुः स्वरांश-

## ॥ भाषा ॥

तीमे रज्जुयोग होवेतो पैंड्यायु लेना. विहंग होवेतो ध्रुवा माला होवे तो पैंड्य. नल हो-
वेतो ध्रुव. मुसल होवे तो पैंड्य लेना ॥ २८॥ गंडेइतिसार्धेन॥ गंड होवेतो भक्रमायु-
शक्तिहोवे तो रश्म्यायु शकट होवे तो ध्रुवायु यूपहोवे तो ग्रहायु. केदार होवे तो भि-
न्नाष्टकवर्गायु मूल होवेतो समुदायाष्टकवर्गायु. सर्यादि बलवान ग्रह होवेतो सेना
॥२९॥ नावित्यर्धेन॥ नौका योग. छत्र. वज्र. दाम. यह योग होवे सूर्यादि ग्रह अति
नीचके होवे तो स्वरांशायु लेना. ॥३०॥ कूटेति॥ हे मैत्रेय! कूटयोग होवे तो पैं-
ड्य लेना. गंड होवे तो ध्रुवायु. शर होवे तो अष्टवर्गायु. नाग होवे तो भक्रमायु-

चत्वारिंशत्त्रये पैंड्यो नक्षत्रांशस्त्रये ततः शेषेषु षट्सु पैंड्यः स्यादाद्यो गर्गोयमाह च ३८ इष्टरश्म्यधिक प्रोक्त क्रमएव कराधिके केंद्रादिषु ग्रहाणां च बलोत्तरवशात्क्रमः ३९

॥टीका॥

चत्वारो रश्मयश्चेदिलरोऽष्टवर्गः भिन्नाष्टवर्गइत्यर्थः ग्राह्यः तथा पंचादिकेषु अधिप्रोक्त रुद्रसंख्याप्राग्वर्तमानेषु ५।६।७।८।९।१० एष्वित्यर्थः रश्मिषु अंशदायउक्तः तथा रुद्राः ११ सूर्याः १२ यदिएतत्संख्याका रश्मयः तर्हि आद्यः पैंड्यदायो ग्राह्यः तथा विश्वे १३ मनुः १४ एवं रश्मिषु स्वरभागदायः स्वरांशायुर्दायो ग्राह्यः तिथिसंख्यकः १५ रश्मिश्चेत् नक्षत्रदायः ग्राह्यः नृपे १६ षोडशसंख्याके रश्मौ अत्यष्टित्रये १७।१८।१९ एतेषु रश्मिष्वित्यर्थः आद्यपैंड्यभिदाः पिंडायुर्दायादिमभेदा ग्राह्याः तथा विंशे २० रश्मौ मक्रमानुगतः ग्राह्यः अष्टत्रिंशे ३८ रश्मौ अष्टवर्गजः अष्टवर्गसंज्ञको ग्राह्यः चत्वारिंशत्त्रये चत्वारिंशत्संख्याक रश्मयः यत्र यस्मिन् ४०।४१।४२ एतेष्वित्यर्थः पैंड्यो ग्राह्यः तथाऽग्रिमत्रये ४३।४४।४५ एतेषु नक्षत्रांशः ग्राह्यः शेषेषु २२।२८।४६।४७।४८।४९ एतेष्वपि षट्सु पैंड्योदायः स्यात् आद्याः आद्यषड्भेदाइत्यर्थः अयं रश्म्यायुर्दायः गर्गमुनि गर्ग आहेति अयं इष्टरश्म्यधिकप्रोक्तः क्रमः बलवत्तरवशात् पूर्वयः केंद्रादिषु स्थानेषु उक्तः तदतिरिक्तस्थानेषु कराधिके रश्म्यधिके सति अयमुक्तक्रमः रश्म्यायुर्दायक्रमएवप्रोक्तः॥३३॥३४॥३५॥३६॥३७ ३८।३९

॥भाषा॥

लेना २०रश्मी होवेतो मक्रमायु लेना ३८ रश्मी होवेतो अष्टवर्गायु लेना ४०।४१।४२ रश्मि होवेतो पिंडायु लेना ४३।४४।४५ रश्मी होवे तो नक्षत्रायु लेना. ॥२२।३८॥

पैंड्यस्तथाद्वादशधाप्रभिन्नः क्रमेणदायोनियतः प्रदिष्टः तत्वाग्निनंदाग्नयएवरत्नदस्राख्रिदस्राध्रुवदायभेदाः ३४ एकाद्मयश्चेत्समुदायसंज्ञतस्तत्स्तुवेदाइतरोऽष्टवर्गः पंचादिकेष्वंशकदायउक्तो रुद्राश्चसूर्यायदिपैंड्यआद्यः ३५ विश्वेमनुश्चेत्स्वरभागदायोनक्षत्रदायस्तिथिसंज्ञकश्चेत् ३६ नृपेत्यष्टित्रयेप्रोक्ता आद्यपैंड्यभिदास्तथा प्रक्रमानुगतोविंशत्यष्टत्रिंशेऽष्टवर्गजः ३७

॥टीका॥

त्रिंशत् ३४ स्वरपावकाः ३७ सुराः ३३ दंताः ३२ क्षितिपावकाः ३१ षट्त्रिंशत् ३६ इष्वग्नयः ३५ भानि २७ छंदांसि २६ मूर्छाः २१ जिनाः २४ एतत्संख्याकाःकराः रश्मयःसंतिचेद्द्वादशधाप्रभिन्नः द्वादशप्रकारः पैड्यः पिंडायुर्दायः क्रमेण क्रमशः नियतो निश्चितःप्रदिष्टउक्तः तथा तत्वानि २५ नंदाग्नयः ३९ रत्नदस्राः २९ त्रिदस्राः २३ एतत्संख्याकेषु रश्मिषु ध्रुवायुर्दायभेदाश्चत्वारः क्रमशो ग्राह्याः तथा एकाद्मय एकरश्मिमारभ्यरश्मित्रयपर्यंतम् १।२।३ एतत्संख्याकेषु रश्मिष्वित्यर्थः समुदायसंज्ञः समुदायाष्टवर्गदायोग्राह्यः तत तदनंतरं वेदाः४

॥भाषा॥

३१।३६।३५।२७।२६।२१।२४ इसमेंसे कोईबी संख्या रश्म्योंकी होवेतो पिंडायुर्दाय लेना तथा २५।३९।२९।२३ रश्मी होवेतो ध्रुवायुष्य लेना तथा १।२।३ रश्मी होवेतो समुदायाष्टवर्गायु लेना तथा ४ रश्मी होवेतो भिन्नाष्टवर्ग लेना तथा ५।६।७।८।९।१० रश्मी होवे तो अंशायुं लेना तथा ११।१२ रश्मी होवेतो पहिला पिंडायु लेना १३।१४ रश्मी होवेतो स्वरांशायु लेना १५ रश्मि होवे तो नक्षत्रायु लेना १६।१७।१८।१९ रश्मी होवे तो पहिला पिंडायु

अस्मिन्नुत्तरभागेतुमयानुक्तंचयद्भवेत् तत्स-
र्वंगर्गहोरायांमैत्रेयत्वंविलोकय ४२ इतिश्रीबृ-
हत्पराशरहोरोत्तरभागेदायप्रकरणंनाम द्वादशोऽ
ध्यायः १२ छ भाग्यंकर्मचवक्ष्यामि मै-
त्रेयशृणुसुव्रत भाग्यादेवनृणांसिद्धिर्भाग्यादेव
धनायती १

॥ टीका ॥

अथ स्वोक्तशेषंगर्गशास्त्रेण पूरयति ॥ अस्मिन्निति ॥ अस्मिन् उत्त-
रभागे मया विस्तरभिया यदनुक्तं अकथितं भवेत्स्यात् तत्सर्वं गर्ग-
होरायां गर्गहोराशास्त्रे सविस्तरं हे मैत्रेय! त्वं विलोकय पश्य इति॥४२
एवंयथामतिव्याख्यागणेशमीनयेकृता ॥ मयेयंशोधनीयैव कृपया
प्राज्ञसत्तमैः ॥१॥ इतिश्रीबृहत्पाराशरहोरोत्तरभागेश्रीमद्दृष्यक्कुल्यवे-
दशाख्याध्ययनवय विद्याविद्योतित दशादिक्मंडलजदाशंकरसूनु ज्योतिर्वि-
च्छ्रीधरेणवि० सु० टीकायां द्वादशोऽध्यायः ॥ १२ ॥ अथत्रयोदशाध्या-
यः सम्यग्व्याख्यायतेमया ॥ श्रीगणेशप्रेरणयायाबद्बुद्धिबलोदयम्॥
१॥ अस्मिंस्त्रयोदशाध्यायेभाग्यंकालांशजादिकम् ॥ फलंविस्तरशः
प्राहमैत्रेयायमहामुनिः ॥२॥ अथ भगवान्पराशर ऋषिः सकलव्यव-
हारसुखसाधनीभूतभाग्यादिविचारं अस्मिंस्त्रयोदशाध्याये वक्तुंप्र-
तिजानीते ॥ भाग्यमितिद्वयेन॥ हे सुव्रत मैत्रेय! भाग्यं वैभवं कर्मसा-

॥ भाषा ॥

॥ अस्मिन्निति ॥ यह उत्तम भागमें जो मयने भेद कहेहै यह सब गर्ग होरामें
हे मैत्रेय ऋषे! तुम देखलेव ॥४२॥ इतिबृ० भाषाटीकायां द्वादशोध्यायः
॥१२॥ भाग्यमिति द्वयेन ॥ हेमैत्रेय! अब वैभव और शुभाशुभ व्यापार
कहताहूं और धनप्राप्ति यशकी प्राप्ति यह सब भाग्योदयसें होती है इसले

बलोत्तरवशादेवस्थानेनरवशात्तथा इष्टात्फल-
क्रमादेवरश्म्युक्तविधिनाक्रमात् ४० कल्पादौ
भगवान्गार्ग्यः प्रादुर्भूयमहामुनिः ऋषिभ्योजा
तकंसर्वमुवाचकलिमाश्रितः ४१

॥ टीका ॥

अथउक्तमनुवदति ॥बलोत्तरवशादिति॥ बलोत्तरवशात् बलाधिक्यता-
रतम्येन स्थानांतरवशात् स्थानांतराणि स्वमित्रशत्रुक्षेत्रादीनि तद्वशा-
त् इष्टफलक्रमात् इष्टकष्टफलवशात् तथा रश्म्युक्तविधिना एवंक्र-
मादायुर्दायो मयोक्त इति ॥ ४०॥ अत्रपुनर्गर्गंप्रमाणयति॥ कल्पा-
दाविति॥ भगवान् गार्ग्यः कल्पादौ प्रादुर्भूय महामुनिः महामननशीलः
भूतभविष्यद्वर्तमानकालज्ञः कलिमाश्रितः कलिकालीनफलाश्रयेण
सर्वजातकं ऋषिभ्यः शिष्यभूतेभ्यः उवाचकथितवान् वक्ष्यत्येव
कलिंश्रितइतिपाठे कल्पादौ प्रादुर्भूय यदुक्तवान् ततः कालबाहुल्यात्
अज्ञपरंपरया मलिनत्वभिया पुनःकलिंश्रितः कलौप्रादुर्भूतः वक्ष्य-
ति कथयिष्यतीत्यन्वयः अन्यत्समानम् ॥४१॥

॥ भाषा ॥

४६।४७।४८।४९ रश्मी होवे तो पैंड्यायु लेना-यह रश्म्यायुर्दाय गर्गऋषीनें
मेरंकूं कहाहै॥३३॥३४॥३५॥३६॥३७॥३८॥३९॥ बलोत्तरवशादिति॥ यह
आयुर्दायके भेदमे बलकी तारतम्यतासें मित्रादि स्थानबलकी तारतम्यतासें इष्टक-
ष्टफलयोगसें रश्मीके निमित्तसें मेनें आयुर्दायके भेद बताये हैं॥ ४०॥ कल्पादा-
विति॥ ऐसा यह जातकशास्त्र कलियुगके प्रारंभमें गर्गमुनि आपना प्रागट्य करके
आपने शिष्योंकूं कहते भये अथवा कहेंगे.॥४१ ॥ ५॥

अर्द्धांशोराशिलिप्तायाः सप्तांशः संप्रकीर्तितः ५
अष्टादशर्क्षकांशस्तु कलांशइतिकीर्तितः षष्ट्यंश
एवषष्ट्यंशः क्रमेणपतयः स्मृताः ६

॥ टीका ॥

चकात् उच्चत्रिकोणस्वर्क्षमित्राधिमित्रस्थानसंबंधेन भाग्येस्थितैः भाग्यदर्शकैश्च शुभपापग्रहैः शुभैः पापैश्च सर्वैरपिग्रहैरित्यर्थः वृद्धिः भाग्यवर्धनं तथाऽन्यस्मात् समशत्र्वधिशत्रुनीचस्थानसंबंधेन भाग्ये स्थितैः सर्वग्रहैः हानिः भाग्यनाशः इष्यते कथ्यतइत्यर्थः तथा स्वस्मिन्स्वीयेविषये स्थाने भाग्यपतिश्चेत्स्वदेशेऽन्यत्रविषयेऽन्यदेशे भाग्येशश्चेदितरदेशेवा भाग्याप्तिः अथवा हेज्योतिर्विन्मैत्रेय! भाग्यगतैर्ग्रहैः स्वेषु दशसुवर्गेषु स्थितैः दशवर्गगणनया स्ववर्गस्थितैः स्वदेशे भाग्याप्तिः नैश्चान्येषु स्वेतरेषु दशसुवर्गेषुस्थितैः परदेशे भाग्यं ज्ञेयमिति ॥ ३ ॥ ४ ॥ अथोक्तदशवर्गरीत्यास्वदेशपरदेशभाग्यं तद्वदेव सप्तांशषोडशांशषष्ट्यंशरीत्यापि स्वदेशपरदेशभाग्यज्ञानं भवति अतस्तानंशानाह ॥ अर्द्धांशइत्यादिसप्तमांतं ॥ सप्तांशमाह ॥ राशिलिप्तायाः राश्यंकस्य लिप्ताः कृत्वा ताभ्यः अर्द्धांशः सप्तभिर्भागः सप्तांशइतिसंप्रकीर्तितः ॥ षोडशांशमाह ॥ अष्टादशर्क्षकांशस्तु अष्टादशैर्यैऋक्षांशः राश्यंशः सकलांशः षोडशांश इतिकीर्तितः ॥ षष्ट्यंश-

॥ भाषा ॥

श्री मूलत्रिकोणी होके जो ग्रह भाग्यमें होवे तो भाग्यवृद्धि जानना नीच शत्रुक्षेत्री अधिशत्रुक्षेत्री समका होके भाग्यमें बैठा होवे तो भाग्यकी हानि जानना और भाग्यपति स्ववर्गमे होवे तो स्वदेशमे भाग्योदय परवर्गमें होवे तो परदेशमें भाग्योदय जानना ॥ ३ ॥ ४ ॥ अर्द्धांशइत्यादिसप्तमांत ॥ अथ सप्तांश षोडशांश षष्ट्यंश कहते है. राशिअंशकी कला करके सातसे भाग

यशांसिभाग्यतोभाग्यविपर्यासाद्विपर्ययः करि-
ष्यमाणकर्माणिज्ञातव्यानिप्रयत्नतः २ लग्ना-
दिंदोश्चनवमंभाग्यंबलवशाद्भवेत् शुभपापा-
रिमित्रारव्यैर्ग्रहेरेवंशुभाशुभैः ३ उच्चादिपंच-
काद्वृद्धिरन्यस्माद्धानिरिष्यते स्वस्मिन्नन्यत्र
विषयेस्वदेशेतरदेशयोः ४ स्वेष्वन्येषुतुवर्गेषु
ज्योतिर्विद्दशसुस्थितैः

॥ टीका ॥

ध्वसाधुव्यापारंच ते वक्ष्यामि अस्मिन्नध्याये कथयिष्यामि शृ-
णवाकर्णयेत्यभिमुखीकरणं यतो नृणां जनानां भाग्यादेव सिद्धिः
सकलकार्यसाधनं यतोभाग्यादेव धनायती धनं द्रव्यं आयतिःप्र-
भावः ते यतोभाग्यतएव यशांसि कीर्तयः भाग्यविपर्ययात् अभा-
ग्यात् उक्तानां सर्वेषां विपर्ययः नाशइत्यर्थः अतः करिष्यमाणक-
र्माणि भाग्यसूचकान्यभाग्यकारकाणिचेति प्रयत्नतो ज्ञातव्यानि इ-
तितज्ज्ञानं वक्ष्यामीति प्रतिजानीते ॥ १ ॥ २ ॥ अथ भाग्यविचाररी-
तिमाह ॥ लग्नादित्यादिसार्धचतुःश्लोकपर्यंतम् ॥ भाग्यं भाग्यस्था-
नंतु लग्नात् इंदोश्च सकाशान्नवमं ज्ञेयं तच्च बलवशात् बलतारतम्ये-
न अल्पाधिक भाग्यकारकं भवेत् एवमेव शुभपापारिमित्रारव्यैः शु-
भाः सौम्याः पापाः खलाः अरयः शत्रवः मित्राणि इष्टाः इति आ-
रव्यायेषां तैर्ग्रहैश्च भाग्यस्य वृद्धिहानी भवतः एवं भाग्ये उच्चादिपं-

॥ भाषा ॥

भाग्योदयका लक्षण कहताहूं ॥ १ ॥ २ ॥ लग्नादित्यादिसार्धचतु श्लोकपर्यंतं ॥
भाग्यस्थान लग्नसे और चंद्रमे नवमघर जानना. परन्तु उसमेंभि बलाबल देख-
के भाग्यकी वृद्धि या हानि कहेना. जैसा उच्चस्वगृही मित्रक्षेत्री अधिमित्रसं-

भावग्रहांतरकला द्विशत्याप्ताः समादयः ९
द्विघ्नाद्विघ्नाःकरघ्नाश्चषष्ट्याप्ताश्चसमादयः अ-
थेष्टादिफलघ्नंचसमयोभाग्यभावयोः १० फले
नचदशघ्नेन रश्मिनाच हतास्तथा भावाष्टव-
र्गोत्थसमाहितत्तद्ग्रहांतरोत्थास्तुसमादयः स्युः ११

॥ टीका ॥

रेण भावानां संबंधिनो भाग्यविपर्यासो भाग्यवृद्धिः भाग्यहानी त-
था उक्तप्रकारेण वदेत्कथयेदिति ॥ ८॥ अथ भावफलसमान्याह ॥
भावेतिसार्धश्लोकेन ॥ भावग्रहांतरकलाः भावग्रहयोः अंतरंविवरंकृ-
त्वातस्यकलाः कृत्वा ताः द्विशत्याप्ताः शतद्वयेन भक्ताः फलंसमादयः
वर्षमासदिनादिस्यात् तेसमादयः द्विधास्थाप्याः एकत्रद्विघ्नाद्विगु-
णिताः षष्ट्याप्ताः फलंसमादयः तत्समादिकं इष्टादिफलघ्नंकृत्वा
भाग्यभावयोः समयः भवति ॥ ९॥ १०॥ अथ प्रकारांतरेणसमाद्या-
नयनमाह ॥ फलेनेति ॥दशघ्नेन दशगुणितेनफलेन भावग्रहांतरफलेन
हताःगुणिताः ततः रश्मिना तत्तद्ग्रहरश्मिनाच हताः भावाष्टवर्गोत्थ-

॥ भाषा ॥

लिखेहुवे घरोमें पापग्रह होवेतो भाग्यकी हानि जानना. परंतु यहां विशेष यह है
कि पूर्वोक्त घरोमें बैठेहुवे ग्रह स्वराशीके मित्रराशीके उच्चके होवेतो अतिउत्तम
फल देवेंगे. नीचादिकके होवे तो नष्टफल देवेंगे ॥८॥ भावेतिसार्धश्लोकेन॥ अथभा-
ग्योदयादिकभावफल कौनसे वर्षमें होवेगा उसका निर्णय कहते हैं. भावका और ग्र-
होंका अंतर करके उसकी कलाकरके २०० सें भाग लेना. लब्ध वर्षमास दिनादिक जा-
नना. पीछे यह वर्षादिकोकूं द्विगुणित करके दो ठिकाने लिखना. पीछे एक ठिकानेके व-
र्षादिकोंके द्विगुणित करके ६० सेभाग लेना. लब्ध जो वर्षादिक फल उसका और पूर्व
जो स्थापित अंकहै उसमें अंतर करना जो शेषरहे सो भाग्य भावका समय जानना ॥९॥१०

भाग्यात्त्रिकोणोपगतैः शुभंस्याद्भाग्यंतु केंद्रोपगतैः शुभैश्च पापैस्तथास्यादशुभंचभाग्यंमित्रादिभिः स्यान्नियमोविशिष्टात् ८ एवंभाग्यविपर्यासोभावानांचवदेत्तथा

॥ टीका ॥

माह॥ राशिकलाभ्यः षष्टिभिर्योभागः सएवषष्ठ्यंशः एवंक्रमेण समांशादीनानीय पतयः स्मृताः तत्तत्पतयोग्राह्याइत्यर्थः॥ अथप्रकारांतरेणषोडशांशमाह॥ सावनेदिवसेन्चक्रनक्षत्रांशः राशिचक्रस्य सप्तविंशतिभिर्भागः कलांशकः षोडशांशः ॥ मतांतरमाह॥ इतरैरन्यैराचार्यैः राशिषु यःषष्ठ्यंशः सोऽपिकलांशः षोडशांशः स्मृतः कथितइति॥ ५॥ ६॥ ७॥ फलितमाह ॥ भाग्यादितिसार्धेन॥ भाग्यात् लग्नचंद्राभ्यांनवमभावात् त्रिकोणोपगतैः पंचमनवमस्थानस्थैः केंद्रोपगतैः प्रथमचतुर्थसप्तमदशमस्थानस्थैश्चशुभैः ग्रहैः शुभं भाग्यंस्यात् भाग्यवृद्धिरित्यर्थः तथा लग्नचंद्राभ्यां नवमात् त्रिकोणकेंद्रगतैःपापैस्तु अशुभं भाग्यं भाग्यहानिरित्यर्थः तत्रमित्रादिभिः मित्रस्वक्षेत्रोच्चादिसंबंधेनतु विशिष्टात् पूर्वोक्तविशेषान्नियमः तत्र तत्रस्थैःपापैऽपि भाग्यवृद्धिः मित्रादिक्षेत्रस्थत्वादितिभावः एवंप्रका-

॥ भाषा ॥

लेना जो भाग आवे वो सप्तांश जानना. अन्यदरासे बाराका जो भाग लेना उसकूं षोडशांश कहते हैं. राशि अंशकी कलाकरके साठसे भाग लेना उसकूं षष्ठ्यंश कहते हैं. सावनदिवसकूं राशिचक्रकीं सत्ताविससें भाग लेना उसकू षोडशांश कहते हैं ॥५॥६॥७॥ भाग्यादितिसार्धेन॥ अब भाग्यस्थानका विशेषफल कहते है.- लग्न चंद्रसें जो नवमघरसेंपहांसें ५।९। १।४।७।१० घरमें शुभग्रह होवेतो भाग्योदय उत्तम जानना- और जो ऊपर

धनार्जने सुते दारग्रहणे लिपिकर्मणि   उच्चादि-
स्थानवर्गेषु लाभदश्च रविः क्रमात् १५ शंख-
माणिक्यमुक्तानां लाभे तत्क्रयविक्रये

॥ टीका॥

र्थः तथा तेषां वर्गाः गृहादयः षट् उच्चवर्ग स्वत्रिकोणवर्ग स्वराशिवर्ग-
स्वमित्रराशिवर्गादयः तेषु वर्तमानः एवं फलदो भवति तान्येव फला-
न्याह शृंगविक्रये लाभद एवं पदं सर्वत्र १ चामरादि राजचिन्हवि-
क्रये २ कृषिकर्मणि स्पष्टं ३ सेवायां ४ पैशुन्ये पिशुनो दुर्जनः
खलः पिशुनस्य दुर्जनस्य कर्म पैशुन्यं तस्मिन् ५ लिपिकर्मणि ले-
खनक्रियायां ६ धनार्जने द्रव्यसंपादने ७ व्यये द्रव्यवितरणे ८ व्या-
धौ रोगे लाभदत्वं रोगनाशे नेत्यर्थः ९ गमनागमविक्रये गमनागम-
नाभ्यां यो विक्रयः तेन न त्वेकस्थानस्थित्येत्यर्थः १० विवादे ११
प्रेतकार्ये १२ भ्रातॄणां संबंधि कलहे १३ धनार्जने १४ सुते संततावि-
त्यर्थः १५ दारग्रहणे विवाहे १६ लिपिकर्मणि १७ इति रविफलानि॥
॥१३॥१४॥१५॥ अथ कलांशार्धहोराभ्यां स्वराशिस्ववर्गस्थचंद्रस्य
फलान्याह ॥ शंखेत्यादि अष्टादशश्लोकपर्यंतम् ॥ कलांशाद्यर्ध-

॥ भाषा॥

शीका होवे या उच्चादिक राशीके वर्गमें होवे तो क्रमसें नीचे लिखे हुये प-
दार्थोंका विक्रय करनेमें लाभ होवेगा- शृंग १ चामरादि राजचिन्ह २ कृषिकर्म
३ सेवा ४ दुर्जनकर्म ५ लिपिकर्म ६ धनसंपादन ७ रोगनाशनकर्म ८ द्रव्यवि-
तरण ९ गावोगाव फिरके माल वेचना. १० विवाद ११ प्रेतकार्य १२ भ्रातृकलह
१३ पुत्रसें १४ धनार्जन १५ विवाह १६ लेखनकर्म १७ यह १७ कर्म करणेमें द्र-
व्यलाभ होवेगा. इति सूर्यफलम् ॥ शंखेत्यादि अष्टादशश्लोकपर्यंतम् ॥ अब
चंद्र उच्चादि राशीका होवे या उच्चादिराशीके वर्गमें होवे तो क्रमसें नीचे

नत्तद्ग्रहोत्थाब्दहताःस्तथास्युरेवंतथाभाग्यफ-
लानितत्र स्थानानिनववर्गाश्चतेषांभाग्यफलंशृ-
णु १२ रव्यादीनांक्रमाच्छ्रृंगन्चामरादेश्चविक्रये
कृषिकर्मणिसेवायांपैशुन्येलिपिकर्मणि १३ ध-
नार्जनेव्ययेव्याधौगमनागमविक्रये विवादेमैन-
कार्येचभ्रातृणांकलहेतथा १४

॥ टीका ॥

समाः तत्तद्ग्रहांतरोत्थाः तत्तद्ग्रहभावांतरसमुत्पन्नाः स्पष्टतराः स-मादयः स्युरिति ॥ ११ ॥ समुच्चयेनाह ॥ तत्तदिति ॥ एवंसर्वेषां भावा-नां अब्दादयः तत्तद्ग्रहोत्थाब्दहताः तथास्युः स्पष्टाःस्युरिति ॥ अथ तत्रफलानितु कथंज्ञेयानि ग्रहाणां स्थानानि नववर्गाश्च संति तेषांसंबंधि भाग्यंफलं शृणु कथयामीत्यध्याहारः ॥ १२ ॥ अथोच्चादि-स्थानविशेषेणफलविशेषंक्रमाद्रव्यादीनामाह ॥ तत्रादौरविफलमाह॥ रव्यादीनामित्यादिपंचदशश्लोकपर्यंतम् ॥ रविः सूर्यः उच्चादिस्थान-वर्गेषु उच्चादीनि उच्चत्रिकोणस्वर्क्षमित्रर्क्षादीनि स्थानानि राशय इत्य-

॥ भाषा ॥

॥अब प्रकारांतर कहते है. ग्रहभावका अंतर करके जो शेषफल उसकूं दश-गुणित करके फेर उसकूं वो ग्रहकी रश्मीस भाग लेना. शेषवर्षादिक भाग्यसम-य जानना. अथवा अष्टवर्गोत्थ वर्षोसें भाग्योदयका फल कहेना ॥ ११ ॥ ॥तत्तदिति॥ इस रीतिसें सर्व भावका फल माधिसमय ये ये भावाधिपतिके संबंधसें ऊपर लिखी हुई रीतिसें कहेना. और भावफलका विशेष निर्णय नववर्गसे कहेना ॥ १२॥ रव्यादीनामित्यादिपंचदशश्लोकपर्यंतम् ॥ अब सूर्यादि ग्रहोंका उच्चादिकके अनुसारसे फलविशेष कहते हैं. उसमें प्र-थम सूर्यका कहते हैं. सूर्य उच्चत्रिकोण स्वराशी मित्रराशी अधिमित्रग-

विवादो भ्रातृभिः शत्रुकर्मस्त्री चंचलाक्षकः १९
स्त्रीलाभो दासलाभश्च कुत्स्नेहा नबलक्षयः ब-
लैर्धनायतिः स्वोच्चे स्वे क्षेत्राद्यैर्न्यायतो भवेत् २०
मूलत्रिकोणे क्षेत्रेण राज्ञो वाथ धनायतिः स्वर्क्षे
वस्त्रं कांचनादि सिद्धिश्चाय सुहृत्फलम् २१
धान्यायतिश्च मैत्री च क्रूरकर्मप्रवर्तनम् कुष्टं चा-
प्यग्निभीतिश्च गृहदाहोऽनिशत्रुभे २२ ग्रहणीगु-
ल्मरोगश्च धननाशश्च तत्र तु

॥ टीका ॥

शत्रुकर्म शत्रुकृत्यं ६ स्त्रीचंचलाक्षकः स्त्रीषु चंचलनेत्रः ७ स्त्रीला-
भः ८ दासलाभः ९ कुत्स्नेहा सर्वेच्छा १० बलक्षयः ११ बलैः धना-
यतिः धनप्राप्तिः १२ एवं फलानि भाग्यगे स्वोच्चस्थे स्वक्षेत्राद्यैर्युक्ते वा
भौमे न्यायतः न्यायेन स्युः तत्रस्थे मूलत्रिकोणगे भौमे क्षेत्रेण कृषि-
णा राज्ञः सकाशाद्वा धनायतिः धनप्राप्तिः स्यात् भाग्यगे स्वर्क्षे वर्त-
माने तु वस्त्रकांचनादि सिद्धिः अथ सुहृत्फलं भाग्यस्थ सुहृद्भे वर्त-
मान भौमस्य फलं तु धान्यायतिः धान्यानां प्राप्तिः मैत्री इति अथ
भाग्यस्थानिशत्रुभे भौमे सति क्रूरकर्मप्रवर्तनं कुष्टं अग्निभीतिः गृह-
दाहः ग्रहणी संग्रहणी गुल्मरोगश्चेति व्याधयः स्युः धननाशश्च स्यात् ॥१९

॥ भाषा ॥ ॥ २० ॥ २१ ॥ २२ ॥

क्रमसें नीचे लिखाहुवा फल जानना. सुवर्णसिद्धि १ जय २ वस्त्रलाभ ३ मित्रस-
मागम ४ बंधुविवाद ५ शत्रुकर्म ६ स्त्रीविषयमें चंचलनेत्र ७ स्त्री लाभ ८ दास-
लाभ ९ सर्वइच्छा १० बलक्षय ११ बलकरके धनप्राप्ति १२ इतना फल मंगल उ-
च्च स्वक्षेत्रका होवे तो जानना. औरजो मंगल भाग्यमें मूलत्रिकोण राशीका होके बैठा
होवे तो कृषिकर्मसें वा राजाके निमित्तसें धन मिले. जो मंगल स्वराशीका होके

सुरतेस्त्रीषुमैत्रेचराज्ञःपुरुषमित्रता १६ धना-
यतिस्तथात्रमैत्रंचकृषिकर्माणि वस्त्रादिध-
नसिद्धिश्चब्राह्मणेनविरोधता १७ धननाशो
भवेद्युद्धेपराजयपराभवौ कलांशाद्यर्धहोरां-
शफलानिक्रमशःस्थिते १८ स्वर्णसिद्धिर्ज-
योवस्त्रलाभोमित्रसमागमः

॥ टीका ॥

होरांशफलानि एवं वक्ष्यमाणानि ज्ञेयानि कदा कलांशादिषु स्थिते वर्तमाने चंद्रे इतिप्रकरणक्रमप्राप्तोऽर्थः शंखादीनां लाभे १ तत् क्रयविक्रये तेषांशंखमाणिक्यमुक्तानां क्रयविक्रयकर्माणि २ सुरते मैथुने ३ स्त्रीषु रामासु मैत्रे स्नेहे लाभदइत्यर्थः ४ तथा राज्ञःपुरुषमित्रता समासाभावश्चार्षः राजपुरुषमित्रतेत्यर्थः ५ धनायतिः धनलाभः ६ तथा तत्र लाभे कृषिकर्मणिच मैत्रं स्नेहः स्यात् ७ वस्त्रादिधनसिद्धिः ब्राह्मणेनविरोधता द्विजजातिविरोधः ९ युद्धे धननाशः तथा पराजयपराभवौ पराजयः स्वोत्कर्षहानिः पराभवः स्वदेशद्रव्यबलादिहानिः इतिफलंभवेत् १० ॥ इतिचंद्रफलानि ॥ १६ ॥ १७ ॥ १८ ॥ अथ भौमफलानि ॥ स्वर्णसिद्धिरित्यादिसार्धद्वाविंशतिश्लोकपर्यंतं ॥ स्वर्णसिद्धिः १ जयः २ वस्त्रलाभः ३ मित्रसमागमः ४ भ्रातृभिर्विवादः ५

॥ भाषा ॥

लिखेहुवे पदार्थोंमें लाभ होवेगा. शंखादि क्रयविक्रय १ मैथुन २ स्त्रीमैत्री ३ राजपुरुषमित्रता ४ धनलाभ ५ कृषिकर्म ६ वस्त्रादिव्यापार ७ ब्राह्मणविरोध ८ स्वोत्कर्षहानि ९ स्वदेशद्रव्य बलादिहानि १० यह फल होवे इति चंद्रफलं ॥ १६ ॥ १७ ॥ १८ ॥ स्वर्णसिद्धिरित्यादिसार्धद्वाविंशतिश्लोकपर्यंतम् ॥ अब मंगलका फल कहते हैं. मंगळ उच्चादिरागीका होवे अगर उच्चादिवर्गका होवे तो

कायस्थकर्मणात्वायोविद्यानाशः स्वकर्मणा ध-
ननाशोऽश्मरीकुष्ठंकलांशादिफलंततः २७ वि-
वादाद्बंधुभिर्दायोदेशपर्यटनाद्धनम् क्षेत्रसिद्धि-
र्जयोविद्यालाभोधान्यविवर्धनम् २८ कृषिक-
र्मसमुद्योगः सेवाकरणकौशलम् विद्यार्जनं

॥ टीका ॥

स्वर्णभूमिलाभः १२ स्वर्क्षेसति लिपिना लिपिकर्मणा शिल्पकर्मणा शि-
ल्पकृत्येनच धनायतिः द्रव्यलाभः १३ वस्त्रस्वर्णादिलाभः १४ राजस्त्री-
भिः धनायतिः राजस्त्रीयोगेन धनागमः १५ उदासीनक्षेत्रस्थेतु का-
यस्यकर्मणा साक्षाच्छारीरकृत्येन आयः धनप्राप्तिः १६ अतिशत्रुस्थे
विद्यानाशः १७ स्वकर्मणा निजव्यापारेण धननाशः १८ अश्मरी रोगवि-
शेषः १९ कुष्टं २० कलांशादिफलं स्वषोडशांशादिवर्तमानफलंतु
बंधुभिर्विवादात् दायः स्वभागप्राप्तिः २१ देशपर्यटनात् धनंलभेत् २२
क्षेत्रसिद्धिः २३ जयः २४ विद्यालाभः २५ धान्यविवर्धनं २६ कृषिक-
र्मसमुद्योगः २७ सेवाकरणकौशलं सेवाकृत्यकुशलत्वं २८ विद्यार्जे-
नं विद्यासंपादनंचेति इतिबुधफलानि ॥ २३ ॥ २४ ॥ २५ ॥ २६॥२७॥ २८

॥ भाषा ॥

युद्धमे हानि पराभव होवे उच्चादिकका होके बैठे तो विद्या बुद्धि धन यश स्वर्ण
भूमि राजपुरुष इनोंसे लाभ होवे स्वराशीका होवे तो लेखनकर्मसे शिल्पक-
र्मसें राजस्त्रीयोगसे वस्त्रस्वर्णादिकसे धनप्राप्ति होवे समराशीका होके बैठे
तो शरीरकृत्यसे धनप्राप्ति अधिशत्रुका होवे तो विद्यानाश व्यापारमे नाश
अश्मरी रोग कुष्टरोग होवे अपने षोडशांशमे होवे तो बधुविवादमे धनप्राप्ति और
देशांतर फिरनेसे धनप्राप्त होवे क्षेत्रसिद्धि होवे जय होवे विद्यालाभ धान्यवृ-
द्धि खेतीका उद्योग सेवकीका कर्ममे कुशलता विद्यासंपादनमे कुशलता होवे ॥ इति

विद्यार्जनेसुखेस्त्रीभिः कलहश्चधनायतिः २३ क्षेत्रदासादिलाभंचकृषिकृत्यंधनायतिः विवादो बंधुभिर्युद्धेजयश्चैवपराजयः २४ विद्याबुद्धि-धनक्षेत्रयशांसिचफलंतिच राज्ञस्तत्पुरुषेणे-वस्त्वर्णक्षेत्रायतिस्तथा २५ स्वर्क्षेधनायतिः प्रोक्तालिपिनाशिल्पकर्मणा वस्त्रस्वर्णादि-सिद्धिश्चराजस्त्रीभिर्धनायतिः २६

॥ टीका ॥

अथ भाग्यगतबुधफलान्याह ॥ विद्येत्यादिपदाधिकसार्धाष्टाविंशति-श्लोकपर्यंतम् ॥ विद्यार्जने विद्यासंपादने १ सुखे सुखप्राप्तौ २ इष्टफलद इत्यर्थः शत्रुराशिगतभाग्यस्थेबुधे स्त्रीभिः कलहः ३ मित्रराशिगत-भाग्यस्थेबुधेतु धनायतिः धनलाभः ४ क्षेत्रदासादिलाभः ५ कृषि-कृत्यं ६ धनायतिः ७ नीचादिस्थे बंधुभिर्विवादः ८ युद्धेउ जयः ज-याभावः ९ पराजयः पराभवः १० उच्चादौ विद्याबुद्धिधनयशांसि फ-लंति ११ राज्ञः नृपात्तथा तत्पुरुषेण राजपुरुषयोगेन स्वर्णक्षेत्रायतिः

॥ भाषा ॥

भाग्यमें होवेतो वस्त्रसुवर्णादिकका लाभ जानना. जो मंगल मित्रराशीका होके भाग्यमें बैठा होवे तो धान्यप्राप्ति बोहोत होवे. जो मंगल अधिशत्रु राशीका हो-के भाग्यमें बैठे तो क्रूरकर्ममें प्रवृत्ति करे अग्निभय. कुष्ट संग्रहणी गुल्म आदि रोग होवे धननाश होवे. ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ विद्येत्यादिपदाधिकसार्धाष्टावि-शतिश्लोकपर्यंत ॥ अब भाग्यस्थानगत बुधका फल कहते हैं. बुध उच्चराशीका हो-यके भाग्यघरमें होवे तो विद्यासंपादन करणेमें और सुखप्राप्ति करणेमें फल-प्राप्ति होवे. शत्रुराशीका होके बैठेतो स्त्रीयांसे कलह. मित्रराशीका होवे तो ध-नलाभ क्षेत्रदासादिकका लाभ खेतीमें लाभ. नीचराशीका होवे तो बंधुविरथ

राज्ञांकृत्यकरः श्रीमान्पुत्रबंधुसमन्वितः ३२
सेनानाथस्तथामात्योविद्यार्जनपरो धनी पाठ-
कोयाजकश्चाथबहुस्त्रीकोऽतिशत्रुभे ३३ स्त्री-
सक्तोनिर्धनोमूर्खःपातकीभारतोभवेत् सेनाधि-
कारीराज्ञश्चप्रियैर्बन्धुभिरायतिः ३४ सेवावृ-
त्याचकृष्याचविद्यायाःपूर्तकर्मणा सर्वसंपद्यु-
तः श्रीमान्शुक्रस्यैवंफलंलभेत् ३५

॥ टीका॥

अथ भाग्यंगतशुक्रफलमाह ॥ राज्ञामित्यादि पंचत्रिंशच्छ्लोकपर्यंतं॥ राज्ञां नृपाणां कृत्यकरः कर्मकर्ता १ श्रीमान् २ पुत्रबंधुसमन्वितः स्पष्टं ३ सेनानाथः सेनापतिः ४ तथाऽमात्यः प्रधानः ५ विद्यार्जनपरः विद्यासंपादोत्सुकः ६ धनी द्रव्यवान् ७ पाठकः अध्यापकः ८ याजक ऋत्विक् ९ बहुस्त्रीकः बह्व्यः स्त्रियोयस्यसः तथा १० अतिशत्रुभेऽधिशत्रुक्षेत्रस्थे सति फलमाह॥ स्त्रीसक्तः स्त्रीलालसः ११ निर्धनः दरिद्रः १२ मूर्खः बुद्धिशून्यः १३ पातकीदोषी १४ भारकः भारवाहकइत्यर्थः भवेत् १५ स्वक्षेत्रस्थस्य फलमाह राज्ञः भूपस्य सेनाधिकारी सैन्याधिकारवान् १६ प्रियैः इष्टैः बंधुभिः बांधवैश्च आयतिः इष्टप्राप्तिः १७ सेवावृत्त्याऽन्यसेवाचरणेन तथा कृष्या

॥ भाषा ॥

॥राज्ञामित्यादिपंचत्रिंशच्छ्लोकपर्यंतं॥ अब शुक्रका फल कहते हैं:- शुक्र उच्चादिकका होके भाग्यमें होवेतो क्रमसे राज्यकार्यकरनेवाला १ लक्ष्मीवान् २ पुत्रसे भाइयोंसें सुखी ३ सेनापति ४ प्रधान ५ विद्यासंपादन करनेमें बोहोत सुखी ६ धनवान् ७ अध्यापक ८ ऋत्विक् ९ बोहोत स्त्रियोंसें युक्त १० होवे. अधिशत्रुराशिका होके बैठे तो स्त्रीलालसी ११ दरिद्री १२ बुद्धिहीन १३

अथप्रोक्तंगुरोःश्रीमान्सुखीगुणी २९ बव्हा-
यतिरमात्यत्वंसर्वसंपत्समन्वितः धननाशःप्रमो-
हेनक्षेत्रनाशःपराभवः ३० विद्यार्जनंतथासेवा-
करणंसंपदस्तथा पुत्रैर्धनायतिर्मित्रैः स्त्रीभिश्च
कृतकर्मणा ३१ विवाहोधनलाभश्चक्रमादेवंफ-
लंवदेत्

॥ टीका ॥

अथ भाग्यगतगुरुफलमाह ॥ अथेत्यादि सार्धैकत्रिंशच्छ्लोकपर्यंतम्॥ अथानंतरंगुरोः फलंप्रोक्तं भाग्यस्थस्येतिशेषः श्रीमान् लक्ष्मीवान् १ सुखी२ गुणी गुणाः दयादाक्षिण्यादयः संतियस्येति तथा ३ बव्हायतिः बहुप्राप्तिः भवेदित्यर्थः ४ अमात्यत्वंप्रधानत्वं ५ सर्वसंपत्समन्वितः स्पष्टं ६ अथशत्रुक्षेत्रगतस्यफलं धननाशः द्रव्यनाशः ७ प्रमोहेन प्रमोदेनेत्यर्थः क्षेत्रनाशः ८ पराभवःपराजयः ९ अथमित्रक्षेत्रस्थ. स्य भाग्यगतगुरुफलं विद्यार्जनं विद्यासंपादनं १० तथासेवाकरणं दास्याचरणं ११ अथाधिमित्रक्षेत्रस्थस्यफलंसंपदः ऐश्वर्याणि १२पुत्रैः मित्रैश्च धनायतिः द्रव्यागमः १३ स्त्रीभिः तथा कृतकर्मणा आचरित व्यापारेणच धनप्राप्तिः १४ विवाहः १५ धनलाभः १६ क्रमात् एवमुक्तक्रमेणफलंवदेत् कथयेदिति ॥ २९ ॥ ३० ॥ ३१ ॥

॥ भाषा ॥

॥ अथेत्यादिसार्धैकत्रिंशच्छ्लोकपर्यंतम् ॥ गुरु भाग्यमें होवे तो लक्ष्मीवान १ सुखी २ गुणवान् ३ बोहोतप्राप्ति ४ प्रधानपना ५ सर्वसंपत्तिवान् ६ होवे. शत्रुराशीका होवेतो द्रव्य नाश ७ क्षेत्रनाश ८ पराजय९ होवे मित्रराशीका होवे तो विद्यासंपादन करना. १० सेवा करना. अधिमित्रका होवे तो ऐश्वर्यप्राप्ति पुत्रमित्रद्वारा धनसें धनप्राप्ति स्त्रीनिमित्तसें धनप्राप्ति विवाह इत्यादिमार्गसें धनमिले. इ०गु फल॥ ॥ २९ ॥ ३० ॥ ३१ ॥

आदिमध्यावसानेस्याद्युग्मेतत्रनवांशके आ-
दौमध्येऽवसानेस्याद्युग्मेचौजेनवांशके ३९ म-
ध्येवसानेचाद्येचयुग्मेमध्यांतिमादिमे आदौम-
ध्येवसानेस्यादेवंचेद्भाग्यलक्षणम् ४० ओजरा-
शौनवांशेचेद्युग्मेमध्यंतिमादिमे युग्मेराशौनवां-
शेचेदोजेमध्येऽन्तिमेऽपिच ४१

॥ टीका ॥

यत् भाग्यर्क्षे भाग्यराशिः तत्रगतान् वर्तमानान् ऋक्षान् नवांशराशीन् ततः न्यूनान् अधिकान्वापिवर्तमानान् स्वरश्मिघ्नान् स्वकीयरश्मिगुणितान्कृत्वा भाग्यर्क्षे ग्रहयुक्तेसति तथा तद्रश्मिघ्नान् तस्यग्रहस्य रश्मिभिर्गुणितान्कृत्वा उत्तरमनंतरंत्रिभिर्विभज्य त्रिसंख्यया भागमाहृत्य निःशेषेशेषरहितेसति ओजराशौ विषमराशौ आदिमध्यावसाने युग्मेनवांशेसति आदौमध्येऽवसानेवा यथाक्रमम् भाग्यफलंज्ञेयं तथा युग्मे राशौ ओजनवांशके मध्येऽवसाने आद्येसति मध्यमांत्यप्रथमेसति अथवा युग्मेराशौ मध्यांतिमादिमे मध्यमांतिमंप्रथमेयुग्मेनवांशकेसतिच

॥ भाषा ॥

पूर्वे जो भाग्यस्थानका फल कह्याहै उसफलकी प्राप्तीकोन समयमे होवेगी वा-समयका ज्ञान अब कहतेहै भाग्यस्थानकी नवमांशराशीको भाग्यभावकी र-श्मीसें गुणनकरके और वहां जो ग्रह बैठा होवे वो ग्रहकी रश्मीसें गुणन कर-णा पीछे तीनसें भाग लेना. शून्य शेष रहे ताका फल कहतेहैं भाग्यस्थान-की विषमराशी होवे तो आद्य मध्य अवसानमे चरादिक क्रमसें फल जानना और युग्म नवमांश होवे तो आद्य मध्य अवसानमे फल जानना तथा भाग्यरा-शी युग्म होय और नवमांश विषम होवे तो मध्य अंत्य आद्यमे फल जानना. और युग्मराशी युग्मनवमांश होवेतो मध्य अंत्य आदिमे और आदिमध्यअ-

कुजोच्चादिफलंचार्केः कलांशादिफलंभवेत् क-
लांशादिषुयत्प्रोक्तंकाळांशादिफलंत्विदम् ३६
उच्चादिषुतथाप्रोक्तंफलमेवंविचिंतयेत् स्वभाग्य-
र्क्षगतानृक्षान्न्यूनांश्चाप्यधिकांस्ततः ३७ स्वर-
श्मिघ्नान्ग्रहैर्युक्तैस्तद्रश्मिघ्नांस्तथोत्तरम् त्रिभि-
र्विभज्यनिःशेषेत्वोजराशौनवांशके ३८

॥ टीका ॥

कृषिकर्मणा विद्यया वेदशास्त्रभक्त्या पूर्तकर्मणा खातादिकृत्येनचस-
र्वसंपद्युतः अखिलसंपत्तिसहितः स्यात् १८ श्रीमांश्च १९एवंप्रकारेण शुक्र-
स्यफलंभवेदिति॥३२॥३३॥३४॥३५॥ अथशनिफलमाह॥ कुजेतिसा-
र्धेन॥ कुजोच्चादिफलं यत्कुजस्य उच्चादिवर्तमानस्यशुभफलमुक्तं तदेव
आर्केः शनैश्चरस्य कलांशादिफलं षोडशांशादिवर्तमानफलं मयेज्ञा-
नीयादित्यर्थः कुजस्यकलांशादिषु षोडशांशादिषु यत्फलंप्रोक्तं तदेव
शनेः कलांशादिवर्तमानस्यफलंभवेत् तथाकुजस्यउच्चादिषु यत्प्रोक्तं
तदेवउच्चादिवर्तमानस्य शनेः एवंफलंविचिंतयेदिति ॥ ३६॥ एवंभाग्य-
स्थानगतग्रहवशात्फलान्युक्त्वाऽथतत्तत्फलागमकालंनवांशतारतम्येनाह
स्वभाग्येत्यादिसार्धत्रिचत्वारिंशच्छ्लोकपर्यंतं ॥ स्वभाग्यर्क्षगतान् स्वस्य

॥ भाषा ॥

पातकी १४ भारग्राहक १५ होवे स्वक्षेत्रका होवे तो सेनाधिकारी १६ प्रियबांधवों-
सें इष्टप्राप्ति १७ दूसरेकी सेवाकरणेसें १८ कृषिकर्ममें १९ विद्यासे २० इष्टपूर्त
वापी कूपतळावादिक कर्मसें २१ सर्व संपत्तिवान् होवे श्रीमान् होवे इति शुक्रफ-
लं॥ ३२॥ ३३॥ ३४॥ ३५॥ अथशनिफलमाह॥ कुजेतिसार्धेन॥ ॥
अब शनिका फळ कहते हैं. शनिका फळ पहिले जो मंगळके विषयमें लिखाहै
सोई जानना. इतिशनिफलं॥ ३६॥ स्वभाग्येत्यादिसार्धत्रिचत्वारिंशच्छ्लोकपर्यंतं॥

अंशदायोक्तवत्कृत्वाशुभपापदृगाहतम् पश्चा-
त्तनदृलासंस्याद्धात्रादीनांचसंख्यका ४५
रश्मिघ्नंचबलाप्तंचत्वनिष्टमपवादकम् ४६ इतिश्री
बृहत्पराशरहोरायामुत्तरभागे कलांशादिफलेत्रयो-
दशोऽध्यायः १३ नाडीद्वयंमुहूर्तःस्याद्दिना-
डीद्वयमेवच

॥ टीका ॥

चंद्रलग्नाच्चप्रराशेः तथा लग्नतः जन्मलग्नाच्च विचारःकर्तव्यः सतु अंशदायोक्तवत्कृत्वा प्रागुक्तांशायुर्दायवत् गणितंविधाय ततः शुभपापदृगाहतं एकत्रशुभदृष्टिहतंएकत्रपापदृष्टिहतंचकृत्वा तत्क्रमात्पश्चात् तथा तद्दलासं भावबलाप्तमित्यर्थः प्राप्तफलं घात्रादीनां शेषसंख्यानष्टसंख्याचज्ञेया अथच तदेव अंशदायोक्तवत्कृतमेव रश्मिघ्नं रश्मिगुणितं ततः बलाप्तं बलभाजितं फलं अनिष्टं अपवादकं शुभंचज्ञेयमिति ॥४४॥४५॥४६॥ एवंत्रयोदशाध्यायेकृताटीका यथामति गणेशप्रीतयेसाचशोधनीयाबुधैर्मुदा ॥१॥ इतिवृ०उत्तरभागेश्रीमद्ध्यंदिनान्वय वेदशा० ज्योतिर्विच्छ्रीधरेणवि० सु०टीकायांत्रयोदशोऽध्यायः १३ ॥७॥ अथोचतुर्दशाध्यायेगणेशप्रेरितोह्यहं॥ कुर्वेयथामति व्याख्यांविद्वांसःशोधयंतिमां॥१॥ अथभगवान्पराशरोमहर्षिः चतुर्दशेऽस्मिन्नध्यायेवर्षचर्यामुपदिदेश तत्रादौमुहूर्तलक्षणमाह ॥ नाडीत्यर्द्धेन॥

॥भाषा॥

आयुर्दाय लातेहैं वैसा गणित करके दोठिकाने लिखके एक ठिकाने शुभदृष्टियोगसे गुणना अन्यत्र पापदृष्टियोगसे गुणना पीछे दोनो ठिकाने ६०से भागलेना वैसा भावबलसे भाग लेना. शेष रहे वो भाइवधकी संख्या जाननी अन्यप्रकार पूर्वोक्तगणितकूं रश्मि गुणितकरके भावबलसे भाग लेना शेषशुभाशुभफल जानना॥४४॥४५॥४६॥ इतिवृ०त्रयो दशोध्याय १३ ॥ नाडीत्यर्धेन॥

प्रथमेपिवयस्येवंयुग्मेमध्येऽन्तिमादिमे शेषंद्व-
यंचेदेकंस्यात्कालोव्यत्यासतोभवेत् ४२ क-
लाभ्यांचहृतेतद्वत्वराद्यंशेचरेच्चभे आदौमध्ये-
ऽवसानेस्यात्स्थिरेऽन्तेमध्यमादिमे ४३ उभयेम-
ध्यमेंऽन्तेच आदावेवंप्रकीर्तिताः भावानांचैवसं-
र्वेषांचंद्रलग्नात्तुलग्नतः ४४

॥ टीका ॥

आदौमध्येऽवसाने वाचेत् क्रमात् भाग्यलक्षणं एव स्यात् एवमेव ओजराशौ मध्यांतिमादिमे मध्यमांतिमप्रथमे युग्मे नवांशे सति अथवा युग्मेऽन्नौराशौ मध्ये मध्यमेंऽतिमे प्रथमेवा ओजेविषमे नवांशेसति तथा युग्मराशौ मध्यांतिमादिमे नवांशेसतिच एवंपूर्वोक्तकालेफल ज्ञेयं एतत् त्रिभागे गृहीते शून्यावशेषेसति ज्ञेयं अथच त्रिभागग्रहणानंतरं एकंद्वयंवा शेषं स्याच्चेद्व्यत्यासतः वैपरीत्येनेत्यर्थः कालः भाग्यसमयः भवेत्स्यात् अथचरभे भाग्यगतचरलग्ने कलाभ्यां भाग्यकलासंयुक्त ग्रहकलाभ्यां हतेगुणिते तद्वत्पूर्ववत् त्रिभिर्विभज्येत्यर्थः चरांशे चरस्थिरद्विस्वभावसंज्ञकेमासेऽर्थादादौमध्येऽवसानेफलंस्यात्तथास्थिरंस्थिरलग्नेंते मध्यमादिमेऽवसाने मध्ये आदौ चेत्यर्थः फलंबोध्यं तथा उभयेद्विस्वभावलग्ने मध्यमेंऽते आदौचफलंस्यात् एवंप्रकीर्तिताः अंगा इत्यर्थः इति ॥३७॥३८॥३९॥४०॥४१॥४२॥४३॥ अथभावानादिसंख्यामाह ॥ भावानामित्यादियावदध्यायसमाप्ति ॥ अथसर्वेषांभावानां

॥ भाषा ॥

अथ क्रमसे भाग्यफलजानना यहविषय टीकामें स्पष्ट कियाहै. ॥३७॥३८॥३९॥४०॥४१॥४२॥४३॥ भावानामित्यादि यावदध्यायसमाप्ति॥ अब द्वादशभावविचार कहतेहैं- चंद्र लग्नसे करना और जन्मलग्नसे भी करना पहिले जैसा स-

विशाखाश्चततोज्येष्ठामूलंचशततारकं भरणी-
पूर्वफाल्गुन्यौविश्वजिच्चततोभवेत् ३ उत्तराप्रो-
ष्ठपाचैवरेवतीचततःपरम् अभिजिच्चोत्तराचाथ
कृत्तिकारोहिणीततः ४ मूलंचरोहिणीचाथमृग-
शीर्षंचहस्तकम् पुष्यंचश्रवणोहस्तचित्रास्वा-
तिक्रमात्स्मृताः ५ नाडीद्वयमुहूर्तानांसंज्ञाएताः
क्रमाद्द्विज सर्वजिद्भरणीहस्तविश्वेजिद्रोहिणीतथा ६

॥ टीका ॥

ताश्च आर्द्रा १ आश्लेषा २ अनुराधा ३ मघा ४ धनिष्ठा ५ उत्तराषाढा ६ सर्वजित् नाम अभिजित् ७ रोहिणी ८ विशाखा ९ ज्येष्ठा १० मूलं ११ शततारक १२ भरणी १३ पूर्वाफाल्गुनी १४ विश्वजित् अभिजित् १५ एतादिनमुहूर्तसंज्ञाः सर्वजित्संज्ञकाःपंचदश अथ उत्तराप्रोष्ठपात् उत्तरा भाद्रपदा १ रेवती २ अभिजित् ३ उत्तरा ४ कृत्तिका ५ रोहिणी ६ मूलं ७ रोहिणी ८ मृगशीर्षं ९ हस्तकं १० पुष्यं ११ श्रवणः १२ हस्तं १३ चित्रा १४ स्वाती १५ एतारात्रिमुहूर्तसंज्ञाः पंचदश विश्वजित्संज्ञका हेद्विज। हेमैत्रेय। नाडीद्वयमुहूर्तानां एता संज्ञा विश्वजित्संज्ञकाज्ञेयाइति ॥१॥२॥३॥४॥५॥ अथविनाडीद्वयमुहूर्तसंज्ञा द्वात्रिंशदाह ॥ सर्वजिदित्यादिसार्धनवश्लोकपर्यंतम् ॥

॥ भाषा ॥

रोहिणी ८ विशाखा ९ ज्येष्ठा १० मूल ११ शततारका १२ भरणी १३ पूर्वाफाल्गुनी १४ अभिजित् १५ यह दिनमुहूर्त जानने अब रात्रीके मुहूर्त कहते हैं उत्तराभाद्रपदा १ रेवती २ अभिजित ३ उत्तरा ४ कृत्तिका ५ रोहिणी ६ मूल ७ रोहिणी ८ मृगशीर्ष ९ हस्त १० पुष्य ११ श्रवण १२ हस्त १३ चित्रा १४ स्वाति १५ यह पंधरा रात्रीके विश्वजित्नामक मुहूर्त जानने ॥२॥३॥४॥५॥ सर्वजिदित्यादिसार्धनवश्लोकपर्यंतम् ॥

रवेरुदयतोमेषात्सर्वजितः क्रमात्स्मृताः १
आर्द्राश्लेषानुराधाश्चमघाश्चाथधनिष्ठिकाः उत्तरा
पादसंज्ञश्च सर्वजिद्रोहिणीतथा २

॥ टीका ॥

नाडीद्वयं घटिकाद्वयं मुहूर्तः स्यान्मुहूर्तो भवति एतत्सामान्यमानं त्रिंशद्घटिकात्मकदिनमानविषयंज्ञेयं न्यूनातिरिक्तदिनमानेतु विनाडीद्वयं तद्यथा त्रिंशद्घ्यूनदिनमाने कतिचिद्विगतपलनाडीद्वयं तथा त्रिंशद्घ्यधिकदिनमानेतु तत्तारतम्येन विशेषपलसहितनाडीद्वयं मुहूर्तो भवतीति भावः एवमेव रात्रिमानतारतम्येनमुहूर्तलक्षणंज्ञेयमिति अथलग्नान्याह॥ रवेरितिपादेन ॥ रवेः सूर्यस्यउदयतः औदयिकलग्नमारभ्य इत्यर्थः मेषात्सकाशान्मीनपर्यन्तं क्रमेण द्वादशलग्नानि पुनरुदयपर्यंतं भवंतीतिभावः अथोक्तनाडीद्वयमुहूर्तेषु प्रत्यहं दिवा पंचदश रात्रौ पंचदशेति त्रिंशन्नक्षत्रसंज्ञा आह ॥ सर्वजितइत्यादिसार्धपंचश्लोकपर्यंतं ॥ अथसर्वजितः सर्वाणिदिननक्षत्राणि तत्तन्मुहूर्ते स्वसदृशफलदानेन जयंति ताः सर्वजितः संज्ञाः प्रत्यहं सूर्योदयमारभ्य क्रमेण नाडीद्वयमुहूर्तानां त्रिंशन्मितानां स्मृताउक्ताः

॥ भाषा ॥

अब मुहूर्तलक्षण कहते है - दो घडीका एक मुहूर्त होता है. सर्व दिनके मुहूर्त १५ रात्रीके मुहूर्त १५ कमजास्त नहि होते. इसवास्ते दो घडीका मुहूर्त प्रमाण लिखा परंतु दिनमानकी वृद्धिहानिसें मुहूर्तके दोघडीमें ज्यास्त कम होता है. ॥ अब लग्नमान कहतेहै - सूर्य जिस राशीका होताहै ओहि लग्नका प्रथम उदय होता है. पीछे अपने अपने क्रमसें दूसरे दिनके प्रातःकाल पर्यंत बारा लग्न पुनः होजातेहै ॥१॥ सर्वजितइत्यादिसार्धपंचश्लोकपर्यंतं॥ अब दिनरात्रीके मुहूर्त ३० है उनके नाम कहते है- दिनके जो पंधरा मुहूर्त है वे सर्वजित् नामक है. आर्द्रा१ आश्लेषा२ अनुराधा३ मघा४ धनिष्ठा५ उत्तरापादा६ सर्वजित नाम अभिजित७

नक्षत्रसंज्ञयाप्रोक्ताषष्ठ्यावृत्त्याकलांशकाः मे-
षोयमोवृषः कुंभोझषोजूकश्चकर्कटः ११ सिं-
होऽथवृश्चिकश्चापोमृगः कन्याक्रमाद्भवेत् राशि-
चक्रकलांशेतुक्रमादेवंप्रकीर्तिताः १२

॥ टीका ॥

नरावृत्त्यां षष्टिइति विभक्तिलोपआर्षः षष्टिसंख्याकाः नाडिरूपिणः ए-
कघटिकास्वरूपाः तेएव कालांशसंज्ञकाज्ञेयाइति ॥१०॥ अथकलां-
शानाह ॥ नक्षत्रेत्यर्धेन ॥ याघिनाडीसंज्ञाः द्वात्रिंशत्प्रागुक्ताः ताएवपु-
नरावृत्त्या दिनरात्रिषष्टिभागात्मकनाडिरूपिण्यः पुनरावृत्त्यानक्षत्रसंज्ञ-
याकलांशकाः षष्ठ्याषष्टिसंख्यया ज्ञेयाइति ॥ अथराशिचक्रे कलांशसंज्ञाः
पंचघटिकात्मिका उदयात्द्वादशाह ॥ मेषइति द्वादशश्लोकांतं ॥ उदयात्
पंचघटिकाः मेषः १ ततः पंचमोमिथुनः २ ततः पंचवृषः ३ ततः पंच कुंभः
४ ततः पंचझषोमीनः ५ ततः पंचजूकः तुला ६ ततः पंचकर्कटकः ७
ततः पंचसिंहः ८ ततः पंच वृश्चिकः ९ ततः पंच चापः धनुः १० ततः पंच
मृगो मकरः ११ ततः पंचकन्या १२ एवंक्रमात् राशिचक्रकलांशे संज्ञाः प्र-
कीर्तिताः कथिताइति ॥११॥१२॥

॥ भाषा ॥

उसकू द्विरावृत्तिसें घडि घडीका मानेतो साठ घडीके साठ मुहूर्त कालांशनामक
होते है ॥१०॥ नक्षत्रेत्यर्धेन ॥ अब कलांशमुहूर्त कहते है जो पहिले बत्तीस मुहू-
र्त विनाडीनामक कहे है उसकू पुनरावृत्तिसें घटिकात्मक लेके गिनना ये नक्षत्र
कलांशमुहूर्त होतेहे ॥ मेषइतिद्वादशश्लोकांत॥ अब राशिचक्र कलांशमुहूर्त कह-
ते है सूर्योदयसे लेके पांचपांच घटिकाका मेषादि राशी कालांश जानना मेष१
मिथुन२ वृषभ३ कुंभ४ मीन५ तुला६ कर्क७ सिंह८ वृश्चिक९ धन१० मकर११ क-

दस्रस्त्वमृगशीर्षश्चशर्वः पुष्योऽथरुद्रभम् । उत्त-
राविश्वजिच्छ्रोणीचित्रापुष्यश्चवायुभम् ७ अभि-
जिद्वसुभंपौष्णंकृत्तिकाचपुनर्वसू पूर्वोत्तरप्रोष्ठ-
पदेशततारा चविश्वभम् ८ ज्येष्ठासूर्यंचमूलंच
भाग्यश्चक्रमशः स्मृताः ज्येष्ठाचाथविशाखाच
मूलंचशततारका ९ नामानिचमुहूर्तानांविना-
डीद्वयरूपिणाम् आख्याषष्टिनाः प्रोक्ताःकाला-
शानाडिरूपिणः १०

॥ टीका॥

अथ सर्वजित्संज्ञकाः विनाडीसंज्ञकायथा भरणी १ हस्तं २ विश्वजित्
पूर्वाषाढा ३ रोहिणी ४ दस्रः अश्विनी ५ मृगशीर्षः ६ शर्व आर्द्रा ७
पुष्य ८ रुद्रभं आर्द्रा ९ उत्तरा १० विश्वजित् पूर्वाषाढा ११ श्रोणी श्र-
वणं १२ चित्रा १३ पुष्यः १४ वायुभं स्वाती १५ अभिजित् १६ वसुभं
धनिष्ठा १७ पौष्णं रेवती १८ कृत्तिका १९ पुनर्वसू २० पूर्वाप्रोष्ठपत् पू-
र्वाभाद्रपदा २१ उत्तराप्रोष्ठपत् उत्तराभाद्रपदा २२ शततारका २३ विश्व-
भं स्वाती २४ ज्येष्ठा २५ सूर्यहस्तः २६ मूलं २७ भाग्यः पूर्वाफल्गुनी २८
ज्येष्ठा २९ विशाखा ३० मूलं ३१ शततारका ३२ एवंक्रमशः विनाडीद्वय-
रूपाणां मूर्तानां सर्वजित्संज्ञानामानि॥ ६॥ ७॥ ८॥ ९॥ एवंनाडीद्वय-
मुहूर्तसंज्ञा. विनाडीद्वयमुहूर्तसंज्ञाश्चोक्त्वा षष्टिनाडीसंज्ञा आह॥
आख्याइत्यर्धेन॥ याः द्विनाडीरूपिण्य. त्रिंशत्संज्ञा प्रागुक्ताः ताएवपु

॥ भाषा॥

अब विनाडीसंख्यात्मक बत्तीस मुहूर्त कहते हैं उनके नाम भरणी आदिकके
शततारापर्यंत नाम टीकामें स्पष्ट है ॥६॥७॥८॥९॥ आख्याइ पर्द्धेन । अब
षष्टिनाडिमुहूर्त कहते हैं- औ षष्टिघटिकात्मक रात्रि दिनके ३० मुहूर्त कहे

सत्र्यंशाघटिकास्त्रिस्रोमेषोनिमिषयोर्द्विज १६

॥टीका॥

ग्रह ४ अर्कः ५ परिवेषः पूर्वार्धोक्तः ६ आरोभौमः ७ कार्मुकः पूर्वार्धोक्तः ८ गुरुः ९ पानः पूर्वार्धोक्तः १० शनिः ११ केतुः १२ एतेद्वादश ग्रहाः क्रमात् उक्त क्रमेण चक्रलिप्तांशके विषये सिंहात् सिंहलग्नोदयात् सकाशात् द्वादशलग्नेषु भवंति ननक्षत्रकालेउदयंनइत्यर्थः एवंनारकांशके विषये मेषात् मेषलग्नात्सकाशात्केत्वादिः केतुरादिर्यस्येतिः प्रागुक्तः क्रमः विलोमतः चित्रांतं ग्राह्यइत्यर्थः तथा घटिकांशके विषये अर्कादिधूमपर्यंताः प्रथमोक्तक्रमानगेनरविसकाशात् धूमांतं चापात् धनोदयात् द्वादशउदयविषये ग्राह्याइत्यर्थः ॥१४॥१५॥ अथमाशुक्त मेषादिनित्योदयानां मत्यहं भोगकालमानघटिकामाह ॥ सत्र्यंशा इत्यादि अष्टादशश्लोकपर्यंतम् ॥ हेद्विज मैत्रेय। मेषानिमिषयो मेषमीनयोः लग्नयोः नित्यंमानं सत्र्यंशाः त्रिस्रोघटिकाः विंशतिपलाधिकं घटि-

॥भाषा॥

दि है वो देखके तीन क्रममेसे जिसक्रममे आया होवे वो क्रम मुख्य गिनके यहासे अनुक्रमसे चद्र१ बुध२ शुक्र३ धूम४ सूर्य५ परिवेष६ मगल७ कार्मुक ८ गुरु९ मान१० शनि११ केतु१२ पर्यंत जो राशी आवे वो राशी लेके उसराशीके ग्रह माडना जैसा वृश्चिक लग्नजन्मका है तो सिंहादि है वास्ते तात्कालमे सिंहराशीका चद्रकन्याका बुधतुलाका शुक्र वृश्चिक धूम इत्यादि कर्कका केतु इत्यन जानना नक्षत्रक्रममे मेषके क्रमसे ग्रह केतु आदि चद्रांत गिन जहानक पूर्वराशिके अनुसारसे नक्षत्र आवे वोनक्षत्रका ग्रह जानना जैसा अश्विनीका केतु यहासे गिनना तो उत्तराफाल्गुनीके चतुर्थचरणका चद्र आया वैसे सब नायके पूर्वाभाद्रपदाका तीसरी वरवत गिननेसे केतु पुन आया तो केतु पूर्वाभाद्रपदाके चाथेचरण मीनराशीका केतु है इत्यादि विशेष टीकामे स्पष्ट है ॥१४॥१५॥ सत्र्यंशाइत्यादि अष्टादशश्लोकपर्यंत ॥

मेषगोयमकर्किश्चलेयकन्यातुलालयः धनुर्मृग-
घटोमीनमुदयाद्घटिकासु च १३ सिंहान्मेषाच्च चा-
पाच्च नक्षत्रक्रमईरितः चंद्रज्ञशुक्रधूमार्कपरिवे-
षारकार्मुकाः १४ गुरुः पातः शनिः केतुर्ग्रहाः स्यु-
र्द्वादशक्रमात् चक्रलिप्तांशकेचैवं केत्वादिस्तारका-
शके १५ अर्कादिधूमपर्यंताः क्रमात्स्युर्घटिकांशके

॥ टीका ॥

अथ नित्योदयक्रममाह ॥ मेषेति ॥ मेषः १ गौः वृषः २ यमोमिथुनः ३ कर्किः ४ लेयः सिंहः ५ कन्या ६ तुला ७ अलिः वृश्चिकः ८ धनुः ९ मृगोमकरः १० घटः कुंभः ११ मीनः १२ एवंक्रमेण उदयादुदयकालीनलग्नात् घटिकासु ग्रंथांतरोक्तासु नित्योदयसंज्ञाज्ञेयाः तास्त्र-"मीने मेषे चतुर्नाड्यः सार्धाश्च वृषकुंभयोः मकरेमिथुनेपंचशेषाः सार्धाः प्रकीर्तिताः" एवमिति ॥ १३ ॥ अथ नक्षत्रक्रमग्रहणप्रकारभेदानाह ॥ सिंहादित्यर्धेन ॥ सिंहात् सिंहराश्यारंभनक्षत्रात् मघासकाशादित्यर्थः आश्लेषांतमितिभावः इत्येकः प्रकारः चापात् धनूराश्यारंभनक्षत्रात् मूलसकाशादित्यर्थः ज्येष्ठांतमितिभावः इतिद्वितीयः प्रकारः मेषात् मेषराश्यारंभनक्षत्रात् अश्विनीनक्षत्रसकाशादित्यर्थः रेवत्यंतमितिभावः इतितृतीयः प्रकारः एवंप्रकारत्रयेण नक्षत्रक्रमः नक्षत्राणांपरिगणनक्रमः ईरितः कथितः अथ प्रकारत्रयेण प्रत्यहं रात्रिंदिनकाले द्वादशग्रहक्रममाह ॥ चंद्रः १ जोबुधः २ शुक्रः ३ धूमः पूर्वोक्तो

॥ भाषा ॥

न्या १२ यह क्रमसें राशीकालांश कहे ॥ ११ ॥ १२ ॥ अथ नित्योदय लग्नक्रम टीकामें स्पष्ट है. सिंहादित्यर्धेन ॥ अब तात्कालिक तारा ग्रह लानेका क्रम कहते हैं, ग न्मलग्न जो होवे उसकूं पहिले देखना कि सिंहादि है. या चापादि है. या मेषा-

मानानिमेषतःसिंहाच्चापादक्रौंदयात्ततः १९ द-
शवर्गाधिपाश्चिंत्याः प्रोक्ताश्चेन्दुनवांशकाः अन्य-
त्रकीर्तिताः प्रश्नेनष्टद्रव्यविनिश्चये २० श्रीमान्
रिक्तश्चमूर्खश्चकुशलोवंचनःपटुः स्त्रीसक्तोवेद-
विद्धीरोमंदाग्निस्तीव्ररोषणः २१ मूलरोगीचपिशुनः
सदाटनपरोऽशुचिः सेवाकरःसुभाषीच धनवा-
ल्लोभसंयुतः २२ मख्यातोविद्ययाभीरुर्बुद्धिः
श्रीमान्सुशीलकः परदाररतःश्रीमान्सुशीलो
बलवान्गुणी २३

॥ टीका ॥

चतुर्णां सिंहाच्चतुर्णां चापाच्चतुर्णां क्रमात् एकद्वित्रिचतुर्घटिमानं प्रकारांतरेण बोध्यम् तत्र दशवर्गाधिपाः तत्तल्लग्नोक्तमानेषु विभाजनीयाः तथा इंदुनवांशकाः चंद्राशिनवांशकाश्च विभाजनीयाः तत्प्रयोजनमाह नष्टद्रव्यविनिश्चये नष्टद्रव्यस्यविनिश्चयः निर्णयः यस्मिन् तथाभूतेप्रश्ने प्रश्नविचारे एते इंदुनवांशकाः अन्यत्रकीर्तिताः अन्यमतोक्ताइति ॥१९॥२०॥ अथदशवर्गादिषुफलान्याह ॥श्रीमानित्यादिसार्धचत्वारिंशच्छ्लोकपर्यंतम् ॥ श्रीमान् १ रिक्तः २ मूर्खः ३ कुशलः ४ वंचनः ५ पटुः ६ स्त्रीसक्तः ७ वेदवित् ८ धीरः ९ मंदाग्निः १० तीव्ररोषणः अतिकोपी ११ मूलरोगी मूलेमूलस्थानेयोरोगः सोऽस्यास्तीतितथा १२ पिशुनः दुर्जनः १३ सदाटनपरः सर्वकाले भ्रमणशीलः १४

॥ भाषा ॥

और चंद्रनवांशका चिंतवन करना. नष्टद्रव्यप्रश्नादिकमेंभी इनका प्रयोजन है. ॥१९॥२०॥ श्रीमानित्यादिसार्धचत्वारिंशच्छ्लोकपर्यंतम् ॥ अब दशवर्ग ऊपरसें योगफल कहते है. सो योगके नाम टीकामें स्पष्ट लिखे है. वास्ते भाषामें फिरसे

चतस्रः कुंभवृषयोस्तथा मकरयुग्मयोः   त्रिव्यं-
शाः पंचसत्र्यंशास्ताः कर्किधनुषोःस्मृताः   १७
सिंहवृश्चिकयोः षट्च अंशोनाः सप्तशेषयोः   नि-
त्यंमानमिदंप्रोक्तंमेषादुदयराशिजम्   १८   र-
व्याक्रांतात्तथाप्रोक्ताएकद्वित्रिचतुर्घटि

॥ टीका ॥

कात्रयमित्यर्थः कुंभवृषयोः नित्यभोगमानं चतस्रः घटिकाचतुष्टयात्मकं तथानेनप्रकारेण मकरयुग्मयोः मकरमिथुनयोः त्रिव्यंशाः पंच तृतीयांशोनाः पंच चत्वारिंशत्पलाधिक घटिकाचतुष्टयात्मकमित्यर्थः नित्यमानंज्ञेयं ताः पंच सत्र्यंशाः तृतीयांशसहिताः पंचनाम विंशतिपलाधिक पंचघटिकाः नित्यमानं कर्कि धनुषोः स्पष्टंस्मृताः तथा सिंहवृश्चिकयोः षट् घटिकानित्यमानं चपरं शेषयोः उक्तावशिष्टयोः कन्यातुलयोरित्यर्थः अंशोनाः सप्त अत्र अंशशब्देन घटिकातृतीयांशो ग्राह्यः चत्वारिंशत् पलाधिकषट्घटिका इत्यर्थः एवं इदं उक्तप्रकारकं मेषलग्नात् सकाशात् उदयराशिजं लग्नविहितमित्यर्थः नित्यंमानं प्रोक्तं कथितमिति ॥१६॥ १७॥१८॥ अथ प्रकारांतरमाह ॥ रव्याक्रांतादिनिद्वाभ्यां ॥ रव्याक्रांतात् भार्कोदयात् रविसहितात् उदयलग्नादित्यर्थः लग्नमानानि मेषात्

॥ भाषा ॥

अब नित्य लग्नकी घटीपलात्मक मान कहतेहैं. हे मैत्रेय! मेष मीनका प्रमाण घ. ३ प. २० वृषकुंभका प्रमाण घ. ४ प. ० मिथुनमकरका प्रमाण घ. ४ प. ४० क र्क धनका प्रमाण घ. ५ प. २० सिंहवृश्चिकका प्रमाण घ. ६ प. ० कन्यातुलाका प्रमाणघ. ६ प. ४० यह लग्नमानक ह्या ॥१६॥१७॥१८॥ रव्याक्रांतादिनिद्वाभ्याम्॥ अब प्रकारांतर कहतेहैं. उदयलग्नसें मेषनसें ४ सिंहसें ४ धनसें ४ यह चारा राशीमें एक दो तीन चार घटिका क्रमसें कालप्रमाण जानना. दृग्दर्क

शूरोवीरश्चचंडश्चकुशलः कुक्षिरोगवान् ग्राम-
णीर्विटपोधूर्तः सत्रीपतिररिंदमः २८ वंध्यापतिः
सुरापीचरिक्तसाध्यापतिः सुखी विजयीसुन्ह-
भीरुश्चचोरोऽमर्षीधनार्जकः २९ धनार्जनायस-
ततमकृत्यशतकारकः वृषलीपतिरिंद्रश्चसेनानीः
सत्यवाक्छुचिः ३० शिरोरोगीचकुष्ठीचमेहीच
पिशुनः सुखी जलवद्रोगसंयुक्तः कृतज्ञोनिर्घृणो
घृणी ३१ विवादशीलः सुसुखः क्रोधनःकामुकः
पटुः चलचित्तोधनीवाग्मीविद्यार्जनपरः सुखी
३२ अपुत्रः कृषिकृद्धीरः परदाररतः शुचिः वि-
द्याहीनश्चमूर्खश्चबुद्धिमाञ्छास्त्रपारगः ३३
सदाभीरुर्जडोवाग्मीकृत्येषुकुशलः सुखी नीति-
ज्ञोलेखकोनीचजातिकृत्परतः पटुः ३४

॥ टीका ॥

जितशत्रुः ६१ पुत्रवर्जितः ६२ शूरः ६३ वीरः ६४ चंडोतिकोपी ६५ कुशलः ६६ कुक्षिरोगवान् जठररोगी ६७ ग्रामणीः ग्रामपतिः ६८ विटपः स्त्रैणपालकः ६९ धूर्तोवंचकः ७० सत्रीपतिः ७१ अरिंदमः शत्रुहा ७२ वंध्यापतिः ७३ सुरापी ७४ रिक्तसाध्यापतिः रंकमाप्य-स्त्रीसेवी ७५ सुखी ७६ विजयी ७७ सुन्हभीरुः ७८ चोरः ७९ अम-र्षीक्रोधी ८० धनार्जकः द्रव्यसंपादकः ८१ धनार्जनाय द्रव्यसपादनाय सततंनिरंतरं अकृत्यानां शतानिकरोतीति तथा ८२ वृषलीपतिः शूद्र-स्त्रीनिषेवी ८३ इंद्रः ८४ सेनानीः ८५ सत्यवाक् ८६ शुचिः ८७ शि-

॥ भाषा ॥

२८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६

अध्वन्योनिगमव्यग्रःपातकीचतपोयुतः पर-
दाररतोवेश्यासक्तःसत्फलवासनः २४ सिंहा-
सनस्थोरिक्तश्चजटिलःकुलपांसनः योगीबुद्ध-
श्चसंन्यासीसेनानीर्बुद्धिमान्सुखी २५ कुधीभू-
तकरःश्रीमानेकपुत्रसमन्वितः शास्त्रज्ञोदासकृ-
त्यश्चचंडरोषसमन्वितः २६ स्त्रीसक्तःपरदारो-
क्तोभृत्यःपटुररोगवान् कुरूपश्चापिकुशलोजि-
तारिःपुत्रवर्जितः २७

॥ टीका॥

शुचिः १५ सेवाकरः दासः १६ सुभाषी पटुवाक् १७ धनवान् १८ लो-
भसंयुतः १९ विद्ययामरव्यातः प्रसिद्धः २० भीरुः २१ बुद्धिश्रीमान्
बुद्ध्याश्रीमान् २२ श्रीमान् २३ सुशीलकः २४ परदाररतः २५ श्रीमा-
न् २६ सुशीलः २७ बलवान् २८ गुणी २९ अध्वन्यः मार्गस्थः ३०
निगमव्यग्रः वेदाभ्यासे निमग्नः ३१ पातकी ३२ तपोयुतः ३३ परदार-
रतः ३४ वेश्यासक्तः ३५ असत्फलवासनः मिथ्याफलाभिकांक्षी ३६
सिंहासनस्थः ३७ रिक्तः निरुद्योगी ३८ जटिलः जटाधारी ३९ कु-
लपांसनः नीचः ४० योगी ४१ बुद्धः ज्ञाता ४२ संन्यासी ४३ सेना-
नीः सेनापतिः ४४ बुद्धिमान् सूक्ष्मधीः ४५ सुखी ४६ कुधी कुष्ठ-
रोगी ४७ भूतकरः ४८ श्रीमान् ४९ एकपुत्रसमन्वितः ५० शास्त्रज्ञः
५१ दासकृत्यः ५२ चंडरोषसमन्वितः तीव्रकोपी ५३ स्त्रीसक्तः ५४
परदारोक्तः परदारैः उक्तः भाषितः लोभितइत्यर्थः ५५ भृत्यः ५६
पटुः ५७ अरोगवान् रोगरहितः ५८ कुरूपः ५९ कुशलः ६० जितारिः

॥ भाषा॥

लिखे नही है ॥२१॥२२॥२३॥२४॥२५॥२६॥२७॥

शतंगुणाश्चश्रीयोगाएकयोगावसानकम् पूर्व
पूर्वयुता ओजेयुग्मेराशौतुवामतः ३९ चरेक्र-
मःस्थिरे वामसुभयोर्धापदादितः आदौत्रिंश-
द्गुणा अंतेवामतस्त्रिंशदेवहि ४० षष्ठ्यंशेतु
गुणाः प्रोक्ताः प्राग्वदोजचरादिकाः

॥ टीका ॥

कृत्यपरः सदोद्योगी ३५ सुखी ३६ अन्नदाता ३७ मृष्टाशीमधुर-भुक् ३८ शिवभक्तः ३९ जितेंद्रियः १४० कुब्जः कुटिशरीराभ्यां वक्रः ४१ वक्रशरीरः शरीरेणैववक्रः ४२ जात्यंधो जन्मांधः ४३ बधिरः श्रवणहीनः ४४ शठोधूर्तः ४५ अमर्षी क्रोधी ४६ नर्तकोन-टः ४७ क्रुद्धः संजातकोपः ४८ दुर्जनो दुष्टः ४९ वेदपारगः वेदानां पारं समाप्तिं गच्छतीतितथा १५० वक्ता ५१ गायकः ५२ सर्वदा जनार्जकः जनमनःसंपादकः५३ तालज्ञः गानसाधनविशेषज्ञः ५४ वि-द्यायुक्तोविद्वान् १५५ एवंपंचपंचाशदुत्तरं एकयोगावसानकं एक-योगोऽवसानेयस्यतत्शतं पंचपंचाशदुत्तरगुणाः श्रीयोगाज्ञेयाइति ओजे ओजराशौ पूर्वपूर्वयुताः पूर्वनवांशे प्रथमसहिताः क्रमाद्योगा-ज्ञेयाः युग्मेसमेराशौतु वामतः वैपरीत्येनप्रथमनवांशे अवसानीय-योगमारभ्य क्रमोज्ञेयः चरे चरराशौ उक्तक्रमः स्थिरेराशौतु वामं विलोमतो यथास्यात् तथाउभये द्विस्वभावेराशौ अर्धपदादितः त-था आदौ राश्यारंभे त्रिंशद्गुणायोगाः आरंभतः अंते-राश्यंते वामत विलोमतः त्रिंशदेवहि षष्ठ्यंशेतु प्राग्वत्पूर्वोक्तरीत्यैव ओजचरादिकाः

॥ भाषा ॥

यह श्रीमान् आदि लेके विद्वान् पर्यंत एकसो पंचावन १५५ योग कहे. वे विषमराशीके नवांशमे श्रीमानयोगसे गिनती करना. समराशीका नवांश

प्रेष्योगोमयविक्रेतावदान्योधनवंचकः ॥ सेना-
नीःक्षेत्रवान्वीरोलेखवृत्त्याचजीवति ३५ मू-
र्खोजितेंद्रियोवाग्मीसदाकृत्यपरःसुखी अन्न-
दाताचमृष्टाशीशिवभक्तोजितेंद्रियः ३६ कु-
ब्जोवक्रशरीरश्चजात्यंधोबधिरःशठः अम-
र्षीनर्तकःक्रुद्धोदुर्जनोवेदपारगः ३७ वक्ताच
गायकःश्रीमान्सर्वदाचजनार्जकः नालज्ञोवि-
द्ययायुक्तःपंचपंचाशदुत्तरम् ३८

॥टीका॥

रोरोगी ८८ कुष्ठी ८९ मेहीमेहरोगवान् ९० पिशुनः दुर्जनः ९१ सुखी ९२ जलवद्रोगसहितः जलोदरादियुक्तः ९३ कृतज्ञउपकारज्ञः ९४ निर्घृणो निर्दयः ९५ घृणीदयावान् ९६ विवादशीलोवादस्वभाव ९७ सुमुखः सुंदराननः ९८ क्रोधन. ९९ कामुकः १०० पटुः कुशलः १०१ चरचितः २ धनी ३ वाग्मीवक्ता ४ विद्यार्जनपरः ५ सुखी ६ अपुत्रः ७ कृषिकृद्वीरः कृषीवलश्रेष्ठः ८ परदाररतः ९ शुचिः ११० विद्याहीनः ११ मूर्खः १२ बुद्धिमान् १३ शास्त्रपारगः शास्त्रांतज्ञः १४ सदा भीरुः १५ जडः १६ वाग्मी १७ कृत्येषुकुशलः कार्यपटुः १८ सुखी १९ नीतिज्ञः न्यायज्ञः १२० लेखकः २१ नीचजातिकृत्यरत अन्येभ्योनीचजातिकारयिता २२ पटुः २३ प्रेष्य. दूतः २४ गोमयविक्रेता २५ वदान्योदाता २६ धनवंचको धनप्रतारकः २७ सेनानीः २८ क्षेत्रवान् २९ वीरः १३० लेखवृत्त्याचजीवति लेखनक्रियया निर्वाहकः ३१ मूर्खः ३२ जितेंद्रिय शमदमसंपन्नः ३३ वाग्मी ३४ सदा-

॥ भाषा ॥

॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥

कलांशराशितोऽरिष्टेनक्षत्रारिष्टसंभवे पित्रा-
दीनांसुतस्यापितद्वशाच्चिंतयेत्सुधीः ४४ पा-
पशत्रुग्रहक्रांताभावास्तद्दृष्टिसंयुताः सौम्य-
पापादयश्चैवंशुभाशुभफलप्रदाः ४५ एक-
द्वित्रिचतुःपंचषट्सप्ताष्टांकदिग्धराः सूर्येंद्र-
नृपमूर्छेन्द्रनृपभार्कनृपाजिनाः ४६ पंचाष्टव-
सुभूतेषुसुरदंतजिनाद्रयः नखास्त्रिंशत्खवेदाः
षट्सप्ततिः षष्टिरद्रियुक् ४७

॥ टीका ॥

अथपित्राद्यरिष्टमाह। कलांशेत्यादिएकोनपंचाशच्छ्लोकपर्यंतम्॥ कलांशराशितः षोडशांशराशिसकाशात् अरिष्टेमासेसति तथा नक्षत्रारिष्टसंभवे नक्षत्रतः अरिष्टजनिते अरिष्टेसति पित्रादीनां सुतस्यापि तद्वशात्कलांशनक्षत्रांश शुभाशुभवशात्सुधीः शुभाशुभं चिंतयेत् तद्रीतिमाह॥ पापशत्रुग्रहाक्रांताः पापग्रहैः शत्रुग्रहैर्वा सहिताः तद्दृष्टिसंयुतावाभावाः यदिभवेयुः तदा सौम्यपापादयः यथाक्रमं शुभाशुभफलप्रदाइष्टानिष्टफलदा ज्ञातव्याः तत्रांशानाह॥ एक १ द्वि २ त्रि ३ चतुः ४ पंच ५ षट् ६ सप्त ७ अष्ट ८ अंक ९ दिक् १० धरा १ सूर्यः १२ इंदुः १ नृपः १६ मूर्छा २१ इंद्रः १४ नृपाः १६ भानि २७ अर्कः १२ नृपाः १६ जिनाः २४ पंच ५ अष्ट ८ वसुः ८ भूतानि ५

॥ भाषा ॥

का फल कहते है- राहुकेतुकी एकराशीमें संयोग होवेतो भस्म करनेवाले-का मरण जानना- धूमकार्मुक परिवेषकाभी फल ऐसा जानना ॥ ४२॥ ४३॥ कालांशेत्यादिएकोनपंचाशच्छ्लोकपर्यंतम्॥ अबपितृमातृपुत्रादिकोंका अरिष्ट कहतेहैः- षोडशांशरीतीसें अरिष्ट आवे नक्षत्रमतसे अरिष्ट आवे और

मेषादुत्क्रमते राहुः केतुर्यातिवृषात्क्रमात् ४१
ऋक्षसंध्यंतरेजातः प्रष्टासौम्रियतेभृशम् केतु
राहुस्थितेराशौभसंधौमरणंभवेत् ४२ इतरेषां
त्रयाणांप्रकाशेव्याधिपीडितः दुर्बलोबुद्धिही-
नश्चजायतेनमृतोयदि ४३

## ॥ टीका ॥

विषमसमचरस्थिरादिकाः गुणाः बोद्धव्याइति ॥२१॥ २२॥२३॥२४
२५॥२६।२७।२८।२९।३०।३१।३२।३३।३४।३५।३६।३७।
३८।३९।४०॥ अथराहुकेतुगतिमाह॥ मेषादित्यर्धेन॥ राहुः मेषात् मे-
षराशिसकाशात् उत्क्रमते विपरीतगतिक्रमेण क्रमशोयाति तथा
केतुः वृषाद्वृषराशेः सकाशात् क्रमात् अनुलोमगतिक्रमेण याति
॥४१॥ उक्तस्यप्रयोजनमाह॥ ऋक्षेति॥ ऋक्षसंध्यंतरे ऋक्षस्य
यद्राहुकेत्वोः प्रवेशसंध्यंतरं तस्मिन्नसौ प्रष्टाप्रश्नकर्ता जातश्चेत् भृ-
शमितिनिश्चयेनम्रियते नश्यति तथाकेतुराहुस्थिते केतुराहुसंयुक्ते
राशौ यः भसंधिः राशिसंधिः तस्मिन् प्रष्टुः मरणंभवेत् एवंरा-
हुकेतुवत् इतरेषां त्रयाणां धूमकार्मुकपरिवेषाणां प्रकाशेउदयरा-
शौ प्रष्टा व्याधिपीडितो भवति कदायदि नमृतश्चेत् दुर्बलोबुद्धि-
हीनश्च जायतइति ॥४२॥४३॥

## ॥ भाषा ॥

होवेतो विद्वान्योगसे आरंभकरके श्रीमान्योगपर्यंत क्रम जानना. चरराशीमें
क्रमसें स्थिरराशीमे विलोमसें द्विस्वभावराशीमें अर्धभागसें क्रम लेना.॥३९।
४०॥ मेषादित्यर्धेन॥ अब राहु केतुकी गति कहते हैं:- राहु मेषसें विपरीत क्रमसें
जाता है केतु वृषभसें क्रममें जाता है.॥४१॥ ऋक्षेति॥ अब राहु केतुगति-

त्रिंशद्दिशोनखाः षष्टिः सूर्यमूर्छाजिनाजिनाः
आकृतिर्भानिभार्कोग्निनखाश्छंदः शतंनखाः ५१
त्रिंशत्खवेदादिग्विश्वशतंषष्टिः शतंजिनाः वे-
दाः खवेदाःपूर्वार्द्धेपरार्धेप्राग्वदत्रतु ५२ एते
योगबलाच्चैव केवलंदुर्गतिप्रदाः दिनर्क्षचक्रसं-
ख्याः स्युरादिमध्यावसानिकाः ५३ सप्तविंश-
तिसप्तत्यांशतेषष्ठ्यांशतद्वये

॥ टीका ॥

जिनाः २४ आकृतिः २१ भानि २७ अर्काः १२ अग्नयः ३ नखाः २० छंदः २६ शतं १०० नखाः २० त्रिंशत् ३० खवेदाः ४० दिक् १० विश्वे १३ शतं १०० षष्टिः ६० शतं १०० जिनाः २४ वेदाः ४ खवेदाः ४० एते राशिपूर्वार्द्धे शुभाः परार्धेतु प्राग्वत् विलोमतः केवलं दुर्गतिप्रदा भवंति ॥ ५० ॥ ५१ ॥ ५२ ॥ अथदिनादि भागग्रहण रीतिंफलंचाह॥ दिनेत्यादिसप्तपंचाशच्छ्लोकपर्यंतं ॥ दिनानि दिवसाः ऋक्षाणि नक्षत्राणि चक्रंराशिचक्रं एतेषां संख्याः आदिमध्यावसानिकाः प्रथमद्वितीयांत्यभागभवाः ज्ञेयाः सप्तविंशतिः २७ सप्तत्यां ७० शते १०० षष्ठ्यां ६० शतद्वये २०० षट् ६ पंचाशतिः ५० विंशे २० षण्णवत्यां ९६ अशीतिके ८० षष्टिभागे ६० विंशत्यां २० शते १००

॥ भाषा ॥

की दृष्टि होवे तो यह योग २।३।५।६।७।८।९।१०।७।३०।१०।२०।६०।१२।२१।२४।२८।२१।२७।२७।१२।३।२०।२६।१००।२०।३०।४०।१०।१३।१००।६०।१००।२४।४।४० राशीके पूर्वार्द्धमें जानना परार्द्धमें विलोम क्रमसे लेना. केवल दुर्गति देनेवाले है ॥ ५० ।५१।५२ ॥ दिनेत्यादि सप्तपंचाशच्छ्लोकपर्यंतम्॥ अब कुब्जादियोगका ज्ञान कहते हैं:- दिन नक्षत्र राशि इनोंकी

नवतिश्चशतंमूर्च्छाजिनादंताजिनादिशः एवं
नवशतंप्रोक्ताः क्रमादेवंतुतत्रतु ४८ पूर्वपूर्व-
युतासंख्यालक्ष्मीयोगफलप्रदा नक्षत्रेराशि-
चक्रेतु दिवसेवामतःस्मृता ४९ शुभमित्रग्र-
हाक्रांताभावास्तद्दृष्टिसंयुताः द्वित्रिपंचत्रषट्-
सप्तवसुनंददिशोऽद्रयः ५०

॥ टीका ॥

इषु५ सुर५ दंत ३२ जिन २४ अद्रि ७ नखा २० त्रिंशत् ३० खवेदाः४० यट्सप्ततिः ७६ षष्टिः आदियुक् ६७ नवतिः ९० शतं १०० मूर्छा२१ जिनाः २४ दंताः३२ जिनाः २४ दिशः १० एवंप्रकारेण नवशतं ९०० उक्तयोगाः अनुलोमविलोमक्रमेणज्ञेयाः तत्रतु पूर्वपूर्वयुतासंख्या अनुक्रमोक्तांशसंख्या लक्ष्मीयोगफलप्रदा सौम्ययोगेभवति सैवपापयोगे तन्नाशकेति इयंसंख्यानक्षत्रचक्रे राशिचक्रेच ज्ञेया दिवसचक्रेतु वामतः विलोमतः स्मृता ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ अथसुगतिदुर्गतिप्रदानंशानाह॥ शुभमित्रेत्यादिसार्धद्विपंचाशच्छ्लोकपर्यन्तम्॥ शुभमित्रग्रहाक्रांताः शुभग्रहैर्मित्रैर्वायुताः तद्दृष्टिसंयुतावा भावाश्चेत् द्वि२ त्रि३ पंच५ षट्६ सप्त७ वसुः८ नंदाः ९ दिशः १० अद्रय ७ त्रिंशत्३० दिशः १० नखाः २० षष्टिः ६० सूर्यः १२ मूर्छा २१ जिनाः २४

॥ भाषा ॥

येवं भावके ऊपर पापग्रहोंकी दृष्टि होवे या पापग्रह बैठे होवेतो पित्रादिकोंका अशुभफल जानना. शुभदृष्टियोगोंमें शुभ जानना. बाकीके नवसौ योग जो हे उसका विचार पूर्वापर निर्णय करके देखना. तो स्पष्ट मालूम होवेगा ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ शुभमित्रेत्यादिसार्धद्विपंचाशच्छ्लोकपर्यंत। अथ सुगति दुर्गतिका ज्ञान कहतेहैं - भाव शुभमित्रग्रहोंसें युक्त होवे या उनों-

खाब्धिपंचसुदिग्भागे सहस्रेत्वाक्षिचंद्रगे ॥ ख-
खानिरूपविश्वाष्टत्रिचंद्रखखभूमिपे ॥ ५९ ॥ श-
ताधिके च जातोस्मिन्बधिरः षष्टिसंयुते ॥ कर्कि-
वृश्चिकमीनांशे तद्राशीशांशके तथा ॥ ६० ॥ पात-
केत्वोश्च शत्र्वक्षगतयोरंशके पुनः ॥ एकादित्रि-
शतैर्योवत्क्रमाच्चात्त्वसुभाजिताः ॥ ६१ ॥ आकाश-
पूर्णं धृतयोनिः शेषं लब्धसंख्यके ॥ सदोषेऽनंत-
रांशे तु जातस्यैतेऽपमृत्यवः ॥ ६२

॥ टीका ॥

शते १०० वेदे ४ मनौ १४ द्वि २ त्रि ३ शते १०० खाब्धि ४० पंच ५ दि-
ग्भागे १० सहस्रे १००० खाक्षि ३० एतेषु चंद्रगे चंद्रसहिते भागे
सति खखानिरूपे १०० विश्वे १३ अष्ट ८ त्रि ३ चंद्र १ खखभूमि-
पे १६०० शताधिके षष्टिसंयुते भागे च जातः बधिरः स्यात् बधिरो
भवति ॥ ५८ ॥ ५९ ॥ अथाऽपमृत्युकालमाह ॥ कर्कीत्यादिद्विपष्टि
श्लोकपर्यंतम् ॥ कर्किवृश्चिकमीनांशतद्राशीशांशके कर्किः वृश्चिकः
मीनः एतेषां योनवमांशः तस्मिन् अथवा तद्राशीशांशके तेच पूर्वो-
क्तास्त्रयश्च राशयः कर्किवृश्चिकमीनाख्याः तेषां यईशाः चंद्रभौ-
मगुरवः तेषां येंऽशाः कर्कमेषवृश्चिकधनुर्मीनाख्याः तेषु जात्येकव-

॥ भाषा ॥

हैः- सूर्यचंद्र राहुपातकालके विषे ६।११।८९।१००।४।१४।२।३।१००।४०
।५।१०।१०००।३०।१००।१३।८।३।१ यह योगमें चंद्रसहित भाग होवे
तो बहिरा होवे. ॥५८॥५९॥ कर्कीत्यादिद्विपष्टिश्लोकपर्यंतम् ॥ अब मृ-
त्युकाल कहते हैं:- कर्क वृश्चिक मीनांशके स्वामी क्रमसे चंद्र भौम गुरु
जानने. कर्क मेष वृश्चिक धन मीन इनोंके विषे और पातकेविषे उच्च-

कुब्जः कलांशे मूकस्तु शतद्वयशतत्रये ५५ सहस्रे द्विशते जातः पंचमे पापसंयुते द्वित्रिपं- चाष्टदिग्विश्वनृपातिधृतिभूमयः ५६ नवदिग् भसुरैस्थानैस्तिथिविश्वाष्टकैः क्रमात् गुणेन वामतः प्रोक्तो लक्ष्म्यंशे श्रीसमन्वितः ५७ र- विचंद्रतमपातकालेष्वरिभवेषु च पंचाशीतिश- तेवेदमनोद्विविशतेपुनः ५८

॥ टीका ॥

षष्ट्यां ६० शतद्वये २०० जातः कुब्जः स्यात् कलांशेतु शतद्वयं २०० शतत्रये ३०० सहस्रे १००० द्विशते २०० पंचमे ५ पापसंयुते स- तिमूको भवतीति तथा ते अंशाः द्वि२ त्रि३ पंच५ अष्ट८ दिक्१० विश्वे१३ नृपाः १६ अतिधृतिः १९ भूमयः १ नव९ दिक् १० भं २७ सुराः ३३ स्थानैः ४९ तिथिः १५ विश्वे१३ अष्टकैः ८ एतैः वामत गुणेन गुणनेन प्राप्तलक्ष्म्यंशे एतत्संज्ञके भागे जातः श्रीसमन्वि- तः प्रोक्तः ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ अथ योगांतराण्याह ॥ रवीत्यादि एकोनषष्टितमश्लो० प० ॥ रविचंद्रतमः पातकालेषु सूर्य- चंद्रराहुपातकालेषु अरिभवेषु ६।११ एषु तथा पंचाशीतितमे ८५

॥ भाषा ॥

संख्या आदि मध्य अवसानसहित मिलायके जो संख्या सो यह आवे तो २७।७०।१००।६०।२००।६।५०।२०।१६।८०।६०।२०।१०० ।६०।२०० कुब्ज होवेगा- २००।३००।१०००।२०० और पंचमभाव में पापग्रह होवे- तो मूक होवेगा-२।३।५।८।१०।१३।१६।१९।१ ।१०।२७।३३।४९।१५।१३।८ यह योगसे श्रीमान् होवेगा ॥५३॥५४॥ ५५।५६।५७॥ रवीत्यादि एकोनषष्टि० श्लो० प०॥ अब योगांतर कहते

स्वाक्ष्यद्रयस्तु षष्ट्यंशास्त्रिंशांशाः स्वरसाग्नयः
६४ अष्टषट् भूमयः कालहोराः सप्तदिनेषुच
वेदेंद्राद्वादशांशाः स्युर्नवांशागजखेन्दवः ६५
सप्तांशावेदनागास्तु द्रेष्काणास्तु षडग्नयः अर्द्ध-
होराजिनाः प्रोक्तानक्षत्राणिचराशयः ६६ भुं-
जतेचग्रहाश्चैवंमनुसंख्याश्च भुंजते राशयश्च
ग्रहाश्चैवनक्षत्राणिचभुंजते ६७ रव्यादिशि-
खिपर्यंतानवभूमेंद्रकार्मुकौ पातश्चपरिवेषश्च
कालश्चेतिचतुर्दश ६८ तेषांप्रादुर्भवेच्चैवमन्य-
दातुनवग्रहाः

॥ टीका ॥

अथ चतुर्दश ग्रहाणां नवग्रहाणांच षष्ट्यंशत्रिंशांशादीनाह ॥ स्वाक्ष्य-द्रयइत्यादिसार्धाष्टषष्टिश्लोकपर्यंतम् ॥ स्वाक्ष्यद्रयः ७२० संख्याकाः षष्ट्यंशाः भवंति तथा स्वरसाग्नयः ३६० त्रिंशांशाः भवंति अष्टषट् भूमयः १६८ कालहोराः सप्तदिनेषु संहत्या भवंति वेदेंद्राः १४४ द्वादशांशाः स्युः गजखेंदवः १०८ नवांशाः स्युः वेदनागाः ८४ सप्तांशाः स्युः षडग्नयः ३६ द्रेष्काणाः स्युः जिनाः २४ अर्धहोराः स्युः एवं नक्षत्राणिराशयश्च प्रोक्ताः तान् ग्रहाः मनुसंख्याकाः रविचंद्रभौम-

॥ भाषा ॥

क्रम उत्क्रमसे जानना. प्रथमारत्नीमें स्वल्पायु द्वितीयारत्नीमें मध्यमायु तृतीयारत्नीमें दीर्घायु उसकूं क्रम कहते है. चोथी रत्नीमें दीर्घायु पांचमी रत्नीमें मध्यमायु छट्टीरत्नीमें स्वल्पायु यह उत्क्रम जानना आरत्निके वर्ष ५।१०।१५। २०।१५।१० जानना. ॥६३॥ स्वाक्ष्यद्रयइत्यादिसार्धाष्टषष्टिश्लोकपर्यंतम् ॥ अब चौदा ग्रहोंके षष्ट्यंशादिकोंके अंक कहते है. षष्ट्यंशकू सातराशीसे गु-

पंचाशतः षडावृत्त्या स्वल्पमध्यचिरायुषः ॥ क्रमेणोत्क्रमशस्तेतुत्रैराशिकविधानतः ॥ ६३ ॥

॥ टीका ॥

चनं तथा पातके पाते अथवा औच्चशत्रुक्षगतयोः उच्चराशिशत्रुराशिस्थयोः ग्रहयोः अंशके राशिनवांशे यावदेकादित्रिशतं एकांकमारभ्यशतत्रयांकपर्यंतं ये अंकाः तैः सुभाजिताः ये आकाशपूर्णधृतयः १८०० अष्टशताधिकसहस्रांकाः यावत् निःशेषंभवेयुः तावद्भाजनीयाः ततः लब्धसंख्यके अंशे सदोषे पापसाहित्यादिरूपे जातस्य उत्पन्नस्य जंतोःअपमृत्यवः ज्ञेयाइति ॥ ६० ॥ ६१ ॥ ६२ ॥ अथ स्वल्पमध्येचिरायुर्ज्ञानमाह ॥ पंचाशतइति ॥ पंचाशतः ५० षडावृत्त्या आवृत्तिषट्केन किंचिदधिकाष्टांकेन मुहुर्मुहुः गणनया स्वल्पमध्यचिरायुषः क्रमेणोत्क्रमशः त्रैराशिकविधानतः अनुपातरीत्यागणनेन स्वल्पमध्यचिरायुषोज्ञेयाः प्रथमावृत्तौ स्वल्पायुषः द्वितीयावृत्तौ मध्यमायुषः तृतीयावृत्तौ चिरायुषः अयं क्रमः उत्क्रमस्तु चतुर्थावृत्तौ चिरायुषः पंचमावृत्तौ मध्यमायुषः षष्ठावृत्तौ स्वल्पायुष इति तत्र वर्षाण्याह ॥ शराः ५ दिशः १० तिथयः १५ नखाः २० तिथयः १५ दश १० एवंषडिति ॥ ६३ ॥

॥ भाषा ॥

राशीशत्रुराशीके ग्रहके अंशोके विषे एक अंकसें लेके तीनसो अंक पर्यंत जो अंक है उनके भाग लेना. अठारासोका जहांतक निःशेष होवे वहांतक भाग लेके लब्ध जो है वो संख्यातुल्य अंकमें अंश पापग्रहका आवेतो उतने वरसोमें अपमृत्यु जानना ॥ ६० ॥ ६१ ॥ ६२ ॥ पचाशन इति ॥ अब थोडेमें स्वल्पायुषकामत कहते हैं:- पचास ५० कुच्छअधिक आवृत्तिके वर्षमें वारंवार गणना त्रैराशिकरीतिसें करके स्वल्पमध्य चिरायु

प्रमाणराशयश्चैतेभागहाराः कलात्मकाः ७२
त्त्वदंशकलाइच्छाराशयोगुणराशयः कटुकोम-
धुरस्तिक्तः कषायोलवणाम्लकौ ७३ कलांशे
क्रमशोगण्याः षष्ठ्यंशेव्युत्क्रमात्स्मृताः त्रिंशां-
शेतुकषायादिः कालहोरांशकेपुनः ७४ तिक्ता-
दिद्वादशांशेतुमधुरादिनवांशके आम्लादिमुनि-
भागेतुद्रेष्काणेमधुरादिनः ७५ अर्धहोरांशके

॥ टीका ॥

पंचदश १५ नखाः २० तत्त्वानि २५ अमराः३३ सत्र्यंशा अमराः त्र्यं-
शसहिताः ३३ षडंशोनाः अमराः षष्ठांशोनाः ३३ चत्वारिंशत् ४०
शतं १०० रवेर्विंदवः १५० अयंकलांशाद्यर्धहोरांशभोगकालः का-
लांशादीनां अर्धहोरांशस्यच भोगकालः प्रकीर्तितः कथितः ॥ ६९ ॥ ७०
॥ ७१ ॥ प्रमाणेति ॥ अयंश्लोकस्त्रैराशिकगणितप्रकरणेप्रमाणीभूतः
कलात्मकाः घटिकात्मका एतेप्रमाणराशयश्च भागहाराः भागंहारयं-
तितथाभूताः भागहरणसाधनीभूताइत्यर्थः अवर्तानिशेष., चपरं तत्त्व-
दंशकला, तेषांतेषामंशानां कलाभूता इच्छाराशयः इच्छासंज्ञकराशयः
गुणराशयो भवंति इति ॥ ७२ ॥ अथ कलांशादिषु उत्पन्नस्य मियरसा-
नाह ॥ कटुकइत्यादिसार्धपंचसप्ततिश्लोकपर्यंतं ॥ कलांशे जातस्य
अंशक्रमात् कटुकस्तिक्तः मधुरःमिष्टः तिक्तः कटुः कषायः तुवरः

॥ भाषा ॥

अनुराधासे ■ यह क्रमसे तारा कहे हैं. वहा कालांश २।१५।२०।२५।३३
।३३।३३।४०।१०००।१५०। यह कलांशका भोगकाल कह्या ॥ ६९।७०।७१
॥ कटुकइत्यादिसार्धपंचसप्ततिश्लोकपर्यंत ॥ अथ जो कलांशादिकमें उत्पन्नभयेहु-
वेका फल कहते हैं. कलांशमें जो उत्पन्न भया उसके क्रमसे कटुक मिष्ट तिक्त तु-

दस्रात्पंचभगात्षट्च पंचार्द्राद्वारुणादपि ॥ ६९ ॥ अ-
कूर्पात्सप्तक्रमात्प्रोक्तास्तत्तदंशेषु सर्वदा ॥ अ-
क्षिणी पंचदश च नखास्तत्त्वं तथा मराः ॥ ७० ॥ सत्र्यं-
शाश्वं षडंशोनाश्चत्वारिंशत्क्रमादथ ॥ शतं रवेर्भि-
दवः प्रोक्ता विनाडी तनवोऽपि च ॥ ७१ ॥ कलांशाद्य-
र्धहोरांशभोगकालः प्रकीर्तितः ॥

॥ टीका ॥

बुधगुरु शुक्रशनि राहुकेतु भूमेंद्र कार्मुक पानपरिवेषकालाख्याः च-
तुर्दशग्रहाः भुजते। कदा तेषांप्रादुर्भावे सति भूमेंद्रादीनां प्रकटीभा-
वेसति। अन्यदा अन्यकालेतु नवग्रहाः रव्यादिकेत्वंताएवेति ॥ ६४ ॥
॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ अथ नक्षत्राणि गणयति ॥ दस्रादीनि सार्धै-
कसप्ततिश्लोकम् ॥ दस्रात् अश्विनीनक्षत्रात्पंच ५ भगात् पूर्वानक्ष-
त्रात् षट् ६ आर्द्रात् पंच ५ वारुणात् शततारकासकाशात् चत्वारि ४
कूर्पात् वृश्चिकराशिविहितात् पूर्वोक्तभगादिषट्कानंतरप्रथमप्राप्ता-
त् अनुराधासकाशादित्यर्थः सप्त ७ एवंक्रमात् तत्तदंशेषु सर्वदाता-
राः प्रोक्ताः ज्ञेयाः तत्रविनाडीतनवः विनाडीरूपाणि अक्षिणी २

॥ भाषा ॥

एसा किये तो षष्ठ्यंशयोगांक ७२० भये वैसे आगे जानना. त्रिंशांशके ३६०
कालहोराके १६८ द्वादशांशके १४४ नवांशके १०८ सप्तांशके ८४ द्रेष्काणके ३६
अर्धहोराके २४ यह अनुक्रमसें नक्षत्रराशि सूर्य १ चंद्र २ मंगळ ३ बुध ४
गुरु ५ शुक्र ६ शनि ७ राहु ८ केतु ९ धूम १० इंद्रचाप ११ पान १२ परिवेष १३
काल १४ इनोंका ऊपर लिखे हुवे अंशोंमें प्रकट होवे पीछे फलका विचार दे-
खना. ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ दस्रादीति सार्धैकसप्ततिश्लोकपर्यंत ॥ अ-
बनक्षत्रकी गणना कहते हैं- अश्विनीसें ५ पूर्वासें ६ आर्द्रासें ५ शततारासें ४

त्रिवेदाद्र्यंकविश्वेंद्रनरवच्छंदोजिनायमाः ७८
पंचाशच्चशतंपूर्वयुतामृतसुतास्मृता पुत्राणांतु
कलांशेतुशेपेजातामृताद्दिज ७९ द्वादशेचचतु-
र्विंशेचतुस्त्रिंशेसुरांशके

॥ टीका ॥

प्रपष्ट्यंशे भास्करे सूर्ये सति उत्पन्ना कन्या वंध्या भवति तथा त्रि ३ षट् ६ नव ९ त्रि ३ ख० अर्क १२ अब्धि ४ जिन २४ दन ३२ सुर ३३ एते अंकाः क्रमात् नव ९ दिक् १० भानि २७ जिनाः २४ अर्काः १२ सूर्याः १२ तानाः ४९ त्रयः ३ पंच ५ पंचाशत् ५० एतैः गुण्याः भांशांकपरिमिते प्रपष्ट्यंशे वंध्या पूज्या प्रकीर्तिता कथिता ॥ ७६॥७७॥ अथ मृतसुताज्ञानमाह ॥ त्रिवेदेत्यर्धकद्वयेन ॥ त्रयः ३ वेदाः ४ अद्रयः ७ अंकाः ९ विश्वे १३ इंद्राः १४ नरवाः २० छंदांसि २६ जिनाः २४ यमाः २ पंचाशत् ५० शतं १०० एतान्पूर्वांकयुतान्कृत्वा तस्मिन्भास्करे जाता कन्या मृतसुता ज्ञेया ॥ ७८ ॥ अथ प्रकारांतरमाह ॥ पुत्राणामित्यर्धेन ॥ कलांशे शेपे नाम उक्तावशिष्टे पोडशांशे भास्करे सति पुत्राणां मध्ये केचिज्जाता अपि मृता ज्ञेयाः हे द्विजेति ॥ ७९॥ अथ जातस्य संन्यासित्वज्ञानमाह ॥ द्वादशे-

॥ भाषा ॥

कन्या वंध्या होती है. तथा ३।६।९।३।०।१२।४।२४।३२।३३ यह क्रमसें अंक ९।१०।२७।२४।१२।१२।४९।३।५।५० यह षष्ट्यंशमे कन्या उत्पन्न भई होवे तो पूज्य होवे. ॥ ७६॥७७॥ त्रिवेदेत्यर्धकद्वयेन॥ अब मृतसुतायोग कहते हैः- ३।४।७।९।१३।१४।२०।२६।२४।२।५०।१०० इस अंकोमे पूर्वके अंक युक्त करके वो अंशमे सूर्य होवे तो मृतसुता योग जानना. ॥ ७८॥ पुत्राणामित्यर्धेन॥ अब मृतपुत्र ज्ञान कहते हैं:- पोडशांशमे सूर्य होवे तो पुत्रोंमें कितनेक पुत्र मृत हुवे जानना ॥ ७९॥ द्वादशेत्यादि एकाशीति श्लोकपर्यन्तम ॥ अब संन्यासीका योग

पितुः कार्येतुवृद्धिः स्याद्वितीयेपितृवेश्मतः अ-
न्यत्रगत्वातत्रैवस्वयोग्येनचकर्मणा २९ स्वदेह-
पोषकोन्येंऽशे धनीकृत्यविदस्थितः चतुर्थे पंचमे
चैवपट्टबंधादिसंयुतः ३० अतीव धनवान् सस्या-
त्सप्तेत्वंशेस्वदेहभाक् क्षेत्रदारादिरन्धातुव्यथा-
व्याधिसमन्वितः ३१ नवमेधनहानिः स्यात्पुत्रदा-
रविवर्जितः यावद्दशनवांशाश्चषड्विंशेवदथद्वये
३२ राजप्रियस्तत्रचंडः शुद्धः स्यादंशकेनतः

॥ टीका ॥

शे फलहीनः फलरहितः सन् जीवति अथषड्विंशेरश्मौ प्रथमांशे दरि-
द्रः सुतः पितुः कार्यं भवति वृद्धिश्चस्यात् द्वितीये पितृगृहादन्यत्र
गत्वा स्वयोग्य कर्मणा स्वदेहपोषको भवति अन्येतृतीयेंशे धनी कृ-
त्यवित्चस्थितः चतुर्थेपंचमेच पट्टबंधादि संयुतः दीक्षितः पुरग्रामपट्ट-
णपट्टबंधाग्रहारसंयुतोवेत्यर्थः षष्ठे अतीव धनवान् सप्तमेंऽशे स्वदे-
हभाक् अष्टमेंशे क्षेत्रदारादिरन्धा जीवति व्यथाव्याधि समन्वितः
नवमेभवति दशमे धनहानिः पुत्रदारादिवर्जितः यावन्नवांशदशांशफ-
लान्युक्तानि तान्येव अथ द्वयेसप्तविंशतिरश्मौ अष्टाविंशतिरश्मौ च
ज्ञेयानि विशेषस्तु राजप्रियः चंडः शुद्धः इति तत्रज्ञेयः ॥२९।२९।३०।३१
॥३२॥

॥ भाषा ॥

निष्फल जीना होवे. छब्बीसवी रश्मीके प्रथमांशमे दरिद्री पिताका काम
करनेवाला होवे. दूसरे अंशमें अपने घरकूं छोडके दूसरे ठिकाने जायके
उत्तम कर्मसे देहपोषण करे तीसरे अंशमें धनवान् कामकूं जाननेवाला
होवे चौथे पांचवे अंशमें पट्टबंधनादिकसें युक्त दीक्षित होवे. छट्टे अं-
शमें धनवान् होवे सातवे अंशमें देहपोषण होवे. आठवे अंशमें खेत.

एकोनत्रिंशेरश्मौतुसुखीस्याच्चद्वितीयके ॥३३॥ रा-
जसेवातृतीयेंऽशेकृत्याकृत्यविदीश्वरः ॥ बहुबंधुयु-
तःश्रीमान्मानवाहनसंयुतः ॥३४॥ देशग्रामाधिकारी
त्रिंशेत्वेतैः समन्वितः ॥ सेनानीर्नीतिमाञ्छूरः पं-
चमांशेभवेदिदम् ॥३५॥ षष्ठेतुविजयोयुद्धे सप्तमेऽ-
पिरुजायुतः ॥ न्यूनायतिस्तुवस्वंशेनवांशेत्वधिका-
यतिः ॥३६॥ त्रयस्त्रिंशेतुराजानः पष्ठांशेवातृतीय-
के ॥ अभिषिक्तोभवेच्चद्वापट्टबंधस्तुयोगतः ॥३७॥

॥ टीका ॥

अथ एकोनत्रिंशादिरश्मीनांफलान्याह ॥ एकोनत्रिंशइत्यादित्रिचत्वारिंश-
त्पर्यंतम् ॥ एकोनत्रिंशे रश्मौ प्रथमांशेसुखीस्यात् द्वितीयेराजसेवीस्यात्
तृतीयेंऽशेकृत्याकृत्यवित् कार्याकार्यज्ञः ईश्वरोधिपतिः बहुबंधुयुतः श्री-
मान् मानवाहनसंयुतः देशग्रामाधिकारीच चतुर्थादिनवांशपर्यंतं क्रमात्
स्यात् त्रिंशेरश्मौ एतैरुक्तफलैः समन्वितः एकत्रिंशेरश्मौ तु सेनानीः नी-
तिमान् शूरः इदंपंचमांशेफलंभवति षष्ठेतुयुद्धे विजयः सप्तमेरुजायुतः
न्यूनायतिः वस्वंशे अष्टमेंशे भवति नवांशेतु अधिकायतिः एवमेवद्वात्रिंश-
रश्मौज्ञेयं तत्रविशेषानुक्तत्वात् ॥ त्रयस्त्रिंशेरश्मौ षष्ठांशेतृतीयेवा रा-

॥ भाषा ॥

रसे, स्त्रियादिककी, रक्षी, करे गौवन करे- नवम अंशमें मानस दुखी रोगी होवे,
दशमे अंशमे धनहीन स्त्रीपुत्ररहित होवे- सत्ताईस अट्ठाईस रश्मीके अंशोंमे
पूर्वोक्त फल जानना ॥२८।२९।३०।३१।३२॥ एकोनत्रिंशइत्यादित्रिचत्वारिंशत्प-
र्यंत ॥ ओगनतीसवी रश्मीके प्रथमांशमे सुखी होवे, दूसरे अंशमे राजसेवी होवे
तीसरे अंशमे सत्कर्मकू कर्मकू जाने चौथे अंशमे अधिपति होवे पांचवे अंश-
मे बोहोत बंधुसमागममे रहै, छट्ठे अंशमे श्रीमान् होवे, सातवे अंशमें सन्मान

रश्मौतथाचतुस्त्रिंशेचतुर्थांशेपराजयः ॥ तृतीये पंचमेषष्ठेयुद्धेतुविजयीभवेत् ॥ ३८ ॥ अष्टमेनवमेंऽशेतुवृद्धिः स्याद्दशमेनहि ॥ षडंशाधिपयेभस्माच्चत्वारिंशत्ततःपरे ॥ ३९ ॥ द्वितीयेचतृतीयेचचतुर्थेचाद्यके तथा ॥ राजास्यात्पंचमेषष्ठे समाष्टनवमे ततः ॥ ४० ॥ दशमेचक्रमाद्युद्ध्याधिर्वाथपराजयः ॥ इतरांशेषु संख्यातः सर्वसंपत्समन्वितः ॥ ४१ ॥ ततःपरंचसप्ताद्स्याच्चतुर्थेपञ्चमेजयी ॥ अंशास्तुल्यास्तुनेवैवंविपरीतफलंविदुः ॥ ४२ ॥ व्याधिरुक्तवदेवस्याद्यावद्विंशतिरश्मयः ॥ यद्यप्यंशाः परंनात्र अधिकारंभजंतिते ॥ ४३ ॥

॥ टीका ॥

जातो भवति यद्वा योगतः योगवशात्पट्टबंधः स्यात् अथवा राज्याभिषिक्तो भवति ॥ चतुस्त्रिंशे रश्मौ चतुर्थांशे पराजयः तृतीयपंचमषष्ठेषु तु युद्धविजयी भवेत् अष्टमेनवमेंऽशेतु वृद्धिः स्यात् दशमे षडंशाधिपये नहि फलाभावः तस्मा च्चतुस्त्रिंशरश्मेः सकाशात् यावच्चत्वारिंशद्रश्मिपर्यंतास्येपरेऽन्ये रश्मयः संति तेषामेकमेवफलमुच्यते तदेव द्वितीयतृतीयचतुर्थांशेषु राजास्यात् सप्ताष्टनवमदशमेषु क्रमात् युद्धव्याधिः पराजयः इतिफलानिज्ञेयानि इतरांशेषु सर्वसंपत्समन्वितः संख्यातः

॥ भाषा ॥

पावे वाहन मिले. आठवे अंशमें देशाधिपति होवे. नवम अंशमें ग्रामाधिकारी होवे. तीसरश्मीके अंश फलविचारमें पूर्वोक्त फल जानना. एकतीसवी रश्मीके पांचवे अंशमें सेनाधीश नीतिमान् शूर होवे. छट्टे अंशमें युद्धमें जय पावे. सातवे अंशमें रोगयुक्त होवे. आठवे अंशमें लाभ थोडा होना रहे. नवम अंश-

अथस्थानगतानांतु रव्यादीनां क्रमात्फलम् ।
ततोरविः शिरोरोगं बन्धूनांचविरोधतां ॥ ४४ ॥

॥ टीका ॥

कथितः ततःपरंचतुस्त्रिंशद्रश्म्यनंतरं रश्मिपुसत्सु सम्राट् चक्रवर्ती स्यात् तत्रपंचमचतुर्थांशयोः जयीजेता सम्राट् भवति एवंउक्तसंख्ययातुल्या अंशानैव चेत् नाम एतदवशिष्टांशेइत्यर्थः विपरीतफलं विदुः उक्तविपर्यासः स्यात् तत्रप्रथमादियावद्विंशतिरश्मिपर्यंतं उक्तवत् तुल्यरश्मिराहित्येव्याधिःस्यात् अथात्र यद्यपिपरं अंशानोक्ताः तथापि तेषु स्वाधिकारफलंभजंतीतिज्ञेयं ॥३३।३४।३५।३६।३७।३८।३९।४०।४१।४२।४३॥ अथरव्यादीनां स्थानवशात्फलान्याह ॥ तत्रादौरविस्थानफलान्याह ॥ अथेत्यादि अष्टचत्वारिंशच्छ्लोकपर्यंतम् ॥ अथानंतरं स्थानगतानां तन्वादिस्थानस्थितानां रव्यादीनां ग्रहाणां क्रमात्क्रमेण प्रथमादिद्वादशांतमित्यर्थः तदेवाह रविः सूर्यः तनुगतः शिरोरोगं शिरःशूलं बंधूनांविरोधतां बांधवविरोधं इति द्वितीयभावे धनहानिक-

॥ भाषा ॥

में बोहोत लाभ होवे. बत्तीस रश्मीके अंशमें पूर्व सरिखा फल जानना ते हतीस रश्मीके छट्टे तीसरे अंशमें राजा होते हैं. चोतीस रश्मीके चोथे अंशमें पराजय हार होवे. तीसरे पाचवे छट्टे अंशमें जीत होवे. आठवे नवम अंशमें वृद्धि होवे चौतीस रश्मीसें लेके चालीस रश्मीतक जो रश्मी हैं उसके प्रथम,द्वितीय,तृतीय,चतुर्थ यह अंशोमें राजा होवे. सातवे अंशमें युद्ध. आठवे अंशमे व्याधि, नवम अंशमें व्याधि. दशम अंशमें पराजय होवे. बाकीके अंशोमे सर्व संपत्ति प्राप्त होवे. ॥ ३३।३४।३५।३६।३७।३८।३९।४०।४१।४२।४३॥ अथेत्यादि अष्टचत्वारिंशच्छ्लोकपर्यंतम् ॥ अब सूर्यादिग्रहोका बारा भावोंका फल कहते हैं – सूर्य भावमें होवे तो शिरोरोग

द्वितीयेधनहानिश्चतृतीयेमित्रवर्धनम् धनला-
भंसुखेसौख्यंशत्रुभिश्चसमागमं ४५ पंचमे
पुत्रलाभंचबुद्धिमुद्यमसिद्धिकृत् षष्ठेधनंजयं
कुर्यात्सप्तमेस्त्रीविरोधनम् ४६ अष्टमेव्या-
धिहानिंचनवमेमित्रबंधनम् भाग्यहानिंचदशमे
धनलाभंसुखंजयं ४७ एकादशेधनानांचसिद्धिंमि-
त्रसमागमम् द्वादशेधनहानिंचजयंवाकुक्षिरु-
क्क्रमात् ४८

॥टीका॥

शनि तृतीयेभावे मित्रवर्धनं धनलाभंकरोति सुखे-चतुर्थभावे सौख्यं तथा शत्रुभिः समागमं करोति पंचमेभावे पुत्रलाभं बुद्धिं उद्यमे सिद्धिकृत् भवति षष्ठेभावे धनंजयंचकुर्यात् सप्तमेभावे स्त्रीविरोधनंकुर्यात् अष्टमेभावे व्याधिंहानिंच कुर्यात् नवमेभावे मित्रवंधनं भाग्यहानिंचकुर्यात् दशमेभावे धनलाभंसुखं जयंचकुर्यात् एकादशेभावे धनानांसिद्धिं मित्रसमागमंचकुर्यात् द्वादशेभावे धनहानिं व्ययं कुक्षिरुजंच क्रमाद्वाकुर्यात् इति ॥४४।४५।४६।४७।४८॥

॥भाषा॥

बंधुविरोध करे १ धनहानि करे २ मित्रकी वृद्धि धनलाभ करे. ३ सुख करे शत्रुसमागम करे ४ पुत्रलाभ बुद्धिवृद्धि उद्योगकी सिद्धि करे. ५ धनप्राप्ति, जयप्राप्ति करे. ६ स्त्रीविरोध करे. ७ व्याधि और हानि करे. ८ मित्रका बंधन भाग्यकी हानि करे ९ धनलाभ, सुख, जय, प्राप्ति करे. १० धनसिद्धि, मित्रसमागम करे. ११ धनहानि, खर्च, कुक्षिरोग करे १२ इतिसूर्यभावफलम् ॥४४॥४५।४६।४७।४८॥

चंद्रेलग्नेचकलहंद्वितीयेधनयोजनम् तृतीयेभ्रातृभिर्लाभंधनवस्त्रादिसंग्रहं ४९ चतुर्थेधनवस्त्रादिवाहनादिसुसंयुतम् तीक्ष्णेधनीसुतयुतः परिपूर्णसंपत्षष्ठेतुरोगसहितंकुमतिंचकामे ५० विद्याधनक्षेत्रसुखादियुक्तोमृत्तौचमृत्युविषयःखलुकुक्षिरोगी स्त्रीस्वर्णदासायतिरेवधर्मेमानेसुचारित्रगुणंधनंच ५१ लभेचुचेतरसकलंव्ययेतुधनस्यारिःफं कुरुते शशीतु

॥ टीका ॥

अथ भावेषु चंद्रफलमाह ॥ चंद्रइत्यादिसार्धैकपंचाशच्छ्लोकपर्यंतं॥ चंद्रः लग्ने वर्तमानः कलहं करोति द्वितीये धनयोजनं करोति तृतीये भ्रातृलाभं धनवस्त्रादिसंग्रहंच करोति चतुर्थभावे धनवस्त्रादिसंयुतं वाहनादिसंयुतंच करोति तीक्ष्णेपंचमे सुतयुतः धनी परिपूर्णसंपद्युतः स्यात् षष्ठेतु रोगसहितंकुमतिंच करोति कामे सप्तमभावे विद्याधनक्षेत्रसुखादियुक्तः भवेत् मृत्यौ अष्टमभावे मृत्युविषयः कुक्षिरोगीच भवति धर्मे नवमभावे स्त्रीस्वर्णदासानामायतिर्भवेत् माने दशमभावे सुचारित्रंगुणंधनंचकरोति लाभे एकादशभावेइतरसकलंपूर्वोक्तंफलं व्ययेद्वादशभावेतु शशी धनस्यारिःफं द्रव्यनाशंकरोति ४९।५०।५१

॥ भाषा ॥

॥चंद्रइत्यादि सार्धैकपंचाशच्छ्लोकपर्यंतम्॥ अथ चंद्रका द्वादशभावका फल कहतेहैं:- चंद्र १ कलह करे. धनप्राप्तिकरे. २ भाईसे लाभ वस्त्रादिका संग्रह करे. ३ धनवस्त्रवाहन प्राप्ति करे. ४ धनपुत्र सर्व संपत्तिकी प्राप्ति करे. ५ रोग कुबुद्धि करे. ६ विद्याधन भूमी सुखकी प्राप्ति करे. ७ मृत्युदुःख

कुजेलग्नेतुचापल्यात्क्षतंस्वेधननाशनम् ५२
विक्रमेभ्रातृमरणंधनलाभःसुखंयशः चतुर्थे
बंधुमरणंशत्रुवृद्धिर्धनव्ययम् ५३ पंचमेपितृ-
हानिंचधनायतिसुतोयशः षष्ठेरिपुसमृद्धिंचज-
यंबंधुसमागमम् ५४ अर्थवृद्धिंस्त्रियांदारमरणं
नीचसेवनम् नीचस्त्रीसंगमोमृत्यौधननाशंपरा-
भवम् ५५ पराभवमनर्थंचधर्मेपापरुचिक्रिया
धनंव्ययंचदशमेधनलाभंकुकर्मच ५६ लाभे
धनंसुखंवस्त्रंस्वर्णक्षेत्रादिसंग्रहम् व्ययेनेत्ररु-
जंभ्रातृनाशंचकुरुतेकुजः ५७

॥ टीका ॥

अथ भावेषु भौमफलान्याह ॥ कुजेइत्यादिसप्तपंचाशच्छ्लोकपर्यंतम् ॥ लग्नस्थाने कुजे भौमेसति चापल्याच्चपलत्वात् क्षतव्याधिः स्यात् स्वे द्वितीये भावेधननाशं विक्रमे तृतीयभावे भ्रातृमरणं धनलाभः सुखं यशश्च चतुर्थभावे बंधुमरणं शत्रुवृद्धिः धनव्ययश्च पंचमे पितृहानिः धनायतिः पुत्रलाभः यशश्च षष्ठेभावे रिपुसमृद्धिः जयः बंधुसमागमः अर्थवृद्धिश्च स्त्रियांसप्तमभावे दारमरणं नीचसेवनं नीचस्त्रीसंगमश्च

॥ भाषा ॥

कुक्षिरोगी होवे ८ स्त्रीसुवर्णदासोकी प्राप्ति करे. ९ उत्तमगुणकी और धनकी प्राप्ति करे १० ग्यारवेमें रत्नका फल जानना. ११ द्रव्यनाश होवे. १२ इतिचंद्रभावफलम् ॥ ४९।५०।५१॥ कुजेइत्यादिसप्तपंचाशच्छ्लोकपर्यंतम् ॥ अब मंगलका द्वादशभावफल कहते हैः— मंगल १ होवेतो चपलस्वभावके लिये छिद्रका व्याधि होवे. १ धननाश करे. २ भाईका नाश धनलाभ सुख यश प्राप्ति करे. ३ बंधुमरण शत्रुवृद्धि धनप्राप्ति खर्च करे. ४ पिताकी हानि, धनप्राप्ति

बुधः षष्ठेऽरिवृद्धिंचयुद्धेसतिपराजयम् मृतौ बन्धुविहीनत्वंबंधनंव्ययभेव्ययं ५८ भावोक्तफलवृद्धिंतुपरेतुकुरुतेतथा गुरुशुक्रौतृतीयेतु शत्रुवृद्धिंधनक्षयम् ५९

॥टीका॥

मृतौ अष्टमभावे धननाशः पराभवः अनर्थश्च धर्मेनवमभावे पापरुचिःक्रियाधनव्ययश्च दशमेभावे धनलाभः कुकर्मंच लाभेएकादशभावे धनंसुखं वस्त्रं स्वर्णक्षेत्रादिसंग्रहश्च व्ययेभावे नेत्ररुजं भ्रातृनाशः एवं कुजः फलं कुरुते ॥५२।५३।५४।५५।५६।५७॥ अथ भावेषु बुधफलान्याह ॥ बुधइतिसार्धेन ॥ बुधः षष्ठेभावे अरिवृद्धिः युद्धेसतिपराजयंच मृतौ अष्टमस्थाने बंधुहीनत्वं बंधनंच व्ययभे द्वादशभावे व्ययं नाशं परेषु शेषेषुभावेषु भावोक्तफलवृद्धिं तत्तद्भावविहितफलाधिक्यं कुरुतइति ॥५८॥ अथ भावेषुगुरुशुक्रफलं ॥ गुर्वित्यादिसार्धैकषष्टिश्लोकपर्यंतम्॥ अथगु-

॥भाषा॥

पुत्रलाभ यथाप्राप्ति करे. ५ शत्रुवृद्धि जयबंधुसमागम अर्थवृद्धि करे ६ स्त्रीमरण, नीचसेवन नीचस्त्रीसंगम करे ७ धननाश पराभव अनर्थ करे ८ पापकर्ममें रुचि, धनखर्च करे ९ धनलाभ कुकर्म करे. १० धनसुख, वस्त्र, सुवर्ण, भूमीका लाभ करे. ११ नेत्ररोग, भाईका नाश करे १२ इतिमंगलफलम् ॥५२। ५३।५४।५५।५६।५७।बुधइतिसार्धेन॥ अब बुधका द्वादशभावका फल कहते हैं:- बुध१ शरीरमें सुख करे. १. धनवृद्धि करे २. बंधुवृद्धि करे ३. भूमि घरका सुख करे४. पुत्रवृद्धि विद्याप्राप्ति करे.५. शत्रुकी वृद्धि करे. युद्धमें पराजय करे. ६ स्त्रीसुख करे ७. बंधुहीन बंधनफल करे.८. भाग्यवृद्धि करे ९ व्यापार वृद्धि करे १०. आनंद करे११. खर्च करावे १२. इतिबुधफलम् ॥ ५८ ॥ गुर्वित्यादिसार्धैकषष्टिश्लोकपर्यंतं॥ अब गुरु और शुक्रका द्वादशभावका फल कहते हैं:- गुरु, शुक्र१ घरमें शरीरसु-

षष्ठेपराजयंव्याधिमष्टमेबंधनंतथा रिःफेचौरहृ-
-तस्वंतुनेत्ररोगपराजयम् ६० सप्तमेचचतुर्थेचसे-
नापत्यधनायतिः सर्वसंपत्समृद्धिंचनवमेराजसं-
पदम् ६१ पूर्वोक्तफलयोगमन्येष्वपिसमंभवेत्
कुजवद्रविवन्मंदःपादव्यंशदलंदतः ६२ पादो-
नमेकंमित्राधिमित्रस्वर्क्षेचकोणभे

॥ टीका ॥

रुशुक्रौ तृतीयभावे धनवृद्धिं धनक्षयंचकुरुतः षष्ठेपराजयं व्याधिंच कुरुतः अष्टमेबंधनंकुरुतः रिःफे द्वादशभावे चौरहृतस्वंचौरैः हृतंस्वं द्रव्यं यस्य तथातंकुरुतः अपिचनेत्ररोगंपराजयंचेति सप्तमे चतुर्थेच भावे सेनापत्यधनायतिः सर्वसंपत्समृद्धिश्च नवमेराजसंपत्पूर्वोक्त-फलसंयोगं पूर्वोक्तफलप्राप्तिंच कुरुतः अन्येष्ववशिष्टेषु भावेषु समं तत्त-द्भावतुल्यंफलंभवेदिति ॥५९।६०।६१॥ अथमंदफलमाह ॥ कुजेतिपा-देन ॥ मंदःशनिः कुजरव्युक्तद्वादशभावफलदो भवति ॥ अथ अधि-मित्रादिस्थानस्थितानांभावोक्तफलन्हासवृद्धी आह ॥पादमित्यादि सार्धत्रिषष्टिश्लोकपर्यतम् ॥ मित्राधिमित्रस्वर्क्षत्रिकोणोच्चेषु वर्तमानेषु

॥ भाषा ॥

रवकरे १ धनवृद्धि करे२ धनवृद्धि धनखर्चभी करे३ घरभूमिका सुख करे४. विद्या प्राप्ति पुत्रसुख करे५ पराजय और व्याधि करे ६. स्त्रीसुख करे ७. बंधन करे८ भाग्योदयकरे ९. व्यापार राजसन्मान करे १० लाभ करे११. द्रव्य-चोरीमें जाता रहे ॥ इतिगुरुशुक्रफलम् ॥ ५९।६०।६१ ॥ कुजेतिपादेन॥ अब शनीका जो फल है सूर्य मंगल यह दोनोके भावमें जोफल कहाहै वो जानना ॥पादमित्यादिसार्धत्रिषष्टिश्लोकपर्यंतम् ॥ अब भावोक्त फलकी न्हास वृद्धि कहते हैः- जो ग्रह मित्रसेत्री होवे तो पादमात्र भावफल जानना। अधिमित्रका

उच्चेतुनीचेत्रिगुणंमध्यरौद्विगुणंततः ॥ ६३ ॥ अरौ सार्धंक्रमात्कालफलजस्त्वेवनिर्णयः ॥ शुभैर्दृष्टो रवीराजसेवाफलधनाप्तिः ॥ ६४ ॥ शत्रुभिः कलहं दुःखंरुजंजठरनेत्रयोः मित्रदृष्टोजयंबंधुलाभं पापैश्चरोगिताम् ॥ ६५ ॥

॥ टीका ॥

ग्रहेषु पूर्वोक्तं भावफलं क्रमात्पादत्र्यंशदलपादोनैकांशफलदाग्रहाःस्तुः नीचेवर्तमानेषुत्रिगुणं अध्यरौ अधिशत्रुस्थाने द्विगुणं अरौ शत्रुक्षेत्रे वर्तमानेषु ग्रहेषु सार्धं क्रमात्कालफलजो निर्णयः ॥ ६२ ॥ ६३ ॥ अथर- व्यादीनां दृष्टिवशात्फलं कथयन् आदौ रविफलमाह ॥ शुभैरिति पंचपद्य- श्लोकपर्यंतम् ॥ अथरविः शुभैः शुभग्रहैः दृष्टः विलोकितश्चेत् तस्य फलं राजसेवा धनाप्तिश्च एवं शत्रुभिः दृष्टोरविश्चेत्कलहं दुःखं जठरने- त्रयोः रुजं चेति फलानि मित्रदृष्टोरविश्चेज्जयः बंधुलाभश्चेति पापैः पा- पग्रहैः दृष्टोरविश्चे द्रोगिता रुग्णत्वमितिरविफलानि दृष्टिवशाज्ज्ञेयानि ॥ ॥ ६४ ॥ ६५ ॥

॥ भाषा ॥

होवेतो तृतीयांश भावफल जानना. स्वक्षेत्रका होवेतो अर्धभाग फल जानना. त्रिकोणका होवेतो तीनभाग फल जानना. उच्चराशीका होवेतो संपूर्ण फल जानना. नीचराशीका होवेतो त्रिगुणहीन फल जानना. अधिशत्रुका होवेतो द्विगुणहीन फल जानना. शत्रुक्षेत्रका होवेतो अर्धहीन फल जानना ॥ ६२ ॥ ६३ ॥ शुभैरितिपंचपद्यश्लोकपर्यंतम् ॥ अब दृष्टिका फल कहते हैं:- सूर्य शुभग्रहकी दृष्टिसें युक्त होवेतो राजसेवा धनप्राप्ति करे. शत्रुग्रहोंकी दृष्टी होवे, तो कलह, दुःख नेत्ररोग होवे. मित्रग्रहोंकी दृष्टि होवेतो जयबंधुलाभ होवे. पापग्रहोंकी दृष्टि होवेतो रोगी होवे. इतिरविदृष्टिफ० ॥ ६४-६५

धनहानिंशशीपापैः शिरोनेत्ररुजंव्यथा ॥ शत्रुभिः पापकरणंधननाशंगमागमौ ॥ ६६ ॥ शुभैररोगतां सौख्यंधनलाभंचबंधुभिः ॥ मित्रलाभंजयंक्षेत्रदेशलाभंकरोतिहि ॥ ६७ ॥ पापैर्दृष्टःकुजः क्षेत्रधनधान्यादिनाशनम् ॥ शत्रुभिर्बन्धनंरोगंचाहवंदूरवासनम् ॥ ६८ ॥ शुभैस्तुविजयंदेशक्षेत्रलाभंसुहृच्छुभम् ॥ मित्रैश्चधनसंसिद्धिंकरोतिहिनसंशयः ॥ ६९ ॥

॥ टीका ॥

अथदृष्टिवशाच्चंद्रफलान्याह ॥ धनेत्यादि सप्तषष्टिश्लोकपर्यंतम् ॥ शशी चंद्रः पापैर्दृष्टश्चेत् शिरोनेत्ररुजं व्यथां धनहानिंच करोति शत्रुभिर्दृष्टश्चेत् पापकरणं पापाचरणं धननाशं गमागमौ भ्रमणमित्यर्थः तथा शुभैः दृष्टश्चेत् अरोगतां सौख्यं बंधुभिः धनलाभं मित्रलाभं जयं क्षेत्रदेशलाभंच करोतीति ॥ ६६ ॥ ६७ ॥ अथ दृष्टिवशाद्भौमफलमाह ॥ पापैरित्यादिएकोनसप्ततिश्लोकपर्यंतम् ॥ अथकुजो भौमः पापैर्ग्रहैर्दृष्टोविलोकितः क्षेत्रधनधान्यादिनाशनं करोति शत्रुभिर्विलोकितः बंधनं रोगं आहवं युद्धं दूरवासनं प्रवासंच करोति शुभैर्दृष्टो भौमः विजयं पराक्रमं देशक्षेत्रलाभं सुहृच्छुभं सुहृद्भ्यः कल्याणं करोति मित्रैर्दृष्टश्चेद्धनसंसिद्धिं धनप्राप्तिमित्यर्थः हि निश्चयेन करोति न संशय इति ॥ ६८ ॥ ६९ ॥

॥ भाषा ॥

॥ धनेत्यादिसप्तषष्टिश्लोकपर्यंतम् ॥ अब चंद्रके ऊपर पापग्रहोंकी दृष्टि होवेतो शिररोग, नेत्ररोग पीडा धन हानि करे शत्रु ग्रहोंकी दृष्टि होवेतो पापकर्म करे धननाश होवे नित्य भ्रमण करे शुभग्रहोंकी दृष्टि होवे तो निरोगीपना सुख बंधुसमागम धनलाभ मित्रलाभ जय क्षेत्रदेश लाभ करे इतिचंद्रदृष्टिफलं ॥ ॥ ६६ ॥ ६७ ॥ पापैरित्यादिएकोनसप्ततिश्लोकपर्यंतं ॥ अब मंगलके ऊपर पापग्रहों-

शुभैर्बुधोलिपिज्ञानंविद्यालाभंचकौशलम् मि-
त्रैर्भूषाधनक्षौमरत्नलाभंचशत्रुभिः ७० अति-
सारंचदुर्बुद्धिंप्रतीकेषुसदोद्यमम् पापैर्महाविषा-
दंचकुक्षौशूलंचवर्द्धते ७१ गुरुःशुभैस्तुसंदृ-
ष्टोधर्मकार्योद्यमंसुखम् जयंधनायतिमित्रैर्दार-
क्षेमादिसंग्रहम् ७२ शत्रुभिःकुष्ठरोगंचत्वग्दोष
कलहंरणम् पापैःपराजयंवृन्दैः केदारादिवियो-
जनम् ७३

॥ टीका ॥

अथ दृष्टिवशाद्बुधग्रहफलान्याह ॥ शनैरित्यादिश्लोकद्वयेन ॥ बुधः शुभै
र्दृष्टः लिपिविज्ञानंविद्यालाभं कौशलंच करोति मित्रैर्दृष्टोबुधः भूषाधन-
क्षौमरत्नलाभंकरोति शत्रुभिर्दृष्टः अतिसाररोगं दुर्बुद्धिं प्रतीकेषु गात्रेषु
विषये सदा उद्यमं उद्योगं करोति पापैर्दृष्टश्चेन्महाविषादं अतिखेदं कुक्षौ
शूलंचवर्धते ॥ ७० ।७१ ॥ अथदृष्टिवशाद्गुरुफलमाह ॥ गुरुरित्यादित्रि-
सप्ततिश्लोकपर्यंतम् ॥ शुभैः संदृष्टोगुरुः धर्मकार्योद्यमं विहिनाचरणा-

॥ भाषा ॥

की दृष्टि होवेतो भूमि धन धान्यादिकका नाश करे शत्रुग्रहोंकी दृष्टि होवेतो
बंधन,रोग, युद्ध प्रवास करे. शुभग्रहोंकी दृष्टि होवे तो विजय,पराक्रम, दश-
भूमि मित्रवर्गसें सुख करे. मित्रग्रहोंकी दृष्टि होवे तो धनप्राप्ति होवे ॥ ६८।
६९ ॥ शुभैरित्यादिश्लोकद्वयेन ॥ अब बुधकी दृष्टिका फल कहते हैं- बुधके ऊ-
पर शुभग्रहोंकी दृष्टि होवेतो लिपिज्ञान विद्यालाभ कुशलता प्राप्त करे. मित्र-
ग्रहोंकी दृष्टि होवेतो वस्त्रालंकार,रत्नलाभ करे. शत्रुग्रहोंकी दृष्टि होवे तो अति
साररोग दुर्बुद्धि सदाउद्योग करे. पापग्रहोंकी दृष्टि होवेतो बोहोत खेद कु-
क्षिमें शूल वृद्धि होवे ॥ ७० ।७१ ॥ गुरुरित्यादित्रिसप्ततिश्लोकपर्यंतम् ॥ अब गु-

शुभैः शुक्रः सुरवंयोषालाभंभूषाधनायतिः
मित्रैस्तुपट्टबंधादि देशलाभादिचाखिलम् ७४
पापैःपराजयंयोषावियोगंधननाशनम् शत्रु-
भिर्याप्यरोगंचमूत्रकृच्छ्रादिकंतथा ७५ मं-
दःपापैस्तथा कुक्षिरोगंबंधंधनक्षयम्

॥ टीका ॥

चरणोद्योगं सुखंजयं धनायतिंच करोति मित्रैर्दृष्टः दारक्षेत्रादिसंग्रहं करोति शत्रुभिर्दृष्टः कुष्ठरोगं त्वग्दोषं कलहं रणंचकरोति पापैर्दृष्टः युद्धे पराजयं केदारादिवियोजनंकरोति॥७२।७३॥ अथ दृष्टिवशाच्छुक्रफलान्याह ॥शुभैरित्यादिपंचसप्ततिश्लोकपर्यंतं॥ शुभैर्दृष्टः शुक्रः सुखं योषालाभंस्त्रीलाभं भूषाधनायतिं भूषणधनप्राप्तिं करोति मित्रैर्दृष्टः पट्टबंधादिदेशलाभादिच अखिलेष्टंकरोति पापैर्दृष्टः पराजयं योषावियोगं धननाशंच शत्रुभिर्दृष्टः याप्यरोगं वैद्यके प्रसिद्धं मूत्रकृच्छ्रादिकंच करोति॥७४।७५॥ अथदृष्टिवशाच्छनिफलान्याह ॥ मंदइतिसार्धेन॥पापैर्दृ-

॥ भाषा ॥

की दृष्टीका फल कहनेहैः गुरुके ऊपर शुभ ग्रहोंकी दृष्टि होवे तो धर्म कामका उद्योग, सुख, जय, धनप्राप्ति करे. मित्रग्रहोंकी दृष्टिहोवे तो स्त्री भूमि आदिपदार्थोंका संग्रह करे. शत्रुग्रहोंकी दृष्टि होवे तो कुष्टरोग, त्वचारोग, कलह, संग्राम करे. ७२ ७३॥ शुभैरित्यादिपंचसप्ततिश्लोकपर्यंतम्॥ अबशुक्रकी दृष्टीका फल कहते हैः- शुक्रके ऊपर शुभग्रहोंकी दृष्टि होवे तो सुख स्त्रीलाभ करे. अलंकारकी, धनकी प्राप्ति करे. मित्रग्रहोंकी दृष्टि होवे तो पट्टबंधादि देशलाभ इष्टप्राप्ति करे पापग्रहोंकी दृष्टि होवेतो पराजय, स्त्रीवियोग, धननाश करे. शत्रु ग्रहोंकी दृष्टि होवे तो याप्यरोग नाम मूत्रकृच्छ्र रोग करे॥ ७४।७५॥ मंदइति सार्धेन॥ अब शनीकी दृष्टिका फल कहते हैः- शनीके ऊपर पापग्रहोंकी दृष्टि होवे तो

शत्रुभिः शत्रुबाधांच पराभवमथामयम् ७६
शुभैररोगतांमित्रैर्दृष्टोबंधुसमागमम् रवौस्था-
नबलेपूर्णेस्वदेशेविद्ययाबली ७७ चंद्रेप्रभुतया
भौमेग्रामण्येनबुधेसति श्रौतयाविद्ययावार्यलि-
पिलेखनकर्मणा ७८ जनैर्धनैरमात्येषुबुद्ध्याच
बलवान्गुरौ यद्वास्वदेशराजस्तुकार्येणैवबलीम-
तः ७९ शुक्रेस्वदेशमुख्योवास्वाधिपत्येनयो-
षितां मंदेभृत्यकदासानांमुख्यःस्याद्बलवानपि ८०

॥ टीका ॥

ष्टो मंदः शनिः कुक्षिरोगं बंधनं क्षयंच करोति तथा शत्रुभिर्दृष्टः शत्रु-बाधां पराभवं आमयंच करोति शुभैर्दृष्टः अरोगतां मित्रैर्दृष्टः बंधुसमा-गमंचकरोतीति ॥ ७६ ॥ अथ स्थानबलवशाद्रव्यादीनां फलान्याह ॥ रव्यादित्याद्येकाशीतिश्लोकपर्यंतम् ॥ रवौ स्थानबले पूर्णेसति स्वदेशे वि-द्ययाबली भवति चंद्रेस्थानबलेपूर्णे प्रभुतया प्रभुत्वेन बली भवति भौ-मेस्थानबलेपूर्णे ग्रामण्येन ग्रामेमुख्यत्वेन बलीभवति तथा बुधेसति श्रौतयाविद्ययावा अथवा आर्यलिपिलेखन कर्मणा जनैः धनैः अमा-त्येषुच बुद्ध्या बलवान्भवेत् एवंस्थानबलेपूर्णेगुरौसति स्वदेशराजः

॥भाषा॥

कुक्षिरोग बंधन क्षय करे. शत्रुग्रहोंकी दृष्टि होवे तो शत्रुकी बाधा, पराभव, रोग करे. शुभग्रहोंकी दृष्टि होवे तो रोगरहित करे. मित्रग्रहोंकी दृष्टि होवे तो बंधुसमागम करे. ॥७६॥ रव्यादित्याद्येकाशीतिश्लोकपर्यंतम् ॥ अब सूर्यादि-कोंका स्थानादिक बलसें फलादेश कहते हैं:- सूर्यस्थानबलमें पूर्ण होवे तो अपने देशमें विद्यासें बलवान् होवे. चंद्रस्थानबलमें पूर्ण होवे तो प्रभुताकी-कीपदवी पावे. मंगलस्थान बलमें पूर्ण होवे तो गांवमें प्रभुताईकी पदवीमें

उच्चैस्तुपीडितःप्रेष्यःस्थानवीर्योनितेषुतु स-
मन्यूनाधिकाद्वीर्याद्दृष्टोत्कर्षात्फलंवदेत् ८१
दिग्बलेनाधिकेसूर्येवाणिज्येनधनायतिः यशश्च
धनवृद्धिश्चचंद्रेतुराजसेवया ८२

॥ टीका ॥

स्वदेशेऽभिमानः कार्येण कृत्स्नेनैव बलीबलवान्मतः तथा भूतेस्तुशुक्रेतु
स्वदेशमुख्यः वा योषितां आधिपत्येन बली भवति तथा बलिनि मंदेस-
ति भृतकदासानां वेतनोपजीविकानां मुख्यः स्यात् तथा शरीरेणापि ब-
लवान्भवति एवंफलानि स्थानबलपूर्णे उक्तानि स्थानवीर्योनितेषु
स्थानबलहीनेषु उच्चैः पीडितः उक्तफलवशात्पीडायुक्तः प्रेष्यो दास-
श्चभवेत् अतः समन्यूनाधिकाद्वीर्यान्न्यूनातिरिक्तबलात् यः दृष्टोवि-
लोकितः उत्कर्षः तस्मान्न्यूनातिरिक्तं फलं वदेदिति पूर्णस्थानबलवि-
चारः ॥ ७७।७८।७९।८०।८१॥ अथ कालायेन चेष्टाबलेष्वन्यतमा-
धिके ग्रहाणांफलान्याह ॥ दिग्बलेनेत्यादिनवाशीतिश्लोकपर्यंतम् ॥
अथसूर्ये दिग्बलेन अधिके इतरबलाधिक्येसति वाणिज्येन वणिक्कर्मणा

॥ भाषा ॥

बली होवे बुधस्थानबलमें पूर्ण होवे, तो श्रौतविद्यासे, लेखनकर्मसे, बुद्धिके ब-
लसे बलवान् होवे गुरुस्थानबलमें पूर्ण होवे तो अपने देशमें शोभायमान हो-
वे कर्म करणेसें बलवान् होवे शुक्रस्थानबलमें पूर्ण होवेतो अपने देशमें मु-
ख्य होवे स्त्रियोंके अधिपत्यतासे बलवान् होवे. शनिस्थानबलमें पूर्ण होवे,
तो दासदासीमें और वेतनजीविका करनेवालेमें मुख्य होवे. शरीरसे बलवान्
होवे. स्थानबलमें हीनबली ग्रह होवेतो, पीडायुक्त दास्यत्व करे. इतिस्थानब-
लविचारः ॥ ७७।७८।७९।८०।८१॥ दिग्बलेत्यादि नवाशीतिश्लोकपर्यंतम् ॥
अब सूर्यादिकोंका दिग्बलाधिकादिकोंका फल कहतेहै – सूर्य दिग्बलमें अधि-

भौमेवुसेवयाख्यातिर्वेदाभ्यासेनसर्वदा बुधेध-
नायतिः कृष्णयशस्स्याद्बुद्धिमत्तया ८३ गुरौ
धनायतिस्तेनवीर्येणधनशुभ्रता राजकार्येणशु-
क्रेचवदान्यत्वेनवायशः ८४ मंदेदासाधिपत्येन
धनायतिररिंदमान् कालायनबलाधिक्यं रवौभौमे
शनैश्चरे ८५ मंत्रोपदेशविधिनापाखंडिपदसंश्र-
यात् दासभावेनकृष्णेदोकपिलोविद्ययान्यथा ८६
गुरौशुक्रे बुधेपाथोनिधिजेचात्रिसंभवे विद्याया
बाधनेसंख्याबलदिग्बलरद्दितः ८७

॥टीका॥

धनायतिः यशः धनवृद्धिश्चेतिफलानि चंद्रे तथाभूतेसति राजसेवया ध-
नवृद्धिः भौमे दिग्बलाधिक्येसति सेवयाख्यातिः प्रसिद्धिः सर्वदावेदा-
भ्यासेनच प्रसिद्धिः वदान्यत्वेनसर्वदेत्यपिपाठः तत्पक्षेदातृत्वेनेत्यर्थं.
बुधेतथाभूते कृष्या कृषिकर्मणा धनायतिः बुद्धिमत्तया बुद्धिमतो भा-
वः बुद्धिमत्ता तया यशः कीर्तिःस्यात गुरौ दिग्बलाधिक्ये धनायतिः
तेनवीर्येण द्रव्यबलेन राजकार्येण धनशुभ्रता संपत्प्रकाशइत्यर्थं. शुक्रे
दिग्बलाधिक्ये वदान्यत्वेन दातृतयायशः कीर्तिः मंदेतथाभूतेसति दासा-
धिपत्येन दासश्रेष्ठतयाऽरिंदमान् शत्रुघ्नधनायतिःएवंसप्तग्रहाणां दि-

॥भाषा॥

क होवे तो वणिक् व्यापारसे धनप्राप्ति, यशप्राप्ति, धनकी वृद्धि होवे. चं
दिग्बलमें अधिक होवे तो राजसेवासे वृद्धि होवे. मंगल दिग्बलमें अधिक
होवे तो सेवासे, वेदाभ्याससे, प्रसिद्धि होवे. बुध दिग्बलमें अधिक होवे त
बुद्धिसे यशकीर्ति होवे. गुरु दिग्बलमें अधिक होवे तो धनप्राप्ति राज
यश होवे. शुक्र दिग्बलमें अधिक होवे तो दानशीलतासे कीर्ति मिले. श

नानाविधायतिः प्रोक्ताइतिचेष्टाधिकेषुतु कवि-
दुर्वायथापूर्वविशेषादेवनिर्णयः ८८ बलिष्ठोदा-
येरश्म्युक्तफलंसर्वंकरोतिवे न्यूनाधिकेऽनुपातेन
फलमेवंविचिंत्यताम् ८९

॥ टीका ॥

बलाधिक्यफलमुक्त्वा कालबलाधिक्ये अयनबलाधिक्येच फलांतरमाह ॥ ज्ये भौमे शनैश्वरेच मंत्रोपदेशविधिना तथापाखंडिपदसंश्रयाहासभावेनच यथासंख्यंवर्तनं कृष्णेंदौ कृष्णचंद्रे कालायनबलाधिक्ये सति कृषितः कृषिकर्मणा अन्यथा विद्ययावा वर्तनं गुरौ शुक्रे बुधेच तथा पाथो निधिजे शुक्लचंद्रे अभिसंभवंइति तस्यैवविशेषणं विद्यायाः वा धने धनविषयेच संख्याबलदिग्बलयोः रुद्या आधिक्येन लक्षणं ज्ञेयं एवं चेष्टाधिकेषु चेष्टाबलाधिक्येषु सूर्यादिग्रहेषुसत्सु नानाविधायतिः प्रोक्ता कथिता कविद्युः शुक्रबुधगुरवः यथापूर्वं पूर्वोक्तं फलं विशेषदृष्ट्या निर्णयेदित्यर्थः तदेव विशदयति कविद्युः शुक्रबुधगुरवः बलिष्ठाश्चेत् दायोक्तं रश्म्युक्तंच फलंसर्वं करोति कुर्वन्तीत्यर्थः वेति निश्चयेन न्यूनाधिकेबलेतु अनुपातेन एवंफलंविचिंत्यतां विचार्यतामिति ॥८२।८३।८४।८५।८६।८७।८८।८९॥

॥ भाषा ॥

दिग्बलमें अधिक होवे तो श्रेष्ठतासे, शूरतासे धनप्राप्ति होवे अब कालब-लाधिक्य और अयनबलाधिक्यका फल कहते हैं- सू. मं. श. काल और अय-नबलमें अधिक होवे तो मंत्रोपदेशसे पाखंड करनेसे हास्यरस करके निर्वाह हो-वे कृष्णपक्षका चंद्र काल अयन बलमें अधिक होवे तो खेतीसे विद्यासे नि-र्वाह होवे गुरु, शुक्र, बुध, शुक्लपक्षका चंद्र काल अयनबलमें अधिक होवता विद्यासे, धनसे निर्वाह होवे ॥ अब चेष्टाबलाधिक्यका फल कहते हैं- सूर्यादिग्रह

सौम्येष्विष्टफलाधिकेषुनितरांश्रीमान्सुशीलोगुणी
मित्रेष्वेवमतीवधर्मनिरतोदातासुखीसत्त्ववान्
पापेष्वेवमथापिपापनिरतः शत्रुष्वथोशत्रुभिर्वीर्ये-
णाथपराजयोजयइमान्पर्यायतःप्राप्नुयात् ९०
अधिकेष्वशुभेष्वेवमनिष्टाख्यफलानितु ९१

॥ टीका ॥

अथ इष्टकष्टबलाधिक्यवशात्फलान्याह ॥ सौम्येति ॥ इष्टफलाधिकेषु सौम्येषु ग्रहेषु सत्सु नितरां श्रीमान् मित्रेषु सुशीलः अतीवधर्मनिरतः एवं दाता सुखी सत्त्ववांश्च भवेत् एवंपापेषु कष्टफलाधिक्येषु सत्सु शत्रुषु पापनिरतो भवेत् अथो शत्रुभिः वीर्येणपराजयः अथवा जयः इमान् श्रीमत्त्वादिफलप्रकारान् पर्यायतः ग्रहस्थित्यनुसारेण प्राप्नुयात् ॥ ९० ॥ अथफलांतराण्याह ॥ अधिकेष्विति षण्णवतिश्लोकपर्यंतम् ॥ अशुभेषु पापग्रहेषु सत्सु अनिष्टाख्यफलानि भवंति तानितु व्याधिभिः ज्वरादिभिः कलहैः मित्रैः पीड्यते एवंपापेषु ग्रहेषु दुश्चेष्टः दुष्टाचेष्टा यस्यसः पातकी ध्रुवं भवंति एवंशत्रुषु शत्रुग्रहेषु सदारोगी बंधुभिः मित्रैश्च वर्जि-

॥ भाषा ॥

चेष्टा बलमें अधिक होवे तो नानाप्रकारकी विद्यासें धनप्राप्ति होवे ऐसा निश्चयंकरके जानना ॥ ८२ । ८३ । ८४ । ८५ । ८६ । ८७ । ८८ । ८९ ॥ सौम्येति ॥ अब इष्टकष्टबलाधिक्यका फल कहतेहैः- शुभग्रह बुध, गुरु, शुक्र, चंद्र इष्टबलमें अधिक होवे तो अत्यंत लक्ष्मीवान् होवे. मित्रोंके ऊपर सुशीलता, धर्मरत दानशील, सुखी, बलवान् होवे. पापग्रह सूर्य, मंगल, शनि इष्टबलमें अधिक होवे तो शत्रुवोंके ऊपर पापबुद्धि होवे. पराजय होवे. ॥ ९० ॥ अधिकेष्विति षण्णवतिश्लोकपर्यंत ॥ अब फलांतर कहतेहैः- पापग्रह बलाधिक्यमें होवे तो ज्वरपीडित, दुष्ट, पातकी होवे. शत्रुग्रह होवे तो सदारोगी मित्रवर्ग बंधुवर्ग रहित होवे. सर्व-

व्याधिभिः कलहै मित्रैः पीड्यतेनात्रसंशयः ए-
वंपापेषुदुश्चेष्टः पातकीभवति ध्रुवम् १२ शत्रुष्वेवं
सदारोगीमित्रैर्बन्धुविवर्जितः सर्वदृष्टफलाधिक्ये
सर्वत्राफलदोग्रहः १३ शुभेषुचफलेष्वेवंस्पष्ट-
मेवफलप्रदः अत्यनिष्टफलःखेटः शुभेषुत्वफल-
प्रदः १४ अनिष्टफलदोऽन्येषुखेटः सर्वत्रसर्वदा
स्वोच्चादिस्थानषट्स्थाः स्युस्तथादिग्वर्गगाअपि
१५ क्षेत्रपुत्रकलत्रादिधनधान्यसमृद्धिदाः य-
दिमित्रादिवर्गस्था धनधान्यविवर्धनाः १६

॥ टीका ॥

तो रहितः स्यात् सर्वदृष्टबलाधिक्ये सति सग्रहः सर्वत्र अफ-
लदः शुभेषु अधिकेषु फलदेषु सत्सु स्पष्टं फलप्रदोभवति तथा अ-
त्यनिष्टफलः खेटः शुभेषु ग्रहेषु अफलप्रदः फलदो न भवति , अन्ये-
षुपापेषु अनिष्टफलदोभवति एवं सर्वत्र सर्वदा फलविचारः कर्तव्यः
अथ स्वोच्चादिस्थानषट्स्थाः स्वोच्च स्वत्रिकोणस्वक्षेत्रस्वमित्रस्वाधि-
मित्रस्वोदासीनक्षेत्रस्थाः तथा स्वादिग्वर्गगाः स्वकीयदशवर्गस्थाः
अपि क्षेत्रपुत्रकलत्रादिदातारः धनधान्यसमृद्धिदाश्च भवंति यदि
मित्रादिवर्गस्थाः तर्ह्यपि धनधान्यविवर्धनाः भवंति इति॥ ११।१२।१३
।१४।१५।१६॥ ॥ ७ ॥

॥ भाषा ॥

दृष्टी ग्रहबलाधिक्य होवे ना यो ग्रह निष्फल जानना और स्वोच्च, त्रिको-
ण, स्वक्षेत्र, मित्रक्षेत्र, अधिमित्रक्षेत्र, उदासीन क्षेत्रस्थ ग्रह अथवा अप-
ने दशवर्गमे जो ग्रह है - ये नव क्षेत्र, स्त्रीपुत्र, धन, धान्यकी समृद्धि करनेवाले
होतेहै ॥ ११।१२।१३।१४।१५।१६॥ ॥ ७॥

व्याधिदुर्गतिदाप्रोक्तादशारंभेतुशीतगोः स्वोच्चादिसंस्थितादायप्रारंभेशुभदादशा ९७ अन्यथा शुभदाप्रोक्ताप्रारंभेज्योतिषांदश केंद्रधूम्रगताः खेटादशायांस्तुभदाः सदा ९८ द्रव्यकर्मगुणाय-स्यस्वभावाःकथिताः पुरा तेसर्वेस्वदशाकालेयोज्याभावदृगादिषु ९९ भावदृष्टिवलेष्टानि फलानि कथितानिच भावाध्यायोक्तरव्यादि फलान्यत्रैवयोजयेत् १००

॥टीका॥

अथदशाविचारः ॥ व्याधीत्यादिशतश्लोकपर्यंतम् ॥ शीतगोश्चंद्रस्य दशा आरंभे व्याधिदुर्गतिदाप्रोक्ता स्वोच्चादिसंस्थितानां ग्रहाणां दशा प्रारंभे शुभदा भवति अन्यथा स्वोच्चाद्यन्यस्थानस्थानां ज्योतिषां ग्रहाणां दशा प्रारंभे अशुभदा अनिष्टाज्ञेया केन्द्रधूम्रगताः केंद्रधूमस्थानस्थिताः दशायां सदा संपूर्णदशायां शुभदाभवंति अथ ग्रहाणां द्रव्याणिकर्माणिगुणाश्च यस्ययः स्वभावः सच एते विषयाः पुरा पूर्वार्धे कथिताः उक्ताः ते सर्वे स्वस्वदशाकालेयोज्याः तथा भावदृष्यादि विषयफलेष्वपि योज्याः तथा भावफलानि दृष्टिफलानि षड्बलफलानि इष्टकष्टफलानि यानिपुराकथितानि भावाध्यायोक्तरव्यादिफलान्यपि अत्रैव दशाकाले एवं योजयेदिति ॥९७।९८।९९।१००॥

॥भाषा॥

॥व्याधीत्यादि शतश्लोकपर्यंत ॥ अब दशाका फल कहते है- चंद्रकी दशा नारंभमें व्याधि और दुर्गतीकूं देनेवाली है. उच्चादि छे स्थानोंमें बैठे हुये जो ग्रह हैं उनोंकी दशा प्रारंभमें शुभफल देनेवाली है. उच्चादि छे स्थान विना जो अन्यस्थानमें बैठेहुवे जो ग्रह है उनोंकी दशा प्रारंभमें अनिष्ट फल देनेवाली

आदौबलफलंप्रोक्तंततोदृष्टिफलंस्मृतम् ततो भावफलंप्रोक्तमिष्टानिष्टफलावहम् १०१ चेष्टाबलफलंचादौस्थानवीर्यंततोभवेत् दिग्बलंचततः प्रोक्तंकालायनबलेततः १०२ इतिश्रीबृहत्पाराशरहोरायामुत्तरभागेअब्दचर्यादिफलवर्णनं नामपंचदशोऽध्यायः १५ ॥ ७ ॥

॥ टीका ॥

अथ मुख्यत्वेन बलग्रहणानुक्रममाह॥ आदाविति द्वाभ्याम्॥ बलविचारे आदौ प्रथमतः बलफलं निसर्गबलफलं प्रोक्तं कथितं एतन्मुख्यं ततः दृष्टिफलंस्मृतम् ततः भावफलं ततः इष्टानिष्टफलं ततः चेष्टाबलफलं ततः स्थानबलं ततः कालबलं ततः अयनबलंचेति क्रमेण बलविचारः कर्त्तव्यइति ॥१०१॥ १०२॥ ॥ पाराशरागाधवारिनिधिनिर्मथनंमया ॥ कृत्वायथामतिकृताटीकापंचदशाह्वये ॥ १॥ इति श्रीबृहत्पाराशरहोरायामुत्तरार्द्धेश्रीमद्ध्यद्गुन्वयवेदशास्त्राधनवद्यविद्याविद्योतितदिग्दिङ्मण्डलजटाशंकरसूनुज्योतिर्विच्छ्रीधरेण विरचितायां सुबोधिनीटीकायां अब्दचर्याफलवर्णनंनाम पंचदशोऽध्यायः ॥ १५ ॥

॥ भाषा ॥

है. केंद्र धर्मस्थानगत जो ग्रहहै उनोंकी दशा संपूर्ण कालमें फल देनेवाली है. और ग्रहोंके द्रव्य, कर्म, गुण, स्वभाव यह सबपूर्वार्द्धमें कहेहै- वे सबोंकी अपनी अपनी दशाके कालमें फलकी योजना करनी और भावदृष्टि षड्बल इष्टकष्ट बल जो पहिले कहेहैं उनोंकाभी फलदशा कालमें जानना। ॥ ९७। ९८। ९९। १०० ॥ आदाविति द्वाभ्यां ॥ अब बलोंका मुख्यत्व क्रम कहतेहैं- पहिले निसर्गबल मुख्य कहाहै- तदनंतर दृष्टिफल ननर भावफल मुख्य उससे इष्टानिष्टफल मुख्य उससे चेष्टाबल मुख्य- उससे स्थानबल मुख्य- उससे कालबल मुख्य,

भावांशैः समतांगतः खलु ग्रहः पूर्णं विधत्ते फलं
संधिस्थोनफलप्रदोऽन्तरगतैस्त्रैराशिकेनैव च ॥
भावन्यूनमथ ग्रहस्य गुणयेदंशादिकं चार्णवै -
र्हित्वा चास्य च संधितोऽधिकमथो प्रोक्तं फलं भावजम् १

॥ टीका ॥

गणेशः पातु मां देवो यथार्थज्ञानकारकैः ॥ करफूत्कारसंभूतैः शीकरैस्तापहारकैः ॥ १ ॥ अध्याये षोडशेऽस्मिंस्तु भावसंस्थग्रहोद्भवम् ॥ संध्यादितारतम्येन फलमाह पराशरः ॥ २ ॥ अथ परमऋषिः पराशरः संध्यादिविचारेण भावगत ग्रहफलान्याह ॥ भावांशैरिति ॥ भावांशैः भावस्थाये वर्तमानांशाः तैः समतां गतः तुल्यतां प्राप्तः ग्रहः पूर्णं फलं विधत्ते खलु यथोक्तमिति शेषः संधिस्थः भावसंधिवर्तमानः ग्रहः फलप्रदो न भवति विफल इत्यर्थः अंतरगतैः भावमध्यवर्तमानैः ग्रहैः त्रैराशिकेन अनुमानेन फलं ज्ञेयं अथ ग्रहस्य अंशादिकं यदि भावन्यूनं भावांशाल्पं तर्हि तत अर्णवैः चतुर्भिः गुणयेत् यदि अस्य ग्रहस्य भावांशात् दशादिकं अधिकं भवेत्तर्हि भावसंधितः हित्वा वर्जयित्वा शेषं भावजं फलं प्रोक्तं कथितमिति १

॥ भाषा ॥

उससे अयनबल मुख्य ऐसा यह क्रमसे बलविचार जानना ॥ १०१ ॥ १०२ ॥ इति इ० पंचदशोध्याय ॥ १५ ॥ भावांशैरिति ॥ अब भावफल कहते हैं - जो ग्रह जिस भावमें बैठा है वो भावके जो अंश है वो अंशके तुल्य ग्रहका अंश होवे तो वो ग्रह उक्तप्रमाणसे संपूर्ण फल देता है और जो संधिस्थ ग्रह है वो फल देता नहीं है विफल है. भावके मध्यमें ग्रह होवे तो अनुपातसे फल जानना. भावांशसे ग्रहांश कमी होवे तो चारसे गुणनकरना वो भावफल आवे और जो कभी ग्रहके अंश भावांशसे अधिक होवे तो भावसंधिमेंसे हीनकरके शेष भावफल जानना ॥ १ ॥ ॥ ५ ॥

ऊर्ध्वमुखोरवियुक्तोराशियुक्तस्त्वधोमुखोज्ञेयः
तिर्यङ्मुखोऽखिलयुतो राशिर्भावाःपरेऽप्येवम् २
अन्यजातीययोगेतुतत्तद्भावफलंवदेत् स्वजाती-
येषुयोगेषुत्रिंशाद्यंशा भवंत्युत ३ तत्त्वमाकृति-
रेकाक्षिछन्दस्तत्त्वंचतुस्त्रयः

॥ टीका॥

अथ ग्रहयोग्येन भावलक्षणमाह॥ ऊर्ध्वमुखइति॥ रवियुक्तोराशिःऊ-र्ध्वमुखः राशियुक्तः ग्रहरहितः अधोमुखो ज्ञेयः अखिलयुतः चंद्रादि-युक्तः तिर्यङ्मुखोराशिर्भवति एवंपरे सर्वे भावाः ज्ञेयाइति॥ २॥ अ-थैषांतिर्यङ्मुखादीनांभावानांफलकथनरीतिमाह॥ अन्येति॥ अन्य-जातीययोगे भावेषुग्रहादिसंभूतान्यजातीययोगे अमुकभावे अमु-क ग्रहादिसंभूतो योगः अतः अस्यभावस्य अमुकं सदसत्फलमि-तिभावद्दष्ट्यैवफलंकथयेत् स्वजातीययोगेषुतु नाम अन्यजातीययोग-रहितेषु केवलंस्वजातीयाः भावजातीयाएव योगाश्चेत्तत्र फलंत्रिंशाद्या येंऽशास्तएव फलफलभूता भवन्तीति॥ ३ ॥ अथभावस्थानांक-संख्याआह॥ तत्त्वेति सार्धेन॥ तनुभावे स्थानसंख्यातत्त्वं २५ ध-

॥ भाषा॥

॥ऊर्ध्वमुख इति॥ अब भावका विशेषफल कहते हैः- जो भाव सूर्ययुक्त होवे,वो ऊर्ध्वमुख जानना. ग्रहरहित होवे. वो भाव अधोमुखजानना. चंद्रादि ग्रहसे युक्त होवे तो तिर्यङ्मुख स्वभाव जानना.॥२॥ अन्येति॥ अब तिर्यङ्मुखादि भावका फल कहतेहैः- यह भावका यह शुभाशुभ फल है सो भावदृष्टिसें कहना. और जो भावके स्वजातिपशुभाशुभयो-गहे. उसकाफल तीस अंशरूप है. ॥३॥ तत्त्वेतिसार्धेन॥ अब भावके स्थानांक कहतेहैः- तनुभावके २१ धनभावके २२ सहजके २१ सुखभा-

एकोनविंशतिश्छन्दो नवाक्षी षट्त्रयस्तथा ॥ ४ ॥
वेदेषवो नृपाः स्थाने भावसंख्याः प्रकीर्तिताः ॥ ए-
कत्रिंशत्त्रयस्त्रिंशद्भानि त्रिंशत्तथैव च ॥ ५ ॥ एकत्रिं-
शद्विनेत्रं च मुनिरामाः खपावकाः ॥ भानि विंशति-
रेकद्वौ खवेदाः करणस्य तु ॥

॥ टीका ॥

नभावे आकृतिः २२ सहजे एकाक्षि २१ सुहृदि छंदः २६ सुते तत्त्वं २५
रिपौ चतुस्त्रयः ३४ जायाभावे एकोनविंशतिः १९ मृत्यौ छंदः २६ ध-
र्मे नवाक्षी २९ कर्मणि षट्त्रयः ३६ आये वेदेषवः ५४ व्यये नृपाः १६
एताः स्थाने स्थानविषये भावानां संख्याः क्रमात्प्रकीर्तिता इति ॥४॥
अथ भावेषु करणांकसंख्या आह ॥ एकत्रिंशदिति अर्धसहितेन ॥ त-
नौ करणांकसंख्या एकत्रिंशत् ३१ धने त्रयस्त्रिंशत् ३३ सहजे भानि
नक्षत्राणि २७ सुहृदि त्रिंशत् ३० सुते एकत्रिंशत् ३१ रिपौ द्विनेत्रं २२
जायायां मुनिरामाः ३७ मृत्यौ खपावकाः ३० धर्मे भानि २७ कर्मणि
विंशतिः २० आये एकद्वौ २१ व्यये खवेदाः ४० एवं भावकरणस्य सं-
ख्याज्ञेया इति ॥५।६॥

॥ भाषा ॥

चके २६ सुतभावके २५ शत्रुभावके ३४ स्त्रीभावके १९ मृत्युभावके २६
धर्मभावके २९ दशमभावके ३६ ग्यारवेभावके ५४ बारवे भावके १६ यह
क्रमसे जानना ॥४॥ एकत्रिंशदित्यर्धसहितेन ॥ अब भावके करणांक
कहतेहैं - तनुभावके ३१ धनभावके ३३ सहजभावके २७ सुखभावके ३०
सुतभावके ३१ शत्रुभावके २२ स्त्रीभावके ३७ मृत्युभावके ३० धर्मभावके २७
दशमभावके २० ग्यारवेभावके २१ व्ययभावके ४० यह १२ भावके करणांक जा-
नना ॥५।६॥

विषमायांक्रमादोजे युग्मे स्यात्तांशुभाशुभे ॥ समायांभवतस्तद्वत्पापसौम्यफलेक्रमात् ॥ ७ ॥ ओजे व्याधिः समेहानिर्यावत्तु दशकं भवेत् ॥ परतः पंचकं चोजेसमेव्याधिरथान्यथा ॥ ८ ॥ यावत्तुदशकं प्राग्वन्ततस्तद्वत्फलंवदेत् ॥

## ॥ टीका ॥

अथोक्तस्थानकरणानां विषमसमसंख्ययाक्रमाच्छुभाशुभे आह ॥ विषमायामिति ॥ ओजेराशौ विषमायां स्थानविषमसंख्यायां तथा करणसमसंख्यायां क्रमाच्छुभाशुभेफले ज्ञेये एवं युग्मे समेराशौ समायां स्थानसमसंख्यायां अर्थात् युग्मराशौ करणविषमसंख्यायांच क्रमात्पापसौम्यफलेअशुभशुभफले ज्ञेयेइति ॥ ७ ॥ अथ विषमसमराशिषुस्थानकरणसंख्यया व्याधिहानी आह ॥ ओजे इतिसार्धेन ॥ ओजे विषमराशौ यावत्तु दशकं भवेत् स्थानकरणानां दशसंख्यापर्यंतं व्याधिः नाशः फलं समेराशौ दशसंख्यापर्यंतं हानिः फलं ज्ञेयंततः परतः दशसंख्यांदूर्ध्वकं पंचसंख्यापर्यंतंओजे समेचराशौ व्याधिःफलं अथ परतः पंचदशसंख्यामारभ्य यावद्दशकं भवेत् पंचविंशतिसंख्यापर्यंतमित्यर्थः प्राग्वद्व्याधिहानी ओजसमे ज्ञेये ततः परतस्तद्वदेवफलंवदेदिति ॥ ८ ॥

## ॥ भाषा ॥

विषमायामिति ॥ अब स्थानकरणके समविषमसंख्याके क्रमसे शुभाशुभ फल कहते हैं विषमराशीमें स्थानसंख्या विषम होवे तो शुभफलदायक है. और समराशीमें स्थानसंख्या सम होवे तो अशुभफलदायक है. और विषम राशीमें करणसंख्या सम होवे तो अशुभफल दायक है विषम करणसंख्या होवे तो शुभफलदायक है ॥ ७ ॥ ओजे इति सार्धेन ॥ विषमराशीमें दशसंख्यापर्यंत स्थानकरणसंख्या होवे तो व्याधीका नाश होवे यह फल जानना.

शिरोरोगाक्षिरोगाश्चरक्तास्रुक्कामलाज्वरः ग्र-
हणीशीतकोमेहः प्लीहोगुल्मलतः क्रमात् ९ र-
त्नैर्धान्यैश्च हेमैश्च गोभिः क्षेत्रैश्च राजभिः दासै-
श्च महिषैरुष्ट्रैर्गजाश्वैर्वृद्धयः स्मृताः १०

॥ टीका ॥

अथ पंचविंशतिमारभ्यदशपर्यंतंफलान्योजे आह ॥ शिरइति ॥ शिरो-
रोगः १ अक्षिरोगः २ रक्तास्रुक् ३ कामला ४ ज्वरः ५ ग्रहणी ६ शीतक
७ मेहः ८ प्लीहः ९ गुल्मलतः १० एते क्रमाज्ज्ञेयाः एषां स्वरूपाणि वैद्यके
इति ॥९॥ अथपंचविंशतिमारभ्य दशपर्यंतं समराशौ फलान्याह ॥ रत्नै-
रिति ॥ रत्नैः १ धान्यैः २ हेमैः ३ हेमभिः सुवर्णैरित्यर्थः गोभिः ४ क्षे-
त्रैः ५ राजभिः ६ दासैः ७ महिषैः ८ उष्ट्रैः ९ गजाश्वैः १० वृद्धयः स्मृता.
भवंतीति ॥१०॥

॥ भाषा ॥

समराशीमें स्थानकरणकी दशसंख्या पर्यंत हानिफल जानना उस दसके
आगे पाच संख्यापर्यंत व्याधि होवे पंधराके ऊपर पचीस तक समराशीमें
व्याधि फल, विषयराशीमें हानिफल जानना ॥ ८ ॥ शिरइति ॥ अब विषमरा-
शीमें छवीस स्थानकरणसंख्या होवे तो शिरोरोग सत्तावीस संख्या होवे
तो नेत्ररोग अठ्ठावीस संख्या होवे तो रक्तविकार उगणतीस संख्या होवे
तो कामला हलीमक रोग होवे तीस संख्या होवे तो ज्वररोग एकतीस
संख्या होवे तो समहणी रोग- बत्तीस संख्या होवे तो शीतरोग तेहतीस सं
ख्या होवे तो प्रमेह रोग- चौतीस संख्या होवे तो प्लीह रोग पयतीस सं-
ख्या होवे तो गुल्मलत रोग होवे ॥९॥ रत्नैरिति ॥ अब समराशीमें स्थानक-
रण संख्या छवीस होवे तो रत्नवृद्धि जानना सत्तावीस संख्या होवे तो
धान्यवृद्धि जानना अठ्ठावीस संख्या होवे तो सुवर्णवृद्धि जानना ओगनी-

जात्यादेशस्य कालस्य स्वानुरूपं फलं वदेत् ॥ नन्त-
द्भावानुसंज्ञश्च ग्रहाद्भावात्फलं वदेत् ॥ ११ ॥ उच्चादि-
षु नवस्वेव कलांशादिषु यत्फलम् ॥ भाग्याध्यायो-
क्तमप्यत्र योजयेत्तु विशेषतः ॥ १२ ॥ इति श्रीबृहत्पा-
राशरहोरायामुत्तरभागे मासचर्या फलवर्णनं नाम
षोडशोऽध्यायः १६ ॥ ७ ॥ ७ ॥ ७ ॥

॥ टीका ॥

अथ फलानि वक्तुं जात्यादितारतम्येन फलान्याह ॥ जात्येति ॥ यानि अस्मिञ्छास्त्रे फलान्युक्तानि तानि जातिदेशकालतारतम्येन जात्यादिस्वानुरूपं यथा भवति तथा फलं वदेदिति ॥ ११ ॥ पुनश्च फलविचारमाह ॥ उच्चेति ॥ अथ उच्चादिषु उच्चत्रिकोणादिस्थानस्थितेषु ग्रहेषु, तथा कलांशादिषु स्थितेषु ग्रहेषु यदुक्तं फलं तथा भाग्याध्यायोक्तमपि तत्सर्वं अत्र मासचर्याफलविचारे विशेषतः योजयेदिति ॥ १२ ॥ ॥ एवं षोडशकेऽध्याये गणेशप्रीतये मया ॥ यथामति कृता टीका संशोध्या विबुधैर्मुदा ॥ १ ॥ इति बृ० उत्तरभागे जटाशंकरसूनुज्योतिर्विच्छ्रीधरेण वि० सु० टी० यां मासचर्या फलवर्णनं नाम षोडशोऽध्यायः ॥ १६ ॥

॥ भाषा ॥

स संख्या होवे तो गोपशुकी वृद्धि जानना. तीस संख्या होवे तो क्षेत्र भूमि वृद्धि जानना. एकतीस संख्या होवे तो राजासे वृद्धि जानना. बत्तीस संख्या होवे तो दाससें वृद्धि जानना. तेहेतीस संख्या होवे तो महिष्यादि वृद्धि जानना. चौतीस संख्या होवे तो उष्ट्रादिक वृद्धि जानना. पैंतीस संख्या होवे तो गजाश्ववृद्धि जानना ॥ १० ॥ जात्येति ॥ यह स्थानकरण संख्याका फल जो कहा सो सब जाति देश कालतारतम्यतासें अपने स्वरूप सदृश फल जानना ॥ ११ ॥ उच्चेति ॥ पूर्वी जो उच्चादि स्थानगत फल और कलांशादिस्थितग्रह-

अर्केन्दुगुरवः शुक्रः क्रमादन्ये बलक्रमात्‌ । भवं-
तिस्थानदाः स्वेदाश्चत्वारश्चयदैकदा १ धनादी-
नांयथालब्धिः पंचचेत्पूज्यतायुतः । आरोग्यंवस्त्र-
लाभश्चषट्सुपट्टस्यबन्धनम्‌ २ सप्तचेद्राज्य-
लाभः स्यादेवंकरणदायदि धनहानिस्ततोव्या-
धिस्तनस्तुविपदादयः ३

॥ टीका ॥

ध्यात्वागणेशपादाब्जेव्याख्येयंक्रियतेमया ॥ अध्यायेसप्तदशकेयथाम-
तिसुबोधिनी ॥१॥ अथस्थानदरवेदायांनैकत्रसहवासतः ॥ फलानिवुवि-
चित्राणि ऋषिःपाराशरोऽब्रवीत्‌ ॥२॥ अथभगवान्महर्षिः पराशरः ग्रह-
योगफलानिकथयन्स्वशास्त्रमुपसंहरति ॥ तत्रस्थानदग्रहवशात्फलान्या-
ह ॥ अर्कमित्यादिपंचभिः ॥ अथ अर्केन्दुगुरवः शुक्रः रविचंद्रगुरुशुक्राः
क्रमात्‌ अथवा अन्ये भौमबुधशनयः एतेबलक्रमात्‌ निसर्गबलक्रमत
चत्वारोऽपि यदाएकदैव स्थानदाः स्थानप्रदाः भवंति तदा धनादीनांय-
थावल्लब्धिः प्राप्तिः स्यात्‌ पंचमेस्थानदेसति पूज्यतायुतः तथा आ-
रोग्यंवस्त्रलाभश्चस्यात्‌ षट्सु स्थानदेषु ग्रहेषुसत्सु पट्टस्यबंधनं पट्टा-
भिषेकः स्यात्‌ सप्तग्रहाः स्थानदाश्चेत्‌ राज्यलाभः स्यात्‌ इतिस्थानक-

॥ भाषा ॥

फल और भाग्याध्यायोक्त सर्व फल यह सब स्थानकरण फल विचारमे
योजना करना ॥१२॥ इतिश्री० उत्तरभागे भाषाटीकायां षोडशोऽध्यायः १६
॥ अर्कमित्यादिपंचभिः ॥ अब स्थानादिबलसे ग्रहोंका फल कहतेहैं - सू. चं. गु
शु और मं बु श यह स्थानप्रद एकही वख्त होवे तो धन प्राप्ति होवे. पां-
चवे स्थानद होवेतो पूज्य होवे आरोग्य वस्त्रलाभ होवे. स्थानद छै ग्रह होवे
तो पट्टाभिषेक होवे. स्थानद सात ग्रह होवे तो राज्यलाभ होवे. अब करण-

सप्तभिर्मरणं प्रोक्तमक्षाभावेमृतिर्भवेत् । तत्रति-
ष्ठतिचेत्खेटेत्वन्यस्मिन्यदिवामतः ४ उच्चसं-
ख्याधिका अंशाश्चंद्रस्य स्थानदाः परे । शुभा-
ख्याः शुभदाः प्रोक्ताराशिनात्र क्रमात्फलम् ५
होराशास्त्रमिदं सर्वं भाषितं तव सुव्रत । पुण्यं यश-
स्यं धन्यं च त्रिकालज्ञानकारणम् ६

॥ टीका ॥

लानि अथ एवं प्रकारेण यदि करणदातारः तर्हि चतुर्षु धनहानिः पंच-सु व्याधिः षट्सु विपदादयः सप्तभिः करणदैः मरणं प्रोक्तं तथा अ-क्षाभावे केवलं करणाभावेपि मृतिर्भवेत् तत्र करणाभावस्थाने यदि वा मतः अन्यस्मिन्खेटे तिष्ठति न मृतिः ॥ अथ चंद्रस्य उच्चस-ख्याधिका अंशाः ०।३ । एतदधिकाः चेद्ग्रहाः स्थानदाः स्थानफलदाः भवंति परेऽन्ये शुभाख्याः शुभसंज्ञकाः एते सर्वे शुभदाः प्रोक्ताः अत्र क्रमाद्राशिना फलं प्रोक्तं भाववदिति ध्वनिः ॥ १।२।३।४।५ ॥ अथ उक्त-शास्त्रस्य फलानि कथयन्नुपसंहरति ॥ होरेतिपंचभिः ॥ हे सुव्रत मैत्रेय! इदं सर्वं होराशास्त्रं तव मया भाषितं कथितं एतत्पुण्यं पुण्यकारकं यशस्यं यशस्करं धन्यं धन्यत्वसंपादकं त्रिकालज्ञानकारणं भूतभविष्यद्वर्तमा-

॥ भाषा ॥

फल कहते हैं:- करणद ग्रह चार होवे तो धनहानि पांच होवे तो व्याधि छै होवे तो विपत्ति सात होवे तो मरण फल जानना. करणका अभाव होवे तो भी मृत्यु होवे. अन्य ग्रह होवे तो मृत्यु न होवे. चंद्रका उच्चांश ०।३ है. इस-से ग्रह अधिक होवे तो स्थानफलदायक ग्रह जानना ॥ १।२।३।४।५ ॥ होरेतिपंचभिः ॥ अब शास्त्रका फल और उपसंहार समाप्ति विषय कहते हैं. हे मैत्रेय! यह सब होराशास्त्र तुमकूं मैंने कहो यह पुण्यकारक यशकारक

विनामनुतपस्यैवशास्त्रज्ञानेनकेवलं हस्ताम-
लकवत्सर्वंजगतांलोकयेत्फलं ७ पुत्रायशि-
ष्यायचधीमतेचतपस्विने मंत्रविदेचदात्रे द्द्यादि-
मंशास्त्रमहासमुद्रंयथैवशंभुःशिशवेपयोधिम् ८
बुद्धिहीनायदांभाय दांभिकायत्वमर्षिणे नदद्या-
द्यदिदद्याच्चेद्विद्यास्वस्यविनश्यति ९ एवंनेकधि-
तंशास्त्रंत्वयिस्नेहाद्द्विजोत्तम ! जातकांशविद्या-
शंकिंभूयस्त्वंश्रोतुमिच्छसि १० इतिवृ० उ० भा०
दिनचर्यादिफलवर्णनंनाम ससदशोऽध्यायः १७

॥ टीका ॥

नज्ञानकारकं विनामनुतपस्या मंत्रजपव्यतिरेकेणापि केवलं एत-
च्छास्त्रज्ञानेनैव सर्वजगद्धस्तामलकवत्करगृहीतफलवत्सर्वंफलं लो-
कयेद्विलोकयेत् एतादृशं इदंशास्त्रं पुत्रायशिष्याय धीमते बुद्धिमते त-
पस्विने मंत्रविदे दात्रेचादद्यात् इमंशास्त्ररूपंमहासमुद्रं अगाधमित्य-
र्थः बुद्धिहीनाय दंभवते दंभकरायवा अमर्षिणे क्रोधशालिनेच नद-
द्यात् एतद्दोषरहितायशिशवेऽपि दद्यात् अत्रदृष्टांतमाह ॥ यथाशंभुः

॥ भाषा ॥

धनधान्यसंपादक भूतभविष्यद्वर्तमानकालका शुभाऽशुभ सूचक शास्त्रहै
इसशास्त्रका उत्तम ज्ञानकरणेसे मंत्राराधन, देवताराधन करेबिना हातमें
जैसा फललिया होवे वैसा सपूर्ण जगतका शुभाशुभ देखता है. यहशा
स्त्रमंत्रकु, शिष्यकूं, बुद्धिमानकूं, मंत्रवेत्ता पुरुषकूं देना यह शास्त्र समु
सरीखा अगाधहै. यह शास्त्र दंभीकु, क्रोधीकूं, दुष्टकूं देना नहीं दियेसे
कहनेवालेकी विद्या नष्ट होती है. और यह पूर्वोक्त दोष रहित बालकभी
होवे तो उसकूं यह शास्त्र देना जैसा शिवने तपस्वी जो उपमन्युबालक

# मैत्रेय उवाच.

भगवन्प्रश्नशास्त्रंतु सूचिकानामकाशितम् क-
लौयुगेतु मंदानांयज्ज्ञातुंनह्यदस्वमे १

॥ टीका॥

तपस्विने शिशवे उपमन्यवे पयोधिमदात् एवं यदि दुष्टायदद्यात्चेत् इयंवि-
द्या स्वस्ववक्तुः विनश्यति हीयते हे द्विजोत्तम ब्राह्मणश्रेष्ठ। त्वयि स्नेहादे-
वंशास्त्रंतेकथितं अनंतरंजातकांशं विद्यांशं जातकांशभूतांशं भूयः किंवा
त्वंश्रोतुमिच्छसि ॥६।७।८।९।१०॥ इतिसप्तदशेऽध्यायेव्याख्येयंतु
यथामति॥ कृतागणपतिप्रीत्येपरोपकृतयेऽपिच ॥१॥ इतिश्री बृहत्परा-
शरहोराशास्त्रे श्रीमद्‌ध्यङ्कन्वयवं०शा० ज्योतिर्विच्छ्रीधरेणविरचितायां
सु०टीकायां सप्तदशोऽध्यायः ॥१७॥ अथाष्टादशके ध्यायेशास्त्रज्ञा-
नस्यसिद्धये॥ यथायत्कथितामत्रावन्यच्चापिप्रकीर्णकम्॥१॥ गण-
शोमांप्रेरयतुतद्यांचिरव्यासुमर्भकम्॥ अष्टादशलमेऽध्यायेदयालुर्वि-
श्वपालकः॥२॥ अथभगवान्महर्षिः अष्टादशेऽध्याये मैत्रेयाय यथा-
र्थंज्योतिर्ज्ञानप्रदोमंत्रो प्रश्नादिप्रकीर्णंचाह॥ मैत्रेयः पृच्छति भगव-
न्निति॥ मैत्रेयऋषिः पराशरात्सर्वज्योतिः शास्त्रंश्रुत्वा एतज्ज्ञानाय

॥ भाषा॥

उसकू पयोधि दिया. हे मैत्रेय तेरे स्नेहके लिये यह जातकांश मैंने कहा.
आगे पुनः क्या श्रवन करनेकी इच्छा है सो कहो॥६।७।८।९।१०॥
इतिबृ० भाषाटीकायां सप्तदशोऽध्यायः॥१७॥ भगवन्निति॥ अब यह अ-
ठारवे अध्यायमें मैत्रेय ऋषि पराशर गुरूके मुखसे संपूर्ण जातक शास्त्रका
श्रवण करके मनमें विचार किया कि यह जातक शास्त्रका उत्तम ज्ञान कलि-
युगमें होना दुर्लभ है; कारण मानव, जडबुद्धि वो होन है. वास्ते कलिमें

कृतेयुगेतुधर्मस्यपूर्णत्वात्तपसान्विताः सर्वेजानंतिभूतंचभवद्भाविद्विजोत्तम २ त्रेतायांतपसायुक्ताः केचिज्ज्ञानन्तिवैद्विजाः पश्यंतिद्वापरेशास्त्रज्ञानेनतपसापिच ३ कलौयुगेतुधर्मस्यपादमात्रव्यवस्थितिः तपःशक्त्यातुतज्ज्ञातुंनशक्तामानवाभुवि ४

॥ टीका ॥

कलिजडधियां पूर्णज्ञानजनकोपायंज्योतिःशास्त्रंपृच्छति ॥ भगवन्निति ॥ हे भगवन्! सूचिकानां सूचीवत् वेधकबुद्धीनां बुद्धिमतामित्यर्थः ज्योतिःशास्त्रंज्ञातुं अवगंतु प्रश्नशास्त्रं प्रकाशितं किंतु अस्मिन्कलियुगेमंदानां यथावज्ज्ञातुं यच्छक्तं भवति तन्मे वदस्व ॥ १ ॥ एवंप्रश्नंश्रुत्वाउपायंवक्तुं उपक्रमते ॥ कृतेइतिचतुर्भिः ॥ हेद्विजोत्तम मैत्रेय! कृते युगेधर्मस्यपूर्णत्वात्सर्वेजनाः तपसान्विताः अतएव एतच्छास्त्रंजानंति अज्ञासिषुरित्यर्थः तेनभूतं प्राक्कालीनं भवद्वर्तमानकालीनं भावि भविष्यत्कालीनंचविदुः ततस्त्रेतायांतपसायुक्ताः केचिद्विजाः जानंति नसर्वे द्वापरे तपसा शास्त्राभ्यासेनच पश्यंति एवं युगत्रये

॥ भाषा ॥

पूर्ण ज्ञान जिसमें होवे ऐसा ज्योतिःशास्त्र पूछते हैं- हे भगवन् जिनोंकी सूक्ष्मवेधक बुद्धि है उनोंकूं ज्ञानदायक प्रश्नशास्त्र तुमने प्रकाशित किया. किंतु यह कलियुगमें मदबुद्धिकूं जैसा ज्ञान होवे यो उपाय कहो ॥ १ ॥ कृतेइतिचतुर्भिः ॥ पराशरजी कहते हैः- हे मैत्रेय! सत्ययुगमें सब लोक तपश्चर्यामें रहते वास्ते इसशास्त्रकूं जानते- उससे त्रिकाल ज्ञान कहते. बाद त्रेतायुगमें लोक तपसे रहते. कितनेक ब्राह्मण उससे जानते हैं- सब जानते नहीं हैं. द्वापर युगमें तप और शास्त्राभ्याससे देखते हैं. एसा नीत

तथात्रपरमःशंभुर्लोकानुग्रहकांक्षया लक्षीकृत्य
निजांशक्तिंविद्यामाधात्सईश्वरः ५ कलावधिंच
भक्तानांत्रिकालज्ञानदायिनी वेदादिवाग्भवंगौ-
रिवदद्वयमथोगिरि ६ परमैश्वर्यसिद्ध्यर्थंवाग्भ-
वंस्यादयंमनुः सर्वज्ञेतिपदंपूर्वंनाथांतंपार्वतीपते
७ सर्वलोकगुरो पश्चाच्छिवेतिद्वयमक्षरम् शर-
णंतुपदंपश्चात्त्वांप्रपन्नोऽस्मितत्परम् ८ पालये-
तिपदंज्ञानंप्रदापयततः परम्

॥ टीका ॥

एतच्छास्त्रस्य सम्यक् ज्ञातारो बभूवुः अस्मिन्कलियुगेतु धर्मस्य पा-
दमात्रव्यवस्थितिः धर्मपादावशेषत्वं अतः तपःशक्त्या तच्छास्त्रं ज्ञा-
तुं भुवि मानवानशक्ताः संति -तस्मात् यथार्थस्तवप्रश्न इति ॥ १।२।३।४
अथज्ञानोपायमाह ॥ तथेत्यादिसार्धाष्टश्लोकपर्यंतम् ॥ तथा अपकृष्ट-
ज्ञानान् अत्र भूमंडले मानवान्दृष्ट्वा परमसर्वोत्कृष्टः शंभुः सदाशिवः
लोकानुग्रहकांक्षया परोपकाराय निजांशक्तिं स्वकीयज्ञानशक्तिं लक्षीकृ-
त्यस्मृत्वा सः ईश्वरः विद्यां आधात् निर्ममइत्यर्थः -तत्रोद्धारः-वेदादिः
प्रणवः वाग्भवं वाग्बीजं ऐंमिति गौरीति संबोधनं वदद्वयं वदवदेत्येवंरूपं

॥ भाषा ॥

युगमें इसशास्त्रकूं उत्तम तराहसे जाननेवाले होते भये- यह कलियुगमें धर्मका
एक पादमात्र रहा है- वास्ते तपशक्ति विना इसशास्त्रकुं जाननेकूं पृथ्वीमें मनु-
ष्य समर्थ नहीं है. वास्ते तुमारा प्रश्न यथार्थ है. ॥ २।३।४। ॥ तथेत्यादिसार्धा-
ष्टमश्लोकपर्यंतम् ॥ अब ज्ञान होनेका उपाय कहते है- इस भूमंडलमें अपकृ-
ष्ट ज्ञानी मनुष्योंकूं देखके, सर्वोत्कृष्ट सदाशिव परोपकारार्थ अपनी ज्ञानशक्तीका
स्मरण करके, विद्या निर्माण किया सो शक्ति शिवके दोनो मंत्र स्पष्ट दिखाते है.

ऋषिस्तुदक्षिणामूर्तिर्गौरीपरमेश्वरीतथा ९
सर्वज्ञश्चशिवोदेवोगायत्रीच्छंदईरितम् । अनुष्टुप्
चषडंगंस्याद्वाग्भवेनहृदादिच १० अनेनाभ्यां
द्विजश्रेष्ठबुद्धिस्तुविमलाभवेत् । जपमात्रेणासिद्धिः
स्याद्दैवज्ञत्वमकाशते ११

॥ टीका ॥

अथोअनंतरं गिरिततः परमेश्वर्यसिद्ध्यर्थं ऐंइतिमंत्रनिष्कर्षः अयंशक्तिमंत्रः अथशिवमंत्रोद्धारः पूर्वंसर्वज्ञइति ततः नाथइतिपदं ततः पार्वतीपते इतिपदं ततः सर्वलोकगुरोइतिपदं ततःशिवेतिपदं ततःशरणमितिपदं ततस्त्वांप्रपन्नोस्मीतिपदं ततः पालयेतिपदं ततः ज्ञानमितिपदं ततः प्रदापयेतिपदं ॥ सर्वज्ञनाथपार्वतीपतेसर्वलोकगुरोशिवशरणंत्वां प्रपन्नोस्मि पालय ज्ञानंप्रदापय इतिस्पष्टमंत्रनिष्कर्षः एवंरूपौज्योतिःशास्त्रज्ञानाय शक्तिशिवमंत्रौ महाविद्येनिर्ममेइति ॥ ५।६।७।८ ॥ अथसर्वमंत्राणां ऋष्यादिस्मरणंविना मंत्रसिद्ध्यभावः न्यासेनविना मंत्रस्य भुजंगत्वापत्तिः ध्यानेनविना इष्टसिद्ध्यभावः तंत्रेप्रसिद्धः अतः ऋष्यादीनाह ॥ ऋषिरित्येकादशश्लोकपर्यंतम् ॥ अनयोर्मंत्रयोः दक्षिणामूर्तिर्ऋषिः गौरी परमेश्वरी सर्वज्ञशिवश्चदेवतेगायत्र्यनुष्टुभौ छंदसी वाग्भवेन ऐं इत्याकारकेण हृदादि अंगुष्ठादिन्यासः हेद्विजश्रेष्ठ! आभ्या

॥ भाषा ॥

ॐ ऐं गौरिवदवदगिरिपरमेश्वर्यसिद्ध्यर्थं ऐं यह शक्तिका मंत्र अब शिवका मंत्र कहतेहैं:- सर्वज्ञनाथ पार्वतीपते, सर्वलोकगुरो शिव शरणं त्वां प्रपन्नोऽस्मि पालयज्ञानं प्रदापय ॥ यह शिवका मंत्र कहा ॥ ५।६।७।८ ॥ ऋषिरित्येकादशश्लोकपर्यंतं ॥ अब शक्ति शिवके दोनो मंत्रके ऋषि देवता छंद कहते हैं- ॥ अनयोर्मंत्रयोः दक्षिणामूर्तिर्ऋषिः गौरीपरमेश्वरी सर्वज्ञशिवश्च देवते गायत्र्य-

उद्यानस्यैकवृक्षाधःपरेहैमवतेद्विज ॥ क्रीडंतींभूषितांगौरींशुक्लवस्त्रांशुचिस्मिताम् १२ देवदारुवनेतत्र ध्यानस्तिमितलोचनम् ॥ चतुर्भुजंत्रिनेत्रंचजटिलंचंद्रशेखरम् १३ शुक्लवर्णमहादेवं-ध्यायेत्परमभीश्वरम्

॥ टीका ॥

मंत्राभ्यां अनेनविधानेन जपाद्बुद्धिः विमलाभवेत् जपमात्रेणैवसिद्धिःस्यात् नपुरश्चर्याद्यावश्यकत्वम् अनेनदैवज्ञत्वं ज्योतिषिकत्वंप्रकाशते विराजते प्रश्नकथनपाटवंप्रवर्धतइत्यर्थःइति॥९।१०।११॥ अथध्यानमाह॥ उद्यानस्येत्यादिसार्धद्वयेन ॥उद्यानस्य आरामस्यएकवृक्षाधः मुख्यवटवृक्षाधोभागेहैमवते हिमवत्पर्वतोद्भूते परेउत्कृष्टे आसनइतिशेषः भूषितां अलंकृतां शुक्लवस्त्रांशुचिस्मितां गौरीं क्रीडंतीं ध्यायेत् तत्रोपवने ध्यानस्तिमितलोचनं ध्यानेननिमीलितदृष्टिं त्रिनेत्रंचतुर्भुजं जटिलं जटाधारिणं चंद्रशेखरं भालचंद्रं शुक्लवर्णं परमसर्वोत्तमं ईश्वरं सर्वनियंतारं महादेवं सर्वदेवश्रेष्ठं दीव्यति प्रकाशयति

॥ भाषा ॥

नुष्टुभो छंदसि ममत्रिकालदर्शकज्योतिःशास्त्रज्ञानप्राप्तये जपेविनियोगः ऐसाविनियोग पढके पीछे ऐं यह बीजसे अंगुष्ठादिक न्यास हृदयादि न्यास करना. हे मैत्रेय! यह दोनो मंत्रके पुरश्चरण करनेसे निर्मल बुद्धि और ज्योतिषका यथार्थज्ञान प्रकाशित होवेगा ॥९।१०।११॥ उद्यानस्येत्यादिसार्धद्वयेन॥ एसे न्यासकरके पीछे शक्तिशीवका ध्यान करना, सो कहतेहैः—हिमालयपर्वतके ऊपर एक बडा बगीचा है उसमें एकवटका झाड है उसकी छाया नीचे उत्तम आसनके ऊपर बैठेहुवे शोभायमान सुपेदवस्त्र जिनोने पैरे है और पवित्रहास्यसहित जिनका मुखक्रीडा कर रहे है ऐसी गौरीका ध्यान क-

द्विविधंगणितंज्ञात्वाशाखास्कंधंविमृश्यच १४ होरास्कंधस्यशकलेश्रुत्वार्थमवधार्यच वाग्मीद्विजवरोयःस्यान्नवंध्यातस्यभारती १५ अलुब्धो नैष्ठिकः शुद्धोविनयप्रश्रयान्वितः

॥टीका॥

सर्वंदिव्यादीनितिदेवः महांश्चासौदेवश्चमहादेवः तेषांसर्वेषांमपिश्रेष्ठः परब्रह्मेतिभावः एवंध्यायेदिति ॥१२।१३॥ अथगणकाधिकारमाह॥द्विविधमितिपंचदशश्लोकपर्यंतम् ॥ यःद्विविधंखगोलभूगोलविषयंगणितं ज्ञात्वा शाखास्कंधंविमृश्यविचार्य होरास्कंधस्यशकले द्विप्रकारके श्रुत्वा गुरोःसकाशादधीत्येत्यर्थः अर्थमवधार्य निश्चित्य वाग्मी प्रशस्तवाक्द्विजवरोभवतितस्यवाणी वंध्याविफलानभवति फलतीत्यर्थः ॥१४।१५॥ अथपृच्छकलक्षणमाह ॥ अलुब्धइतिसार्धेन ॥ पृच्छकः नैष्ठिकोनिष्ठावान् शुद्धोनिष्कपटः विनयप्रश्रयान्वितः विनयादियुक्तः अलुब्धो लोभरहितः

॥भाषा॥

रना. और श्रोई वगीचेमें ध्यान करके जिनोनें दृष्टि मीच लियेहै तीन नेत्रहै चार भुजाहै जटा धारण कियेहै. जिनके भालमें चंद्र सुशोभित है. श्वेत जिनका वर्णहै. सबके नियंता सर्वोत्तम सर्व देवमें श्रेष्ठ एसे साक्षान्महादेव परब्रह्महै ऐसा ध्यान करना. ॥१२।१३॥ द्विविधमितिपंचदशश्लोकपर्यंतम् ॥ अब ज्योतिषीका लक्षणकहतेहैः- जो पुरुष भूगोल खगोल गणितकूं जानता है और जानकके दोभाग उत्तम रीतिसे गुरुमुखसे जानके विचार करके जो उत्तम वाणीसे बोलता है वो उत्तम दैवज्ञ होताहै. उसकी वाणी निष्फल नहीं होती ॥१४।१५॥ अलुब्धइतिसार्धेन॥ पृच्छक निष्ठावान् निष्कपट नम्रतादियुक्त लोभरहित होके अपने हातमें सुवर्ण रत्न वस्त्र धान्यमेसे कोई पदार्थ लेना. गरीब होवे तो पुष्पफलमूलमेंसे कोईभी पदार्थ लेके ज्योतिषिकं

रत्नंस्वर्णधनंवस्त्रंपुष्पमूलफलानितु ॥१६॥ दैव-
ज्ञपुरतोदत्वा पृच्छेदिष्टंप्रियान्वितः अथप्राङ्मु-
खआसीनः शुचिर्दैवविदग्रतः ॥१७॥ तिर्यगूर्ध्वाश्च-
तस्रस्तु रेखा रज्जुसमालिखेत् एकीकुर्याच्चत्वा-
रिमध्यस्थानिपदानिच ॥१८॥ तत्रपद्मंलिखेद्रेखा-
पद्ममध्यंसकर्णिकम् ईशान्यकोष्ठादारभ्यमीना-
द्याराशयः क्रमात् ॥१९॥ मेषवीथीवृषाद्यास्तुकौ-
प्योद्यामिथुनस्यतु वीथयोमीनमेषौतुतुलाकन्ये
वृषस्यतु ॥२०॥ आरूढाद्वीथिभंयावत्तावच्छस्त्रं
तुलग्नतः आरूढराशिर्लग्नंचेच्छत्रंचापिभवेत्तथा २१

॥ टीका ॥

सन् रत्नस्वर्णधनवस्त्रान्यतमं अशक्तश्चेत् पुष्पमूलफलान्यतमंवा दैवज्ञपुरतः ज्योतिषिकाग्रे दत्वा समर्प्य प्रियान्वितः प्रीतमनाः नतु दानेनखिन्नमानसः इष्टंमनीप्सितं पृच्छेदिति ॥१६॥ अथदैवज्ञकर्तव्य-माह ॥ अथेतिद्वाविंशतिश्लोकपर्यंतम् ॥ अथ प्रश्नानंतरं दैववित् दैवज्ञः शु-चिः सन् प्राङ्मुखआसीनः प्राङ्मुखोपविष्टः अग्रतः पुरोभागे तिर्य-गूर्ध्वाः प्राक्पश्चिमाः दक्षिणोत्तराश्च रज्जुसमाः चतस्रः चतस्रो रे-खाः लिखेत् तत्र मध्यस्थानीचत्वारिपदानि एकीकुर्यात् तत्र पद्मं रेखा-पद्ममध्यस्थं सकर्णिकं लिखेत् ततः ईशान्यकोष्ठात् आरभ्यमीनाद्याः

॥ भाषा ॥

सामने रखके प्रसन्नमनहोके मनसइंप्सित प्रश्न पूछना ॥१६॥ अथेतिद्वाविंश-तिश्लोकपर्यंतं ॥ अब ज्योतिषीका कर्तव्य कहतेहैं - पृच्छकने प्रश्न किया पी-छे ज्योतिषीने पवित्रतासे पूर्वाभिमुख बैठके राशिचक्र आगे लिखा है वैसा लिखना. बीचमें कमल लिखके आरूढ लग्नका विचार करना. पृच्छक

जन्मलग्नंसमासाद्ययद्यत्योक्तंतुजातके तत्स-
र्वंप्रश्नलग्नेन प्रश्नकालाद्वदेद्बुधः २२ यत्
कालावधिलग्नंतत्तत्कालावधिचेत्स्थिते तेषांबल-
वतांचैवनिर्णयः स्वायुषः स्मृतः २३

॥ टीका॥

राशयः क्रमाल्लिखेत् . तत्रवृषाद्याः वृश्चिकाद्याश्च मेषवीथयो भवंति मिथुनस्यवीथयः मीनमेषौ वृषस्यतु तुलाकन्या आरूढात् लग्नतः याव-त्वीथिभं तावच्छत्रं लग्नमेव आरूढराशिश्चेत्तदेव छत्रंभजेत् एवंविचार्य .जातके जन्मलग्नंसमासाद्ययद्यत्प्रोक्तं तत्सर्वं प्रश्नकारलग्नाद्बुधोवदेदि-ति ॥१७।१८।१९।२०।२१।२२॥ अथ आरूढलग्नतः आयुर्निर्णयंद्रेष्का-णफलंचाह ॥ यदितिद्वाभ्याम्॥ अथलग्नंयत्कालावधि यत्कालपर्यन्तं तत्कालावधि तत्कालपर्यन्तं इच्छितेआयुर्निर्णये पृष्टे सतीत्यर्थः तेषांग्र-हाणां बलवतांसतां आयुषोनिर्णयः स्मृतः ग्रहबलेन आयुर्निर्णयइत्य-

॥ भाषा ॥

जिस दिशामें बैठा होवे वो आरूढ लग्न अथवा राशीकों स्पर्श करे वारा लग्न-

| | | | |
|---|---|---|---|
| १२ | १ | २ | ३ |
| ११ | अथ राशिचक्रम् | | ४ |
| १० | | | ५ |
| ९ | ८ | ७ | ६ |

| वीथिज्ञानचक्रम् | | | | |
|---|---|---|---|---|
| २ | ३ | ४ | ५ | मे. |
| ८ | ९ | १० | ११ | मि |
| १ | १२ | ७ | ६ | वृ. |

में उसकूं आरूढ जानना. वृषादि चार राशीमें मेषवीथी जानना. वृश्चिकादि चार राशीमेंमिथुन वीथी जानना. मेषमीनक-न्यातुला यह राशीमें वृषभवीथी जान-ना. आरूढ लग्नसें जहांतग वीथीकी राशी होवे उतनी संख्यातुल्य तत्काल लग्नसे संख्या राशीकुं आवे वो छत्ररा-शि जानना ॥१७।१८।१९।२०।२१।२२॥

॥यदितिद्वाभ्याम्॥ अथ आरूढ लग्नसे आयुष्यनिर्णय और द्रेष्काणफल कहतेहैं-

आद्यद्रेष्काणमंत्यंचमृत्युदंचक्रमाद्भवेत् मृगादिकर्कटानांचमीनस्यारूढलग्नतः २४ लग्ने पृष्ठोदयेक्रूरवेश्मास्तव्ययगायदि धनेधर्मेकुजे मंदेचंद्रेरंध्रेमृतिर्भवेत् २५ पापैर्दुरुधरेजाते लग्नकामसुहृत्स्थिते चंद्रेउकेंचविलग्नस्थेम्रियते व्याधिनाभृशम् २६ राहुकालसमायोगेमरणं निश्चितंभवेत्

॥ टीका ॥

थः अथच मृगालिकर्कटानां मकरवृश्चिककर्कानां मीनस्यच आरूढलग्नतः आद्यंत द्रेष्काणेसति लग्नंमृत्युदंभवेत् ॥२३।२४॥ लग्नेपृष्ठोदयइति ॥ अथमृत्युलक्षणमाह ॥ पृष्ठोदये प्रश्नलग्नेसति तथाक्रूराः ग्रहाः यदि वेश्मास्तव्ययगाः प्रश्नलग्नाच्चतुर्थसप्तमव्ययस्थाः संतिचेत् अथवा धने धर्मे द्वितीयनवमे वा स्थाने कुजे मंदे मंगलेशनौ वा सति तथा रंध्रे अष्टमस्थाने चंद्रेसतिमृतिर्भवेत् ॥२५॥ अथपुनर्मरणयोगांतरमाह ॥ पापैरिति सार्धेन ॥ पापैः पापग्रहैः दुरुधरेयोगेजातेसति अथवा जन्मलग्नेऽथवा कामसुहृत्स्थिते सप्तमचतुर्थस्थेचंद्रे सति अथवा प्रश्न-

॥ भाषा ॥

तत्काल लग्नकाजो कालावधि है वहांतक आयुष्यनिर्णय कहाहै. मकर, वृश्चिक, कर्क, मीन इनोंका आरूढ लग्नसे आद्यंतद्रेष्काण होवे तो वो लग्न मृत्युकारक जानना. ॥२३।२४॥ लग्नेपृष्ठोदयइति ॥ अब मृत्युका लक्षण कहते हैं:- प्रश्नलग्नमें पृष्ठोदय लग्न होवे और लग्नसे पापग्रह ४।७।१२ होवे अथवा २।९ मंगल, शनि होवे और ८ स्थानमें चंद्र होवे तो मृत्यु होवे ॥२५ ॥ पापैरितिसार्धेन ॥ अब और मरणका योगांतर कहते हैं:- प्रश्नलग्नमें, या जन्मलग्नमें पापग्रहका दुरुधरा योग होवे अथवा ७।४ चंद्र होवे अथवा प्रश्नल-

मेषाद्युत्क्रमतोराहुर्वृषात्कालः क्रमाच्चरेत् २७ राशौराशौतुपंचाशद्भोगकालोविनाडिका अर्कोदयादिनश्चोभौभुंजतेचपुनःपुनः २८ एकाद्व्यब्धिरामेषुषडष्टारं नराः क्रमात् अर्कवारादितोराहू रात्रावेवमुदीरितः २९ राहुरुत्क्रमशः प्राच्याः कालश्चक्रमशश्चरेत् उभौसार्धविनाड्येनराशिषुद्वादशस्वपि ३० इंद्रेंद्वग्निनिशाचरशमवारीशवायवः रुद्रचंद्रजलेशेशपापकेंद्रयमस्थितः ३१ रक्षोवायुस्ततोग्नीशयमवारुणराक्षसाः वायुसोमशचीनाथरक्षोग्निजलपेन्दवः ३२

॥ टीका ॥

लग्नस्थेऽर्कसतिच व्याधिना भृशं म्रियते प्रश्नलग्ने राहुकाल समायोगे वा निश्चितंमरणं भवेत् ॥२६॥ अथ राहुकालयोगज्ञानमाह ॥ मेषादीत्यादि सार्धचतुस्त्रिंशच्छ्लोकपर्यन्तम् ॥ राहुः मेषात् उत्क्रमतः विलोमरीत्या क्रमाच्चरेत् कालः वृषात् क्रमात् द्वादश लग्नेषु चरेत् राशौराशौ प्रतिराशिं पंचाशद्विनाडिकाः भोगकालः अर्कोदयादितः सूर्योदयलग्नमारभ्य उभौ पुनःपुनः लग्नादि भुंजते नत्वार्कवारादितः सप्तवारेषु क्रमात् राहुः १ द्वि २ अब्धि ४ राम ३ इषु ५ षट् ६ अष्ट ८ घटिकाः राहुः रात्रौ प्राच्याः दिशः सकाशात् उत्क्रमशः विलोमगत्या

॥ भाषा ॥

लग्नमें सूर्य होवे और प्रश्नसमयमें राहुकालसमायोग होवे तो व्याधिके निमित्तसें मृत्यु होवे. ॥२६॥ मेषादीन्यादिसार्धचतुस्त्रिंशच्छ्लोकपर्यंतत् ॥ अब राहुकालयोगका ज्ञान कहते हैं.– राहु, मेष, मीन. और कुंभ एसें क्रमसे चलता है. काल है सो वृषभ, मिथुन, कर्क एसें क्रमसें चलता है. क्र

वाय्वीशेंद्रयमाः पश्चाद्युग्मेन्द्रौचनिशाचरः मरु-
द्वरुणचंद्रेशपावकोवरुणोयमः ३३ वायुरुद्र-
शशीन्द्राग्नीराक्षसाश्चततः परम् वायुरक्षःशशीं-
द्रेशपावकांतकवारुणाः ३४ अर्कवारादितोवा-
मंराहुः संचरतिक्रमात्

॥ टीका ॥

दिक्षु उदीरितः कथितः तथा तेनैव मानेन कालः प्राच्यादिशः सकाशात् क्रमशः दिक्षु चरेत् संचरति उभौ द्वावपि सार्धद्विनाड्येन सार्धघटिकाद्वयेन द्वादशस्वपिराशिषु संचरेतां तत्र राहुः दिक्षुक्रमाद्वामंसंचरति इतिम-श्लोकार्धेनान्वयः तमेवक्रममाह॥ रविवारे इंद्रः प्राक् इंदुः सोमः उदक् अग्निः आग्नेयी निशाचरः निर्ऋतिः शमः शमनः दक्षिणः वारीशः वरुणः पश्चिमः वायुश्च एतादिशः क्रमेण संचरति इंदुवारे रुद्रः, चंद्रः, जलेशः, ईशः, पावकः, इंद्रः, यमः एषांदिक्षु भौमवारे रक्षः, वायु, अग्निः, ईशः, यमः, वरुणः, राक्षसः एषांदिक्षु . सौम्यवारे- वायुः, सोमः, शचीनाथः, रक्षः, अग्निः, जलपः, इंदुः एषां दिक्षु . गुरुवारे- वायुः, ईशः, इंद्रः, यमः पश्चात् युग्मः पश्चिमा- इंद्रः, निशाचरः एतद्दिक्षु . शुक्रवारे- मरुत्, वरुणः, चंद्रः, ईशः, पावकः, वरुणः, यमः एतद्दिक्षु . शनिवारे- वायुः, रुद्रः, शशी, इंद्रः, अग्निः, राक्षसः, वायुः अथवा रक्षः, शशी, इंद्रः, ईशः, पावकः, अंतकः, वरुणः एषांदिक्षु क्रमादर्क्यादिसप्तवारेषु राहुः संचरतीति ॥ २७।२८।२९।३०।३१।३२।३३।३४ ॥

॥ भाषा ॥

क राशीमें सूर्योदयसे लेके पचास पल भोगकाल है. इस रीतिसे राहु और काल यह दोनो वारंवार लग्नादिककूं भोगते है उसमें सूर्यादि सातवारके विषें क्रमसे १।२।३।४।५।६।७।८ घडी राहु- रात्रीकूं पूर्व, ईशान, उत्तर

रुद्रः समीरः सोमाग्नीयमोऽथनिर्ऋतिर्जलम् नक्ष-
त्रेऽपिचवारेचतिथौचोत्क्रमतः क्रमात् ३५ अं-
तिमादादिमाद्राहुः कालश्चचरतस्तथा द्वयोर्यो-
गेतुमरणमेकस्मिन्व्याधिरुच्यते ३६ नृपामूर्छा
शरास्तत्त्वंनिधिषोडशपंचच द्वितीयेत्वष्टमेभाव-
स्त्वंतरेत्वनुपाततः ३७

॥ टीका॥

अथ नक्षत्रतिथिवारेषुदिक्क्रममाह ॥ रुद्रइतिद्वयेन ॥ अथनक्षत्रेवारेतिथौ चरुद्रः ईशानी समीरः वायुदिक् सोमः उदक् अग्निः आग्नेयी यमोदक्षिणा निर्ऋतिः स्पष्टा जलंपश्चिमा आसुदिशासु अश्विनीनक्षत्ररविवारप्रतिपत्तिथीः आरभ्यांः तिमाद्राहुरुत्क्रमतः आदिमात्कालः क्रमतः एवमुभावपिदिक्षुचरतः एवंसंचारेणएकस्मिंस्तिथ्याद्यन्यतमयोगेव्याधिः द्वयोस्तिथ्याद्यन्यतमद्वियोगे मरणमित्युच्यते॥ ३५।३६॥अथद्वितीयभावादष्टमभावपर्यंतंरश्मीनाह॥नृपा-

॥ भाषा ॥

वायु यह क्रमसे भोगताहै वैसा कालपूर्व अग्निदक्षिण नैर्ऋत एसे क्रमसे चलताहै यह दोनोंका प्रत्येक दिशामें भोगकाल घटी ७ पल ३० तक रहताहै पहिले जो पञ्चास्वरभोगकाल कहाथो सो भोगका जानना. अब प्रत्येक वारमें दिशा भोगतेहैं वो क्रम टीकामेंस्पष्टहै ॥२७।२८।२९।३०।३१।३२।३३।३४॥ रुद्रइतिद्वयेन॥ अथनक्षत्रतिथिवारके क्रमसे राहु और कालका परिभ्रमण कहतेहैं-दिशाक्रम- ईशान१ वायु२ उत्तर३ अग्नि४ दक्षिण५ नैर्ऋति६ पश्चिम७ यह सात दिशामें अश्विनीसे वर्तमाननक्षत्रतक रविवारसे वर्तमानवारतक प्रतिपदासे वर्तमानतिथितक दिशामें फिरतेहैं. सो एसाकि राहु अंतिम क्रमसे पश्चिम निर्ऋति ऐसा और काल आदिक्रमसे ईशानवायु ऐसा पीछे यह राहु-कालसंचार एकठिकाने तिथ्यादिकका दो योगहोवेतो मरण एक योगहोवे तो व्याधि जानना ॥३५।३६॥ नृपाइति॥ अब भावके रश्मी कहते है – द्वि॰ १६, तृ॰ २१ च ५,पं २०

नागाब्धेषुगुणारुद्रावाजिवेदांगपंक्तयः दशपंचाष्टकामेषाद्रश्मयः संप्रकीर्तिताः ३८ एकयोगे तुसर्वेषुव्याधिर्द्वाभ्यांभवेन्मृतिः लक्ष्मीयोगेषु सर्वेषुव्याधिस्तस्यनवापिवा ३९

॥ टीका ॥

इति॥ द्वितीयभावस्यनृपाः १६ तृतीयस्य मूर्छाः २१ चतुर्थस्य शराः ५ पंचमस्य तत्त्वं २५ षष्ठस्यतिथिः १५ सप्तमस्यषोडश१६ अष्टमस्यपंच ततः अंतरे येभावाः संतितेषामंकास्तु अनुपाततोग्राह्याःइतिविषयः पूर्वं रश्मिप्रकरणे स्पष्टीकृतोऽस्त्येव ॥ ३७ ॥ अथमेषादिराशिषुरश्मीनाह॥ नागेत्यादिसार्धेन॥ नागाः८ अष्ट८ इषवः ५ गुणाः ३ रुद्राः ११ वाजिनः ७ वेदाः ४ अंगानि६ पंक्तयः १० दश १० पंच ५ अष्ट८ एतेरश्मयः रश्म्यंकाः मेषादिराशिषुक्रमात्संप्रकीर्तिताः एषुराहुकालयोर्द्वयोर्योगेव्याधितो मृत्युः स्यात् तथा एषु सर्वेषु एकयोगे व्याधिः स्यादिति ॥ ३८ ॥ अथास्यापवादमाह॥ लक्ष्मीत्यर्धेन ॥ सर्वेषुपूर्वोक्तेषु लक्ष्मीयोगेषु पूर्वोक्ते एकयोगेसत्यपि तस्य व्याधिः कदाचित्स्यात्कदाचिन्नस्यादपि॥ ॥३९॥ ॥७॥ ॥ ७ ॥

॥ भाषा ॥

ष॰ १५ स॰ १६ अ॰ ५ शेषभावके अनुपातसें पूर्वी कहेहै वे जानने ॥ ३७ ॥ नागेत्यादि सार्धेन ॥ अब मेषादि राशीके रश्मी कहते हैः- मेष ८ वृषभ ८ मिथुन ५ कर्क ३ सिंह ११ कन्या ७ तुला ४ वृश्चिक ६ धन १० मकर १० कुंभ ५ मीन ८ यह मेषादि राशीके रश्मी जानना॥ ३८ ॥ लक्ष्मीत्यर्धेन ॥ अब पूर्वोक्तका अपवाद कहतेहैः- पूर्वोक्त जोयोग मरणके कहे है परंतु लक्ष्मीयोग होवेतो कमी व्याधी होवे कभी नहोवे.॥३९॥ ७ ॥

वैधृतौचव्यतीपातेसार्पभेंऽतिकसंज्ञिते कुलीरेवि-
षनाडीषुसूर्यदुष्टेषुपंचसु ४० पापयुक्तेचनक्षत्रे
राशौतत्संयुतेऽपिच सन्धौचमासशून्यर्क्षतिथिरा-
शिषुजन्मभे ४१ व्ययाष्टमेचक्षीणेन्दौशत्रुग्रहनि-
रीक्षिते पादंपृष्ठंचजंघांचजानुनाभिंचगुल्फके ४२
कर्णौचचक्षुषीभालंआस्यंकंठंस्पृशेद्यदा व्या-
धिर्वाम्रियतेतत्रहून्मूर्तिंराशिंस्पृशेत्तुवा ४३ अष्ट-
मर्क्षंस्पृशेद्यद्वाकलांशादिषुवातथा विपद्ध्यमर्त्यृक्षे
वैनाशंऋक्षमेववा ४४ संस्पृशेत्प्रश्नकालेतुव्या-
धिर्वातस्यवामृतिः ४५

॥ टीका ॥

अथव्याधिनस्य प्रश्नकालेमरणसूचककालराहुविशेषयोगानराण्याह॥ वैधृतौचेत्यादिपंचचत्वारिंशच्छ्लोकपर्यंतं॥ वैधृतौ, व्यतीपाते सार्पभे आश्लेषानक्षत्रे अंतिमसंज्ञिते रेवत्यां कुलीरे कर्कांशे विषनाडीषु नक्षत्रोद्भवासु पंचसु भौमबुधगुरुशुक्रशनिषु सूर्यदुष्टेषु सूर्यदोषसहितेषु पापग्रहयुक्तेनक्षत्रे तत्संयुते पापग्रहयुते राशावपि संधौप्रातः सायंमध्यान्हादिषु यस्मिन्मासे शून्यर्क्षतिथिराशयः संति तस्मिञ्जन्मभे जन्मनक्षत्रे प्रश्नलग्नाद्व्ययाष्टमे द्वादशाष्टमगे क्षीणेन्दौ क्षीणचंद्रमसि अथवा तस्मिन्स्थानद्वयं

॥ भाषा ॥

॥वैधृतौचेत्यादिपंचचत्वारिंशत्श्लोकपर्यंतम् ॥ अब रोगीका मरण ओर जीवन प्रश्न कहते हैं.- प्रश्नकालमें वैधृत व्यतीपात आश्लेषा रेवती कर्कांश विषघटिका वार मंगल बुध गुरु शुक्र शनि पापग्रह युक्त नक्षत्र सायंकाल, प्रातःकाल, मध्याह्नकाल, मास शून्यतिथिवार नक्षत्र, जन्मनक्षत्र, प्रश्नलग्नमें १२।८ क्षीणचंद्र अथवा १२।८ शत्रुग्रहकी दृष्टि होवे. कालराहु अंगस्पर्श करे तो व्याधि अथवा

शिरोललाटभ्रूनेत्रनासाकर्णकपोलकाः ओष्ठं
चचुबुकंकंठमंसोहृदयमेवच ४६ पार्श्वौचवक्षः
कुक्षिश्चनाभिश्चकटिरेवच जघनंचानितंबंच लिं-
गमंडंचवस्तिच ४७ ऊरूचजानूजंघाचगुल्फां-
घ्रीचाश्विभात्क्रमात् तैलाभ्यक्तोऽथवाशुद्धो

॥ टीका ॥

शत्रुग्रहनिरीक्षितेसति अथवा कालराहुः पादंपृष्ठंजंघांजानुंनाभिं गु-
ल्फंकर्णौ चक्षुषी भालं आस्यंकंठं वा यदास्पृशेत्तदाप्रश्नेव्याधिः मरणंवा
अथवाराहुः मृतिराशिं अष्टमराशिंस्पृशेच्चेत्तदापिमृतिः अथवाऽष्टमर्क्षं
अष्टमलग्नंराहुः स्पृशेत् अथवा कलांशादिषु षोडशांशादिषु राहुः स्पृशेत्
अथवा विपत्तारां वधतारां प्रत्यरितारां वैनाशंऋक्षंवा स्पृशेत्सचेत्प्रश्न-
कालेनार्हि तस्य व्याधिर्वामृत्युर्वाभवेदिति॥ ४१।४२।४३।४४।४५॥
अथाश्विनीक्रमान्नक्षत्रेष्ववयवानाह॥ शिरइतिसार्धद्वाभ्याम्॥ आ-
श्विभात् अश्विनीनक्षत्रात्सकाशात्क्रमात् कालस्यशिरः प्रभृतिअं-
घ्र्यंतं सप्तविंशतिसंख्याकाः अवयवाज्ञेयाः॥४६।४७॥ अथप्रष्टुर्दु-
श्चिन्हज्ञानमाह॥ तैलाभ्यक्तइति॥ तैलाभ्यक्तः वा अशुद्धः सूतकी वा

॥ भाषा ॥

मरण होवे अथवा राहु आठवी राशीकूं स्पर्श करे तो मृत्यु होवे. अथवा राहु
आठवे लग्नकूं वा षोडशांशकूं अथवा विपत्तारा कूं वा वैनाशनक्षत्रकूं प्रश्नका-
लमें स्पर्श करे तो व्याधि वा मृत्यु होवे॥४१।४२।४३।४४।४५॥ शिरइतिसार्ध-
द्वाभ्याम्॥ अब नक्षत्रपरत्व करके कालके अवयव कहते हैं:— अश्विनी
नक्षत्रसे लेके रेवतीपर्यंत क्रमसे कालके मस्तक आदिलेके चरणपर्यंत स-
त्तावीस अवयव जानना॥४६।४७॥ तैलाभ्यक्तइति॥ अब पृच्छकके
दुश्चिन्ह कहते हैं:— तेलसे स्नानकिया होवे. सूतकी, जलके डोहके पास

जलगर्तसमीपगः प्रष्टादैवविदेवाथमरणंतस्य
निर्दिशेत् ४८ लग्नत्रिसुतकामारिधर्मकर्मायगः
शुभः रोगशांतिकरानोचेद्रिपुनीचगृहास्थिताः
४९ एषुपापामृतिकरानोचेत्स्वर्क्षोच्चमित्रगाः
यस्ययस्यशुभंवाथरिःफस्थानगताःशुभाः ५०
यद्वात्रिकोणकेंद्रस्थास्तस्यतस्यशुभप्रदाः

॥ टीका ॥

जलन्हदनिकटवर्ती एवंभूतः प्रश्नकाले प्रष्टा पृच्छकः अथवा दैववि-ज्ज्यौतिषिकोवापिचेत्तदा तस्यप्रष्टुर्मरणंनिर्दिशेत् ॥ ४८ ॥ अथ लग्ने शुभाऽशुभग्रहान्प्रश्नकाले आह ॥ लग्नेतिसार्धेन ॥ प्रश्नलग्ने तृतीये पंचमे सप्तमे षष्ठे नवमे दशमे लाभे चा शुभग्रहश्चेद्रोगशांतिकराभवंति किंतु उक्तस्थानगता अपि रिपुग्रहनीचग्रहवर्तमाना नोचेत्तथा एषुस्थानेषुपापाश्चेन्मृतिकराः मृत्युदाः तथापि यदिते स्वर्क्षस्वोच्चस्वमित्रराशिवर्तमानानोचेन्नसंतिचेदिति ॥ ४९ ॥ अथान्यच्चशुभाऽशुभमाह ॥ यस्येत्यर्धकद्वयेन ॥ यस्ययस्यपुंसः रिःफस्थानगताः द्वादशभावस्थाः यद्वात्रिकोणकेंद्रस्थाः ९।५।१।४।७।१० एषुस्थिताः शुभाः शुभग्रहाः तस्यतस्यपुंसः शुभंभवति यतस्ते शुभप्रदाः शुभदायकाइति ॥ ५० ॥

॥ भाषा ॥

बैठा हुवा प्रश्न करे वा पूर्वोक्त लक्षणयुक्त ज्योतिषी प्रश्न कहे तो पृच्छकका मृत्यु जानना ॥ ४८ ॥ लग्नेतिसार्धेन ॥ अबरोगप्रश्नका शुभाशुभ कहते हैं.- प्रश्नलग्नसे ३।५।६।९।१०।११ शुभग्रह होवे तो रोगशांत होवेगा. और यह ३।५।६।९।१०।११ स्थानोमें पापग्रह होवे तो मृत्यु होवेगा. परंतु शुभग्रह नीचादि स्थानगत नहोवे तो और पापग्रह उच्चादिस्थानगत नहोवे तो पूर्वोक्त फल जानना ॥ ४९ ॥ यस्येत्यर्धकद्वयेन ॥ यहस्थानमें १२।१।५।९।४।७।१० जन्मकालमें या प्रश्न-

मृगकर्क्यादितः सूर्योराशिपूर्वापरार्धतः शनिशुक्रारचंद्रज्ञगुरवःशिशिरादिषु ५१

॥ टीका ॥

अथप्रश्नकालेजन्मकालेवाऽयनर्तुज्ञानमाह ॥ मृगेति ॥ मृगकर्क्यादितः मकरराशितः षड्राशिवर्तमानः सूर्यश्चेदुत्तरायणं तथा कर्कराशितः षड्राशिवर्तमानः सूर्यश्चेद्दक्षिणायनं इति प्रश्नजन्मलग्नाभ्यामयनंज्ञेयम् अथ राशिपूर्वापरार्धतः एतदुक्तंभवति मकरादिषड्राशिषु राशिपूर्वार्धे कर्कादिषड्राशिषु राश्यपरार्धे वर्तमानाः क्रमाच्छनिशुक्रारचंद्रज्ञगुरवः संतिचेत् राशिपंचाशविभागेन शिशिरादिऋतुक्रमो जन्मनिज्ञेयः तद्यथा मकरकुंभमीनमेषवृषमिथुनराशिपूर्वार्धे शनिश्चेच्छिशिरऋतुः तथाशुक्रश्चेद्वसंतः तथा भौमश्चेद्ग्रीष्मः तथा चंद्रश्चेद्वर्षा तथा बुधश्चेच्छरत् तथा गुरुश्चेद्धेमंतः एवंकर्कादिराशिषट्कोत्तरार्धे क्रमाच्छन्यादिषु सएवक्रमोज्ञेयइति अयं ग्रहाणांयोगः प्रश्नजन्मलग्नयोरेव ऋतुसूचकोज्ञेयः यथा मकरं जन्मलग्नं प्रश्नलग्नंवा तत्रपूर्वार्धे शन्याद्यन्यतमे शिशिराद्यन्यतमः एवंकर्कादिषट्कान्यतमलग्नेसति तत्रोत्तरार्धे शन्याद्यन्यतमेऽपि शिशिराद्यन्यतमऋतुर्ज्ञेयइति ॥ ५१ ॥

॥ भाषा ॥

कालमे शुभग्रह होवे तो शुभ फल दायक है ॥ ५० ॥ मृगेति ॥ अब प्रश्नकालमे जन्मकालमे अयन ऋतुका ज्ञान कहते है - मकरराशीसे छराशी तक सूर्य होवे तो उत्तरायण. कर्कसे छराशीतक सूर्य होवे तो दक्षिणायन जानना अब ऋतुज्ञान कहते है: - प्रश्नलग्न जन्मलग्न मकर, कुंभ, मीन, मेष, वृषभ, मिथुन राशीके पूर्वार्द्धमे शनि होवे तो शिशिरऋतु जानना. वैसा शुक्र होवे तो वसंत जानना मंगल होवे तो ग्रीष्म जानना. चंद्र होवे तो वर्षा जानना बुध होवे तो शरद् जानना गुरु होवे तो हेमंत जानना एड्रीतिसें कर्क,

अर्के ग्रीष्मस्ततो ऽन्यैर्वा वायनाहतुरेवच ॥ शुक्रारमंदचंद्रज्ञजीवाश्च परिवर्तिताः ॥ ५२ ॥ लग्नद्रेष्काणकाः प्रोक्ता नवांशेनैव चापरे ॥ तत्पूर्वपरतो मासौ तिथिः स्याद्दतुपाततः ॥ ५३ ॥

॥ टीका ॥

अर्के इति सार्धेन॥ प्रश्नलग्ने ऽर्के रवौ सति ग्रीष्मः ततोऽन्यैः क्रमशश्चन्द्रादिभिः ऋतवः इति वा । एतदुक्तं भवति ॥ लग्ने रव्यादिशुक्रांतषड्ग्रहान्यतमे क्रमशो ग्रीष्माद्यन्यतमः क्रमादृतुः इति वेति अथ तत्रापि अयनादृतुः सूर्यक्र्यादिनः सूर्यइति पूर्वोक्तायनवशादृतुज्ञानमिति ॥ अथ चलग्नं ग्रहाभावे किमित्यत आह ॥ शुक्रारेति शुक्रारमंदचंद्रज्ञजीवाः लग्नद्रेष्काणपाः प्रवर्तिताः संतः द्रेष्काणदृष्ट्या ग्रीष्मादिऋतुग्रहणं ॥ अथवा अपरे नवांशेन प्रश्नलग्ने यन्नवमांशस्तः ग्रहविह्नितः पूर्वोक्तरीत्या ऋतुः ग्रहणमिति मतांतरं ॥ ५२ ॥ अथमासतिथिज्ञानमाह ॥ तदित्यर्धेन ॥ तत्पूर्वपरतो मासौ तस्य पूर्वोक्तरीत्या प्राप्त ऋतोः पूर्वपरतो मासौ ॥ पूर्वार्धे एकमासः उत्तरार्धे द्वितीयमासः तदित्थं वृषभे मिथुने ग्रीष्म इतिन्यायेन पूर्वोक्तरीत्या ग्रीष्मतौ मासौ पूर्वार्धे वैशाख उत्तरार्धे ज्ये-

॥ भाषा ॥

सिंह- कन्या. तुला. वृश्चिक . धन. इनोंके उत्तरार्धमें पूर्वसरीखे शनि आदि ग्रह होवे तो पूर्वो कहेहुवे ऋतु जानना. बहुधा यह नष्टपत्रिका करणेका विषयहै ॥ ५१ ॥ अर्के इति सार्धेन ॥ प्रश्नलग्नमें सूर्य होवे तो ग्रीष्म ऋतु, चंद्र होवे तो वर्षा. मंगल होवे तो शरद. बुध होवे तो हेमंत. गुरु होवे तो शिशिर. शुक्र होवे तो वसंत ऋतु जानना. अथवा शुक्र, मंगळ, शनि, चंद, बुध, गुरु, यह ग्रह लग्नके द्रेष्काणपति है. इनके क्रमसे ग्रीष्मादि ऋतु जानना. अथवा नवांशक्रमसे ऋतु जानना ॥ ५२ ॥ तदित्यर्धेन ॥ अब मासतिथिका ज्ञानकहतेहैं.

लग्नत्रिकोणगोजीवो नवांशस्थोऽथवा भवेत्।
ज्ञात्वावयोऽनुरूपेण ह्यनुमानवशात्समाः॥ ५४॥

॥ टीका॥

त्वः अथवा वसंतो मधुमाधवौ इतिरीत्या ग्रीष्मर्तौ पूर्वार्धे ज्येष्ठउत्तरार्धे आषाढइति पक्षांतरं एवमेव तिथिस्तु अनुपाततः स्यात् ऋतोः भुक्तभोग्यानुपातेन तिथिर्ज्ञेयेति॥ ५३॥ अथ प्रश्नलग्नाद्वयोवर्षमाह॥ लग्नेति॥ लग्नात्प्रश्नलग्नात्सकाशात् त्रिकोणगोजीवश्चेत्तर्हि यस्मिन् राशौवर्तमानः तद्राशिस्थो यदाजीव आसीत्तस्मिन्वर्षे जन्मज्ञेयं लग्नत्रिकोणगो नचेद्यत्रकुत्रापिराशौ यद्राशिनवांशेवर्तते तद्राशिस्थे जन्मबभूवेतिज्ञेयम् ननुद्वादशवर्षवयोधिकस्य कथमितिचेदाह॥ वयोनुरूपेण अनुमानवशात्समाज्ञात्वावदेत् यथागुरुनवांशराशिर्मेषः तथा संप्रति वृषे गुरुर्वर्तमानः वयस्तु द्वादशवर्षाधिकं अनुमानतो ज्ञात्वा प्राक्तनद्वितीयावृत्त्या मेषस्थे गुरौ वर्षेजन्मवक्तव्यं तथा चतुर्विंशाधिकेऽनुमानवयसितु प्राक्तनतृतीयावृत्त्या मेषस्थेगुरौजन्मज्ञेयं एवमेवाग्रे षट्त्रिंशाधिकेऽनुमानवयसि प्राक्तनचतुर्थ्यावृत्त्या मेषार्के वर्षे जन्मेत्यादिवयोवर्षज्ञानम्॥ ५४॥

॥ भाषा॥

पूर्वि जो ऋतुसिद्ध भया उसके पूर्वार्द्धमें पूर्वमास उत्तरार्धमें उत्तरमास जैसा ग्रीष्म ऋतुमें वृषभ मिथुन मास जानने. अथवा ग्रीष्मके पूर्वार्धमें ज्येष्ठ उत्तरार्धमें आषाढ यह मतांतर है ऐसी अनुपातसे तिथि जानना ऋतुसे भुक्तभोग्यसे॥ ५३॥ लग्नेति॥ अब वर्षज्ञान कहते हैः—प्रश्नलग्नसे त्रिकोण स्थानमें गुरु होवे तो जो राशीका गुरु है वो राशीका गुरु पहिले होगयाहै वो वर्षमें जन्म लग्न जानना. अवस्थाका अनुमान देखके वर्ष कहना परंतु गुरु राशीका तो बारावरस-

सूर्यस्थितांशतुल्यांवातिथिंप्रोवाचभार्गवः राशौ
रात्रिदिवाख्येचजन्मस्यात्तुविलोमतः ५५ गत-
प्राणेर्जन्मकालेतेचप्राणाभवन्त्यथ यद्राशिगः
शशीमासः समंवास्पृशदंगकम् ५६ तत्रिको-
णबलाधिक्यंराशिर्लग्नाचुयावति चंद्रस्तावति
भंचापिजन्मलग्नंविनिर्दिशेत् ५७ मीनेमीनंतु
लग्नंवातथान्यैस्त्वन्यलग्नभम्

॥ टीका ॥

अथ तिथिज्ञानंदिवारात्रिज्ञानंचाह ॥ सूर्येति ॥ सूर्यस्य स्थितावर्तमा-
नायेऽशाः त्रिंशांशाः तत्तुल्यांतिथिं शुक्लप्रतिपदाद्यमांतान्यतमां भा-
र्गवः प्रोवाच तथा प्रश्नलग्नराशौ रात्र्याख्ये दिवाजन्म तस्मिंश्च दि-
वाख्ये रात्रिजन्मेति विलोमतोज्ञेयम् ॥५५॥ अथप्राणज्ञानमाह ॥ ग-
तेत्यर्धेन ॥ गतप्राणैः जन्मकालात्प्रागगतैरित्यर्थः तैः करणभूतैः ज-
न्मकाले येप्राणा उपलभ्यंते तएव जन्मकालीनाः प्राणा ज्ञेयाः ॥ ५५॥
अथप्रश्नकालान्मासराशिलग्नज्ञानमाह ॥ यदितिद्वाभ्याम् ॥ प्रश्नका-
ले यद्राशिगः शशी समासः मेषे चैत्रइत्यादिः तथा शशी समंवाविषमं

॥ भाषा ॥

का पर्यावर्तन है और वयोमान बीचमें आना होवे तो गुरु तथा राशी ठेक
वर्ष कहना ॥५४॥ सूर्येति ॥ अब तिथिका ज्ञान दिवारात्रिका ज्ञान कहते हैं -
सूर्यके जितने अंश हैउसके तुल्य तिथि शुक्राचार्य कहते हैं - और प्रश्नलग्न रा-
त्रिसंज्ञक होवेतो दिवाजन्म दिवससंज्ञक होवे तो रात्रि जन्म कहना ॥ ५५ ॥
प्रश्नकालसे पूर्व जितने प्राणगये होवें उतने प्राण जन्मकालमें जानना ॥ ५५॥
यदितिद्वाभ्याम् ॥ अब प्रश्नकालसे मास, राशिलग्नज्ञान कहते हैं - प्रश्नकाल-
में जिस राशिका चंद्र होवे वो महिना जानना मेषराशिका होवे तो चैत्रमास जा-

छाययासंयुतायामवारर्क्षतिथिराशयः ५८ या-
वंतस्तु धनिष्ठादिजन्मर्क्षंतद्विनिर्दिशेत् कलांशा-
दिषु यत्प्रोक्तमृक्षंतद्वाभवेदिदम् ५९ कलांशा-
द्यर्धहोरांतंप्रोक्तहोरैर्विभावयेत्

॥ टीका ॥

यं अंगकं लग्नं अस्पृशन्तस्मात्त्रिकोणं पंचमनवमान्यतमं यद्बलाधिक्यं भवेत् सराशिर्ज्ञेयः तथा लग्नात्प्रश्नलग्नाद्यावतिराशौचंद्रः तावतिचद्वं राशिः तज्जन्मलग्नंविनिर्दिशेत् मीने प्रश्नलग्ने मीनएवलग्नं एवमन्यैः प्रश्नलग्नैः अन्यल्लग्नं इतिवाप्रकारांतरम् ॥ ५६।५७॥ अथजन्मर्क्ष-ज्ञानमाह॥ छाययेति ॥प्रश्नकाले छाया द्रष्टव्या तत्पदैः संयुता मि-श्रिताः यामवारर्क्षतिथिराशयः प्रहरवार नक्षत्रतिथिराशयः यावंतो भ-विष्यंति तावत्संख्याकं धनिष्ठनक्षत्रादिगणनयोपलब्धं जन्मर्क्षंजन्मनक्ष-त्रं विनिर्दिशेत्कथयेत् ॥ ५८॥ अथप्रकारांतरेणनक्षत्रज्ञानमाह॥ कलां-शादिष्वित्यर्धेन॥ पूर्वकलांशादिषु यन्नक्षत्रंप्रोक्तं तदेवेदंजन्मर्क्षंवा भवेत् ५९ तत्र विशेषप्रकारमाह ॥ कलांशेत्यर्धेन॥ कलांशेभ्यः सकाशादर्धहोरांतं

॥ भाषा ॥

नना वैसा चंद्रमा सम वा विषम जिसलग्नकूं स्पर्श करे वहांसे नवम या पंचम घर बलवान् होवे वो राशि जानना. प्रश्नलग्नसे जितनी राशिऊपर चंद्र होवे उतनी राशीका जन्मलग्न जानना. मीन प्रश्न लग्न होवेतो मीनलग्न अन्यलग्न होवे तो अन्य लग्न जानना ५६ ।५७॥ छाययेति ॥ अब जन्मनक्षत्रज्ञान कहते हैं:- प्रश्नकालमें पाद छाया करके उसमें प्रहर, वार, तिथि, नक्षत्रसंख्या मिलावे. सत्तावीससे जादा होवे तो सत्तावी-सका भाग लेवे जो संख्या है उतनी संख्यातुल्य धनिष्ठादिगणनासें जन्मनक्षत्र जानना॥ ५८॥ कलांशादिष्वित्यर्धेन॥ प्रकारांतर कहते हैं:- पूर्व कलांशादिकमें जो नक्षत्र कहाहै यो नक्षत्र जानना ॥ ५९॥ कलांशेत्यर्धेन ॥ कलांशसे अर्धहोरापर्यंत जो

पृथग्लिप्तीकृतंलग्नंवर्गणाभिर्हतंपुनः ६० आरू-
ढछत्रयोर्वीर्यबलस्यवर्गणाहतम् ओजेयोगः स-
मेहानिरितितस्यविधीयते ६१ स्वैस्वैर्भागैश्चभक्तं
तत्तथामासादयः स्मृताः यद्वाकलीकृतंलग्नंतथा
कुर्याद्विचक्षणः ६२ भावकस्यचशुद्धिंचयोगंचै-
वकरोत्यतः नवभिश्चकलांशाद्यैस्तथैवोच्चादि-
भिः क्रमात् ६३

॥ टीका ॥

अर्धहोरापर्यंतं ये प्रोक्ताः होराः तैः विभावयेज्जानीयादिति ॥ ५९ ॥ अ-
थप्रकारांतरेणमासादीनाह ॥ पृथगित्यादिसार्धैकपद्यपर्यंतम् ॥ लग्नंपृथ-
क् द्विधास्थापयित्वा कलीकृतं स्ववर्गणाहतं कृत्वा पुनः आरूढछत्रयो-
र्मध्ये योवीर्येणबलवान् तस्य वर्गणाभिः हतं ओजेविषमेसति पृथक्कृ-
तस्ययोगः कार्यः समेसतितु हानिः पृथक्कृताज्जह्यात् इत्येवंप्रकारं त-
स्यविधानं ततः तत् स्वैःस्वैः मासेद्वादशभिः दिवसे त्रिंशद्भिरित्यादि-
भागैः भक्तंतत्तथापूर्वोक्तरीत्यामासादयः स्मृताः ॥ ६० । ६१ ॥ अथ
प्रकारांतरेणमासाद्यानयनमाह ॥ यद्वेतिचतुःपद्यपर्यंतम् ॥ यद्वा अथवा

॥ भाषा ॥

कहे हैं. उतनी होरा जानना. ॥ ५९ ॥ पृथगित्यादिसार्धैक पद्यपर्यंतम् ॥ अथ प्रका-
रांतरसे मासादिज्ञान कहते है. – लग्न दो ठिकाने मांडके कला करके स्ववर्गसे गु-
णन करके पुनः आरूढ छत्रमें जो बलवान् होवे उसके वर्गसे गुणन करके वि-
म होवे वो पृथक्में मिलाना. सम होवे तो पृथकमेंसे कमी करना पीछे भाग-
से भाग लेना. तो मास जानना. तीसन्से भाग लिये तो दिवस जानना ॥ ६१ ॥ ६२
॥ यद्वेतिचतुःपद्यश्लोकप० ॥ अथवा लग्नकी कला करके पूर्वनारीयी सब गणि-
तक्रिया करके भावशुद्धि करके पृथकने मिलायके नवकलांशमें और उच्च

एकाशीतिभिदाः संतिनवकाद्यांगशोधनैः येषां योगगतेकालेसमासेषु सतांयतः ६४ राशिस्तु बलवान्स्वामिगुरुज्ञप्रेक्षणान्वितः अन्यैः पापैर-दृष्टः स्याच्छुभदृष्ट्याप्रयोजयेत् ६५ चंद्रार्का-चार्यशुक्रज्ञाः पादंमित्रंभकर्मणी पश्यंतिचश-निःपूर्णमथधर्मसुतौगुरुः ६६

॥टीका॥

लग्नंकलीकृतंसत् तथापूर्वोक्तवत्कुर्यात् ततः भावशुद्धिंकृत्वा भागं पृथक्कृतस्ययोगंकृत्वा नवभिः कलांशाद्यैः प्रकारैः तथा उच्चत्रिकोणादिप्रकारैश्च क्रमात् एकाशीतिभिदाः भवंति तासु नवकाद्यांगशोधनैः येषां सतां योगगते काले समासेषु तेषु तत्तन्मासादि बोद्धव्यमिति ॥ ६२ । ६३ । ६४ ॥ अथ लग्नस्य बलवत्त्वमाह ॥ राशिरिति ॥ राशिः लग्नं स्वामिगुरुज्ञप्रेक्षणान्वितः पतिगुरुबुधानां पूर्णदृष्ट्यायुतः बलवान्भवति अन्यैः पापैः स्वामिभिन्नैः पापग्रहैः अदृष्टः सन् शुभदृष्ट्या गुरु बुधव्यतिरेकेणापि अन्यशुभग्रहदृष्टिवशेन च तस्य बलवत्त्वं प्रयोजयेदिति ॥ ६५ ॥ अथ ग्रहाणां दृष्टिमाह ॥ चंद्रेतिद्वाभ्याम् ॥ चंद्ररविगुरुशुक्रबुधाः भौमश्च मित्रभकर्मणी तृतीयदशमस्थाने पादं

॥ भाषा ॥

त्रिकोणादि प्रकारसे इक्यासी भेद होते हैं- उसमें नवकायंग शोधनसे जहां अवसान आवे वहां मासादिक जानना ॥ ६२ । ६३ । ६४ ॥ राशिरिति ॥ अब लग्नका बल कहते हैं:-जिस लग्नकूं अपना गुरु बुध वृहस्पति पूर्ण दृष्टिसे देखते होवे तो लग्नबलवान् जानना परंतु अपने स्वामिबिना अन्यपापग्रहसे दृष्ट न होवे तो बलवत्त्व योजना ॥ ६५ ॥ चंद्रेतिद्वाभ्याम् ॥ अब ग्रहोंकी दृष्टि कहते हैं- सूर्य, चंद्र, मंगल, बुध, गुरु, शुक्र ३ । १० वे घर ऊपर पाददृष्टिसे

सर्वेऽर्धंबंधुमृत्यूच पूर्णंपश्यतिभूमिजः परेत्रिपादंपूर्णंचसर्वेपश्यंतिसप्तमम् ६७ उच्चमूलसुहृत्स्वर्क्ष स्वद्रेष्काणनवांशके स्थितस्यस्थानवीर्यं स्यात्कुजार्कौदशमेशनिः ६८ सप्तमेज्ञगुरूलग्ने चंद्रशुक्रौतुवेश्मनि दिग्वीर्यसंयुताएवेनान्यत्र प्रश्नकर्मणि ६९

॥ टीका ॥

पाददृष्ट्या पश्यंति शनिस्तु तृतीयदशमस्थानद्वयं पूर्णंपश्यति एवंधर्मसुतौ नवमपंचमस्थाने सर्वे ग्रहा अर्धं गुरुस्तु ९।५ एतत्स्थानद्वयंपूर्णंपश्यंति एवमेव बंधुमृत्यू चतुर्थाष्टमे भूमिजो भौमः पूर्णं पश्यति परे सर्वे ४।८ एतत्स्थानद्वयंत्रिपादं त्रिपाददृष्ट्या पश्यंति अथ सर्वेपि रव्यादिशन्यंताः सप्तमंस्थानं पूर्णं पूर्णदृष्ट्या पश्यंति इति ॥६६।६७॥ एवं ग्रहाणां दृग्बलमुक्त्वा स्थानबलंदिग्बलंचाह ॥ उच्चेतिद्वाभ्याम् ॥ अथस्वोच्चमूलत्रिकोणस्वसुहृत्स्वराशिस्वद्रेष्काणस्वनवांशके समाहारे एकवचनं एषुस्थानेषु स्थितस्य स्थानवीर्यं स्यादिति निर्णयं अथलग्नाद्दशमस्थाने कुजार्कौ सप्तमेशनिः लग्नेज्ञगुरू वेश्मनिचतुर्थे चंद्रशुक्रौ चेति ग्रहाः प्रश्नकर्मणि दृग्वीर्ययुता भवंति एते ऽन्यत्रविपर्ययेनेति ॥६८।६९॥

॥ भाषा ॥

देखनेहैं शनि ३।१० वें घर ऊपर पूर्णदृष्टीसे देखते हैं – ९।५ वे घर ऊपर सब ग्रह द्विपाददृष्टिसे देखनेहे परंतु गुरु पूर्ण दृष्टिसे देखता है वैसा चार, ८ वे घर ऊपर मंगल पूर्ण दृष्टिसे देखता है दूसरे सर्व ग्रह त्रिपाद दृष्टिसे देखतेहैं और सप्तम सर्यादि सात ग्रह पूर्ण दृष्टिसे देखते हैं ॥६६।६७॥ उच्चेतिद्वाभ्याम् ॥ अब ग्रहोका स्थानबल दिग्बल कहतेहैं.– जो ग्रह सर्वत्र उच्चका त्रिकोण मित्र अधिमित्र राशिका होवे और स्वनवांश स्वद्रेष्काणमें होवे तो स्थानवीर्य

मृगादिराशिषट्कस्थाश्चंद्रार्कज्ञार्यभार्गवाः वल-
वंतः कुजार्कीतु कर्कटादिगतौतथा ७० पूर्वपक्षे
शुभे कृष्णेपापास्तुबलिनस्तथा वक्रिणोबलिनः
खेटाश्चेष्टावलसमन्विताः ७१ शुभाः पापादिवा
रात्रौबलिनःस्युःक्रमात्स्मृताः निसर्गबलिनःप्रा-
ग्वदेवंस्युः प्रश्नकर्मणि ७२

॥ टीका ॥

अथायनबलमाह॥ मृगेति॥ मृगादि मकरादि यन्मिथुनांतंराशिषट्कं तत्रस्थाः चंद्ररविबुधगुरुशुक्राः तथा कुजार्की भौमशनी तुकर्कटादि गतौ कर्कादिधनुर्मर्याद राशिषट्कगतौच बलवंतः अयनबलिनो भवं-ति॥ अथ पक्षचेष्टादिवारात्रिनिसर्गबलान्याह ॥ पूर्वेति द्वाभ्याम् ॥ शुभाः ग्रहाः पूर्वपक्षे शुक्लपक्षे तथा पापाः खलास्तु कृष्णपक्षे बलि-नइतिप्रश्ने पक्षबलंज्ञेयं अथ वक्रिणः वक्रंगताः खेटाः चेष्टाबलसम-न्विताः बलिनः नाम चेष्टाबलवंतइति चेष्टाबलं अथ शुभाः दिवाबलिनः

॥ भाषा ॥

जानना. अब दिग्बल कहते हैं:- प्रश्नलग्नसें १० घर सूर्य मंगल दिग्बली जा-नने. ७ये घर शनि दिग्बली जानना. १ घरमें बुध, गुरु दिग्बली जानने. ४ घरमें चंद्र, शुक्र, दिग्बली जानने. यह प्रश्नकर्ममें दिग्बल जानना. अन्य जा-तकमुहूर्तमें नहीं लेना. ॥६८। ६९॥ मृगेति॥ अब अयनबल कहते हैं:-मक-रसें मिथुनपर्यंत छराशीमें सूर्य, चंद्र, बुध, गुरु, शुक्र यह पांच ग्रह होवेतो अयनबली जानने. और कर्कसे धनपर्यंत छराशीमें मंगल, शनि, यहदो-नो होवे तो अयनबली जानने. ॥७०॥ पूर्वेति द्वाभ्याम् ॥ अब पक्षबल कहते हैं:- शुक्लपक्षमें शुभग्रह बलवान् जानने कृष्णपक्षमें पापग्रह बलवान् जानने. इतिपक्षबलं॥ अब चेष्टाबल कहते हैं:- वक्री ग्रह चे-

सर्वेऽर्धंबंधुमृत्यूचपूर्णंपश्यतिभूमिजः परेत्रि-
पादंपूर्णंचसर्वेपश्यंतिसप्तमम् ६७ उच्चमूलसुहृ-
त्स्वर्क्षस्वद्रेष्काणनवांशके स्थितस्यस्थानवीर्यं
स्यात्कुजार्कौदशमेशनिः ६८ संसप्तमेज्ञगुरूलग्ने
चंद्रशुक्रौतुवेश्मनि दिग्वीर्यसंयुताएतेनान्यत्र
प्रश्नकर्मणि ६९

## ॥टीका॥

पादहृष्ट्या पश्यंति शनिस्तु तृतीयदशमस्थानद्वयं पूर्णंपश्यति एवंध-र्मसुतौ नवमपंचमस्थाने सर्वे ग्रहा अर्धं गुरुस्तु ९।५ एतत्स्थानद्वयंपू-र्णंपश्यंति एवमेव बंधुमृत्यू चतुर्थाष्टमे भूमिजो भौमः पूर्णं पश्यति परे सर्वे ४।८ एतत्स्थानद्वयंत्रिपादं त्रिपादहृष्ट्या पश्यंति अथ सर्वेपि रव्यादिशन्यंताः सप्तमंस्थानं पूर्णं पूर्णहृष्ट्या पश्यंति इति ॥६६। ६७॥ एवं ग्रहाणां हृग्बलमुक्त्वा स्थानबलंदिग्बलंचाह॥ उच्चेतिद्वा-भ्याम्॥ अथस्वोच्चमूलत्रिकोणस्वसुहृत्स्वराशिस्वद्रेष्काणस्वनवां-शके समाहारे एकवचनं एषुस्थानेषु स्थितस्य स्थानवीर्यं स्यादितिज्ञे-यं अथलग्नाद्दशमस्थाने कुजार्कौ सप्तमे शनिः लग्नेज्ञगुरूवेश्मनिच-तुर्थेचंद्रशुक्रौचेति ग्रहाः प्रश्नकर्मणि हृग्वीर्ययुताभवंति एतेऽन्यत्रविपर्य-नेति॥६८।६९॥

## ॥भाषा॥

देखतेहैं. शनि ३।१० वे घर ऊपर पूर्णदृष्टीसे देतेहैं- ९।५ वे घरऊपर सब ग्रह द्वि-पाद्दृष्टिसे देखतेहैं. परंतु गुरू पूर्ण दृष्टिसे देखताहै. वैसा चार, ८ वे घरऊपर मंगल पूर्ण दृष्टिसे देखताहै. दूसरे सर्व ग्रह त्रिपाद दृष्टिसे देखतेहैं. और ७ वे घ-रमे सूर्यादि सातग्रह पूर्ण दृष्टिसें देखते हैं. ॥६६।६७॥ उच्चेतिद्वाभ्याम्॥ अब ग्रहोंका स्थानबल दिग्बल कहतेहैः- जो ग्रह सक्षेत्र उच्चमूल त्रिकोण मित्र अधिमित्र राशिका होवे और स्वनवांश स्वद्रेष्काणमें होवे तो स्थानवीर्य

मृगादिराशिषट्कस्थाश्चंद्रार्कज्ञार्यभार्गवाः बल-
वंतः कुजार्कीतु कर्कटादिगतौतथा ७० पूर्वपक्षे
शुभे कृष्णेपापास्तुबलिनस्तथा वक्रिणोबलिनः
खेटाश्चेष्टावलसमन्विताः ७१ शुभाः पापादिवा
रात्रौ बलिनः स्युःक्रमात्स्मृताः निसर्गबलिनःप्रा-
ग्वदेवंस्युः प्रश्नकर्मणि ७२

॥ टीका ॥

अथायनबलमाह॥ मृगेति ॥ मृगादि मकरादियन्मिथुनांतंराशिषट्कं तत्रस्थाः चंद्ररविबुधगुरुशुक्राः तथा कुजार्की भौमशनी तुकर्कटादि गतौ कर्कादि धनुर्मर्यादराशिषट्कगतौच बलवंतः अयनबलिनो भवं-ति॥ अथ पक्षचेष्टादिवारात्रिनिसर्गबलान्याह ॥ पूर्वेतिद्वाभ्याम् ॥ शुभाः ग्रहाः पूर्वपक्षे शुक्लपक्षे तथा पापाः खलास्तु कृष्णपक्षे बलि-नइतिप्रश्ने पक्षबलं ज्ञेयं अथ वक्रिणः वक्रंगताः खेटाः चेष्टाबलसम-न्विताः बलिनः नाम चेष्टाबलवंतइति चेष्टाबलं अथ शुभाः दिवाबलिनः

॥ भाषा ॥

जानना. अब दिग्बल कहते हैः- प्रश्नलग्नसें १० घर सूर्य मंगल दिग्बली जा-नने. ७ वे घर शनि दिग्बली जानना. १ घरमें बुध, गुरु दिग्बली जानने. ४ घरमें चंद्र, शुक्र, दिग्बली जानने. यह प्रश्नकर्ममें दिग्बल जानना अन्य जा-तकमुहूर्तमें नहीं लेना ॥६८।६९॥ मृगेति॥ अब अयनबल कहते हैः-मक-रसें मिथुन पर्यंत छराशीमें सूर्य, चंद्र, बुध, गुरु, शुक्र यह पांच ग्रह होवेतो अयनबली जानने. और कर्कसे धनपर्यंत छराशीमें मंगल, शनि, यह दो-नो होवे तो अयन बली जानने. ॥७०॥ पूर्वेति द्वाभ्याम् ॥ अब पक्षबल कहते हैः- शुक्लपक्षमें शुभग्रह बलवान् जाननें कृष्णपक्षमें पापग्रह बलवान् जानने. इति पक्षबलं ॥ अब चेष्टाबल कहते हैः- वक्री ग्रह चे-

लग्नहोराद्रेष्काणार्कनवांशाः सप्तमांशकः कलांशः कालहोराचत्रिंशांशःषष्टिभाजकः ७३ पूर्वपूर्वोवलीप्रोक्तोनवलीचोत्तरोत्तरः प्रश्नलग्नं कलीकृत्यनवघ्नंभेनभाजितम् ७४ लब्धंनवमांशकंज्ञेयंशिष्टमात्मकसंस्थिते लब्धंसप्तगुणंवेदभक्तंशिष्टमिहांशकः ७५

॥ टीका ॥

पापाः रात्रौ बलिनः क्रमात्स्मृताः इतिदिनरात्रिवलं॥ निसर्गबलिनःप्राग्वत् पूर्वोक्तरीत्या ज्ञेयाः एवंप्रश्नकर्मणिषड्बलं कथितमिति॥ ७१।७२॥ अथदशवर्गबलमाह॥ लग्नेतिसार्धेन॥ लग्नं १ होरा२ द्रेष्काणः ३ अर्कोद्वादशांशः ४ नवांशः सप्तांशः ६ कालांशः षोडशांशः ७ कालहोरांशः ८ त्रिंशांशः ९षष्टिभागकः १० एवंदशवर्ग्यां पूर्वपूर्वः उत्तरापेक्षया पूर्वो बलीप्रोक्तः उत्तरोत्तरः पूर्वापेक्षया नवली हीनबलइत्यर्थः इतिदशवर्गबलं ॥७३॥ अथप्रश्नलग्नाज्जन्मलग्नमाह॥ प्रश्नलग्नंकुलीकृत्येत्यादिभिस्त्रिभिः श्लोकैः ॥ प्रश्नलग्नस्य कलांकृत्वानवसंख्ययागुणितं कृत्वा पश्चाद्भेन सप्तविंशतिसंख्यया भागः

॥ भाषा ॥

ग्रह बली मानने. अब दिवा रात्रिबल कहते हैं:- शुभग्रह दिवा बली माननें. पापग्रह रात्रि बली मानने. निसर्गबल पहिले सरिखा जानना. इसतरे प्रश्नकालके षड्बल कहे॥ ७१।७२॥ लग्नेतिसार्धेन॥ अब दशवर्ग उत्तरोत्तर बली कहते हैं:- लग्न१ होरा२ द्रेष्काण३ द्वादशांश४ नवांश५ सप्तांश६ षोडशांश ७ कालहोरांश ८ त्रिंशांश ९ षष्ट्यंश१० यह उत्तरोत्तर हीनबली जानने ॥७३॥ प्रश्नलग्नं कलीकृत्येत्यादिभिस्त्रिभिः श्लोकैः॥ अब प्रश्नसे जन्मकाल कहते हैः- प्रश्नलग्नकी कला करके नवसें गुणन करना,

नवांशसदृशंलग्नंयद्वात्रिघ्नार्कभाजितम् सप्ता-
प्तशिष्टंलब्धंचसप्तमेमासिनिश्चिते ७६ सौम्ये
तदेवकर्मर्क्षंजन्मर्क्षंवा भवेद्बलम् इदंशास्त्रंम-
याप्रोक्तमाद्यन्तंतवसुव्रत ७७

॥ टीका ॥

कार्यः ततश्च यल्लब्धं तन्नवमांशसंज्ञकं ज्ञेयम् ततश्चयच्छिष्टंतदेकत्र संस्थाप्यलग्नसंख्यां सप्तभिर्गुणितांकृत्वा चतुर्भिर्विभाज्यतयल्लब्धं तन्नवमांशसंज्ञकं जानम् तादृशनवमांशसंज्ञकसंख्या जन्मलग्नस्य बोद्धव्या अथवा पूर्वावशिष्टसंख्यायास्त्रिगुणीकरणं कृत्वा द्वादशभिर्विभाज्य यदवशिष्टं तज्जन्मलग्नं बोद्धव्यं अथवा शेषसंख्यां सप्तभिर्विभाज्ययल्लब्धंतत्सप्तममासस्य लग्नं अवगंतव्यम् सराशिः शुभग्रहयुक्तः स्याच्चेत्तदेव कर्मनक्षत्रं जन्मनक्षत्रंवा ज्ञातव्यम् ॥ ७४ ७५ । ७६ ॥ अथास्यशास्त्रस्य वेदांगत्वंप्रतिपादयन्नध्याय्यांधिकारं च प्रतिपादयन्नुपसंहरति ॥ इदमिति द्वाभ्याम् ॥ हे सुव्रत उत्तमाचारसंप-

॥ भाषा ॥

पीछे सत्तावीससे भागलेना. लब्ध जो आवे वो नवमांश जानने. शेषकूं एकतरफ रख छोडना. पीछे लब्धकूं सात गुणे करके चारसे भाग लेना. जो लब्धहै वो नवांश जानना. वो नवांशसदृश लग्न जन्मका जानना. अथवा उसकूं त्रिगुणित करके बारासे भाग लेना. वो शेषजन्मलग्न जानना अथवा शेषकूं सातसे भागलेके जो आवे वो लग्न सातवे महिने जानना. शुभग्रहकी राशि होवे तो आई कर्मनक्षत्र या जन्मनक्षत्र जानना ॥ ७४ । ७५ । ७६ ॥ इदमितिद्वाभ्याम् ॥ अवशास्त्रका वेदांगत्व प्रतिपादन करते हैः- हे मैत्रेय! यह जो कह्या आद्यन्त ज्योतिः शास्त्र तो कुपुत्रकूं, और कुशिष्यकूं कदापि देना नहीं; जो गुणवान, शीलवान होवे उसकूं

नाशिष्यायप्रदातव्यंनापुत्रायकदाचन गुणशी-
लयुतायैवशिष्यायैवद्विजातये ७८ दातव्यंतुप्रय-
त्नेन वेदांगमिदमुच्यते इतिश्रीबृहत्पाराशरहो-
रोत्तरभागेप्रश्नकरणंनाम अष्टादशोऽध्यायः १८
अध्यायानुक्रमंवक्ष्ये त्वादौशास्त्रावतारणम् प्रादु-
र्भावोग्रहाणांतुद्वितीयेतुप्रकीर्तितः १

॥ टीका ॥

न मैत्रेय ! इदमुक्तप्रकारकंशास्त्रं ज्योतिःशास्त्रं आद्यंतं समग्रमित्य-
र्थ. तव प्रोक्तं अशिष्यायकुशिष्यायेत्यर्थः तथा अपुत्राय कुपुत्राये-
त्यर्थः कदाचन नप्रदातव्यं यत इदं उत्तमं त्रिकालज्ञानजनकत्वादुत्कृष्टं
तथा वेदांगं वेदानामवयवीभूतं वेदमूलत्वात्सर्वमान्यमितिभावः ॥७७
॥७८॥ ॥इतिहोरागमेत्वार्षेपराशरगुरूदिते ॥ उत्तरार्धेष्टादशेध्या-
ध्यायेव्याख्यायितंमया ॥ १॥ इतिश्रीमद्बृहत्पाराशरहोरोत्तरभागे श्रीम०
ज्योतिर्विच्छ्रीधरेण विरचितायां सुबोधिनीटीकायां प्रश्नकरणंनामाऽष्टाद-
शोऽध्यायः ॥१८॥ छ ॥ एकोनविंशेध्यायेस्मिन्ननुक्रमउदीर्य-
ते ॥ श्रीगणेशःप्रेरयतुसम्यग्व्याख्याकृताविह ॥ १॥ अथश्रीमहर्षिरुक्त-
शास्त्रानुक्रमं सुखेनेष्टविषयोपलब्धये कथयति ॥ अध्यायेत्यादिसार्धस-
प्तभिः ॥ हेमैत्रेयउक्ताध्यायानामनुक्रमंवक्ष्ये कथयिष्ये तत्रादौ प्रथ-
माध्याये शास्त्रावतारणंशास्त्रोत्पत्तिःतत- द्वितीयेग्रहाणां रव्यादीनांप्रादुर्भा-
व प्रकटीभावः तृतीये राशीनां मेषादीनां स्वभावः चतुर्थे दृष्टिवर्णनंतत

॥ भाषा ॥

प्रयत्न करके देना यह शास्त्र त्रिकाल ज्ञानदायक है उत्तमवेदाग वेदके नेत्रहैं इसवास्ते
है वास्ते सर्वमान्य है ॥७७।७८॥ इतिश्रीबृ० भाषाटीकायामष्टादशोऽध्याय ॥१८॥
॥अध्यायेत्यादिसार्धसप्तभि ॥ अब यहउन्नीसवे अध्यायमे पूर्वभाग और उत्तर-

ततोराशिस्वभावश्चचतुर्थेदृष्टिवर्णनम् गर्भाधा-
नंततःपश्चात्सूतिकाविधिरेवच २ अरिष्टंसप्त-
माध्यायेसुतस्यतदनंतरम् पित्रोश्चमातुलादीनां
तद्भंगोदशमात्स्मृतः ३ धूमाद्येकादशेमिश्रः
पंचांगानांफलंतथा कारकादिफलंतद्भावानांच
फलंतथा ४ द्वादशद्वादशाऽध्यायेद्विग्रहाद्याश्च
षट्स्मृताः अष्टवर्गादिचैकस्मिन्नाभसादिस्तु
चापरे ५ चिरायुषादियोगश्चपंचाध्यायास्ततः
परम् राजयोगास्तथावस्थाअंतर्दायविधिस्ततः ६

॥ टीका ॥

पश्चात् पंचमेगर्भाधानं षष्ठेसूतिकाविधिः ॥ सप्तमाध्यायेऽरिष्टंतदनं-तरमष्टमाध्याये सुतस्यपुत्रादिसंततेः पित्रोर्जननीजनकयोश्चविचारः नवमेमातुलादीनां विचारः दशमात्तेषांपूर्वयोगानां भंगविचारः एकाद-शे धूमादिग्रहविचारः द्वादशाध्यायमारभ्य त्रयोविंशत्यध्यायपर्यंतं द्वादशाध्यायेषु मिश्रफलंवा मिश्रफलाध्यायः पञ्चानां फलंच त-था कारकादिफलम् द्वादशभावानांफलंच द्विग्रहाद्याः षट्योगास्त-त्रषडध्यायाःस्मृताः एकस्मिन्नध्यायेऽष्टवर्गादिकथितं अपरेविं-शत्यध्यायास्तेषुनाभसादियोगानाह ततःपंचाध्यायाः एषुचिरायुषा-

॥ भाषा ॥

भागका विषयानुक्रम कहतेहैं:- पहिलेअध्यायमें शास्त्रोत्पत्ति कही. दूसरे अध्यायमें सूर्यादि ग्रहोंका प्रादुर्भाव कहा. तीसरे अध्यायमें मेषादिराशीका स्वभाव कहा. चौथे अध्यायमें दृष्टिका वर्णन. पांचवे अध्यायमें गर्भाधाननि-र्णय. छट्ठे अध्यायमें सूतिका विधान कहा. सातवें अध्यायमें अरिष्टयोग.आ-ठवे अध्यायमें पुत्र मातापिता इनोंका विचार.नवेंमे अध्यायमें मातुलादिकका

दायानांचफलंसप्तस्वंतर्दायस्त्रयोदश लक्षणं भूपवर्गाणांयोगादिषुवलंततः ७ एवंत्वशीतिर-ध्यायाः पूर्वभागेसमीरिताः कलौयुगेततःप्रोक्तं प्रथमेऽष्टकवर्गकः ८ द्वितीयेभावदृग्वीर्यमि-ष्टकष्टबलंततः चतुर्थेरश्मिसंभूतिरिष्टकष्टद्वि-जोत्तम ९ लोकयात्रैकदेशोचपंचमेचततःपरं भंगंचलोकयात्राणामेकदेशस्यचाष्टमे १०

॥ टीका॥

दियोगः ततः राजयोगाः ततोऽवस्थाविचारः ततोंऽतर्दायविधिः॥ ततः दायानांफलं सप्तसु अध्यायेषु ततः अंतर्दायास्त्रयोदशाध्यायाः ततः भूपवर्गाणां लक्षणं ततोऽवशिष्टेषु योगादिषु यद्बलं तदुक्तमिति पूर्वभागे अशीतिरध्यायाः उक्तविषयज्ञापकाः क्रमात्समीरिताः कथिताइतिपूर्वार्धानुक्रमः॥१।२।३।४।५।६।७॥ अथोत्तरार्धानुक्रमणिकामाह॥ कलाधिनिसार्धस-

॥ भाषा॥

विचार. दसवे अध्यायमें योगभंगविचार ग्यारवे अध्यायमें धूमादि ग्रहोंका विचार. बारवे अध्यायसे लेके तेवीस अध्यायतक(बाराअध्यायमें)मिश्रफल पचांगका फल. कारकादिग्रहोंका फल. बाराभावके फल कहे हैं. द्विग्रहादि छयोगके फलके छ अध्याय. अष्टवर्गका वर्णन१ अध्यायमें नाभसादियोगोंका वर्णन वीस अध्यायमें. चिरायुष्यकायोगविचार उसके अध्याय.५ आगे राजयोग वर्णन१ फीर अवस्थाविचार १ अध्यायमें पीछे अंतर्दायविधि एक अध्यायमें. दायकाफल सातअध्यायमें अंतर्दशाका विचार१३ अध्यायमें. राजवर्गका लक्षण १फीर बाकीके जो अध्यायरहे उसमें योगादिकके विषयमेंजो यत्नावल कह्या है, उसका विचार ऐसा (८०) अध्याय पूर्वभागका अध्याय विषयानुक्रम कह्या ॥१।२।३।४।५।६।७॥ ॥कलाधिनिसार्धसप्तभि- ॥ अब उत्तरभागका अनुक्रम कहते हैं:- प्रथमाध्यायमें

नवमेलोकयात्राचदशमेदायएवच अंतर्दायस्त-
थाध्यायेदायानांविषयस्ततः ११ त्रयोदशेतथा
भाग्यंकलांशादिफलंद्विज चतुर्दशेऽब्दचर्यांच
विजानीहिततःपरम् १२ अब्दचर्याफलंपश्चा-
न्मासचर्याफलंततः दिनचर्याततःप्रश्नजातकंप्र-
ब्रवीमिहि १३

॥ टीका॥

सभिः ॥ ततः पूर्वार्धकथनानंतरं उत्तरार्धे कलियुगे कलियुगनरविषये यत्प्रोक्तं तस्यानुक्रमो यथा प्रथमेऽध्यायेऽष्टवर्गकः द्वितीये भावदृग्वीर्यं भावबलं दृष्टिबलंच ततस्तृतीयेऽष्टवर्गः चतुर्थे रश्मिसंभूतिः रश्म्युत्पादितेष्टकष्टफलं पंचमेलोकयात्रैकदेशः षष्ठेसप्तमेच तद्भंगः अष्टमेपुनर्लोकयात्रैकदेशः ८ नवमेलोकयात्रा९ दशमेदायः १०एकादशेंऽतर्दायः ११ ततः द्वादशाध्याये दायानांविषयः १२ त्रयोदशाध्याये भाग्यं १३ कलांशादिफलं षोडशांशादिफलं हे द्विज १३ चतुर्दशेऽब्दचर्या विजानीहि १४ ततःपरं तदनंतरं पंचदशाध्याये उक्ताब्दचर्यायाः फलं १५ पश्चात् षोडशाध्याये मासचर्याफलं १६ ततः सप्तदशे दिनचर्या १७ ततोष्टा-

॥ भाषा॥

अष्टवर्गका विचार१ दूसरे अध्यायमें भावबल दृष्टिबलविचार २ तीसरे अध्यायमें इष्टकष्टकाविचार ३ और चौथे अध्यायमे रश्मीकी संभूति इष्टकष्टफल ४ पांचवे अध्यायमें लोकोंका सुख दुःखविचार ५ छट्टे,सातवेमें उसका भंग ६।७ आठवे अध्यायमें लोकयात्रा. ८ नवमे अध्यायमें लोकयात्रा ९ दशवे अध्यायमें दायविचार१० ग्यारवे अध्यायमें अंतर्दायविचार ११. बारवे अध्यायमें दायविषय १२ तेरवे अध्यायमें भाग्यविचार. कलांशादि फल षोडशांशादि फल. १३ चौदवे अध्यायमे वर्षचर्याविचार१४ पंधरावे अध्यायमें वर्षचर्याफल १५ सोलवे अ-

अध्यायानुक्रमंपश्चाद्विंशेशास्त्रफलंद्विज एवं होराशताध्यायीसर्वपापप्रणाशिनी १४ युगेषु चचतुर्ष्वेवमत्यक्षफलदायिनी १५ इतिश्रीबृ० होरोत्तरभागेऽध्यायानुक्रमवर्णनंनामएकोनविंशोऽध्यायः १९ ॥ छ ॥

## ॥ टीका ॥

दशेऽध्याये प्रश्नजातकं ब्रवीति कथयति हीतिनिश्चयेन १८ पश्चादेकोनविंशेऽध्यायानुक्रमं अनुक्रमणिका १९ हे द्विज ! विंशे शास्त्रफलं कथितं २० एवंहोराशास्त्रे पूर्वार्धोत्तरार्धवर्तमानशताध्यायी सर्वपापप्रणाशिनी पठतः श्रोतुश्चेतिशेषः चतुर्ष्वपियुगेषुप्रत्यक्षफलदायिनी परोक्षस्यापिप्रत्यक्षवज्ज्ञानरूपफलदायिनीति ॥ ९।१०।११ १२।१३।१४।१५ एकोनविंशत्यध्यायेकृताव्याख्यायथामति बुद्धिदातागणेशोऽयंप्रसन्नोऽस्तुसदामम ॥१॥ ॥ इतिश्रीमद्बृहत्पाराशरहोरोत्तरभागे श्रीमद्ध्यङ्गन्वयवेदशास्त्राध्ययनवत्यविद्याविद्योतितदिग्दिङ्मण्डलजवाशंकरसूनुज्योतिर्विच्छ्रीधरेणधौरेयोपाभिधश्रीकृष्णसहायेन विरचितायांसु०टीकायां एकोनविंशोऽध्यायः ॥१९॥

## ॥ भाषा ॥

ध्यायमें मासचर्या १६ सतरावे अध्यायमें दिनचर्या १७ अठारवे अध्यायमें प्रश्नविद्या १८. उगनीसवे अध्यायमें ग्रंथानुक्रमणिका १९ विसवे अध्यायमें शास्त्रफलादेश २० ऐसा यह होराशास्त्र पूर्वार्द्ध उत्तरार्धसहित सौ १०० अध्यायका जो कोई पठन करे या श्रवण करे उसके पापनाश करनेवाला चारीयुगमें प्रत्यक्षफलदायक है. उसमे कलियुगमें विशेष करके है ॥ ८।९।१०।११ ।१२।१३।१४।१५ ॥इतिश्रीबृ० भाषाटीकायां एकोनविंशोऽध्यायः ॥१९॥ छ ॥

वेदेभ्यश्चसमुद्धृत्य ब्रम्हा प्रोवाचविस्मृतम् ३
शास्त्रमाद्यंतदेवेदं वेदांगंवेदचक्षुषी गर्गस्तस्मा-
दिदंप्राह मयातस्माद्यथातथा ४ तदुक्तंतवमै-
त्रेयशास्त्रमाद्यंतमेवहि ५ इतिश्रीबृहत्पाराशर
होरायामुत्तरभागे फलश्रुतिकथनंनामविंशोध्यायः २०

॥टीका॥

नन्वस्य शास्त्रस्य स्वीकाराद्ब्रह्मलोकावाप्तिवचनमर्थवादः वेदपठन वद्विशेषपुण्यदर्शनाभावात्कुन कल्पाच्चेति चेन्नेत्याह ॥ वेदेभ्यइत्यर्ध द्वयेन ॥ ब्रह्मा वेदेषु विस्मृतं विशेषेणोक्तं वेदेभ्यः समुद्धृत्य एतदाद्यं शास्त्रंप्रोवाच गर्गायेतिशेषः ननु पराशरकृतस्य कथमाद्यत्वं तदाह वेदांगमिति नैवैतदन्यवत्कृतकमितिशंकनीयमितिध्वनिः॥ नन्विति चे त्कोयायं वेदस्यावयवइति तत्राह वेदचक्षुषी "ज्योतिषामयनं चक्षुरि" तिशिक्षोक्तेः वेदनयने सर्वावयवेषु विशेषज्ञानशक्तिमान्नयनावयव- तत्स्थानापन्नत्वाद्विशेषज्ञानोत्पादकमतिश्रेष्ठमितिभावः तस्मादेत त्पठनादिना वेदपठनादिव ब्रह्मलोकाप्तिफलेकवचनंयथार्थम् ना र्थवादइतिदिक् ॥ ३ ॥ अथाप्यपरंपरामाह ॥ गर्गइति ॥ इदंशास्त्रं स्माद्ब्रह्मणः अवगम्य गर्गः प्राह मामितिशेषः अहमपितस्माद्गर्गा यथा जानामि तथा तच्छास्त्रं आद्यंतं आदितोंऽतपर्यन्तं सर्वमेव मब तवोक्तं हीतिनिश्चयेन इति ॥ ४ ॥ ५ ॥ ॥ ६ ॥

बृहत्पाराशरेहोराशास्त्रेऽस्मिन्नुत्तरार्द्धके ॥ यथामतिकृताटीका गणे शायार्पितास्त्वियं ॥१॥ आर्षमाद्यमिदंशास्त्रं सुबोधंबहुसंग्रहम् ॥

॥ भाषा ॥

ब्रह्माजीने पूर्वकालमे वेदोंमेंसे उद्धार करके यह आद्य ज्योतिः शास्त्र गर्गमुनीकूं कह्या यह शास्त्र वेदका नेत्ररूपी अंग है ॥३॥ गर्गइति॥ ए

## ॥ टीका ॥

स्तुतीभूते रागमारनेन्द्यैनत्मयतिधियामया॥ १॥ भ्रामंभ्रामं बहून्देशान्वर्षैः कतिपयैरयम्॥ यतो यतो यथालब्धो यावान्यावांस्ततस्ततः ॥ ॥२॥ तथातावान्समादाय ग्रन्थः संपादितो मया ॥ अकारि टीकाऽपि बुधानाश्रित्येह यथामति ॥ ३॥ अनेकपुस्तकालाभात्प्रमादाल्लेखकस्यच ॥ अशुद्धेपुस्तकेप्यस्मिन्यावद्बुद्धिबलोदयम् ॥ ४ ॥ कृत्वा शोधंकृतादीकान्यूनमत्राधिकंचयत् ॥ क्षमाप्य सर्वे विद्वांसः कृपयाशोधयंत्वपि ॥५॥ ॥इति श्रीमद्बृहत्पाराशरहोराशास्त्रे उत्तरार्धे श्रीमद्ध्यब्रुन्वयवेदशास्त्राध्ययनवद्यविद्याविद्योतितदिग्दिङ्मंडलजयाशंकरसूनुना ज्योतिर्विच्छ्रीधरेण धौरेयोपाभिधश्रीकृष्णसहायेन विरचितायां सुबोधिनीटीकायां फलश्रुतिकथनं नाम विंशतितमोऽध्यायः ॥२०॥ श्रीकृष्णार्पणमस्तु ॥श्रीशो विजयते.

## ॥ भाषा ॥

सो यह शास्त्र गर्गमुनीने ब्रह्माजीके पाससे पढके पीछे मेरेकूं कह्या. हे मैत्रेय। मयने यह आद्यन शास्त्र तुमारेकूं कह्या ॥४१५॥ इति श्रीमद्बृहत्पाराशर होराशास्त्रे उत्तरार्धे श्रीमद्ध्यब्रुन्वयवे० जयाशंकरसूनुज्योतिर्विच्छ्रीधरेण ज्योतिर्विद्दूंकरसमतनपद्दरिकृष्णसहायेनविरचितायां भाषाटीकाया फलश्रुतिकथन नाम विंशतितमोऽध्याय ॥ २० ॥ ॥ छ ॥ ॥ छ ॥ छ ॥ श्रीगणेश प्रसीदतु ॥ छ ॥ छ ॥

वेदेभ्यश्चसमुद्धृत्य ब्रम्हाप्रोवाचविस्मृतम् ३
शास्त्रमाद्यंतदेवेदं वेदांगं वेदचक्षुषी गर्गस्तस्मा-
दिदंप्राह मयातस्माद्यथातथा ४ तदुक्तंनवमे-
श्रेयशास्त्रमाद्यंतमेवहि ५ इतिश्रीबृहत्पाराशर
होरायामुत्तरभागे फलश्रुतिकथनंनामविंशोध्यायः २०

॥ टीका ॥

नन्वस्य शास्त्रस्य स्वीकाराद्ब्रह्मलोकावाप्तिवचनमर्थवादः वेदपठन-वद्विशेषपुण्यदर्शनाभावात्स्वकल्पत्वाच्चेति चेन्नेत्याह ॥ वेदेभ्यइत्यर्धद्वयेन ॥ ब्रह्मा वेदेषु विस्मृतं विशेषेणोक्तं वेदेभ्यः समुद्धृत्य एतदाद्यं शास्त्रंप्रोवाच गर्गायेतिशेषः ननुपराशरकृतस्य कथमाद्यत्वं तदाह वेदांगमिति नैवेतदन्यवत्कृतकमिति शंकनीयमिति ध्वनिः ॥ नन्वितिचेत्कोयायं वेदस्यावयवइति तत्राह वेदचक्षुषी "ज्योतिषामयनंचक्षुरि-तिशिक्षोक्तेः वेदनयने सर्वावयवेषु विशेषज्ञानशक्तिमान्नयनावयवः तत्स्थानापन्नत्वाद्विशेषज्ञानोत्पादकमतिश्रेष्ठमितिभावः तस्मादेत-त्पठनादिना वेदपठनादिव ब्रह्मलोकाप्तिफलेकवचनंयथार्थम् ना-र्थवादइतिदिक् ॥ ३ ॥ अथास्यपरंपरामाह ॥ गर्गइति ॥ इदंशास्त्रं त-स्माद्ब्रह्मणः अवगम्य गर्गःप्राह मामितिशेषः अहमपितस्माद्गर्गा-द्यथा जानामि तथा तच्छास्त्रं आद्यंतं आदितोंऽतपर्यन्तं सर्वमेव मया तवोक्तं हीतिनिश्चयेन इति ॥ ४ ॥ ५ ॥ ॥ ७ ॥
बृहत्पाराशरेहोराशास्त्रेऽस्मिन्नुत्तरार्द्धके ॥ यथामतिकृताटीका गणे-शायार्पितास्त्वियं ॥१॥ आर्षमाद्यमिदंशास्त्रं सुबोधंबहुसंग्रहम् ॥

॥ भाषा ॥

ब्रह्माजीने पूर्वकालमें वेदोंमेंसे उद्धार करके यह आद्य ज्योतिःशास्त्र ग-र्गमुनीकूं कह्या. यह शास्त्र वेदका नेत्ररूपी अंग है ॥३॥ गर्गइति ॥ ऐ-